So for as मधुविद्या etc., are concerned the वसु may practise it not for वसुत्व but to acquire excellence in ज्ञान and मोक्ष. यद्यपि मधुविद्यादिफलं वसुत्वादिकं ज्ञाने ब्रह्मज्ञानं च वस्वादीनामस्ति । तथापि ज्ञाने मोक्षे च अतिशयार्थमुपासना युक्ता ।

After presenting Siddhānta Chandrikā gives the special points made under each sūtra.

आद्ये सूत्रे - नापि पदप्राप्त्यनन्तरमनधिकारः । विशिष्टबुद्ध्यादिभावात् ।
द्वितीये - देवतापदस्य सादित्वे कर्मविरोधः परिहृतः ।
तृतीये - शब्दे विरोधः देवताप्रवाहनित्यत्वेनपरिहृतः ।
चतुर्थे - देवताप्रवाहनित्यत्वं तद्वाचकवेदनित्यत्वेन साधितम् ।
पञ्चमे - रूपादि वैचित्र्यनिमित्तकविरोध परिहारः
षष्ठे - मधुविद्यादिषु वस्वादीनां न अधिकारः इति शङ्का
सप्तमे - उपासनाफलस्य ज्ञानस्य सर्वैः देवैः प्राप्तत्वात् न तेषां तत्र अधिकरः इति शङ्का.
अष्टमे - शङ्कोद्धारः ।

**The deities have karmādhikāra also**

In advaita bhāṣya while justifying ब्रह्मविद्याधिकार to the deities, it is stated that the deities have no karmādhikāra. They have only ब्रह्मविद्याधिकार. Chandrikā rejects this approach and affirms कर्माधिकार to the deities with detailed arguments.

यच्चोक्तं परैः देवतानां देवतान्तराभावेन तदुद्देशेन हविस्त्यागायोगात् ऋषीणां भृग्वादीनां भृग्वाद्यन्तराभावेन तद्वरणायोगात् यज्ञादिकर्मसु अनधिकारेपि ब्रह्मविद्यासु सोस्ति इति । तन्न ।

i) There are a number of śrutis that clearly state that the deities also performed sacrifice.
a) यज्ञेन यज्ञमयजन्त देवाः b) देवा वै सत्रमासत c) देवा यज्ञमतन्वत d) यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम् । e) इन्द्रो अश्वमेधान् शतमिष्ट्वा f) ततस्तु देवताः सर्वाः ब्रह्मा चैवमहर्षयः । वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ।। इत्यादिवचनैः यज्ञादिसद्भावात् ।

ii) Nowhere the eligibility for sacrifies is denied for the deities as in the case of śūdras. शूद्रवच्च तेषामधिकारनिषेधाभावात् ।

iii) At the sacrifices performed by the deities, the offerings are offered to Supreme God himself by his names of अग्नि etc which primarily convey Viṣṇu only.
देवताकृतयज्ञेषु 'मामेव यजतां शक्रः पावयिष्यामि वज्रिणम्' इति भारते देवादीन् प्रति भगवद्वचनादिभिः इन्द्रादिशब्दमुख्यार्थो भगवानेव उद्देश्यः ।

iv) भृगु etc sages have been earlier. These are invited by the later भृगु etc अनादौ संसारे पूर्वपूर्वभृग्वादिवरणमुत्तरेषां युक्तम् ।

v) It is not correct to say that the deities do not have अग्न्याधान and उपनयन, they do not belong to त्रैवर्णिक group, therefore, they are not eligible to perform sacrifices. They do have all these.

त्रैवर्णिकानामेव आधानोपनयने श्रुते इति अत्रैवर्णिकानां देवानां तदभावात् तत्साध्याग्नि विद्ययोरभावात् न धर्माधिकारः इति चेत् न ।

a) 'देवा अग्निमाधत्ते' इत्यादौ देवतानामपि आधानश्रवणात् ।
b) 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति' इति ब्रह्मणः
c) 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणम्' इत्यादौ देवर्षीणां नारदादीनाम् अध्ययनश्रवणात् ।
vi) a) देवानां त्वन्मते कर्मानधिकारेपि ज्ञानाधिकारवत् उपनयनाभावेपि अध्ययनोपपत्तेश्च ।
b) अध्ययनाभावेपि देवानां स्वयं प्रतिभातवेदत्वाच्च ।
vii) सर्ववर्णाः सर्वाश्रमिणः सर्वेहि एते कर्मकुर्वन्ति इत्यादिश्रुतेः देवानामत्रैवर्णिकत्वाभावाच्च ।

**The birds and animals also have karmādhikāra**

The contention that the birds and animals have no कर्माधिकार and ब्रह्मविद्याधिकार is also rejected by Chandrikā drawing attention to the suitable examples.

यच्चोक्तमुभाभ्यां तिर्यगादीनामसामर्थ्यात् कर्म ब्रह्मविद्ययोरनधिकारः इति तन्न ।

i) भारते जरितारि-सारिसृक्क-स्तंब द्रोणाख्यानां चतुर्णां पक्षिणाम् अयमग्ने जरि ते त्याग्नेयसूक्तेन अग्निस्तावकत्वोक्तेः । 'ऋषीनस्मान् बालकान् पालयस्व' इति ऋषिशब्देन चतुर्णामपि मन्त्रद्रष्टत्वोक्तेः ।

**The deities have forms**

The contention that the deities have no form, if they have form it would not be possible to be simulteneously present at many sacrifices performed by different persons is also not correct. The deities need not be physically present at the place of sacrifices. The hymns are addressed to them without expecting them to be physically present.

यच्चोक्तमुभाभ्याम् इन्द्रादीनां विग्रहवत्वे ऋत्विगादिवत् सन्निधानेन कर्माङ्गत्वं स्यात् । तच्च विरुद्धम् । बहुषु यागेषु युगपदेकस्य इन्द्रस्य सन्निधानायोगात् इति तन्न ।

i) देवतायाः विग्रहवत्वेपि स्वस्थानस्थितायाः एकस्याः एव बहुभिः उद्देष्टुं शक्यत्वे कर्मणि विरोधशङ्कायाः अनुदयात् ।
ii) ननु 'इन्द्र आगच्छ' इत्यादिना आह्वानात् सन्निधानसिद्धेः विरोधशङ्कोदयः इति चेत् यदि आह्वानमागमनार्थं तर्हि सिद्धं विग्रहवत्त्वम् । यदि तु अदृष्टार्थं न तर्हि सन्निधानसिद्धिः ।

In the above exposition Chandrikā establishes कर्माधिकार and विग्रहवत्व to the deities.

This adhikaraṇa is concluded with the explanation of the crucial remarks in Tīkā.

## अपशूद्राधिकरणम् (१-३-९)

### ॐ शुगस्य तदनारश्रवणात्तदाद्रवणात् सूच्यतेहि ॐ (१-३-९-३४)

**Pūrvapakṣa View**

In this adhikaraṇa the question whether a śūdra is eligible to study ब्रह्मविद्या or not is raised. Pūrvapakṣin argues that śūdra also has the necessary ability like deities.

Therefore, he is also eligible. It cannot be said that since, śūdra has no upanayana, he cannot undertake adhyayana, hence he is not eligible for ब्रह्मविद्या. Pautrāyaṇa who is addressed as śūdra by Raikva was tought samvarga vidyā. Vidura who was śūdra knew the teachings of Veda. Śūdra may study without upanayana or he may aquire brahmavidyā without studying vedānta. The word śūdra should not be taken in the etymological sense as a person affected by grief in the context of samvarga vidyā. It should be taken as referring to a person of śūdra caste.

**Siddhānta View**

Siddhāntin points out that Pautrāyaṇa who is addressed as śūdra is stated to posses a chariot. This indicates that he is a kṣatriya but not a person of śūdra caste. In a later sentence it is stated that he was a person afflicted by grief. Therefore the word śūdra should be taken in its etemological sense as a person afflicted by grief. He is also described as a person who gave plenty of gifts to the needy, he built rest houses, he served plenty of food to the poor etc. These activities can be undertaken by a kṣatriya only but not by a śūdra. In the case of Vidura he inherited the knowledge of veda from his previous birth. The women of higher order do have वेदाधिकार and ब्रह्मविद्याधिकार. In Bṛhadāraṇya Upaniṣad Gārgi and Maitreyi have participated in the philosophical debate.

After presenting Siddhānta Chandrikā states the special points stated in the sūtras :

i) प्रथमे सूत्रे– तदाद्रवणात् इत्यनेन शुचा द्रवणात् शूद्र इति शूद्रशब्दस्य यौगिकत्वोक्तिः ।
ii) द्वितीये – वाक्यशेषस्य रूढिबाधकस्य उक्तिः ।
iii) तृतीये – शूद्रस्य अध्ययनाङ्गोपनयनाभावोक्तिः ।
iv) चतुर्थे – श्रुत्यन्तरस्थलिङ्गोक्तिः ।
v) पञ्चमे – उपनयनाद्यभावेपि अध्ययनाद्यस्तु इति शङ्कानिरासः ।

Chandrikā reviews the pūrvapakṣa and siddhānta of this adhikaraṇa by advaita and viśiṣṭādvaita in detail. It is particularly pointed out that the advaita pūrvapakṣa and siddhānta do not say anything new than what is already stated in Pūrvamīmānsā sūtras while denying karmādhikāra to the śūdras. This makes this adhikaraṇa superflous here. Incidentaly it is pointed out that śūdras will be eligible for brahmajñāna through 'तत् त्वमसि' on the lines of 'दशमः त्वमसि' according to advaita position.

As per Viśiṣṭādvaita interpretation, pūrvapakṣin claims that the śūdras can have brahmajñāna through Itihāsa purāṇa. The Siddhāntin points out that Itihāsa purāṇa are not independent means of brahmajñāna. These assist to aquire brahmajñāna through Veda. Therefore, in the absence of वेदाधिकार the śūdras are not eligible for

brahmajñāna. Chandrikā points out that Itihāsa purāṇa, particularly Mahābhārata, is on par with Veda. Therefore, it is also as much a means of brahmajñāna as vedas.

इतिहासपुराणाभ्यामिति वाक्यमितिहासाद्यनुसारिण्येव अर्थे वेदस्य तात्पर्यमित्येवं परम् । न तु वेदनिरपेक्षेतिहासादिर्न बोधक इति । अनेकशाखाभिज्ञमुनिकृतात् निर्णयरूपाद् वाक्याद् वेदनिरपेक्षादपि ब्राह्मणादीनामपि ज्ञानोत्पत्तेः ।

## कम्पनाधिकरणम् (१-३-१०)

**ॐ कम्पनात् ॐ (१-३-१०-३९)**

In the śruti 'महद्भयं वज्रमुद्यतं य एतद्विदुरमृताः ते भवन्ति' the import of the word वज्र is discussed in this adhikaraṇa. Pūrvapakṣin argues that the word वज्र refers to the weapon of Indra. Siddhāntin concludes that it refers to brahman i.e. Viṣṇu.

Before the presentation of pūrvapakṣa the question whether the word वज्र is अन्यत्र प्रसिद्ध or उभयत्र प्रसिद्ध is raised and उभयत्र प्रसिद्धत्व is established.

### Pūrvapakṣa View

The question whether there is any scope for pūrvapakṣa here is also discussed. The statement 'वज्रमुद्यतम्' is preceeded by the statement 'तदेव शुक्रं तद् ब्रह्म' and followed by 'भयादस्याग्निः तपति भयात् तपति सूर्यः.' These indicate that it is ब्रह्मप्रकरण. Therefore, there seems to be no scope for pūrvapakṣa. However, pūrvapakṣin claims that it is not proper to give etymological meaning to the word वज्र in order to convey brahman by this word. This word is wellknown in the sense of वज्रायुध. On the other hand the कम्पकत्व etc attributes of brahman can be explained away as the attributes of वज्रायुध. Hence the word वज्र refers to वज्रायुध but not Viṣṇu.

तस्मात् वज्रज्ञानस्यापि मोक्षहेतुत्वात् त्रैवर्णिकानां ब्रह्मज्ञानं मोक्षदमिति पूर्वोक्तमयुक्तमिति पूर्वपक्षः ।

### Siddhānta View

Siddhāntin points out that the attributes सर्वचेष्टकत्व stated here in the passage 'जगत् सर्वं प्राण एजति' is an attribute of Viṣṇu only. The Smṛti 'वर्जनात् वज्रमुच्यते' clearly indicates that the word वज्र conveys Viṣṇu only. The meaning of a vedic word should be understood in the light of its explanation in the Smṛti.

श्रुत्यर्थनिर्णयार्थत्वात् स्मृतेः तत्र निरूपितः । अर्थो ग्राह्यो वेदवाक्ये तदयोगे तु लौकिकः ॥

Nyāyavivaraṇa makes it clear that वज्रशब्दस्य उद्यतत्वस्यच विष्णावेव अवकाशः । उद्यमित्वमेव उद्यतत्वमिति ।

### The review of Advaita interpretation

Advaita formulates the pūrvapakṣa and siddhānta differently. प्राण एव एजतीति वाक्यस्य प्राणः प्रसिद्धेः वायुरिति प्राप्ते ब्रह्मैवेति सिद्धान्तः इत्याहुः ।

This is not suitable. The समन्वय of the word प्राण is already made more than once. Hence, bringing it once again is purposeless.

असकृदुक्तसमन्वयस्य बीजशून्यस्य प्राणशब्दस्य समन्वयोक्त्ययोगात् ।

Viśiṣṭādvaita treets it as a part of an earlier adhikaraṇa.

## ज्योतिरधिकरणम् (१-३-११)

**ॐ ज्योतिर्दर्शनात् ॐ (१-३-११-४०)**

**Pūrvapakṣa View**

In this adhikaraṇa the question whether the word 'ज्योतिः' in the Śruti 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' conveys jīva or brahman i.e. Viṣṇu, is raised. The two attributes viz ज्ञानरूपत्व and हृदयाहितत्व are common to both jīva and brahman, therefore, this word comes under the group of उभयत्र प्रसिद्ध. Pūrvapakṣin argues that the word ज्योतिः refers to jīva only, since the following attributes of jīva are stated :

i) सः उभौ लोकौ सञ्चरति
ii) सवा अयं पुरुषः जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते । स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति ।

In these passages the attributes birth, moving into the two worlds, assuming the body, death, being affected by sin are stated. These are clearly the attributes of jīva. The statement विष्णुरेव ज्योतिः has to be differently interpreted.

Further, the question 'किं ज्योतिरयं पुरुषः' is answered as 'आदित्यज्योतिः.' It is jīva who obtains the light from āditya. In the case of brahman it is clearly stated that the Sun does not light him. 'न तत्र सूर्यो भाति.' At the commencement of the question jīva is stated as 'किं ज्योतिरयं पुरुषः' इति. At the conclusion also jīva is stated as अयं पुरुषः स्वयं ज्योतिः. Therefore the statement 'आत्मैवास्य ज्योतिः' occuring in the middle should also be taken as referring to jīva only.

**Siddhānta View**

Siddhāntin points out that in the śruti 'विष्णुरेव ज्योतिः विष्णुरेवात्मा विष्णुरेव बलम्' etc it is clearly stated that the word jyoti conveys Viṣṇu only. At the commencement of the question and at the conclussion also Viṣṇu only is referred to as 'हृद्यन्तर्ज्योऽतिः' and 'पुरुषः स्वयं ज्योतिः.' In view of this the attributes viz birth, moving into two worlds, death etc should be takne in causal sense and be interpreted as he who causes these to jīva. Such a procedure of taking in causal sense is found in Pūrvamīmānsā in the instance of अश्वप्रतिग्रहेष्टि. पाप्मभिः संसृज्यते etc also should be taken in the same way, that is to say, brahman causes the jīva to be affected by his sin etc. The word पुरुष used in this context refers to पुरुषोत्तम.

**The review of Advaita interpretation**

Advaita bhāṣya formulates pūrvapakṣ and siddhānta of this adhikaraṇa differently. According to pūrvapakṣa āditya is conveyed by the word ज्योति. According to siddhānt brahman is conveyed by this word. The liberation referred to here is attainment of निर्गुण ब्रह्मैक्य. This explanation of these passages is not suitable.

There is a clear reference to सविशेषब्रह्मन् here. The Śruti सत्यकामः सत्यसङ्कल्पः occurs earlier. The liberated jīva is also described as सगुण.

In viśiṣṭādvaita bhāṣya, this sūtra is not considered as a separate adhikaraṇa. It is considered as a part of the adhikaraṇa 'शब्दादेव प्रमितः' ।

## आकाशाधिकरणम् (१-३-१२)

ॐ अर्थान्तरो आकाशादिव्यपदेशात् ॐ (१-३-१२-४१)

In this adhikaraṇa the question whether the word आकाश in the śruti 'आकाशो वै नामरूपयोः निर्वहिता' conveys आकाश or ब्रह्मन् is disscussed. It is established that it conveys ब्रह्मन् i.e. विष्णु.

**Pūrvapakṣa View**

Pūrvapakṣin argues that the expressions ह वै नाम indicate that by the word ākāśa that which is wellknown is referred to by this word. The word ākāśa is well known in the sense of gagana i.e. sky, both in the veda and in day to day usage. Therefore, this word conveys the sky only but not brahman. The sky provides room for नाम and रूप. In the case of brahman it is known only from the śruti.

i) ह वै नामेति निपातद्योतितप्रसिद्धिः न ब्रह्मणि युक्ता ।

ii) ब्रह्म वेदमात्रे प्रसिद्धम् । गगनं तु लोके वेदे च स्वरूपेण नामरूपावकाशदानात् तन्निर्वाहकतया च प्रसिद्धम् ।

Further, the absence of नाम and रूप stated in the śruti 'ते यदन्तरा' is not applicable in the case brahman also, since. He is stated to have नाम and रूप under the sūtra रूपोपन्यासाच्च. In the case of ākāśa it may be stated that though भूताकाश has नाम and रूप, the अव्याकृताकाश has no नाम and रूप. Therefore, the absence of नामरूप stated in the śruti 'ते यदन्तरा' can be managed if the word ākāśa is taken to convey gagana i.e. sky. It cannot be properly explained if brahman is conveyed by this word.

**Siddhānta View**

Siddhāntin points out that the absence of नाम should be taken in the sense that brahman cannot be described fully by the word but not in the sense that he has no names at all. The absense of रूप also should be taken in the sense that he has no प्राकृतरूप. Therefore, the śruti 'ते यदन्तरा' that states the absence of नाम and रूप can be

easily applied to brahman also. So for as the fact of well known is concerr usage is more important for the Vedic words than the day to day usage. ākāśa is frequently used in the sense of brahman in the Veda.

वैदिकेषु प्रयोगेषु वैदिक्येव प्रसिद्धता । ग्राह्याऽन्तरङ्गभूतत्वात् तदयोगेत्ववैदिकी ।।

The brahman is well-known as नामरूप निर्वोढा in the śrutis 'एको दाधार भुवना व्याकरोत्' etc.

Chandrikā briefly reviews the advaita and viśiṣṭādvaita interpretatio adhikaraṇa. Chandrikā points out that the ground for distinguishing this ac from ākāśādhikaraṇa of first pāda given in advaita is not suitable.

## सुषुप्त्यधिकरणम् (१-३-१३)

**ॐ सुषुप्त्युत्क्रान्त्योः भेदेन ॐ (१-३-१३-४२)**

In this adhikaraṇa the question whether the attribute स्वप्नादिद्रष्टृत्व stated in 'स यत्तत्र किञ्चित् पश्यति अनन्वागतस्तेन भवति असङ्गो हि अयं पुरुषः' is an attribute o brahman is raised. Pūrvapakṣin argues that स्वप्नादिद्रष्टृत्व i.e. seeing the dream i known attribute of jīva. The other attribute असङ्गत्व i.e. not being affected by i cannot be an attribute of jīva,, it is stated keeping the identity of jīva and in mind.

i) स्वप्नादिद्रष्टृत्वं .लोके जीव एव प्रसिद्धम् ।

ii) असङ्गत्वं स्वोपजीव्यद्रष्टृत्वानुरोधात् जीव एव ब्रह्माभेदाभिप्रायम् ।

**Siddhānta View**

Siddhāntin points out that the dream is cognised by jīva only in a limi while brahman observes it fully. Therefore, he is स्वप्नद्रष्टा in the full sense.

कात्स्न्र्येन स्वप्नवस्तूनां द्रष्टा सर्वज्ञ ईश्वरः । न युज्यते हि सङ्कोचो ह्यसङ्कोचस्य सम्भवे ।

In this context undergoing dream state is not mentioned. But o observation of the dream is stated. Jīva undergoes the dream state while b i.e. Viṣṇu, observes it. The attribute असङ्गत्व is clearly an attribute of b Therefore स्वप्नादिद्रष्टत्व stated here is an attribute of brahman i.e. Viṣṇu only.

i) न चेह स्वप्नाद्यवस्था उच्यते । पश्यतीति तद्द्रष्टृत्वस्यैवोक्तेः ।

ii) अनन्वागतस्ते न भवतीत्यत्र 'असङ्गो हि अयं पुरुषः' इति असङ्गत्वं हेतुः ।

The śruti statements 'प्राज्ञेन आत्मना सम्परिष्वक्तः' and 'प्राज्ञेन आत्मना अन्वारूढः' state the difference between jīva and Īśvara. Therefore असङ्गत्व cannot be con as an attribute of jīva on the ground of identity between jīva and Īśvara.

## ब्राह्मणाधिकरणम् (१-३-१४)

**ॐ पत्यादिभ्यश्च ॐ (१-३-१४-४३)**

In this adhikaraṇa the question whether the word ब्राह्मण in the śruti 'एष नित्यो महिमा ब्राह्मणस्य' conveys विरिञ्च i.e. चतुर्मुखब्रह्मा or विष्णु is raised. It is established that it conveys विष्णु.

### Pūrvapakṣa View

Pūrvapakṣin argues that the word brāhmaṇa conveys Virincha only. In the next passage 'स वा एष महानजो आत्मा' the word अज is used. This word अज conveys Virinchā both by योग i.e. etymology, and रूढि i.e. usage. The words महत् and आत्मा are also applicable to Virinchā. Virinchā is the abhimāni deity of Mahat-tatva. He is also stated as आत्मा in the śruti 'बुद्धेरात्मा महान् परः.' The word ब्राह्मण refers to Virincha as he belongs to ब्राह्मणवर्ण. It is stated in the passage 'विष्णोः ब्राह्मणजातिस्सन् जज्ञे ब्रह्मा चतुर्मुखः.' It is true that the word बाह्मण may be applied to Viṣṇu also as per the explanation 'ब्रह्मणा वेदेन गम्यते इति ब्राह्मणः.' However, this can be managed by envisaging the identity between Virincha and Viṣṇu. The identity of these two is stated in śruti and smṛti.

i) स त्रेधा बभूव एषां गुणानामुपादानाय । विष्णुर्वाव सत्त्वस्य रजसो ब्रह्मा ईशानो नाम तमसः ॥
ii) सृष्ट्यादये हरिविरिञ्च हरेति संज्ञा ।

### Siddhānta View

Siddhāntin points out that in the śruti 'सर्वस्याधिपतिः सर्वस्येशानः' सर्वाधिपतित्व is stated. This is an attribute of Viṣṇu only. There is no ground to envisage indentity between Virincha and Viṣṇu to accomodate such attributes to Virincha also. The identity cannot be thought of between the entities that have opposit attributes.

विरुद्धेष्वप्यभेदश्चेद् यवव्रीह्यादिकेष्वपि । अभेदः स्यात् ततः क्वापि विकल्पाद्येव नो भवेत् ॥

The difference between Virinchā and Viṣṇu is clearly brought out in the śruti 'ततो एते व्यजायन्त विश्वो हिरण्यगर्भः.' The statement 'स त्रेधा अभवत्' should be taken in the sense of three forms. This is made clear in the passages.

i) 'स आविवेश ब्रह्मा ब्रह्माणं चतुर्मुखमीश ईशानं पञ्चमुखम्'
ii) ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः ॥

After establishing the difference between Virincha and Viṣṇu, Chandrikā mentions the Sūtras that establish the difference and points out the particular context of presenting the difference in each case to indicate that there is no repeatition of presenting the difference. The following sūtras are mentioned (१) भेदव्यपदेशाच्च (२) शारीरश्चोभयेपि भेदेन (३) भेदव्यपदेशाच्चान्यः (४) भोक्त्रापत्तेः (५) पृथगुपदेशात्.

The points made in सुषुप्त्यधिकरण and ब्राह्मणाधिकरण in respect of difference are also stated. This discussion is concluded by quoting अनुव्याख्यान

न जीवभेदसूत्राणां शङ्क्यात्र पुनरुक्तता । वाक्यान्तरद्योतकत्वात् पृथगित्यत्र पूर्णता ।।

Chandrikā reviews the advaita interpretation and remarks

यत्तत्वमैक्यं तन्नैव कीर्त्यते श्रुतिसूत्रयोः । तत्र यः कीर्त्यते भेदः तच्च तत्वं न ते मते ।।

The above summary of the contents of तात्पर्यचन्द्रिका is made to help the modern scholars to get an idea of the contribution of Tātparya Chandrikā to the critical study of the Brahmasūtras and the three bhāṣyas on the same. It is hoped that this will enkindle an interest to study the whole work deeply and encourage the young scholars to undertake research in this valuable work.

## Śrī Vyāsatīrtha

Śrī Vyāsatīrtha the author of Tātparya Chandrikā has a high place in the field of Indian Philosophy, particularly in Dvaita Vedānta tradition. In a traditionally quoted verse of Pakṣadhara-Miśra the well-known Navyanyāya scholar of Navadvīpa the high esteem in which Vyāsatīrtha was held by his contemporary scholar is ensrined. The verse reads as :

यदधीतं तदधीतं यदनधीनं तदप्यधीतम् । पक्षधरविपक्षो नावेक्षि विना नवीनव्यासेन ।।

His high place in Dvaita Vedānta tradition is indicated by another traditionally quoted verse :

श्रीमध्वः कल्पवृक्षस्तु जयार्यः कामधुक् स्मृतः । चिन्तामणिस्तु व्यासार्यो मुनित्रयमुदाहृतम् ।।

This great scholar was born in or about 1460 A.D. in a village Bannur in the Mysore District of Karnataka. He was ordained to sannyāsa by Brahmaṇyatīrtha when he was just about sixteen years of age. He went to Kānchi a centre of learning in those days and mastered the Nyāya, Vyākaraṇa and Mīmāmsā Śāstras. Then, he proceeded to Mulbagal another centre of learning, particularly, of Dvaita Vedānta, and studied Dvaita Vedānta under Lakṣmīnārāyaṇa Muni also known as Śrīpādarāja.

Saluva Narasimha the king of Candragiri near Tirupati was a disciple of Śrīpādarāja. He invited Śrī Vyāsatīrtha to his court and honoured him. Later Saluva Narasimha became the king of the famous Vijayanagar empire and invited Śrī Vyāsatīrtha to stay at Vijayanagar. Since then, Śrī Vyāsatīrtha made Vijayanagar his head quarter. Saluva Narasimha's successor Krishna Devarāya developed great admiration for him and took his blessings and guidance in the welfare of the kingdom.

In a biographical poem on Vyāsatīrtha viz. व्यासयोगिचरितम् composed by सोमनाथकवि a detailed account of Śrī Vyāsatīrtha's life and works is given. Śrī Vyāsatīrtha composed his three great works : न्यायामृतम्, तात्पर्यचन्द्रिका and तर्कताण्डवम् during his stay at Vijayanagar. His तात्पर्यचन्द्रिका is a work of अधिकरणप्रस्थान I It is written as a commentary on तत्त्वप्रकाशिका of Jayatīrtha. However, it is more a वादग्रन्थ than a mere commentary. The bhāṣyas of Śaṅkara and Rāmānuja, their commentaries viz., Bhāmati and Śrutaprakāśikā respectively are critically examined in this work. His third great work तर्कताण्डव is a criticism of तत्त्वचिन्तामणि of Gangeśa the source book of नव्यन्याय I It also reviews the views of Bhātta and Prābhākara Mīmāmsā in respect of प्रमाण, प्रामाण्य, पदार्थ, वाक्यार्थ etc., epistemological and the linguistic issues. It is a work of a comparative study of these issues. His other works viz., भेदोज्जीवन and मन्दारमञ्जरी are also important works. The merit and the contents of all works of Śrī Vyāsatīrtha are fully dealt with in the history of Dvaita literature by Dr. B.N.K. Sharma in a masterly way, Dr. Dasagupta also has highlighted the contribution of Vyāsatīrtha to Dvaita-Advaita dialectics and the polemics of Indian Philosophy. Therefore, only a brief reference to the life and works of Śrī Vyāsatīrtha is made here.

## Śrī Rāghavendra tīrtha

Prakāśikā of Śrī Rāghavendra tīrtha is a detailed commentory on Tātparyachandrikā. Śrī Rāghavendra tīrtha was Pīthādhipati from 1623-71 A.D. He was a successor to Śrī Sudhīndra tīrtha. He was a contemporary of Raghunātha Nayaka and Vijaya Raghava Nayaka of Tanjor. He was a great scholar and a great saint with mystic power. He has forty works to his credit. His works on Sūtraprasthāna are most important. Particulary, his commentary Parimala on Nyāyasudha of Śrī Jayatīrtha and Prakāśika on Tātparya Chandrika are very helpful. His commentary viz Tattvamanjari on Aṇu-bhāṣya, his other small treatises on Brahmasūtras viz Nyāyamuktāvali and Tantradīpikā give good grounding for the study of sūtraprasthāna. His upaniṣatkhadārthas give word by word meaning of principal upaniṣads. He has also written commentories on Daśaprakaraṇas and Ṛgbhāṣya. His contribution to Dvaita literature is very rich both in quantity and quantity.

## Śrī Pāndurangi Keśavāchārya

Bhāvadīpikā also known as Vākyārtha vivṛti of Śrī Pāndurangi Keshavachārya is also a detailed commentary on Tātparya Chandrikā. He flourished between 1580 to 1640 A.D. He is the son of the elder brother of Pāndurangi Ānanda bhattāraka a contemporary Śrī Vādirāja tīrtha and the author of Nyāyāmṛta Kanṭakoddhāra. He has

also made good contribution to Dvaita Vedanta literature. His commentary viz śeṣavākhyārtha chandrikā on Nyāyasudhā of Jayatīrtha is a continuation of Vākhyārtha chandrika of Śrī Vidyādhīśa tīrtha. He has also written commentaries on Daśaprakaraṇa and Ṛgbhāṣya. His commentary on Tātparya Chandrikā has its own special style. The purpose and significance of each observation in Chandrikā is explained. Whenever alternate explanations are given in Chandrikā, the reason for it is explained in this commentary. Mīmāmsā nyāyas are profusely quoted, grammatical niceties are explained.

These two commentaries considerably help to know the depth of Chandrikā interpretation and thought.

Śrī Rāghavendra tīrtha and Pāndurangi Keśavāchārya were contemporaries. Śrī Vidyādhīśa tīrtha the elder brother of Keśavāchārya is reported to have met Śrī Sudhīndra tīrtha and Śrī Rāghavendra tīrtha. It is quite likely that Keśavāchārya also met him. However, it is not clear whether these had seen the commentaries of each other.

No single scholar has written commentaries on Vyāsatrayi i.e. Chandrikā, Nyāyāmṛtam and Tarkatāndavam. Śrī Rāghavendra tīrtha has commented on two of these viz Chandrikā and Tarkatāndavam and Pāndurangi family has commented on the two i.e. Nyāyāmṛtam and Chandrikā.

The following four commentaries on Chandrikā are also reported. The commentary by Śrī Lakṣmīnātha tīrtha, Śrī Satyānanda tīrtha, Śrī Satyapriya tīrtha and Śrī Mannari Krishnāchārya. The manuscripts of these are available only in fragments. We are trying to procure one or two more manuscripts so that a reasonable portion can be restored and published.

I take this opportunity to record my appreciation of the assistance given to me by two young scholars Sri Krishnacharya Upadhyaya and Vamanacharya Alur.

I thank Sri N. Narasimha Rau, Chairman of Dvaita Vedanta Foundation for giving me an opportunity to edit this valuable work.

Mahāmahopādhyāya
**Prof. K.T. Pandurangi**
*Hon. Director*
Dvaita Vedanta Studies
and Research Foundation

# तात्पर्यचन्द्रिका

## विषयानुक्रमणिका

### प्रथमाध्यायस्य द्वितीयः पादः

#### सर्वगतत्त्वाधिकरणम्



#### अतृत्त्वाधिकरणम्



#### गुहाधिकरणम्



#### अन्तराधिकरणम्



#### अन्तर्याम्यधिकरणम्

## प्रथमाध्यायस्य तृतीयः पादः

## सदधिकरणम्



## दहराधिकरणम्



## अनुकृत्यधिकरणम्



## वामनाधिकरणम्



## देवताधिकरणम्

।। श्री वेदव्यासाय नमः ।।

श्रीब्रह्मण्यतीर्थश्रीपादशिष्यश्रीव्यासतीर्थविरचिता

# तात्पर्यचन्द्रिका

## प्रथमाध्यायस्य द्वितीयः पादः

### सर्वगतत्वाधिकरणम्

यैर्लिंगैः साधितः पूर्वं नाम्नां विष्णौ समन्वयः ।
तेषामिहोच्यते लिङ्गजातीयानां समन्वयः ।। १ ।।

तदुक्तमनुव्याख्याने ।

इत्यन्यत्र प्रसिद्धोरुशब्दराशेरशेषतः ।
ज्ञाते समन्वये विष्णौ लिंगैर्ह्येष समन्वयः ।।
तेषामन्यगतत्वे तु न स्यात्सम्यक्समन्वयः ।
इत्येवाशेषलिङ्गानां ब्रह्मण्येव समन्वयम् ।। इति ।।

ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ।। यद्यपि पूर्वपादांत्यस्योत्तरपादाद्यस्य चाधिकरणस्य नावान्तरसङ्गत्यपेक्षा । तथापीह तस्याः सम्भवात्फलस्यावश्यवक्तव्यत्वाच्चैतत्पूर्वपक्षे पूर्वाधिकरणसिद्धान्ताक्षेपो दर्शितो भाष्यादौ ।

## श्रीराघवेन्द्रतीर्थविरचिता प्रकाशिका

टीकायां पादसङ्गत्यनुक्तेस्तामन्यत्रोक्तां दर्शयन् पूर्वपादार्थानुवादपूर्वमेतत्पादार्थमाह ।। यैरिति ।। तेषां लिङ्गानामिह द्वितीयपादे समन्वय उच्यत इत्ययुक्तम् । समुद्र-

शायित्वादिलिङ्गानामिह समन्वयानुक्तेरित्यत आह ॥ लिङ्गेति ॥ प्रागुक्तलिङ्ग-जातीयानामित्यर्थः । जातीयत्वं च तल्लिङ्गोपेतवाक्यगततयैकवाक्यगतत्वेनेति ध्येयम् । यद्वा नामसमन्वयहेतुतयाऽभिमतत्वादिना तल्लिङ्गजातीयत्वम् । एतदुक्तं भवति । सर्वश्रुतिगतान्यन्यत्र प्रसिद्धनामानि सर्वाण्यपि तत्र तत्र स्थितैस्सर्वैर्लिङ्गैर्भगवन्निष्ठानीति प्राक्साधिते सति तत्रासन्दिग्धलिङ्गप्रहाणेनेतरेषां समन्वयोऽत्रोच्यत इति । एतेनैतन्निरस्तम् । कथं लिङ्गसमन्वयः । किं लिङ्गान्तरेणोत नाम्ना । नाद्यः । समन्वीयमानत्वेन सन्दिग्धत्वात् । न द्वितीयः । अन्योन्याश्रयापत्तेः । सिद्धे नामसमन्वये तेन लिङ्गसमन्वयः लिङ्गसमन्वये च सिद्धे तेन नामसमन्वयसिद्धिरिति । असन्दिग्धभगवन्नामलिङ्गादिभिस्सन्दिग्धलिङ्गसमन्वयोक्तेः । एतेन लिङ्गसमन्वयस्य प्रागुक्तनामसमन्वयहेतुत्वेन वा तस्मिन्सत्येवास्योत्थानेन तत्कार्यत्वेन वा हेतुहेतुमद्भावरूपसङ्गतिरित्युक्तं भवति ॥ तदुक्तमिति ॥ तृतीयाध्यायस्य तृतीयपाद इत्यर्थः । ज्ञाते प्रथमपादेनेत्यर्थः । लिङ्गैरिति प्रायिकत्वाभिप्रायेण । ब्रह्मश्रुत्यादिनाप्यानन्द-मयादेस्समन्वयोक्तेः । एष समन्वयो नामसमन्वयः । अन्यत्र प्रसिद्धाशेषलिङ्गानां समन्वयम् । आहोभयगतत्वं चेत्युत्तरवाक्यगतेनाहेत्यनेन द्वितीयान्तस्यान्वयः ॥

॥ ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥

नन्वत्र टीकायामादित्यश्रुत्या सर्वगतत्वलिङ्गस्यान्यत्रप्रसिद्धिरुक्ता । सा न युक्तैव । तथाहि । अत्र सर्वगतत्वं नाम सर्वहृदयगुहास्थत्वम् । यद्वक्ष्यति ''सर्वभूताशयस्थित'' इति । तथाच तादृशं ''योवेद निहितं गुहायां निहितं गुहासु ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठित'' इत्यादौ विष्णावपि सिद्धमिति प्रक्रमस्थादित्यश्रुतिसमाख्याभ्यामुभयत्र प्रसिद्धिरेव लिङ्गस्य स्यात् । नान्यत्र प्रसिद्धिः । यथा भूमाधिकरणे ''प्राणोवा आशाया भूया'' नित्युपक्रम-स्थप्राणश्रुत्या ''विष्णुर्वाव देवेभ्यो भूया''निति समाख्ययाच भूमत्वस्य प्राणविष्णूभय-साधारण्यं तद्वदिति चेन्न । वैषम्यात् । तत्र प्रक्रमसमाख्ययोः प्राणविष्णुपरत्वं पूर्वपक्षिणस्संप्रतिपन्नमिति तत्र तथात्वं युज्यते । न त्विह । अत्राभिप्रेतलिङ्गस्य सर्वगतत्वस्य विष्णुनिष्ठतायाः पूर्वपक्षिणः क्वाप्यसम्मतेः । तथाच वक्ष्यत्यध्यायांते ''अन्यत्र प्रसिद्धेषु क्वापि ब्रह्मपरत्वं नेति प्राप्ते तन्निरास'' इति । वक्ष्यति चैतद्भूमाधिकरण एव सर्वभूतगतत्व-रूपार्भकौकस्त्वस्य पूर्वपक्षिणा क्वाप्यंगीकारेणे''त्यादि । एवं तर्ह्यंतर्हृदये ज्योतिरित्यादिना गायत्र्यधिकरणविषयवाक्यस्थार्भकौकस्त्वस्याप्याक्षेपस्सम्भवतीति चेत्सत्यम् । अव्यवहिता-क्षेपसम्भवे तस्यैव वाच्यत्वादिति ध्येयम् । अत्र भाष्यादौ पूर्वाधिकरणेनाक्षेपसङ्गत्युक्त्या

तदावश्यकत्वं भाति । तन्न युक्तम् । तथात्वे तृतीयादिस्थानामपि तथा वक्तव्यत्वापत्त्याऽनुक्तेर्न्यूनतापत्तेः । भिन्नपादस्थत्वेन पूर्वसङ्गत्यभावे बाधकाभावाच्चेत्याशङ्क्य समाधत्ते ।। यद्यपीति ।। तस्याः पूर्वसङ्गतेः । यदत्रोक्तं तंत्रचूडामणौ "पूर्वांत्योत्तराद्ययोर्नसङ्गतिरस्ति । तथात्वे पादविभागभङ्गप्रसङ्गा"दिति । तन्न । प्रमेयभेदेनैव पादभेदसम्भवादिति भावः । एतेन टीकायां "श्रुत्यादिसङ्गति"मित्युक्तं समर्थितं बोध्यम् । "ब्रह्म ततममिति सर्वगतत्वमुक्त" मिति भाष्यं न सङ्गतिमात्रपरम् । किन्तु फलपरमपीति भावेनाह ।। फलस्येति ।। टीकापि तथा योज्येति भावः । एतच्चाग्रे स्पष्टयिष्यते ।

## पाण्डुरङ्गि केशवाचार्यविरचिता भावदीपिका

पूर्वपादसङ्गतत्वेनैतत्पादप्रतिपाद्यं दर्शयति ।। यैरिति ।। लिङ्गपादस्य नामपादानंतर्ये हेतुमाह ।। यैर्लिङ्गैरिति ।। प्रायेणेति शेषः । नाम्नां अन्यत्र प्रसिद्धाशेषवैदिकनाम्नामित्यर्थः । स्पष्टं चैतत्सुधायाम् । तेषामेव लिङ्गानां समन्वयानुक्तेराह ।। लिङ्गजातीयानामिति ।। तदुक्तमिति ।। उपासनापाद इत्यर्थः । "ब्रह्म ततम"मिति भाष्ये एतत्पादाद्याधिकरणस्य पूर्वपादांत्याधिकरणेन सङ्गतिदर्शनात्सर्वत्रापि पादांत्याधिकरणस्योत्तरपादाद्याधिकरणस्य चावांतरसङ्गत्यपेक्षानियमः प्रतीयते । सा चायुक्ता अनावश्यकत्वादित्याह ।। यद्यपीति । भाष्यादावित्यत्रादिपदेन "इत्यन्यत्र प्रसिद्धोर्वि"त्याद्यनुव्याख्यापरिग्रहः ।।

### तात्पर्यचन्द्रिका

**अत्र "सर्वेषु भूतेष्वेत"मित्युक्तं सर्वगतत्वं किमादित्यादेः किं वा विष्णोरिति चिन्ता । तदर्थं "तस्यैतस्यासावादित्य" इत्यादि पूर्ववाक्यं किमादित्यविषयं किं वा ब्रह्मविषयमिति । तदर्थं "एतमेव ब्रह्मे"ति ब्रह्मशब्दादयः किं गौणाः किं वा मुख्या इति । तदर्थमर्भकौकस्त्वं किं ब्रह्मणि न युक्तमुत युक्तमिति ।। पूर्वपक्षस्तु ।। अयं सर्वगत आदित्यः । "तस्यैतस्यासावादित्योरस" इत्यादिना प्रकृतस्यादित्यस्यैवैतमिति परामर्शात् । ननु लोकतोऽन्यत्र प्रसिद्धस्यास्यादित्यशब्दस्यांतरधिकरणन्यायेन विष्णुवाचित्वात्कथं तेन तदन्यस्य प्राप्तिः । न च वाच्यं तत्र देवतावाचिनां समुद्रांतस्स्थत्वादिलिङ्गाद्विष्णुपरतोक्ता । अत्र तु न विष्णुलिङ्गमस्ति । न हि गङ्गायां**

घोष इत्यत्र गङ्गाशब्दस्तीरपर इति गङ्गायां मत्स्य इत्यत्रापि तथेति । तत्र प्रवृत्तिनिमित्तस्यानन्याधीनत्वादिना विष्णावेव तेषां मुख्यताया उक्तत्वात् । एतेन ''आदित्योरसः यश्चासावादित्यः आदित्योभवती''त्यादित्यश्रुतेर्बहुत्वादन्यप्राप्तिरिति निरस्तम् । विष्णौ मुख्यश्रुतिबाहुल्येनान्यप्राप्त्ययोगात् । न च तत्र तत्प्रकरणस्थानां सवित्रादिशब्दानामेव विष्णुवाचितोक्ता न तु तत्पर्यायादित्यादिशब्दानामपीति युक्तम्। तथात्वे तत्प्रकरणेऽदितिशब्दस्याप्यभावेनोत्तराधिकरणटीकायामदितिशब्दस्योक्तन्यायेन सावकाशत्वशङ्कानुपपत्तेः ।

देवतांतरगाः सर्वे शब्दवृत्तिनिमित्ततः ।
विष्णुमेव वदंत्यद्धा तत्सङ्गादुपचारतः ॥

इत्यनुव्याख्यानस्थसर्वशब्दविरोधाच्च । तत्रेन्द्रादिशब्दपर्यायाणामश्रवणेन तत्समन्वयार्थमधिकरणांतरारम्भापाताच्च । तत्र लिङ्गमात्रेण सवित्रादिशब्दानां विष्णुवाचित्वस्य तत्परत्वस्य वा सिद्धौ अत्र श्रुतिसहितलिङ्गेनादित्यादिशब्दानां विष्णुवाचित्वस्य तत्परत्वस्य वा सुतरां सिद्धेश्च ।

**प्रकाशिका** – विषयसंशयटीकां व्यनक्ति ॥ अत्रेति ॥ ऐतरेयके श्रूयते ''एतं ह्येवबह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत'' इति । तद्वाक्योक्तं पृथिव्यादिसर्वगतत्वं विषय इत्यर्थः । टीकायामेतं ह्येवेत्यादिवाक्योक्तावप्यर्भकौकस्त्वं तत्र न स्पष्टमित्युपसंहारवाक्योक्तिः । अधिकरणविषयोपाधयस्तु ''एतद्भावाभिधं लिङ्ग''मित्यादिना स्पष्टयिष्यन्ते ॥ आदित्यादेरिति ॥ आदिपदेन जीवस्य ग्रहणम् ॥ पूर्ववाक्यमिति ॥ एतमित्येतच्छब्दस्य पूर्वपरामर्शित्वं स्वरसतः प्राप्तमिति भावः ॥ ब्रह्मशब्दादय इति ॥ सयोतोश्रुत इत्युक्ताश्रुतत्वादिकमादिपदार्थः ॥ अर्भकौकस्त्वमिति ॥ भूतेष्विति भूतपदोपादानमहिम्ना लब्धमन्यत्रानवस्थितत्वे सति भूतमात्रावस्थितत्वरूपाल्पौकस्त्वं यदि न युक्तं तदा ब्रह्मशब्दादीनां गौणत्वावश्यंभावेन तद्विरोधाभावात्पूर्ववाक्यमादित्यविषयमिति एतमस्यामित्यादावेतच्छब्देन तस्यैव परामर्शादादित्यादेरेव सर्वगतत्वम् । यदा तु युक्तं तदा बाधकाभावेन ब्रह्मशब्दादीनां गौणत्वायोगेन तद्विरुद्धं पूर्ववाक्यं नादित्यादिविषयं

भवितुमर्हतीति विष्णोरेव सर्वगतत्वमिति फलफलिभावः स्पष्टत्वान्नोक्तः । इयं च चिन्तापरंपराऽऽदित्यकोटिकपूर्वपक्षानुरोधेनोक्ता । जीवकोटिकपूर्वपक्षानुसारेण तु सर्वगतत्वं किं जीवस्योत विष्णोरिति चिन्तानन्तरं तदर्थमेतमित्येतच्छब्दः किं वक्ष्यमाणपरामर्शक उत न । वक्ष्यमाणपरत्वेपि चक्षुर्मयत्वादिकं विष्णोर्न युक्तमुत युक्तमिति । तदर्थं मयट् किं प्रसिद्धचक्षुरादिकरणकत्वार्थ उत तत्स्वामित्वाद्यर्थ इत्यादिरूपेणोह्येति भावः । आदित्यकोटि-कपूर्वपक्षं तावदारभते ॥ अयमिति ॥ प्रकृतस्येति ॥ प्रकृतश्चादित्य एव । ''आदित्योरसः यश्चासावादित्यः पुरुषं पुरुषं प्रत्यादित्य इत्यादित्यश्रुतिबाहुल्यात् । सूर्य आत्मा जगत इति सौरमन्त्रोदाहरणाच्च । एतं चन्द्रमसीत्युक्त्वा एतमादित्य इत्यनुक्तत्वलिङ्गाच्चे''ति टीकोक्तेरिति भावः । न्यायविवरणटीकायां ''न चैतदंतस्स्थत्वाधिकरणन्यायेनोपासात्रैविध्यादिति वा परिहृतमिति वाच्यम् । सम्भवति हीश्वरे कल्पनैषा । न चासावत्र सम्भवति । सर्वेषु भूतेष्वित्यल्पौकस्त्वश्रवणा''दित्यादिनाऽऽक्षिप्य समाहितम् । तदयुक्तमिव । तत्रेवात्र लिङ्गाभावादादित्यशब्दस्य प्राक्समन्वयानुक्तेश्च । टीकायां प्रापकबाहुल्योक्तेश्चेत्याशङ्क्य ''टीकासुच यदस्पष्ट''मिति प्रतिज्ञातत्वात्तद्वाक्यं विवरितुं पूर्वपक्षाक्षेपप्रकारमाह ॥ नन्विति ॥ पूर्वन्यायाविषयत्वमाशङ्क्याह न च वाच्यमिति ॥ तथेतीत्यनेनान्वयः ॥ विष्णुपरतेति ॥ न तु मुख्यतापीत्यर्थः । तत्र अन्तरधिकरणे । आदिपदेनान्यगतं प्रति स्वातन्त्र्येणेति गृह्यते । श्रुतिबहुत्वमुज्जीवकमस्तु किं लिङ्गेनेत्येतट्टीकोक्तमादित्यश्रुतिबाहुल्यमपि नान्यप्रापकमित्याह ॥ एतेनेति ॥ एतच्छब्दार्थमाह ॥ विष्णाविति ॥ मन्दानां भ्रमं वारयति ॥ न चेति ॥ टीकायामिति ॥ ''न च श्रुतिर्विष्णुविषया किं न स्यादुक्तन्याया''दिति वाक्येनेत्यर्थः ॥ उक्तन्यायेनेति ॥ अन्तरधिकरणन्यायेनेत्यर्थः ॥ अनुव्याख्यानेति ॥ तृतीयाध्याय-तृतीयपादीयानुव्याख्यानस्थेत्यर्थः । सर्वे देवतांतरगताश्शब्दाश्शब्दवृत्त्योर्योगरूढ्योर्निमित्तानां बहुलप्रयोगानां हरौ सत्त्वात् अद्धा वचनवृत्त्यैव वदन्ति । अन्यत्र तत्सङ्गादुपचारतः प्रयोग इत्यर्थः । ननु तत्र सर्वशब्दस्य सङ्कोचः क्रियतामित्यत आह ॥ तत्रेति ॥ अन्तरधि-करणोदाहरण इत्यर्थः ॥ ननु तत्र पर्यायाणामपि निरवकाशविष्णुलिङ्गोपेतानामेव समन्वयो नान्येषामित्याशङ्क्याह ॥ तत्रेति ॥ श्रुतीति ॥ ब्रह्मश्रुतिसहिताश्रुतत्वादिलिङ्गेनेत्यर्थः ॥

**पाण्डुरङ्गी–** एतमितीति ॥ ''एतं ह्येव बह्वृचा'' इत्यादिनेत्यर्थः ॥ किमत्रादित्यश्रुत्या पूर्वपक्षो बह्वित्यादिश्रुत्या वा सौरमन्त्रेण वा आदित्येऽनुक्तत्वलिङ्गेन वा चक्षुर्मयत्वादिना वा अर्भकौकस्त्वेन वा । नाद्य इत्याह ॥ नन्विति ॥ ननु लोकतोऽन्यत्र प्रसिद्धानां

देवतावाचीन्द्रादिशब्दानां समुद्रांतस्स्थितत्वादिलिङ्गैर्विष्णुपरत्वे निर्णीते अन्यत्र प्रसिद्धस्याप्या-दित्यशब्दस्य विष्णुवाचकत्वं स्यादित्याशङ्क्याह ॥ न हीति ॥ अन्यथा गङ्गायां घोष इत्यत्र गङ्गाशब्दार्थभूतप्रवाहस्य घोषाधिकरणत्वानुपपत्त्या तीरपरत्वे चान्यत्र गङ्गायां मत्स्य इत्यत्रापि तीरपरत्वं स्यात् । गङ्गायां घोष इत्यत्र मुख्यार्थानुपपत्तिरित्यादिवद्गङ्गायां मत्स्य इत्यादौ तदभावाद्यदि न तीरपरत्वं तर्ह्यंत:प्रविष्टमित्यादिवाक्ये समुद्रांतस्थितत्वादिलिङ्गैर्विष्णुपरत्वेप्यत्र सयश्चायमित्यादौ तल्लिङ्गाभावान्न विष्णुपरत्वमिति सममित्यर्थः । तथेतीत्यत्रत्यस्येतिशब्दस्य इति न च वाच्यमिति पूर्वेण सम्बन्धः । द्वितीयं दूषयति ॥ एतेनेति ॥ एतेनेत्यनेन परामृष्टं हेतुं दर्शयति ॥ विष्णाविति ॥ विष्णौ मुख्या या श्रुतिस्तद्बाहुल्येनेत्यर्थः । अन्तिमाधिकरणस्य तत्प्रकरणस्थानां सवित्रादिशब्दानां विष्णुमात्रवाचित्वपरत्वे अनुव्याख्यानविरोधश्चेत्याह ॥ देवतांतरगा इति ॥ नन्वनुव्याख्याने सर्वशब्दोऽन्तरधिकरणन्यायविषयसर्वपर एव । नत्वसंकुचितसर्वपर इत्यतो न तद्विरोध इति पूर्वत्रारुच्या दोषान्तरमाह ॥ तत्रेति ॥ न च वासवादिशब्दानामन्तरधिकरणन्यायविषयत्वेनैव भगवत्परत्वसम्भवान्न तदर्थमधिकरणान्तरारम्भ इत्यरुच्याह ॥ तत्रलिङ्गेति ॥

## तात्पर्यचन्द्रिका

**एतेन ''सूर्यआत्मे''ति सौरमन्त्रोदाहरणात् सूर्यप्राप्तिरिति निरस्तम् । उक्तन्यायेन मन्त्रस्थसूर्यादिशब्दस्यापि विष्णौ मुख्यत्वात् । न चान्तरित्यादौ चन्द्रादिकतिपय-गतत्वादिकमुक्तमत्र तु सर्वगतत्वमुच्यत इति भेदः । व्यधिकरणत्वात् । न हि प्रतिपाद्याभेदः शङ्कितः । किन्तु पूर्वपक्षानुदयः । न च ''चन्द्रमस्येत''मिति सजातीये चन्द्रादावुक्त्वाऽऽदित्येऽनुक्तत्वलिङ्गात्तत्प्राप्तिः । ''सर्वेष्वि''ति सर्वशब्देनादित्यस्यापि ग्रहणसम्भवेन सावकाशलिङ्गेन श्रुत्यादिबाधायोगात् । सन्तिचात्र ''एतमेव ब्रह्मे''ति ब्रह्मशब्दाद्याःश्रुतयः । ''सयोतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्ट''इत्यश्रुतत्वादिलिङ्गानि च । ब्रह्मशब्दस्य च विष्णौ मुख्यताया आनन्दमयाधिकरणे सिद्धत्वात् । ज्योति-रधिकरणे च ज्योतिषो विष्णुत्वेऽश्रुतत्वादेर्हेतूकृतत्वात् । अदृष्टत्वस्य च विष्णु-धर्मतायाः ''अदृश्यत्वादिगुणक''इत्यत्र वक्ष्यमाणत्वात् । ''सयोतोऽश्रुत'' इत्यादि सन्निधाने चान्तरपुरुष इत्यंतरत्वश्रवणात् तस्य चान्तर्याम्यधिकरणे विष्णुलिङ्गतायाः सेत्स्यमानत्वात् । न च चक्षुर्मयत्वादिना सर्वजीवानां प्राप्तिः । तस्याप्यानन्द-**

**मयाधिकरणन्यायेन प्राचुर्यार्थतया पादांत्यप्राणाधिकरणन्यायेन शतसंवत्सरत्वादेरिवांतर्यामिविषयतया वा सम्भवात् । पशुशब्दस्य तद्विशेषच्छाग इवादित्यश्रुत्या चक्षुर्मयत्वादिजीवलिङ्गानां तद्विशेषादित्ये पर्यवसानेन सर्वजीवप्रापकाभावाच्च । न चार्भकौकस्त्वलिङ्गादन्यस्य प्राप्तिः । तस्यापि विष्णुधर्मताया अन्तस्तद्धर्मेत्यत्रोपासात्रैविध्येत्यत्र चोक्तत्वात् । हृद्यपेक्षयेत्यादौ वक्ष्यमाणत्वाच्च । वक्ष्यमाणसिद्धान्तन्यायाच्छादनेन पूर्वपक्षकरणे च तन्न्यायेनैवैतत्सिद्धान्तफलसिद्ध्यैतस्य वैयर्थ्यात् । सर्वेषु भूतेष्वित्यनेन सर्वगतत्वस्यैवोक्ततयाऽर्भकौकस्त्वाभावाच्च । अन्यथा अत्रोक्तः सर्वगतो न विष्णुश्चेत्पूर्वोक्तोपि सर्वगतो न विष्णुः स्यादित्याक्षेपायोगात् ।**

**प्रकाशिका** – टीकोक्तं सौरमन्त्रोदाहरणरूपं प्रापकान्तरमप्याक्षिपति ॥ एतेनेति ॥ आशयमबुध्वा भ्रांतस्य चोद्यं परिहरति ॥ न चेति ॥ अत्र तु पृथिव्यादिसर्वगतत्वम् । अतो न पौनरुक्त्यम् । प्रतिपाद्यभेदादिति भावः ॥ किं त्विति ॥ सर्वस्य विष्णुप्रापकत्वेनादित्यादिप्रापकाभावेन पूर्वपक्षानुदयश्चोद्यत इत्यर्थः । टीकोक्तं प्रापकान्तरमप्याक्षिपति ॥ न चेति ॥ आदित्यादन्यश्चेत्सर्वगतोऽत्राभिमतस्तदाऽऽदित्ये एतमित्यपि श्रूयेतेति भावः ॥ सावकाशेति ॥ अनुक्तत्वलिङ्गेनेत्यर्थः । आद्यपदेनान्तरपुरुष इति पुरुषशब्दादिर्ग्राह्यः । श्रुत्यादीनां विष्णौ गतत्वमुपपादयति ॥ ब्रह्मशब्दस्येति ॥ आनन्दमयाधिकरण इति ॥ प्रागुक्ताशयोऽनुसन्धेयः । पुरुषशब्दस्य च गायत्र्यधिकरणे मुख्यत्वस्योक्तत्वादित्यपि ध्येयम् । लिङ्गानिच वैष्णवानीत्याह ॥ ज्योतिरधिकरण इति ॥ हृदय आहितं यदित्यत्र ज्योतिरग्निर्विष्णुर्वेति विशये प्रसिद्धेरग्निरिति प्राप्ते कर्णादि- विचरणाभिधानाद्विष्णुरेवेति चरणपदेन कर्णादिविचरणरूपाश्रुतत्वादेज्योतिषो विष्णुत्वे हेतूकरणादसिद्धस्य तत्त्वायोगात्तत्रैव मुख्यानीत्यर्थः । ''अदृश्यत्वादिगुणकोधर्मोक्ते''रित्यत्र ''यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्र''मित्यादावदृश्यत्वादिगुणको विष्णुरन्योवेति विशये ''अक्षरात्परतः पर'' इति परावधित्वेनोक्ताक्षरशब्देन ''यया तदक्षरमधिगम्यत'' इत्यक्षरसामानाधिकरण्यादन्य इति प्राप्ते ''अथ परायया तदक्षर''मिति परविद्याविषयत्वोक्तेरदृश्यत्वादिगुणकमक्षरं विष्णुरेवेति वक्ष्यमाणत्वादित्यर्थः । ''अंतर्याम्यधिदैवादि''ष्वित्यत्र ''यःपृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेदे''त्यादौ पृथिव्यादिगतत्वेन श्रुतः किं विष्णुरन्योवेति विशये पृथिव्यादिशरीरकत्वस्याशरीरे विष्णावयोगादन्य इति प्राप्ते पृथिव्याद्यविदितत्वांतरत्वादिधर्मोपदेशाद्विष्णुरेवेत्यन्तरत्वस्य

विष्णुलिङ्गतायास्साधयिष्यमाणत्वादित्यर्थः । एवमादित्यकोटिकपूर्वपक्षमाक्षिप्य जीवकं कमप्याक्षिपति ॥ न चेति ॥ परमतदूषणप्रस्तावे सुधायामुक्तं ''मनोमयत्वादीनामान मयाधिकरणन्यायेन सावकाशत्वा''दिति वाक्यं हृदि कृत्वाह ॥ प्राचुर्येति पूर्णज्ञानत्वादिरूपार्थतयेत्यर्थः । चक्षुःकरणकसम्बन्धमेव मयडर्थमाश्रित्याह ॥ पादांत्ये पशुशब्दस्येति ॥ षष्ठे ''पशुचोदनाया अनियमोऽविशेषा''दित्यन्तिमेऽधिकरणे ''अग्नीषे पशुमालभेते''त्यत्र किं यः कश्चित्पशुरालब्धव्य उत च्छाग एवेति संशये ''छागस्य व मेदसोनुब्रूही''ति मन्त्रस्य चोदितार्थप्रकाशनार्थतया पारतन्त्र्याद्भिन्नवाक्यतया ''तेजोवैघृत मिति घृतार्थवादवैलक्षण्याच्च मन्त्रगतछागशब्दस्य पशुमात्रे यौगिकत्वेन वा पाक्षिकानुवाद वोपपत्तेः पशुशब्दाविशेषकत्वादालम्भनचोदनायास्सामान्यपर्यवसानसम्भवेन यःकश्चन पशु प्राप्ते चोदनाप्रतिपन्नस्य सामान्यस्य प्रतिव्यक्तिसमास्या छागेऽप्यवैकल्याद्रूढिप्राब योगासम्भवान्नित्याम्नातस्य पाक्षिकत्वायोगाच्च छाग एवालब्धव्य इति सिद्धान्तितम् । अत्र पशुशब्दस्य तद्विशेषछागे पर्यवसानं तद्वदित्यर्थः । टीकोक्तं प्रापकान्तरमपि पराचष्टे ॥ न ॥ अन्तरिति ॥ अन्तस्स्थत्वस्यापि निहितं गुहास्विति गुहास्थत्वरूपतयाऽर्भकौकस्त्वर त्वादिति भावः ॥ उपासेति ॥ ''सीमानं विदार्यैतया द्वारा प्रापद्यते''ति हृदयस्थत्वोक्ते भावः । एतेन ''उपासात्रैविध्या''दिति न्यायविवरणटीकावाक्यमन्यथापि व्याख्यातं ध्येय हृदीति ॥ तृतीयपादे ''हृद्यपेक्षया तु मनुष्याधिकारत्वा''दिति गुणसूत्रेण ''अङ्गुष्ठमात्रः पु मध्य आत्मनि तिष्ठती''त्यत्राङ्गुष्ठ- मात्रपरिमितहृदयावकाशस्थत्वोक्तेरिति भावः ''शब्दादिभ्योंतःप्रतिष्ठाना''दित्यादिरादिपदार्थः । ननु वक्ष्यमाणाज्ञानेन पूर्वपक्षोस्त्वि आह ॥ वक्ष्यमाणेति ॥ आच्छादनेन अनाविष्कारेण । तदाविष्कृत्य तद्वैलक्षण्य कमनुक्त्वेत्यर्थः । यद्वा आच्छादनेनानुपमर्देनेत्यर्थः । अर्भकौकस्त्वमुपेत्य न तत्पूर्वपक्षप्रा मित्युक्तमिदानीं तदेव नास्तीत्याह ॥ सर्वेष्विति ॥ अन्यथेति ॥ भाष्ये स इदं ततममपश्यदिति पूर्वोक्तसर्वगतत्वमन्यस्येत्याक्षिप्तम् । तन्न स्यात् । अर्भकौकस्त्वस्यान्यग प्रागुक्तसर्वगतत्वस्य विष्णुधर्मत्वाविरोधादित्यर्थः ।

**पाण्डुरङ्गि** – तृतीयं पक्षमनूद्य दूषयति ॥ एतेनेति ॥ उक्तन्यायेनेति ॥ अन्तरधिकर न्यायेनेत्यर्थः । चतुर्थं प्रत्याह ॥ न चेति ॥ सावकाशलिङ्गेनेति ॥ आदित्येऽनुक्तत्वलि नेत्यर्थः । अत्र लिङ्गस्य सावकाशत्वं नाम सन्दिग्धत्वं विवक्षितमिति बोध्यम् । एवादित्यस्यापीत्यपिशब्दः । ननु मास्तु सावकाशलिङ्गेन श्रुत्यादिबाधः । प्रकृते

श्रुत्यादिकमेव नास्तीत्यत आह ॥ संतिचेति ॥ नन्वादित्येऽनुक्तत्वलिङ्गस्येव ब्रह्मश्रुत्यादेरपि सावकाशत्वात्कथं ब्रह्मश्रुत्यादिनापि तद्बाध इत्यतस्तस्या निरवकाशत्वमुपपादयति ॥ ब्रह्मशब्दस्य चेति ॥ न च चक्षुर्मयत्वादिनेति ॥ नन्वानन्दमयोक्तस्य कोह्येवान्यादिति प्राचुर्यर्थे हेतुव्यपदेशस्य तत्प्रायपाठस्य चात्राभावेन तन्न्यायाविषयत्वात् कथं तन्न्यायेन प्राचुर्यार्थतया चक्षुर्मयत्वादेर्ब्रह्मणि सावकाशत्वमित्यरुच्याह ॥ पादांत्येति ॥ अन्यथेति ॥ सर्वेषु भूतेष्वित्यत्राल्पस्थानस्थितत्वरूपार्भकौकस्त्वोक्तावित्यर्थः ।

## तात्पर्यचन्द्रिका

**मैवम् । ''संवत्सर एव प्रध्वंसयन् तस्यैतस्यासावादित्योरस'' इति संवत्सराधिपतित्वरूपसंवत्सरसारत्वलिंगात् ''यश्चासावादित्य'' इति प्रसिद्धार्थयच्छब्दोपबन्धात् ''तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवती''ति सर्वपुरुषाभिमुख्यलिङ्गाच्चादित्यशब्दस्य प्रसिद्धादित्यपरत्वात् । अत एव भाष्यटीकयोरादित्यशब्दस्य प्रसिद्धपरत्वं लिङ्गाधीनमिति दर्शयितुं ''तस्यैतस्यासावादित्योरस'' इत्यादिलिङ्गप्रतिपादकांशोप्युपात्तः । उक्तं ह्यनुव्याख्याने ''पुनश्च प्रापकाद्धेतोस्तत्राधिकरणान्तर''मिति । न चैवं सत्यावश्यकत्वाल्लिङ्गैरेव पूर्वपक्षः लिङ्गसाहचर्यादेव सर्वगतत्वस्यान्यत्र प्रसिद्धत्वं चोच्यताम् किं तदुपजीविश्रुत्युपन्यासेनेति वाच्यम् । उक्तलिङ्गानामादित्यविशेषणतयैव प्रतीत्या सर्वगतविशेषणत्वाप्रतीतेः साक्षात्तैः पूर्वपक्षाद्यसम्भवात् । तदेतदभिप्रेत्योक्तं न्यायविवरणे ''बहवो ह्यत्रादित्यशब्दाः । क्षित्यादिषूक्त्वाऽऽदित्येऽनुक्तिरित्यादिलिङ्गं चे''ति । यद्वा अन्तराद्यधिकरणेष्विन्द्रादिशब्दानां तैस्तैर्लिङ्गैर्विष्णुपरतैव व्युत्पादिता । न तु तत्र मुख्यता । ''तस्मान्मुख्यार्थता विष्णोरिति कृत्वा हृदि प्रभुः । समन्वयं साधयती''त्यनुव्याख्याने मुख्यत्वोक्तिराकाशादिपदप्रवृत्तिनिमित्तस्य भगवदधीनत्वोक्तिश्च स्थितायां त्रिपाद्यां प्रवृत्ते ''तदधीनत्वा''दित्यत्र सर्वशब्दानां भगवति मुख्यताया वक्ष्यमाणत्वात्तदभिप्राया । अत एव हृदिकृत्वेत्युक्तम् । ईक्षत्यधिकरणे वाच्यत्वोक्तिरपि तदुपयोगितया । टीकायां प्रत्यधिकरणं तत्तच्छब्दवाच्यत्वोक्तिरपि तदभिप्राया । तत्तच्छब्दप्रवृत्तिनिमित्तगुणलाभस्य वक्ष्यमाणसापेक्षत्वेपि तत्तत्प्रकरणस्थगुणमात्रलाभः**

**पूर्वाधिकरणाक्षेपः समाधानं च तत्तदधिकरणमात्रसाध्यम् । एवं चादित्यादिशब्दानां विष्णौ मुख्यताया अनुक्तत्वात्तैः पूर्वपक्षोदय इति न्यायविवरणाभिप्रायः ।**

**प्रकाशिका** – एवमुक्तरीत्याऽऽदित्यश्रुतेस्सावकाशत्वेऽपि ज्योतिरित्यत्र निरवकाश-प्रकरणेन ज्योतिश्श्रुतेरिव निरवकाशादित्यलिङ्गवशेनादित्यश्रुतेर्निरवकाशत्वेन वा पूर्वं विष्णौ समन्वयेऽपि मुख्यत्वस्यानुक्त्या सावकाशत्वशङ्काभावेन स्वतो निरवकाशत्वेन वा तन्न्यायाविषयत्वेन तत्रास्यास्समन्वयस्यैवाभावेन वा त्रेधा श्रुतेर्निरवकाशत्वेन तया पूर्वपक्षोदयो युज्यत इति भावेनाह ॥ संवत्सर एवेति ॥ ''महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्याभावयन्नन्यानि तस्यैतस्यासावादित्योरसः सयश्चायमशरीरः प्राज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात्तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति । तदप्येतदृषिणोक्तं चित्रं देवनामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चे''त्यत्र तस्यैतस्येति संवत्सरं परामृश्य रसपदेन तदधिष्ठातृत्वोक्तेस्तस्य च रथवेगेन संवत्सरकर्तरि सूर्य एव प्रसिद्धेः यच्छब्दस्य प्रसिद्धार्थकत्वात्सूर्यस्यैवादित्यत्वेन लोके प्रसिद्धत्वात् सर्वपुरुषाभिमुख्यस्य सूर्य एव प्रत्यक्षत्वेन विष्णावदर्शनाल्लिङ्गत्रयेण श्रुतेरुज्जीवनादित्यर्थः । एतेन लिङ्गबाहुल्यकथनेन ''बहुलिङ्ग-सहितश्रुतेरपि सावकाशायाः निरवकाशश्रुत्यादीनामेव बलवत्त्व''मिति न्यायविवरण-गतबहुशब्दार्थो विवृतः ॥ अत एवेति ॥ लिङ्गैश्श्रुत्युज्जीवनस्याभिप्रेतत्वादेवेत्यर्थः । अन्यथा श्रुतिबाहुल्यमात्रप्रदर्शनपरत्वेऽसावादित्य इत्येतावदेवोदाह्रियेतेत्यर्थः ॥ उक्तं हीति ॥ आनन्दमयाधिकरणे । तत्र पूर्वाधिकरणव्युत्पादितन्यायविषयेप्यर्थे । यदधिकरणान्तरमारभ्यते तत्पूर्वन्यायाच्छादकाधिकाशङ्कालक्षणात्पुनरधिकरणान्तरारम्भप्रापकाद्धेतोर्युक्त इत्यर्थः । ननु टीकारीत्या सर्वगतत्वस्यान्यत्रप्रसिद्धये श्रुत्यनुसरणमित्यत आह ॥ लिङ्गेति ॥ तदेतदिति ॥ लिङ्गैश्श्रुतिमुज्जीव्य तया पूर्वपक्ष इत्येतदित्यर्थः । एतेन भाष्यन्यायविवरणयोरेकविषयत्वं विवृतम् । ''आदित्यो भवितुमर्हति ॥ तदीयश्रुतिलिङ्गानामत्र दर्शना''दिति न्यायविवरणटीका च विवृता । यद्यप्यत्रादित्यशब्द एक एव तथाप्यावृत्तिबहुत्वाद्वाऽऽदित्यप्रतिपादकादि-त्यसूर्यमित्रशब्दानां सत्त्वाद्वा बहव इत्युक्तम् । यद्यप्यत्र शब्दा इत्यन्तमेवोदाहार्यम् । शिष्टं तु पूर्वपक्षे प्रापकान्तरत्वादुदाहृतम् । आदिपदेन चक्षुर्मयत्वादिकं जीवलिङ्गं ग्राह्यम् यद्वाऽऽदित्यपदेन संवत्सरसारत्वादिप्रागुक्तलिङ्गग्रहः । तेन तदंशोपि प्रकृतोपयोग्येवेति भावः । न्यायविवरणे लिङ्गेन श्रुत्युज्जीवनं न स्पष्टं प्रत्युत श्रुतीनामेव लिङ्गसमकक्षतया प्राबल्यं प्रतीयते ।

अतस्तत्स्वारस्यानुरोधेन भाष्यादौ लिङ्गांशोक्तेर्भावं विवक्षुः पक्षद्वयमाह ॥ यद्वेत्यादिना ॥ विष्णुपरतैवेति ॥ तस्या अपि समन्वयरूपत्वात् । इह तु तत्परत्वं नास्ति । तल्लिङ्गाभावादिति भावः । नन्वेवमानन्दमयाधिकरणान्ते -

अतो नारायणो देवो निश्शेषगुणवाचकैः ।
गुणिसामान्यवचनैरपि मुख्यतयोदितः ॥
अध्यात्मगैश्च प्राणाद्यैस्तथैव ह्यधिभूतगैः ।
अन्नादिशब्दैर्भगवानेको मुख्यतयोदितः ॥ इत्युपक्रम्य
शब्दप्रवृत्तिहेतूनां तस्मिन्मुख्यसमन्वयात् ।
अन्यार्थेष्वल्पताहेतोस्तन्निमित्तत्वतस्तथा ॥

इत्यादिना भगवति विद्वद्रूढिमहायोगावभिधाय तस्मादिति श्लोके तस्मान्महायोगविद्वद्रूढिसत्त्वात्सर्वशब्दमुख्यार्थता विष्णोरुपपन्नेति मुख्यत्वोक्तेः तन्निमित्तत्वत इत्यादिनाऽन्यगतप्रवृत्तिनिमित्तस्य भगवदधीनत्वोक्तेश्च ईक्षत्यधिकरणे वक्ष्यमाणसमन्वयोपयोगितया वाच्यत्वोक्तेश्च टीकायां तस्मादशेषाधिदैवगतशब्दवाच्यो हरिरित्यादिना सर्वत्र तत्तच्छब्दवाच्यत्वोपसंहारात्तद्विरोध इत्यतस्सर्वस्य गतिमाह ॥ तस्मादिति ॥ उक्तिश्चेति ॥ अनुव्याख्यान इत्यन्वेति । तदभिप्रायेत्यन्वयः । पादत्रये नानावाक्यगतभगवल्लिङ्गैस्तत्तद्वाक्यगताधिदैविकादिसर्वशब्दानां भगवत्परत्वे सर्वस्य तदधीनत्वे च निर्णीते सति किं तेषां तत्परत्वमैन्द्र्यागार्हपत्यपरत्वस्येवामुख्यवृत्त्योत मुख्यवृत्त्येति तथा त्रिपाद्यां तत्तच्छब्दप्रवृत्तिहेतोरीशाधीनत्वोक्तेः किं फलमिति च शङ्कायाः पादत्रयानंतरमेवोदयात् तच्छङ्कानिवृत्त्यर्थं त्रिपाद्यनन्तरं प्रवृत्ते तदधीनत्वादित्यव्यक्तनयगुणसूत्रे स्वातंत्र्यस्य शब्दवृत्तौ मुख्यनिमित्तत्वात्सर्वस्वतन्त्रे भगवत्यव्यक्तादिशब्दोपलक्षितसर्वशब्दानां मुख्यवृत्तिरिति वक्ष्यमाणत्वात्तदभिप्रायेणात्र मुख्यत्वाद्युक्तिरित्यर्थः । तदुपयोगितया वक्ष्यमाणमुख्यत्वोपयोगितया । अन्यथा ब्रह्मण एवावाच्यत्वे शब्दानां तत्र मुख्यत्वोक्तिरसङ्गता स्यादिति भावः । ननु शब्दप्रवृत्तिनिमित्तस्य गुणस्याव्यक्तनयेनैव लब्धत्वात्किं पूर्वतनैरधिकरणैरित्यत आह ॥ तत्तच्छब्दप्रवृत्तीति ॥ अवयवशक्तिलभ्यपरमैश्वर्यादिमत्त्वरूपगुणलाभस्येत्यर्थः । ननु तत्र त्रिपाद्यां सिद्धं स्वातन्त्र्यं शब्दप्रवृत्तौ निमित्तं भवति नेति विशये नेति प्राप्ते भवतीति सिद्धान्तयिष्यते । न तु तत्तच्छब्दप्रवृत्तिनिमित्तमपि भगवद्गतमिति । तथाच कथमेवमुक्तिरिति चेत्सत्यम् । "सूक्ष्मं तु

चादितिशब्दस्य ''अदितिर्हीदं सर्वं यदिदं किञ्च अदितिर्देवतामयी''त्यादौ ब्रह्मणि प्रयोगात्तत्र निमित्ताकाङ्क्षा । न हि लौकिकप्रयोग एवाकाङ्क्षानिमित्तम् । ''यदाजिमीयुस्तदाज्यानामाज्यत्व''मित्यादावदर्शनात् । किञ्च ।

पूर्वत्रादितिशब्दस्य प्रयोगान्नानुशासनम् ।
शब्दस्तु किन्तु पूर्वोक्तात्तृत्वे हेतुरिहोच्यते ॥ १ ॥

न हीहपूर्ववाक्येऽदितिशब्दःप्रयुक्तः । येन तदनुशासनं युक्तं स्यात् । न च तत्तदत्तुमिति पूर्वप्रतिज्ञातसर्वात्तृतायां श्रुत्यन्तरे ब्रह्मणि प्रयुक्तस्य सर्वात्तृत्वनिमित्तकस्यादितिशब्दस्य हेतूकरणे सम्भवति स्थलान्तरस्थादितिशब्दस्य निर्वचनं युक्तम् । अत एव टीकायां विषयवाक्यार्थोक्तिदशायां हेतुत्वमुक्तम् । एवं च न सर्वशब्दस्य सङ्कोचः । बाधकाभावात् । पूर्ववाक्ये सयद्यदेवासृजत तत्तदत्तुमिति वीप्सया कृत्स्नोक्तेश्च । सर्वस्यैतस्यात्तेत्यादौ तु सर्वशब्दस्य बाधकवशात्सङ्कोचः । अत एव सूत्रे लाघवाय श्रुत्यनुगमाय च सर्वशब्दे प्रयोक्तव्येऽपि सर्वशब्दस्य सङ्कोचनिरासाय चराचरशब्दः प्रयुक्तः । न चाबाधेऽपि प्रकरणादुत्कर्षः । अभिक्रमणस्यावान्तरप्रकरणं च तस्य प्रयाजविषयैर्वाक्यैः पूर्वं पश्चाच्च सन्दष्टत्वात् । न चात्तृत्वस्यादितिविषयैर्वाक्यैः सन्दंशोऽस्ति । अदितेरेव महाप्रकरणमिति तु ''नेहासीत्किंचने''त्यादिभाष्योक्तस्मृत्यैव निरस्तम् । तदेतदभिप्रेत्योक्तं न्यायविवरणे ''सन्दिग्धश्रुतिलिङ्गाभ्यां निश्चितयोर्लिङ्गप्रकरणयोरेव बलवत्त्व''मिति । अत्र चाद्ये सूत्रे लिङ्गोक्तिर्द्वितीये तु प्रकरणोक्तिरिति स्फुटः सूत्रक्रमः ।

**प्रकाशिका** – ननु सर्वशब्दसङ्कोचेनादितावपि लिङ्गं युक्तमित्युक्तमित्यतस्सूत्रे चराचरेतिश्रौतसर्वशब्दार्थोक्त्या सूचितमाह ॥ न च बाधं विनेति ॥ या तु प्रकरणादुत्कर्षोक्तिस्तत्राह ॥ पूषादीति ॥ यदप्यभिक्रमणदृष्टान्तेनावान्तरप्रकरणकल्पनं तद्वैषम्यमाह ॥ अवान्तरेति ॥ सच सन्दंशः । पूर्वार्धं व्यनक्ति ॥ भाष्येति ॥ ''एकः पुरस्ता''दित्यादिश्रुत्या ''स्रष्टापाते''त्यादिस्मृत्येत्यर्थः । ननूक्तमत्र प्रसिद्धार्थ एवेत्यादि तत्राह ॥ अन्वाख्यानेति ॥ अदितिशब्दव्युत्पादनपक्षेऽपीत्यर्थः । प्रसिद्धादितिपरत्वत्यागेनापूर्वार्थस्वीकारायैव ''सर्वं वा अत्ती''ति सर्वात्तृत्वरूपप्रवृत्तिहेतुकथनादित्यर्थः । एतेन सर्वं वा अत्तीति

यत्सर्वात्तृत्वमदितेरदितिशब्दार्थस्य विष्णोरदितित्वमदितिशब्दप्रवृत्तिनिमित्तमिति श्रुत्यर्थ उक्तो भवति । ननु श्रुतौ सर्वात्तृत्वरूपनिमित्तोक्तावपि न तन्निमित्तेन विष्णौ यौगिकत्वं युक्तम् । किन्तु जातिनिमित्तक एवायं शब्दः । दधिशब्दे तथादर्शनेन रूढेर्बलवत्त्वादित्यत आह ॥ न चेति ॥ कम्पनादित्यत्राङ्गरूढितो वैदिकयोगबलवत्ताया वक्ष्यमाणत्वादिति भावः । एतेन तीरादौ गङ्गादिपदप्रयोगेऽपीत्यादिनोक्तशङ्काऽपास्ता श्रुतिरेव बाधिकेत्यत आह ॥ अनश्नन्नितीति ॥ अशुभभोक्तृत्वनिषेधपरतया गतिर्वक्ष्यत इत्यर्थः । न तदश्नातीत्यस्य त्वक्षरनये गतिर्वक्ष्यत इत्यपि ध्येयम् । एतेन यद्वेत्यादिनोक्तलिङ्गनिरवकाशत्वशङ्का प्रत्युक्ता प्रागुक्तदधि-दृष्टान्तं प्रत्याह ॥ यदेनमिति ॥ दर्शपौर्णमासप्रकरणे ऐन्द्रदध्निदधिशब्द निर्वचनार्थोऽयमर्थवादः। एनमिन्द्रमधिनोदप्रीणयदिति यत्तद्दध्नो दधित्वमित्यन्वाख्यानमात्रम् । अवयवार्थकथनमात्रम् । ननु पूर्वत्रादितिपदस्य विष्णावेव प्रयोगान्न तत्र निमित्ताकाङ्क्षा । तथाच विष्ण्वर्थ-त्वेऽदितिशब्दस्य तत्राप्रसिद्धत्वेनादितेरित्यनुवादोवाऽदितित्वमित्यत्र निमित्तोक्तिर्वा न युक्तेत्यतः अत्र श्रुतावदितिपदस्य पूर्वत्राप्रयोगेऽपि श्रुत्यंतरे प्रयोगसत्त्वेन लोकतो विष्णौ प्रसिद्धेस्तत्र निमित्ताकाङ्क्षायां अदितेरदितिशब्दवाच्यस्य विष्णोस्तत्सर्वात्तृत्वमदितित्व-मदितिशब्दप्रवृत्तिनिमित्तमित्यर्थोपपत्तिरिति भावेनाह ॥ युक्ताचेति ॥ एतेन ''विष्णावदि-तिशब्दस्त्वित्यर्धं विवृतम् । अथवेत्यादिनोक्तश्रुतिलिङ्गनिरवकाशत्वशङ्का च निरस्ता । ''अदितिश्रुतेर्विष्णावपि सावकाशत्वाल्लिङ्गस्य चादितिशब्दवाच्यत्वमदितित्वमिति सावका-शत्वा''दिति टीकाच विवृता । ननु विष्णावदितित्वनिमित्तेनैवादितिशब्दस्य विधित्सितत्वेन निमित्तोक्तेः पूर्वमदितेरिति कथमनुवाद इति चेन्न । ''इग्यणस्सम्प्रसारणं अग्नये जुष्टं निर्वपामी''त्यादाविव भाविसंज्ञयोपपत्तेः । यथोक्तं न्यायविवरणटीकायां ''अदितेरिति भाविनी संज्ञा विज्ञायते । यथाऽस्य सूत्रस्य शाटकं वयेति । अन्यथा परस्यापि दुर्घटमेतत् । अविवक्षितनिमित्तां प्रसिद्धिमाश्रित्य ममानुवादस्सम्भवतीति चेन्ममापि तत्समम् ।

इयांस्तु विशेषः । परस्य लौकिकी प्रसिद्धिर्मम वैदिकीतीति ॥ लौकिकेति ॥ तत्र विप्लुतिसम्भवात् । निर्दोषवैदिकप्रयोगे तु तदसम्भवादिति भावः ॥ यदाजिमिति ॥ छन्दोगब्राह्मणे ज्योतिष्टोमप्रकरणे बहिष्पवमानस्तोत्रनामनिर्वचनार्थोऽयमर्थवादः । यानि स्तोत्राण्यवष्टभ्य देवा आजिं युद्धमीयुः तदेवाज्यानां स्तोत्राणामाज्यत्वमित्यर्थः । ''तस्योपनिषत्सत्यमिति । सदित्यन्नं तीत्यमृतम् । ते उभे यच्छती''त्यादिरादिपदार्थः । पूर्वं न्यायविवरणटीकारीत्याऽन्यत्र प्रयुक्तादितिशब्दान्वाख्यानपरत्वं विवृतम् । इदानीमेतट्टीकोक्तं

हेतुपरत्वं विवृणोति ॥ किञ्चेति ॥ पूर्वोक्तात्तृत्व इति ॥ तत्तदत्तुमध्रियत आदच्चेति पूर्ववाक्योक्तात्तृत्व इत्यर्थः ॥ हेतुरिति ॥ यतस्सर्वात्तृत्वादेवादितिशब्दवाच्यत्वमतस्सर्वात्तृत्वनिमित्तकादितिशब्दवाच्यत्वादेव सर्वमाददिति हेतुरुच्यत इत्यर्थः ॥ स्थलान्तरस्थेति ॥ विष्णौ श्रुत्यन्तरे प्रयुक्तस्येत्यर्थः ॥ हेतुत्वमुक्तमिति ॥ तत्तदत्तुं मनोध्रियत आदच्च । कुतः सा सर्वात्री सा । सर्वमत्तीति यत्तदेव ह्यदितेरदितित्वनिमित्तमित्युक्तमित्यर्थः । न च बाधं विनेत्यर्धं व्यनक्ति ॥ एवं चेति ॥ न केवलं बाधाभावः । असङ्कुचितवृत्तित्वे ज्ञापकं चास्तीति भावेन सुधोक्तमाह ॥ पूर्वेति ॥ यदपि स्वीकृतश्च सिद्धान्तिना सङ्कोच इति तत्राह ॥ सर्वस्येति ॥ असम्भवस्यैव बाधकत्वादिति भावः । पूषादिवच्चेत्यर्धं व्यनक्ति ॥ न चेति ॥ उक्तरीत्या श्रुतिलिङ्गयोः सावकाशत्वेन तयोरबाधकत्वादिति भावः । उक्तं चार्थवादाधिकरणे ''प्रकरणे सम्भवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हितं प्रती''ति सूत्रे बाधकाभावेऽपकर्षणं नेत्येतदिति भावः । अवान्तरेति श्लोकं व्याचष्टे ॥ अभिक्रमणस्येति ॥ ''समानयत उपभृत'' इति पूर्वं ''यो वै प्रयाजानां मिथुन''मिति पश्चाच्च प्रयाजविषयैर्वाक्यैरित्यर्थः । यदपि यद्वाऽदितिश्रुतिबलादित्यादि तन्न । प्रकरणस्य निरवकाशत्वादित्याह ॥ अदितेरिति ॥ टीकाप्रमेयं न्यायविवरणमूलमिति भावेनाह ॥ तदेतदिति ॥ सन्दिग्धेति ॥ सन्दिग्धत्वनिश्चितत्वे सावकाशत्वनिरवकाशत्वे । प्रकरणाल्लिङ्गस्य बलवत्त्वात्सूत्रक्रम इत्याह ॥ अत्र चेति ॥

**पाण्डुरङ्गि** – तद्दध्नो दधित्वमित्यत्र प्रातिपदिकस्य प्रसिद्धदधिपरत्वस्य त्वप्रत्ययस्य च तद्गतधर्मपरत्वस्य च दर्शनेन प्रकृतेऽपि सर्वं वा अत्तीत्यादावदितिप्रातिपदिकस्य प्रसिद्धादितिपरत्वात्ततः परत्वप्रत्ययस्य तद्गतधर्मपरत्वमेव किं न स्यादित्यतो दृष्टान्त एवासम्प्रतिपन्न इत्याह ॥ यदेनमिति ॥ अन्वाख्यानमात्रं प्रकृतिप्रत्यययोरर्थकथनमात्रमित्यर्थः । अन्वाख्यानपक्षेऽपि सर्वात्तृत्वमदितिशब्दप्रवृत्तिनिमित्तमित्ययुक्तम् । प्रसिद्ध एवार्थे निमित्तस्याकाङ्क्षितत्वेन ब्रह्मणि चादितिशब्दप्रयोगाभावेन तस्यादितिशब्दप्रसिद्धार्थत्वाभावेन तत्र निमित्तस्यानाकाङ्क्षितत्वादित्यत आह ॥ युक्ताचेति ॥ नन्वेवमदितिशब्दस्य ब्रह्मणि श्रौतप्रयोगसद्भावेऽपि तस्याकाङ्क्षानिमित्तत्वाभावात् । आकाङ्क्षानिमित्तस्य च लौकिकप्रयोगस्य देवमातरीव ब्रह्मण्यभावान्निमित्ताकाङ्क्षा नोपपद्यत इत्यत आह ॥ न हीति ॥ यदेति ॥ तथा सत्याज्यैस्तुवत इत्यत्राज्यशब्दस्य लोकतो घृतमात्रे प्रसिद्धस्य स्तोत्रे लोकतोऽप्रसिद्धत्वादाकाङ्क्षानिमित्तस्य लौकिकप्रयोगस्याभावात् । यदा जिमीयुरिति प्रवृत्तिनिमित्तकथनमनुपपन्नमित्यर्थः । एवमन्वाख्यानपक्षमेवाङ्गीकृत्य सर्वं वा अत्तीत्यनेन सर्वात्तृत्वरूपमदिति-

शब्दप्रवृत्तिनिमित्तमेवोच्यत इत्युपपादितम् । इदानीं तु हेतुपरत्वेऽपि व्याचष्टे ॥ किं चेत्यादिना ॥ ननु पूर्ववाक्येऽदितिशब्दस्याप्रयुक्तत्वेऽप्यनुशासनं युज्यते । अदितिर्देवतामयीत्यादौ स्थलान्तरे प्रयुक्तस्यादितिशब्दस्य निर्वचनं क्रियत इति किं न स्यादित्यत आह ॥ न चेति ॥ किं चादितिशब्दस्य प्रसिद्धादितिपरत्वे सर्वं वा अत्तीति सर्वशब्दोऽनुपपन्नः । नचात्रोक्तश्रुतौ सर्वशब्दस्त्वदित्यदनयोग्यसर्वपर इति तत्राह ॥ एवं चेति ॥ किं च मृत्युनैवेदमावृतमासीदित्यादिनाऽस्य प्रकरणस्य वैष्णवत्वाददितिशब्दस्य प्रसिद्धार्थत्वे प्रकरणविरोधः । न च दर्शपूर्णमासप्रकरणात्पूषाप्रपिष्ट भाग इत्युक्तस्य पौष्णपेषणस्येव विष्णुप्रकरणात्तददितेरदितित्वमित्यस्याप्युत्कर्षोऽस्त्वित्यतो वैषम्येण परिहरति ॥ न चेति ॥ दृष्टान्ते तु बाधकसद्भावादुत्कर्ष इति भावः । नन्वभिक्रामं जुहोतीति दर्शपूर्णमासप्रकरणे श्रुतस्याभिक्रमणस्यैतदङ्गप्रयाजान्वयार्थं प्रयाजस्यावान्तरप्रकरणमिव विष्णुप्रकरणेऽदितेरवान्तरप्रकरणं किं न स्यादित्यत आह ॥ अभिक्रमणस्येति ॥ अदितिश्रुतिबलान्नैवेत्यादि-प्रकरणमपि अदितेरेवेत्यन्तिमपूर्वपक्षं निराकरोति ॥ अदितेरिति ॥ छ ॥ अत्तृत्वाधिकरणम् ॥ २ ॥

## तात्पर्यचन्द्रिका

**अत्र परैरुक्तं ''यस्य ब्रह्मच क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचन''मिति काठकवाक्ये ओदनोपसेचनपदाभ्यां सूचितोऽत्ता जीव एव । अत्तृत्वस्य भोज्यतया प्रसिद्धौदनसम्बन्धेन भोक्तृत्वरूपत्वात् । ब्रह्मणश्चाभोक्तृत्वादिति प्राप्ते सत्यमभोक्तृ ब्रह्म । तथापि तदेवात्तृ । अत्तृत्वस्य संहर्तृत्वरूपत्वात् । तस्याविक्रिये शुद्धे ब्रह्मण्यसम्भवेऽपि मायोपाधिके सम्भवात् । भक्तवाचिनश्चौदनशब्दस्य भोक्तृप्रतियोगिभोज्यत्वं न मुख्यवृत्त्याऽर्थः । अमुख्यवृत्त्या चेत्तर्ह्योदनगतं संहर्तृप्रतियोगि संहार्यत्वमेवार्थोऽस्तु । एवं च ब्रह्मक्षत्रादिपदानां न मुख्यार्थत्यागः । जीवपक्षेतु तत्त्यागः । न हि कश्चिदपि जीवः सर्वस्य ब्रह्मक्षत्रस्य मृत्योश्च भोक्ताऽस्तीति सिद्धान्त इति ॥ अत्र ब्रूमः ।**

**भोक्तृतापि विशिष्टेऽस्तु यथा संहर्तृता तव ।
अभोक्तृत्वं निविशतां शुद्धे कौटस्थ्यवत्सुखम् ॥ १ ॥**

अभोक्तृत्वश्रुतेर्निर्विकारत्वश्रुतिवच्छुद्धविषयत्वसम्भवेन मायोपाधिके संहर्तृतेव भोक्तृताऽप्यस्तु । एवं च ब्रह्मक्षत्रादिशब्दानां न मुख्यार्थत्यागः । तद्भोक्तृत्वस्य ब्रह्मणि सम्भवात् । ओदनादिपदोपस्थापितस्यांतरङ्गस्य भोज्यत्वस्यापि न त्यागः । नह्यग्निर्माणवक इत्यत्राग्निशब्दः पैङ्गल्यादिकमिव द्रव्यत्वाद्युपस्थापयति । न वा प्रोद्गातॄणामित्यत्रोद्गातृशब्दोंऽतरङ्गभूतान् प्रस्तोत्रादीनिव षोडशर्त्विजो लक्षयति । येनात्राप्योदनशब्दः संहार्यत्वमुपस्थापयेत् । अपि च ''सर्वं वा अत्ती''ति मदीयविषयवाक्य इव त्वदीये वाक्ये सूत्रे प्रतिज्ञातोक्ता हेतूकृतं चराचरग्रहणं च न साक्षादस्ति । यच्चोक्तं परैः ''प्रकरणा''दिति सूत्रस्य ''न जायते म्रियते वा विपश्चि''दिति परमात्मन एव प्रकृतत्वाच्च स एवात्तेत्यर्थ इति । तन्न । न जायत इत्यस्मादुत्तरवाक्ये ''नहन्यते हन्यमानेऽपि देह'' इति देहसम्बन्धस्य ''हंता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीत'' इति हंतृत्वादिभ्रांतेश्च जीवलिङ्गस्य दर्शनेन ''नजायत'' इत्यादेर्जीवविषयत्वात् । अत्रापि परमतेऽप्यत्तु-जीवत्वं निषिध्य ब्रह्मत्वोक्तेस्तदैक्यप्रतिकूलता व्यक्तैव ॥ टीकाक्षरार्थस्तु ॥ इति योजनायामस्ति चोद्यावकाश इति । यद्यपि ''स यद्यदेवे''त्यत्र स इत्यस्य संवत्सराख्यचतुर्मुखपरत्वमेव बृहदारण्यकभाष्ये उक्तम् ॥ ''यद्यद्ब्रह्मासृजत्पूर्वं तत्तदत्ति जनार्दन'' इति स्मृतेः । उत्तरत्र ''सोऽकामयत भूयसा यज्ञेन भूयो यजेये''त्यादौ चतुर्मुखपरत्वदर्शनाच्च । पूर्वत्रापि ''स तया वाचा तेनात्मने''ति प्रथमान्तो-क्तमृत्युतोऽपि तृतीयांतोक्त संवत्सरस्याव्यवधानेन प्रकृतत्वाच्च । संवत्सरसृष्टमत्तुमेव मृत्योः संवत्सरादनान्निवृत्ततया संवत्सरस्यैव स्रष्टृत्वस्योचितत्वाच्च । कर्तुरपि संवत्सरस्य भगवत्स्वातंत्र्यविवक्षया तेनेतिकरणत्वेन निर्दिष्टस्यापि स इति कर्तृत्वेन निर्देशोपपत्तेश्च । तथापि समानविभक्तिकत्वं परामर्शे तंत्रमिति भ्रमेण स इत्यनेनादित्याख्यमृत्योरेव परामर्श इति पूर्वपक्षे पुल्लिङ्गानुपपत्तिचोद्यावकाशोऽस्त्येव । ननु तथापि न चोद्यावकाशः । स ऐक्षतेत्यादौ पुल्लिङ्गेनैव तच्छब्देन मृत्युनेति मृत्युशब्देन च प्रस्तुततया गुरोर्दाराः समागतास्ते पूज्या इत्यादाविव पुल्लिङ्गोपपत्तेः । न च ''अशनायां हि मृत्यु''रिति स्त्रीलिङ्गेनाशनायाशब्देन प्रस्तुतत्वात्स इति पुल्लिङ्गानुपपत्तिरिति वाच्यम् । तथात्वे सिद्धान्तेऽप्येतदनुपपत्तेरिति चेदुच्यते ।

दारखट्वादिशब्देषु पुल्लिङ्गस्त्रीलिङ्गादेः शब्दसाधुतैव न त्वर्थसाधुता । न चार्थसाधुत्वे सम्भवति शब्दसाधुत्वमात्रं युक्तम् । एवं चादितौ पुल्लिङ्गो मृत्युशब्दोऽप्ययुक्तः । परमपुरुषे तु स्त्रीलिङ्गोऽप्यदितिशब्दः प्रकृत्यधिकरणन्यायेन युक्तः । तथाचास्ति चोद्यावकाश इति भावः ॥ अदितिशब्दवाच्यत्वमिति ॥ अदितिशब्दप्रवृत्तिनिमित्तमित्यर्थः ॥ छ ॥ अत्तृत्वाधिकरणम् ॥ २ ॥

**प्रकाशिका** – अत्र परैरिति ॥ मायावादिभिरित्यर्थः । विषयवाक्येऽत्तेतिपदाश्रवणात्तल्लाभमाह ॥ ओदनेति ॥ अद्यत्वे सत्यदनसाधनमुपसेचनम् । तयोरदनीयवाचित्वात् प्रतिसम्बन्ध्यत्ता लभ्यत इत्यर्थः । भोज्यतया प्रसिद्धो य ओदनस्तत्साधनेत्यर्थः ॥ अभोक्तृत्वादिति ॥ पूर्वत्र सम्भोगसूत्रेऽभोक्तृत्वोक्तेरश्नन्निति श्रुतेश्चेति भावः ॥ मायेति ॥ "मायोपाधेः परस्यास्ति संहर्तृत्व"मिति कल्पतरूक्तेरिति भावः । संहर्तृत्वलाभप्रकारमाह ॥ भक्तेति ॥ अन्नवाचिन इत्यर्थः । को विशेष इत्यत आह ॥ एवं चेति ॥ मुख्यार्थत्यागमुपपादयति ॥ नहीति ॥ ब्रह्मणस्तु सर्वसंहर्तृत्वं युज्यत इति भावः । यदुक्तं मुख्यत्वाविशेषाद्ब्रह्मक्षत्रादिशब्दमुख्यत्वायौदनादिपदस्य संहार्यत्वमेवार्थोऽस्त्विति तत्रामुख्यत्वाविशेषेऽप्यन्तरङ्गत्वाद्भोक्तृत्वप्रतिसम्बन्धि भोज्यत्वमेव लक्ष्यताम् । ब्रह्मक्षत्रादिशब्दस्य मुख्यत्वं च शक्यसम्पादमिति भावेन तदीयसिद्धान्तरचनां निरस्यति ॥ भोक्तृतेति ॥ अनशनश्रुतेर्गतिमाह ॥ अभोक्तृत्वमिति ॥ निविशतामिति "नेर्विश" इत्यात्मनेपदम् । उत्तरार्धव्यक्तिपूर्वं पूर्वार्धं व्यनक्ति ॥ अभोक्तृत्वेति ॥ को विशेष इत्यतोऽतरङ्गत्वादित्याह ॥ ओदनेति ॥ नन्वमुख्यत्वेऽन्तरङ्गत्वं बहिरङ्गत्वं वा प्रयोजकमित्यत उपस्थितिवैशेष्यादन्तरङ्गमेवादर्तव्यं न बहिरङ्गमित्येतदुपपादयति ॥ नहीति ॥ इदं गौणवृत्तेरन्तरङ्गस्योपस्थित्युपपादनम् । लक्षणायामाह ॥ न वेति ॥ यद्वा लौकिकवैदिकोदाहरणप्रदर्शनार्थं द्वयम् । उक्तमधिकरणशरीरं जन्माद्यस्येति सूत्रे । एकत्र वचनसम्बन्धादिभिरन्तरङ्गभूतान्प्रस्तोत्रादीनिव बहिरङ्गभूतान् षोडश ऋत्विजो यथोद्गातृशब्दो न लक्षयति तथौदनादिशब्दोऽपीत्यर्थः । सुधोक्तमुदाहरणानौचित्यं चाह ॥ अपि चेति ॥ ओदनोपसेचनशब्दाभ्यामत्तेत्यस्योपलक्षणीयत्वेनोक्तत्वान्न साक्षादत्तेति श्रुतम् । ब्रह्मक्षत्रादिपदेन लक्षणया चराचरग्रहणस्योक्तत्वात्तदपि न साक्षात् श्रुतम् । अतोऽस्मदुदाहरणमेव सूत्रानुगुण्याद्युक्तमित्यर्थः । ननु त्वद्वाक्येऽपि सर्वशब्दस्यैव श्रवणाच्चराचरशब्दाश्रवणान्न सूत्रानुगुण्यमिति

चेन्न । तस्य सङ्कोचनिवृत्त्यर्थं सर्वशब्दव्याख्यानाय चराचरेत्युक्तत्वादिति प्रागेवोक्तत्वादिति भावः । द्वितीयसूत्रार्थमप्यनूद्य निराह ॥ यच्चेति ॥ उत्तरवाक्य इति ॥ ''अजो नित्यश्शाश्वतोयं पुराणो न हन्यते हन्यमानेऽपि देह'' इत्यव्यवहितोत्तरवाक्ये । उपलक्षणमेतत् । पूर्वत्रापि ''एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते'' इति जीवस्यैव प्रथमान्ततया प्रकृतस्यान्वयाच्च । विपश्चित्त्वविशेषणेन प्रागुक्तज्ञानिन एवान्वयप्रतीतेश्च । ''भावाभावौ न विदुषो यस्माज्जीवो न कश्चन । न जायते म्रियते वापी''त्यादिस्मृतिविरोधाच्चेति ध्येयम् । परस्येदं नारभ्यमेवेति भावेनाह ॥ अत्रापीति ॥ न केवलं पूर्वत्रेत्यर्थः । एतेनैतदेव वाक्यमुदाहृत्य शिवनिष्ठं संहर्तृत्वमिति वदतः कस्यचिन्मतमपि प्रत्युक्तं बोध्यम् । विषयवाक्यानानुगुण्यादेरुक्तत्वादिति ॥ अत्र टीकायां पूर्वपक्षग्रन्थे सयद्यदेवेत्यत्र पुल्लिङ्गानुपपत्तिचोद्यं भाष्यकारीयमाक्षिप्य समाहितम् । तत्राक्षेपबीजप्रदर्शनपूर्वं तद्वाक्यं व्यनक्ति ॥ यद्यपीति ॥ तद्भाष्योक्तस्मृतिमाह ॥ यद्यदिति ॥ उत्तरत्रेति ॥ स इत्यस्येत्यनुषज्यते । तच्छब्दस्य सन्निहितपरत्वाच्चतुर्मुखस्य च सन्निहितत्वात्तत्परत्वं युक्तमित्याह ॥ पूर्वत्रापीति ॥ संवत्सरसृष्टमिति ॥ पूर्वत्र ''स ऐक्षत यदिह वा इममभिमंस्ये कनीयोन्नं करिष्य इति । स तया वाचा तेनात्मनेदं सर्वमसृजते''त्यनेन यदीमं संवत्सरशब्दितं भक्षयामि तर्ह्यल्पमन्नं मे भविष्यति । अत एनमभक्षयित्वा तन्मुखेन सर्वसृष्टिं कारयित्वा तत्सृष्टमेव सर्वं भक्षयामीति बुद्ध्या तन्मुखेन सर्वसर्जनाद्भक्षणान्निवृत्तिरवगम्यत इति तदन्यथानुपपत्त्या च चतुर्मुखपरत्वमित्यर्थः । ननु पूर्वं तस्य सन्निहितत्वेऽपि तृतीयया करणत्वेनैव निर्देशान्न कर्तृवाचिना परामर्शो युक्त इत्यत आह ॥ कर्तुरिति ॥ टीकोक्तं स्पष्टीकृत्य तदुपलक्षणमिति भावेन भाष्यं प्रकारान्तरेण स्वयमाक्षिप्य समाधत्ते ॥ ननु तथापीति ॥ कथं तर्हि विष्णावदितिशब्द इत्यत आह ॥ परमेति ॥ पुरुषेति हेतुगर्भम् । अदितेरित्यनेनैव तद्वाच्यत्वलाभाददितित्वमिति व्यर्थमित्यत आह ॥ अदितिशब्देति ॥ शिष्टं सुगममिति भावः ॥ छ ॥ अत्तृत्वाधिकरणम् ॥ २ ॥

## गुहाधिकरणम्

**ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ पूर्वत्रादितिप्रातिपदिकश्रुतिबलादन्यत्रप्रसिद्धक्रियालिङ्गसमन्वय उक्तः । अत्र तु पिबन्ताविति प्रत्ययश्रुतिबलादन्यत्रप्रसिद्धक्रियालिङ्गसमन्वय उच्यत इत्यवान्तरसङ्गतिः । अत्र पिबन्तौ किं जीवेश्वरौ किं वेश्वररूपविशेषाविति चिन्ता । तदर्थं गुहावेशब्रह्मशब्दादिकं किममुख्यं**

**किं वा मुख्यमिति । तदर्थं पिबत्प्रातिपदिकार्थभूतं भोक्तृत्वं किं ब्रह्मणि न युक्तमुत युक्तमिति । तदर्थमभोक्तृत्वश्रुतिर्ब्रह्मणि भोक्तृत्वमात्रनिषेधपरोताशुभभोक्तृत्व-निषेधपरेति । तथा द्विवचनं किं ब्रह्मणि न युक्तमुत युक्तमिति ।**

**प्रकाशिका –** ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ पूर्वसङ्गतिमाह ॥ पूर्वत्रेति ॥ क्रियेति ॥ अदनरूपक्रियेत्यर्थः ॥ प्रत्ययेति ॥ द्विवचनरूपेत्यर्थः ॥ क्रियेति ॥ कर्मफलभोक्तृत्वरूपेत्यर्थः । प्रकृतिप्रत्यययोः पौर्वापर्यात्तन्मूलपूर्वपक्षनिरासकयोरप्यधिकरणयोः पौर्वापर्यमित्युक्तं भवति । ननु कर्मफलभोक्तृत्वं लोकत एवान्यत्र प्रसिद्धम् । न द्विवचनश्रुतिसाहित्यमपेक्षते । उक्तं च टीकायां ''लोकतोन्यत्र प्रसिद्धस्य कर्मफलभोक्तृ-त्वलिङ्गस्ये''ति । तत्कथं प्रत्ययश्रुतिबलादन्यत्रप्रसिद्धेत्युक्तिरिति चेदुच्यते । अस्मिन्पादे पूर्वत्रोत्तरत्र चान्यसाहित्येनेवान्यत्रप्रसिद्धेरुक्तत्वादत्रापि तथा भाव्यमिति भावेन वा। पूर्वं सर्वात्तृत्वस्य विष्णावुक्तौ तन्मध्यपतितकर्मफलात्तृत्वस्यापि सामान्यत उक्तत्वादन्य-त्रप्रसिद्ध्यर्थमन्यसाहित्यमावश्यकम् ।

अत एव टीकायां ''न च सर्वात्तृत्वेन तद्बाधः । श्रुतेर्निरवकाशत्वा''दिति द्विवचनश्रुत्यैव बाधश्शङ्कितः । लोकत इति टीकातु प्राग्विशिष्यानुक्तत्वाशयेति भावेन वा लोकतोऽन्यत्र प्रसिद्धत्वेऽप्यन्यसाहित्येनाप्यन्यत्र प्रसिद्धेस्सत्वात्तदभिप्रायेण वैतदुक्तिरिति । यद्यपि पूर्वत्र प्रातिपदिकार्थप्रत्ययार्थयोर्विष्णौ सम्भवेऽपीह तयोरसम्भवादिति पूर्ववैषम्येण पूर्वपक्षप्रवृत्तेः प्रत्युदाहरणरूपाऽपि वक्तुं शक्या । तथापि सा वक्ष्यमाणदिशा सुज्ञानेति नोक्ता । ननु तथापि ''सर्वात्तैकः परउक्त'' इति भाष्ये ''तद्यदा विष्णोरन्यस्यैव स्यात्तदा न तस्य सर्वात्तृत्व''मिति टीकायां च पूर्वाक्षेपस्य दर्शितत्वात्तद्विरोधः । न च तत्प्रयोजनमात्रपरम् । इहोभयपरत्वेऽपि तस्य बाधकाभावादिति चेत्सत्यम् । तस्य वक्ष्यमाणदिशोपपादनसापेक्षत्वेन झडिति सुज्ञानत्वाभावेन तदपरित्यागेनैव सङ्गत्यन्तरकथनमेतदित्यदोषः । ननु न प्रत्ययश्रुतिबलादन्यत्र प्रसिद्धता । प्रत्ययाज्जीव एवेत्यप्रतीतेः । तस्य द्वित्वबोधकत्वेन जीवेश्वरोभयप्रापकत्वादिति चेन्न । सिद्धान्तकोटितोऽन्यत्र प्रसिद्धेरेवान्यत्रप्रसिद्धशब्दार्थत्वादत्र विष्णोरेव सिद्धान्तकोटित्वेन जीवसहितस्य तस्य ततोऽन्यत्वात् । अत एव द्विवचनश्रुत्या कर्मफलात्तृत्वमुभयत्र प्रसिद्धमित्यपि चोद्यं निरस्तम् । विष्णोरेवेति सिद्धान्तकोटौ कर्मफलात्तृत्वस्य द्विवचनश्रुत्याऽप्राप्तेः । तथा द्वयोः प्राप्तत्वेऽपि जीवेश्वरावित्यस्य न्यायेनैव व्युत्पाद्यत्वादिति ।

विषयसंशयटीकां व्यनक्ति ॥ अत्रेत्यादिना ॥ ''ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो येच त्रिनाचिकेता'' इत्यत्र काठके ऋतपानकर्तृत्वेनोक्तौ विषय इत्यर्थः । श्रुत्यर्थष्टीकायां स्पष्टः । ननु गुहां प्रविष्टावित्येतदेव धर्मीकृत्य सन्दिह्यताम् । तथाच सौत्रनिर्देशोऽपि साक्षात्सङ्गतस्स्यात् । अन्यथा पिबन्ताविति ब्रूयात् । न च तस्य ब्रह्मलिङ्गत्वेन संशयायोगः । गुहाप्रविष्टत्वस्य ''हृदि ह्येष आत्मे''ति जीवेऽपि सम्भवात् । द्विवचनश्रुतिबलेन गुहाप्रविष्टत्वं जीवेश्वरयोरिति पूर्वपक्षसम्भवाच्चेति चेन्मैवम् । गुहाप्रविष्टत्वस्य सर्वत्र प्रसिद्धेति नये विष्णोस्सिद्धत्वात्तत्समन्वयेऽपूर्वगुणालाभात् ।

पातृत्वसमन्वये तु कर्मफलभोक्तृत्वस्यापूर्वगुणस्य लाभात् । प्रागुक्तलक्षणस्य साक्षादाक्षेपसम्भवाच्च । तत्र प्रातिपदिकार्थस्य प्रत्ययार्थस्य च द्वयोरप्यनुपपत्त्या पूर्वपक्षे विशेषहेतुसत्वाच्च । अत एव सूत्रे आत्मपदेनादेयं मातीति व्युत्पत्त्या पातृत्वमुच्यते । वक्ष्यमाणदिशा गुहाप्रविष्टत्वस्य विष्णावेव प्रसिद्ध्या संशयायोगाच्च । सौत्रनिर्देशस्य तु गतिर्वक्ष्यत इति ॥ जीवेश्वराविति ॥ एतेन ''विष्णोरन्यस्य वे''ति टीका विष्णोरेवान्यस्यापि वेति व्याख्येयेत्युक्तं भवति । ननु बुद्धिजीवौ प्राणजीवौ बुद्धिप्राणौ वा सम्भवतः । कथं जीवेश्वराविति विशिष्योक्तिः । मैवम् । पातृत्वेनैकस्य जीवत्वावश्यंभावेन गोर्द्वितीयेन भाव्यमित्यादौ सजातीयस्येवात्रापि सजातीयस्यैव द्वितीयस्येश्वरस्य ग्राह्यत्वात् । न च जीवान्तरमेव वेति ग्राह्यमिति युक्तम् । एकस्मिन्देहे भोक्तृजीवद्वयायोगात् । न च चैद्यादौ जीवद्वयं दृष्टमिति वाच्यम् । तस्य प्रबलनिमित्तादिना काचित्कत्वेन प्रतिशरीरं जीवद्वयायोगात् । ब्रह्मप्रकरणाच्च तस्यैव द्वितीयस्योचितत्वादिति भावः ॥ रूपविशेषाविति ॥ ईश्वरद्वयाभावेनेश्वरावित्यनुक्त्वा रूपविशेषावित्युक्तम् ॥ ब्रह्मशब्दादिकमिति ॥ ''यस्सेतुरीजानानामक्षरं ब्रह्म तत्पर''मित्युक्तसेतुत्वादिरादिपदार्थः । मुख्यमिति चिन्तानंतरं मुख्यत्वे बाधकमस्त्युत नेति चिन्ता स्फुटत्वान्नोक्ता ॥ श्रुतिरिति ॥ अनश्नन्नित्यादिश्रुतिर्यदि भोक्तृत्वसामान्यनिषेधपरा तर्हि प्रातिपदिकार्थभोक्तृत्वायोगात् पिबत्प्रातिपदिकार्थरूपबाधकसत्त्वेन ब्रह्मशब्दादेर्मुख्यत्वायोगेन जीवेश्वराविति पूर्वपक्षे फलम् । यदि विशेषनिषेधपरा तदा ब्रह्मणि भोक्तृत्वयोगेन बाधकाभावाद्ब्रह्मशब्दादेर्मुख्यत्वे नेश्वररूपविशेषाविति सिद्धान्ते फलमिति स्फुटत्वान्नोक्तम् । अत्र द्वौ पूर्वपक्षौ । प्रातिपदिकार्थमुपजीव्यप्रवृत्तः प्रत्ययार्थमुपजीव्यप्रवृत्तश्चेति । आत्मानाविति प्रातिपदिकप्रत्ययाभ्यां द्वयोर्गतेर्वक्ष्यमाणत्वात् । तत्राद्योपयुक्तचिन्तापरंपरेयम् । द्वितीयोपयुक्तामाह ॥ तथेति ॥ किं वा मुख्यमिति

चिन्तानन्तरमियं चिन्ता ध्येया । यदि द्विवचनं न युक्तं तदा बाधकसत्त्वेन ब्रह्मशब्दादेरमुख्यत्वेन जीवेश्वराविति फलिष्यति । यदि तु युक्तं तदा बाधकाभावाद्ब्रह्मशब्दादेर्मुख्यत्वेनेश्वररूपविशेषाविति फलिष्यतीति भावः । नन्वियं चिन्ता प्रातिपदिकार्थभूतं भोक्तृत्वं द्विवचनं च न युक्तमुत युक्तमिति पूर्वत्रैव निवेश्यतामिति चेन्न । तदर्थमभोक्तृत्वश्रुतिरितिवक्ष्यमाणचिन्ताया अनन्वयापत्तेः । तस्याः प्रातिपदिकार्थमात्रविषयत्वादिति ।

**पाण्डुरङ्गि** – ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ।। प्रातिपदिकार्थस्य कर्मफलभोक्तृत्वस्य ब्रह्मण्यसम्भवे हेतुः कर्मबन्धरहित इति ।

## तात्पर्यचन्द्रिका

**पूर्वपक्षस्तु** ।। युक्तं पूर्वोक्तमत्तृत्वं ब्रह्मणि । प्रातिपदिकार्थस्य संहर्तृत्वस्य प्रत्ययार्थस्यैकत्वस्य च सम्भवात् । इह तु प्रातिपदिकार्थः कर्मफलभोक्तृत्वं प्रत्ययार्थो द्वित्वं च कर्मबन्धरहिते निर्भेदे च ब्रह्मणि न युक्तम् । अन्यथा ''सप्तदश प्राजापत्यान् पशूनालभत'' इत्यादौ संख्यया कर्मभेदो न स्यात् । अन्नमयादीनां तु ''स वा एष पुरुषोऽन्नरसमय'' इत्यादौ यत्र ब्रह्मतोक्ता तत्रानेकत्वं न श्रुतम् । यत्र च ''अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ता''मित्यत्रानेकत्वं श्रुतं तत्र न ब्रह्मतोक्ता । किंतु संज्ञाधिकरणन्यायेनान्नमयप्राणमयेत्यादिसंज्ञाभेदेनान्नमयादीनां भेदे शङ्किते दाक्षायणयज्ञादिशब्दवत्प्राणमयादिशब्दाः प्रकृते ब्रह्मणि गुणविधायकाः । न तु संज्ञामात्रम् । ततो न भेदका इत्यादिः परिहारस्तत्राभिप्रेतः । तथा चान्नमयादीनां ब्रह्मत्वं स्वीकृत्यैवात्र पूर्वपक्षः । अथवा ब्रह्मावयवत्वेऽपि ब्रह्मत्वमिति तत्र व्युत्पाद्यम् । अत्र त्वनेकत्वेऽपि ब्रह्मत्वमिति । तथा चान्नमयादीनामनेकत्वादब्रह्मत्वमिति शङ्काया अप्यत्रत्यसिद्धान्तेनैव परिहार्यत्वादत्रत्यपूर्वपक्षेऽन्नमयादीनामपि ब्रह्मत्वाक्षेपः । अत एव न्यायविवरणे ''न चावयवत्वविरोध'' इति तत्रोक्तम् । अत्र तु ''द्विवचनश्रुतेरपि निरवकाशत्वं नास्ती''ति । न च दारा इत्यादौ बहुवचनमिवात्र द्विवचनं शब्दसाधुत्वेनैव प्रसिद्धम् । न च बाधकं विना पिबन्तौ प्रविष्टौ छायातपाविति बहूनि द्विवचनानि वचनव्यत्ययेनैकस्मिन्नपि युक्तानि । न च ''ग्रहं संमार्ष्टि'' इत्यादाविवोद्देश्यविशेषणत्वात् संख्या न विवक्षितेति युक्तम् । ब्रह्मणि

ऋतपानस्य प्राप्तत्वात् । ऋतं पिबन्तावित्यस्योद्देशकत्वेऽपि ''छायातपा''वित्यादेर्विधायकत्वावश्यंभावाच्च । ग्रहैकत्वस्य वाक्यभेदापत्त्या विध्यसंस्पर्शेऽपि प्रत्येकं ग्रहेष्वेकत्वस्य स्वरूपतः सत्त्वेनानुवादवत्प्रकृते ब्रह्मणि द्वित्वस्य स्वरूपत एवाभावेनानुवादकत्वासम्भवाच्च । न च पिबन्तावित्यादिकमन्यत्र द्वित्ववाच्येव सत् इहातिदेशतः प्राप्तम् । येन ''अग्नये जुष्ट''मिति मन्त्रस्य सौर्येऽतिदेशतः प्राप्तस्य ''सूर्याये''त्यूहवद्विवचनांतस्यैकवचनान्ततयोहस्स्यात् । न चैकस्मिन्नेव यागे समिधो यजतीत्यादौ बहुवचनांतसमित्पदमिवैकस्मिन्नैव ब्रह्मणि द्विचवनांतं पिबत्पदमस्त्विति वाच्यम् । रूढस्य समिच्छब्दस्य बहुवचनप्रतिरूपकनामधेयत्ववद्यौगिकस्य पिबन्तावित्यादेस्तदयोगात् । छायात्वं च ब्रह्मणो न युक्तम् । जीववदविद्याश्रयत्वासम्भवात् । तस्मादत्र पिबन्तौ जीवेश्वरावेव । ईश्वरस्याभोक्तृत्वेऽपि छत्रिन्यायेन पातृत्वव्यपदेशः । गुहाप्रविष्टत्वब्रह्मशब्दौ तु जीवेऽपि युक्ताविति ॥

**प्रकाशिका** – आत्मानाविति सौत्रद्विवचनान्तात्मपदेन पिबन्तावितिश्रुतप्रकृतिप्रत्यययोर्द्वयोरपि गत्युक्त्या तदनुरोधेन टीकायामुक्तं द्वाभ्यां पूर्वपक्षं टीकासूचितपूर्ववैषम्योक्तिपूर्वं व्यनक्ति ॥ युक्तमिति ॥ अत्तीत्यत्र धातुरूपप्रकृत्यर्थस्य तिङ्प्रत्ययार्थस्येति वा अदितेरित्यदिति प्रातिपदिकार्थस्य सुप्रत्ययार्थस्येति वाऽर्थः ॥ इह तु प्रातिपदिकार्थ इति ॥ ऋतपिबत्प्रातिपदिकयोरर्थ इत्यर्थः । ननु भेदाभावेऽपि ब्रह्मणि द्वित्वं युज्यतां कोदोष इत्यत आह ॥ अन्यथेति ॥ द्वितीये ''पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्या''दिति द्वितीयपादीयसप्तमाधिकरणे ''सप्तदश प्राजापत्यान्पशूनालभत'' इति वाक्ये किं सप्तदशपशुद्रव्यक एको याग उतैकैकपशुद्रव्यकास्सप्तदशयागा इति संशये प्राजापत्यशब्देन देवतासम्बन्धोपसर्जनकद्रव्यमेवोच्यते । यच्च प्रधानं तस्यैवार्थान्तरेण बहुत्वेनान्वयो नोपसर्जनदेवतासम्बन्धस्य । तथाच बहुभिः पशुभिर्व्यासज्यैकादेवता सम्बध्यते । द्रव्यदेवता सम्बन्धैक्यादेको याग इति प्राप्ते प्रथममेव प्रकृतिप्रत्यययोरन्वयाद्देवताविशिष्टमेव द्रव्यं प्राजापत्यशब्देनाभिहितम् । पश्चाद्विशिष्टेन रूपेण संख्ययाऽन्वेति । तथाच भिन्नैर्द्रव्यदेवतासम्बन्धैर्भिन्ना एव यागाः कल्प्यन्ते । एवं च सति चोदकावगतमेकपशुनिष्पन्नैकादशावदानद्रव्यकत्वं यागस्यानुगृहीतं भवति नान्यथेति सिद्धान्तितम् । यदि पिबन्तावित्यत्र द्वित्वसंख्यया भेदो न स्यात्तदा संख्यया कर्मभेदो न स्यादित्यर्थः । आदिपदेन ''द्वासुपर्णा द्वे

ब्रह्मणी वेदितव्ये'' इत्यादौ चेतनभेदो न स्यादिति गृह्यते । नन्विदमानन्दमयाधिकरण एव परिहृतम् । ''बहुरूपत्वाच्चे''ति ''अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् । प्रोच्यत'' इति च भाष्योक्तेरित्यतः ''न हि तत्र द्विवचनं बहुवचनं वा शङ्कितम् । तदभावात् । किं नाम शब्दभेदादिना भेद'' इति न्यायविवरणटीकानुरोधेन तां विशदयन्नेव परिहारमाह ॥ अन्नमयादीनामिति ॥ यत्र ब्रह्मवल्ल्याम् ॥ यत्र चेति ॥ नारायणोपनिषदि । संज्ञाधिकरणं जिज्ञासासूत्रे दाक्षायणयज्ञाधिकरणमानन्दमयनय एव विवृतम् । न्यायद्वयस्य शङ्कापरिहारोपयोगस्तत्रैव दर्शितः । ननु तत्र बहुत्वाश्रवणेन ''बहुरूपत्वाच्चे''त्यादि भाष्ये ''अत एकस्सपञ्चधे''त्यनुव्याख्याने च कथं तत्समाधानोक्तिः । ''न चानन्दमयाधिकरणन्यायेन परिहारः । बाधकाभावा'' दित्यत्रसुधावाक्यं च कथमित्यतोऽभ्युपेत्यवादेनेति भावेन परिहारान्तरमाह ॥ अथवेति ॥ तत्रानेकत्वसंख्यसमाधानं चात्रत्यसिद्धान्तन्यायेनैवेति भावः ॥ द्विवचनेति ॥ निरवकाशतया प्रतीयमानाया अपीत्यर्थः । एतेन ''पिबन्ताविति द्विवचनश्रुते''रिति टीका विवृता । ननु न द्विवचनं निरवकाशम् । तस्य शब्दसाधुत्वमात्रार्थत्वेन वा एकवचनान्तस्यैव छान्दसद्विवचनान्तत्वेन वा द्वित्वबोधनेऽपि तस्योद्देश्यविशेषणत्वेनाविवक्षिततया वा द्विवचनस्य पूर्वोत्तरवाक्यानुरोधेनैकवचनान्ततयोहेनैकत्वप्रापकतया वा द्विवचनप्रतिरूपकत्वेन वा द्वित्वाप्रापकत्वेनैकस्मिन्नुपपत्तिरिति चोद्यानि क्रमेण निरस्यन्नाद्यं निराह ॥ न च दारा इति ॥ प्रसिद्धमिति ॥ ''दाराः पुंसि च भूम्न्येवे''त्यादिवन्नैघण्टुक्याः प्रसिद्धेरभावात्तथा कल्पनमयुक्तमित्यर्थः । द्वितीयं निराह ॥ न च बाधकमिति ॥ ''व्यत्ययो बहुल''मिति ''सुपां सुलु''गित्यादिशास्त्रेणैकवचनस्य द्विवचनमिति वचनव्यत्ययकल्पनं ''अहल्यायै जारे''त्यादौ विभक्तिव्यत्यय इव सति बाधके । न हीह जीवेश्वरविषयत्वेनोपपत्तौ किंचिद्बाधकमस्तीत्यर्थः । गुहाप्रविष्टत्वादिबाधकं तु निरसिष्यत इति भावः । तृतीयमाशङ्क्य निराह ॥ न च ग्रहमिति ॥ ग्रहाधिकरणं प्राग्विवृतं छन्दोधिकरणे । ''ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाती''त्यादिनोत्पन्नानां ''ग्रहैर्यजेते''ति होमसाधनत्वेन प्राप्तानां संमार्गरूपसंस्कारविधानार्थं ग्रहमिति ग्रहशब्दोद्देश्यकत्वात्तद्गता संख्या न विवक्षितेति वक्तुं युक्तम् । इह तु ऋतपानस्य ब्रह्मण्यप्राप्ततया विधेयत्वान्न तया सम्भवति । किन्तु ''पशुना यजेते''त्यादाविव विधेयगतत्वेन विवक्षितैवेत्यर्थः । ननु टीकायां ''यौ सुकृतनिर्मितशरीरे हृदयगुहां प्रविष्टौ तत्रापि सर्वजीवोत्तमेऽतिपूर्णे वायौ प्रतिष्ठौ सुकृतफलं भुञ्जानौ तौ ब्रह्मविदः पञ्चमहायज्ञवन्तो द्युपर्जन्यादिपञ्चाग्निनिष्ठा वा त्रिवारकृतनाचिकेताः च्छायातपौ वदन्ती''ति

पिबन्तावनूद्य च्छायातपत्वविधेरुक्तत्वात्कथमेवमित्यत आह ॥ ऋतमिति ॥ गुहाविष्टत्वादिरादिपदार्थः । एकस्यैवोद्देश्यत्वादिति भावः । तथाच च्छायातपावित्यत्र द्विवचनं निरवकाशमित्यर्थः । ''पिबन्ताविति द्विवचनश्रुते''रित्युक्त्वा टीकायां ''श्रुतेर्निरवकाशत्वा''दित्युक्तम् । तत्स्वारस्यमनुरुध्य पिबन्तावित्यस्यानुवाद्यत्वेऽपि ग्रहवैलक्षण्येन तत्रत्यद्विवचनस्येश्वरेऽनुपपन्नतामाह ॥ ग्रहेति ॥ एकत्वस्य विधेयान्वयायोद्देश्यकोटिप्रवेशे ग्रहस्याप्युद्देश्यत्वेन प्रत्युद्देश्यं वाक्यपरिसमाप्त्या ग्रहं संमृज्यादेकं संमृज्यादिति वाक्यभेदः । विधेयकोटिप्रवेशे संमार्गस्यापि विधेयत्वेन विधेयभेदाद्ग्रहं संमृज्यात् स च संमार्ग एक इति वाक्यभेदापत्त्येत्यर्थः । चतुर्थमाशङ्क्य निराह ॥ न च पिबन्तावित्यादिकमिति ॥ मन्त्रोहाधिकरणमुक्तं जिज्ञासाधिकरणे । ''अग्नये जुष्टं निर्वपामी''ति दर्शपौर्णमासिकाग्नेयहविर्निर्वापमन्त्रस्य ''सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम'' इति विहिते सौर्ययागे ''आग्नेयवत्सौर्यः कर्तव्य इत्यतिदेशतः प्राप्तस्य यथासूर्यायेति प्रातिपदिकमात्रे ऊहस्तथा पिबन्ताविति द्विवचनान्तस्य पिबन्तमित्येकवचनरूपप्रत्ययमात्रोहस्स्यात् । न चात्र तथातिदेशतः प्राप्तम् । इहैवास्याम्नानादित्यर्थः । पञ्चममाशङ्क्याह ॥ न चैकस्मिन्निति ॥ प्राग्विवृतमभ्यासाधिकरणं समन्वयाधिकरणे । तत्र हि समिदादीनां यागनामत्वमुक्तम् । एकसमिदाख्यप्रयाजवाचिनोऽपि समिच्छब्दस्य रूढत्वेनोच्चैर्वृक्ष इत्यादाविव बहुवचनप्रतिरूपकत्वेनोपपत्तावपीह यौगिकत्वात्तथा न वक्तुं युज्यत इत्यर्थः । ननु नवमे द्वितीयपादान्तिमाधिकरणे ''प्रयाजेऽपीति चे''दित्यत्र समिधो यजतीत्यादौ समिदादिकं देवतात्वेनोद्दिश्य तत्संस्कारत्वेन यागा विधीयंतेऽथारादुपकारकतया यागा इति विशये सामवायिकत्वलाभात्संस्कारविधिरिति प्राप्ते तथात्वे देवतात्वलिङ्गस्य ''यदग्नये सायं जुहोती''त्यादाविव चतुर्थीनिर्देशस्याभावेन चतुर्थ्यर्थे द्वितीयाया उपचारापत्तेरारादुपकारकत्वेन यागविधिः । समिदादिशब्दास्तु मन्त्रवर्णप्राप्तदेवतां निमित्तीकृत्य नामधेयानि देवता एवानुवदन्ति । न चानुवाद उपचारो दोष इति सिद्धान्तितत्वात् श्येनशब्दस्य पक्षिविशेषे रूढस्य तत्सादृश्याद्गौण्या वृत्त्या यागनामत्वमिव देवतागणविशेषे निरूढस्य समिच्छब्दस्य तत्प्रकाशकमन्त्रसम्बन्धापादितदेवतासम्बन्धे यागे लाक्षणिकनामत्वान्न रूढत्वमस्ति । उक्तं च शाबरभाष्ये ''समिदादिमन्त्रकत्वाद्यजीनां समिदादिशब्दा वाचका'' इति । लक्षणायां च लिङ्गव्यत्यय इव वचनव्यत्ययोऽपि न दोष इति चेन्न । पौर्णमास्यधिकरणपूर्वपक्षे फलवाक्यस्थदर्शपौर्णमासाभ्यामिति पदस्य द्विवचनप्रतिरूपकाव्ययत्वमाश्रित्य प्राकरणिकसर्वयागनामधेयत्वमुक्तम् । तद्वत्प्रकृतेऽपि वक्तुं शक्यमित्यभिप्रायेणैवमुक्तमित्यविरोधः । द्विवचनस्य

सम्भावितावकाशनिरासेन ''श्रुतेर्निरवकाशत्वा''दिति टीकां समर्थ्य तदुपलक्षणमिति भावेन लिङ्गान्तरस्यापि तदाह ॥ छायात्वं चेति ॥ आतपत्वस्य विद्यावत्त्वेनोपपत्तावपीदमयुक्तम् । यद्यपि -

छायात्वविद्या संप्रोक्ता जन्यविद्या तपस्स्मृतम् ।
जीवगृध्रस्य तौ पक्षावध ऊर्ध्वपथोः पृथक् ॥

तौ विष्णोस्तु न विद्येते नित्यविद्यास्वरूपिणः'' । इत्यष्टमस्कन्धस्थपञ्चमाध्यायतात्पर्योक्त्या द्वयमपीशे न युक्तं तथापि पररीत्यैवमुक्तमिति ध्येयम् । यथोक्तं न्यायविवरणटीकायां ''छायातपत्वं चाविद्याविद्यावत्त्वेन जीवेश्वरयोरूपपद्यत'' इति ॥ तस्मादिति ॥ प्रातिपदिकार्थप्रत्ययार्थयोर्विष्णुमात्रेऽनवकाशत्वादित्यर्थः । ''न चैवं जीवेशग्रहणेऽप्यनुपपत्ति''रित्यादिटीकां व्यनक्ति ॥ ईश्वरस्येति ॥ एकस्य छत्रित्वेऽपि तत्साहचर्यादन्येष्वपि छत्रिणो गच्छन्तीति यथा व्यपदेशः तथा भोक्तृजीवसन्निधानादीश्वरोऽपि तथोपचर्यत इत्यर्थः । निरवकाशविष्णुलिङ्गादिबाध इत्यत आह ॥ गुहेति ॥

**पाण्डुरङ्गि** – प्रत्ययार्थभूतद्वित्वस्य ब्रह्मण्यसम्भवे हेतुमाह ॥ निर्भेदेति ॥ ननु च द्वित्वरूप संख्यानिर्भेदे ब्रह्मण्यपि किं न स्यादित्यत आह ॥ अन्यथेति ॥ द्वित्वादि संख्यायाभेद साधकत्वमनङ्गीकृत्य निर्भेदेपि ब्रह्मणि सङ्ख्याभ्युपगम इत्यर्थः । नन्वन्नमयादावनेकत्व श्रवणेऽप्यानन्दमयाधिकरणे तस्य ब्रह्मत्वसमर्थनेन तन्न्यायेन द्वित्वश्रवणेऽपि प्रकृते ब्रह्मत्वं किं न स्यादित्यत आह ॥ अन्नमयादीनां त्विति ॥ संज्ञाधिकरणन्यायेति ॥ संज्ञाचोत्पत्तिसंयोगादिति संज्ञाधिकरणन्यायेनेत्यर्थः । गुणविधायकाः सर्वोपजीव्यत्वमहाप्राणत्वरूपगुणविधायका इत्यर्थः । ननु तथापि अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् । बहुरूपत्वाच्च न विकारित्वमविरोधश्चेति भाष्ये तच्च वाधूलशाखायामष्टरूपमुदाहृतमित्यादिनाऽनुव्याख्याने च तत्प्रकरणे साक्षादश्रुताया अप्यार्थिकानेकत्वसंख्याया रूपबाहुल्याभिप्रायेण गतिकथनात् । अत्रान्नमयादीनां पूर्वपक्षिणा ब्रह्मत्वाङ्गीकार इदं व्यर्थमेव स्यात् । न चानश्नन्नित्यादेः कर्मफलात्तृत्वं स्वत एवान्यत्र प्रसिद्धमिति । तर्हि द्विवचनश्रुतिसाहित्योक्तिवैयर्थ्यात् । पूर्वाधिकरणेऽत्तृत्वस्यापि प्रतिपादनेनानशनोक्तेर्गतिरपि पूर्वाधिकरणसिद्धान्ताङ्गीकारेणैव पूर्वपक्षिणं प्रतिसिद्धत्वात् । अद्यतेऽत्तिच भूतानीति श्रुतेः महाभोक्तामहाभोग्य इत्यर्थोन्नमये भवेदित्यनुव्याख्यानाच्चात्रान्नमयशब्देनापि ब्रह्मत्वाङ्गीकारे तदनुपपत्ति शङ्काया अनुदयाच्च । अत

एव टीकायां पिबन्तावित्येतदुद्देश्यकोटौ निवेशितमित्याद्यरुच्याह ।। अथ वेति ।। तथाचेति ।। अन्नमये भोक्तृत्वमप्युपलक्षणीयम् । ननु गुरोर्दारा आगता इत्यत्र दारा इति बहुवचनवत् ऋतं पिबन्तावित्यत्र द्विवचनमपि शब्दसाधुत्वेनैव किं न स्यादित्याशङ्क्य दारादिशब्देषु बहुवचनादेश्शब्द साधुतैव नत्वर्थसाधुता । न चार्थसाधुत्वे सम्भवति शब्दसाधुत्वमात्रं युक्तम् । प्रकृते चास्मद्रीत्या जीवेश्वर परत्वेऽर्थसाधुत्वमपि सम्भवतीति भावेनाह ।। न च दारा इत्यादाविति ।। देवदत्तः पिबन्तावित्यप्रयोगादिति भावः । ननु द्विवचनस्य वचनव्यत्ययेन ब्रह्मणि सम्भवात्कथं द्वित्वस्य ब्रह्मपक्षे बाधकतेत्यत आह ।। न चेति ।। बहूनि द्विवचनानि अभ्यासाद्वित्वे निश्चिततात्पर्यकाणीत्यर्थः । अनेकेषामपि द्विवचनानां वचनव्यत्ययःसति बाधके सम्भवत्येवेत्यतो बाधकं विनेत्युक्तम् । न च ग्रहं संमार्ष्टीत्यत्रोद्देश्यविशेषणभूतस्यैकत्वस्य विवक्षायां सोमगतद्वादश ग्रहाणामपि संमार्जनाभावापत्त्याऽविवक्षितत्ववत्प्रकृतेऽपि द्वित्व-स्योद्देश्य विशेषणत्वेन विवक्षा किं नस्यादित्यतो वैषम्येण परिहरति ।। न चेति ।। ब्रह्मणीति ।। तथाच विधेयविशेषणत्वेनोद्देश्य विशेषणत्वमेव नास्तीत्यविवक्षानुपपत्तिरिति । ननु सर्वात्तृत्वेन ऋतपानस्यापि प्राप्तत्वेन विधेयत्वानुपपत्त्योद्देश्य विशेषणत्वमेव वक्तव्यमित्यरुचेराह ।। ऋतं पिबन्तावितीति ।। किं च ग्रहं संमार्ष्टीत्यत्र ग्रहं संमृज्यात् तच्चैकं कुर्यादित्युभयविधाने वाक्यभेदापत्त्या ग्रहगतैकत्वस्य विधिसंस्पर्शाभावेऽपि ग्रहेष्वेकत्वस्य सत्त्वेनोद्देश्यत्वसम्भवेऽपि प्रकृते ब्रह्मणि द्वित्वस्य स्वरूपत एवाभावान्नोद्देश्यत्वमित्यभिप्रेत्य दोषान्तरमाह ।। ग्रहैकत्वस्येति ।। ननु सूर्यदेवताकयागे अग्नय इत्यादेस्सूर्यायेत्यादिरूपेणोहवत्प्रकृतेऽपि पिबन्ताविति द्विवचनांतस्याप्येक वचनान्ततयोहः किं न स्यादित्यतो वैषम्येण परिहरति ।। न चेति ।। छत्रिन्यायेनेति ।। छत्र्यच्छत्रिसमुदाये छत्रिण इति व्यपदेशवत्पिबदपिबत्समुदाये पातृत्वव्यपदेशो युक्त इत्यर्थः । साधकमुक्त्वा बाधकं परिहरति ।। गुहाप्रविष्टत्वेति ।

## तात्पर्यचन्द्रिका

**सिद्धान्तस्तु ।। गुहावेशाद्ब्रह्मशब्दात्सेतुत्वादक्षरत्वतः । पारत्वादभयत्वाच्च ब्रह्मैवात्र निगद्यते ।। गुहानिहितत्वं यद्यपि जीवेऽप्यस्ति तथापि ''यो वेदनिहितं गुहायां गुहाहितं गह्वरेष्ठं पुराणं गुहां प्रविश्यतिष्ठन्तं'' इत्यादि श्रुतिषु ब्रह्मण्येव तस्य प्रसिद्धत्वात्तेन ब्रह्मत्वसिद्धिः । न हि मैथिल इत्युक्ते यः कश्चिन्मिथिलाभवोऽभासते । किन्तु यस्तत्र प्रसिद्धस्तदधीश्वरः । ''यस्सेतुरीजानानामक्षरं ब्रह्म यत्परम् ।**

अभयंतितीर्षतां पारमित्युत्तरवाक्ये च पारत्वेन विशेषणात्परब्रह्मण्येव ब्रह्मशब्दः । सेतुत्वादिकं तु "एष सेतु"रित्यादि श्रुतिभिर्ब्रह्मलिङ्गत्वेन निश्चितम् । न चोत्तरत्र यस्सेतु रित्यादिभिः पूर्वत्र च यस्य ब्रह्म च क्षत्रं चेत्यादिभिर्ब्रह्ममात्रविषयैर्वाक्यैः सन्दष्टं "ऋतं पिबन्ता"वित्यादिकं बाधकाभावेऽप्य ब्रह्मविषयमिति युक्तम् । न चेश्वरस्याभोक्तृत्वमेव बाधकम् । "एतत्सर्वं परे आत्मनि सम्प्रतिष्ठत" इति प्रस्तुत्य "एष हि द्रष्टास्पष्टाश्रोताघ्रातारसयिते"त्यादि श्रुतेः "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । श्रोत्रं चक्षुः स्पर्शनं च रसनंघ्राणमेव च । अधिष्ठायमनश्चायं विषयानुपसेवते" इत्यादि स्मृतेश्च । न च श्रोत्रमित्यादिकं जीवविषयम् । पूर्वत्र "यच्चाप्युत्क्रामतीश्वर" इत्यादेः उत्तरत्र च "पश्यन्ति ज्ञानचक्षुष" इत्यादेरयोगात् । "अनश्नन्नन्य" इत्यादिकं तु "तस्येदाहुःपिप्पलं स्वाद्वग्र" इतीश्वरस्य स्वादुभोक्तृत्वोक्तेः । तथा "प्रविविक्ताहारतर इव भवत्यस्माच्छारीरादात्मन" इति श्रुत्यन्तरे भगवदाहारस्य जीवाहाराद्विविक्तत्वोक्तेः । तथा "शुभं पिबत्यसा"वित्यादिभाष्योक्त श्रुतिभिरशुभभोगस्यैव निषेधात् । तथा "अन्यूनानधिकत्वाच्च पूर्णस्वानन्दभोजनात् । विरागाच्च परस्यास्य भोक्तृत्वप्रतिषेधन"मित्यादिस्मृतिभिरभोक्तृत्वश्रुतेर्गतिकथनात् "क्रीडाभोगोन चान्यथे"त्यादि स्मृत्या क्रीडारूपभोगसम्भवस्योक्तत्वाच्चाशुभभोगाभावविषयम् । प्रत्युत जीवपक्ष एव "ऋतं सत्यं तथा धर्म" इति स्मृतेर्धर्मफलवाचिऋत पदं न युक्तम् । तस्याधर्मफलं प्रत्यपि भोक्तृत्वात् । ईशपक्षे तु तद्युक्तम् । "पुण्यमेवामुङ्गच्छती"ति श्रुतेः ।

प्रकाशिका – जीवस्यापि "हृदिह्येष आत्मे"ति गुहास्थत्वात् "बृहजाति जीवे"त्यादिना जीवेऽपि प्रयोगादिति भावः । निरवकाशभगवल्लिङ्गैः प्रकृतिप्रत्ययार्थौ कथं चिन्नेयाविति, भावेन सूत्रोक्तान् सिद्धान्तहेतून् सङ्गृह्णाति ॥ गुहावेशादिति ॥ आद्यसूत्रोक्तोऽयं हेतुः । द्वितीय सूत्रोक्तानाह ॥ ब्रह्मेति ॥ टीकोपलक्षणम् । भाष्ये परमित्यन्तोक्तेः । तत्वप्रदीपे "अक्षरशब्देन विशेषणाच्चे"त्याद्युक्तेरिति भावः । अत्र पिबन्तावित्यत्र । ननूक्तं गुहाप्रविष्टत्वं जीवेऽपि युक्तमित्यतः प्रसिद्धिवाचक सौत्रहिशब्दसूचितं तन्निरवकाशत्वं न्यायविवरण टीकोक्तरीत्या साधयति ॥ गुहेति ॥ यो वेदेति ॥ "ब्रह्मविदाप्नोति पर"मिति पूर्वत्र ब्रह्मण एव तत्र प्रस्तुतत्वादिति भावः । ननु ब्रह्मशब्दादित्ययुक्तम् । तस्यापि प्राक्सावकाशितत्वादित्यतो

''विशेषणाच्चे''त्यस्यार्थान्तर मुपेत्य तस्य निरवकाशत्वमाह ॥ यस्सेतुरिति ॥ ब्रह्म यत्परमित्येतावदेवोपयुक्तं तथापि सेतुत्वादिस्फोरणाय कृत्स्नवाक्योक्तिः । यद्यपि भाष्यादौ केवलब्रह्मशब्द एव निरवकाश इत्युक्तं तथापि तदपरित्यागेन ''ब्रह्मवित्परमाप्नोतीति यत्प्रथमसूचित''मित्यानन्दमयाधिकरणानुभाष्यसुधयोरुक्तरीत्योपायांतरप्रदर्शनमित्यदोषः । सेतुत्वादेर्निरवकाशत्वं व्यनक्ति ॥ सेतुत्वेति ॥ ''धृतेश्चे''ति दहरनयगुणसूत्रे ''एषसेतुर्विधृतिरेषां लोकानामसम्भेदाये''ति सर्वाश्रयत्वरूपसेतुत्वस्य उत्तराधिकरणे ''एतदमृतमभय''मित्यभयत्वस्य अदृश्यत्वाद्यधिकरणे ''यया तदक्षरमधिगम्यत'' इत्यक्षरत्वस्य विष्णौ सेत्स्यमानत्वाद्विष्णोरन्यत्रानवकाशमित्यर्थः । ''अक्षयाद्रतिरूपत्वादक्षेपुर मणादपि । अक्षरं भगवान्विष्णुरोमित्युच्चत्वहेतुत'' इति स्मृतेश्चेति ॥ नन्वस्तु यस्सेतुरित्यादि वाक्यं ब्रह्ममात्रपरम् । ऋतमिति वाक्यं तूभयपरमस्तु । कर्मफलात्तृत्वद्विवचन श्रुत्योर्भावादित्यत आह ॥ न चेति ॥ अब्रह्मविषयमपीति युक्तमित्यर्थः । ननु हरेरभोक्तृत्वं वा द्विवचनोक्त द्वित्वं वा छायात्वं वा बाधकमित्यतः ''तस्य कर्मफलभोगाभावान्नैतद्वाक्य प्रतिपाद्यत्व''मित्यादि टीकां विवृण्वन्नभोक्तृत्वं तावन्निराह ॥ न चेत्यादिना पुण्यमेवामुञ्गच्छतीत्यन्तेन ॥ एतदिति ॥ षट्प्रश्नोपनिषदि चतुर्थप्रश्ने ''परे आत्मनी''ति परत्वविशेषणेन परमात्मानमेव परामृश्य द्रष्टृत्वादेरुक्तेरित्यर्थः । अहं हीति वाक्ये अहमिति कृष्णेन प्रयुक्तत्वाद्ब्रह्मविषयत्वं सिद्धमिति गीतोक्तद्वितीय स्मृतेः तत्साधयति ॥ न चेति ॥ उभयत्रादिपदेन ''गृहीत्वैतानि संयातिवायुर्गन्धानिवाशया''दिति ''यतंतोऽप्यकृतात्मानो नैनं पश्यन्ती''त्यादेर्ग्रहः । एतद्वाक्योक्तिस्तु भोगस्येन्द्रियसाध्यत्वात्कथमीश्वरस्य भोग इति शङ्काव्युदासायेति बोध्यम् । उक्तं च छान्दोग्यभाष्येऽष्टमाध्यायान्ते ''भूतैर्महद्भिर्य इमाः पुरोविभुर्निर्माय शेतेयदमूषुपूरुषः । भुङ्क्ते गुणान्षोडश षोडशात्मकस्सोलङ्कृषीष्टभगवान्वचांसिमे'' इत्यादौ भगवत एवेन्द्रियैर्भोगोक्तेश्च । ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध इति चे''त्यादि । ईश्वरस्य भोक्तृत्वोक्तावनशनश्रुतिविरोध इत्यत आह ॥ अनश्नन्निति ॥ अशुभभोगाभावविषयमित्यन्वयः। कुतस्सङ्कोच इत्यतः ''असद्व्यपदेशान्नेति चेन्न । धर्मान्तरेण वाक्यशेषा''दिति न्यायेन टीकोक्त वाक्यशेषबलादिति भावेन तमाह ॥ तस्येति ॥ आथर्वणेऽपि ऋक्शाखायामस्ति श्रवणमिति भावः । तस्येदाहुः पिप्पलं स्वाद्वग्रेतन्नोन्नशद्यः पितरं न वेदे''ति वाक्यशेषेयः अग्रे अग्र्यः श्रेष्ठः तस्यैव स्वादु पिप्पलं कर्मफलमाहुः । यः पितरं न वेद अत एव न शत् नाशवान् तस्य स्वादु पिप्पलं नेति हरेरेव सुखभोक्तृत्वोक्तेरित्यर्थः । ननु श्रुतित्वाविशेषाद्भोक्तृत्वश्रुतेरेवार्थान्तरमस्त्वित्यतो गीताभाष्योक्तमाह ॥ तथेति ॥ श्रुत्यन्तरे वाजसनेये षष्ठेऽध्याये

द्वितीयब्राह्मणे ''इन्धोहवैनामैषयोयं दक्षिणे क्षन्पुरुष'' इति प्रकृतस्य परमात्मनः ''तस्मादेष प्रविविक्ताहारतर इव भवत्यस्माच्छारीरादात्मन'' इति शारीरशब्दित जीवाहाराद्विभक्ता-हारोक्तेरित्यर्थः । अवतारेषु स्थूलमपि भुङ्क्ते इतीवशब्दः । न च प्रविविक्ताहारो जीव एवेति वाच्यम् । तस्य शारीरादिति जीवाद्भेदोक्तेः । न च शारीराज्जागरावस्थाज्जी-वात्स्वप्नसुषुप्त्यवस्थस्स एव प्रविविक्ताहार इत्यवस्थाभेदोपाधिकं जीवस्य भेदमङ्गीकृत्य व्याख्यायतामिति वाच्यम् । स्वप्नसुषुप्त्यवस्थस्यापि शारीरत्वेन शारीरशब्देनैव गृहीततया ततोभेदायोगात् । ''शारीरस्तु त्रिधाभिन्नो जाग्रदादिष्ववस्थिते''रिति गारुडोक्तेः । नन्ववस्थात्र यवतश्शारीरत्वेऽप्यस्मादिति विशेषणादत्र जाग्रदवस्थो गृह्यते । तस्माच्च स्वप्नाद्यवस्थस्योक्त विधयां सम्भवति । अन्यथाऽस्मादिति व्यर्थमिति चेन्न । ''शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वर संज्ञित'' इत्यादिस्मृत्येश्वरस्यापि शारीरत्वेन तद्व्यावृत्त्यर्थतयाऽस्मादित्यस्य सार्थक्यादिति । व्यक्तमेतद्गीताभाष्ये सप्तमेऽध्याये ''न चात्र जीव उच्यत'' इत्यादिनेत्यर्थः । न चानन्दमयनयाद्युक्तदिशा पूर्णानन्दस्य हरेः किं कर्मफलभोगेनेत्यतश्श्रुत्यर्थसङ्कोच बीजस्मृतीराह ॥ तथेति ॥ ''शुभं पिबत्यसौ नित्यं नाशुभं सहरिः पिबेत् । पूर्णानन्दमयस्यास्य चेष्टान ज्ञायते क्वचित् । आत्मान्तरात्मेति हरिरेक एव द्विधास्थितः । निविष्टो हृदये नित्यं रसं पिबति कर्मजम् । शुभान्पिबति भोगान्सछायेवविदुषां प्रभु''रित्यादिस्मृतिभिरित्यर्थः । श्रुतेः प्रथमस्कन्धतात्पर्योक्त विषयांतरं चाह ॥ अन्यूनेति ॥ भोगेऽभोगेचेत्यर्थः ॥ इत्यादिस्मृतिभिरिति ॥ ''प्रविविक्तभुग्यतो ह्यस्माच्छारीरात्पुरुषोत्तमः । अतोऽभोक्ताचभोक्ताच स्थूलाभोगात्स एवत्वि''त्यादिस्मृतिरादिपदार्थः ॥ अशुभेति ॥ जीववद्रागपूर्वकोप जीवनार्थभोगाभावविषयं चेत्यपि ध्येयम् ॥ ऋतमिति ॥ ''ऋतं सत्यतथाधर्मः सुकृतं चाभिधीयत'' इति सप्तमगीताभाष्योक्तस्मृतेरित्यर्थः ॥ पुण्यमिति ॥ ''पुण्यमेवामुङ्गच्छति न हवैदेवान्पापङ्गच्छती''ति बृहदारण्यकश्रुतौ पुण्यफलभोगस्यैवोक्तेरित्यर्थः । यद्यप्यमुं सप्तान्नविद्यावेदितारं पुण्यमेवाप्नोति न पापमित्यर्थः । उक्तं च ''सप्तान्नोपासने योग्या देवा एव ततोहि यत् । देवांश्च पापं नाप्नोति तस्मात्पापं न तस्यत्वि''ति । तथाज्ञानपादे ''पुण्यमेवामुमाप्नोति न देवान्पापमाप्नुया''दित्यनुव्याख्यानसुधायां अमुं सप्तान्नविद्योपासनेन प्रेरकतया परपुरप्रवेशिनं परकृतं पुण्यमेवाप्नोति । न पापम् । कुतः । देवोह्यसौ जातः । न हि देवान्पापं प्राप्नोतीत्यर्थ इत्युक्तम् । तथाप्यमुं सप्तान्नोपासकं देवमित्यर्थकत्वेन देवत्वस्य हेतुत्वोक्तेः देवोत्तमं हरिं पुण्यं गच्छति पापं तु नेति किमुवाच्यमित्याशयेनैतदुक्तिः । अत एव

गीताभाष्ये सप्तमे ''पुण्यगन्ध'' इति भोगापेक्षया । तथाच श्रुतिः । ''पुण्यमेवामु''मित्यादिना ब्रह्मपरतयेयं श्रुतिरुदाहृता । व्याख्याताच प्रमेयदीपिकायां ''अमुं उपासकम् । कुतः तस्य देवत्वात् । तथापि कुतः न ह्वै देवमात्रस्य पुण्यभोगनियमे देवोत्तमस्य सुतरां तत्सिद्धिरिति ।

**पाण्डुरङ्गि** – अनश्नन्न्य इत्यादिकं त्वशुभभोगाभावविषयमिति सम्बन्धः । एवं प्रकृत्यर्थकर्मफलभोक्तृत्वस्य ब्रह्मणि सावकाशत्वमुपपाद्य प्रत्ययार्थस्यापि सावकाशत्व मुपपादयितुं शङ्कते ॥ न चेति ॥ कथं चिन्नेयत्वादिति ॥ अवयवभेदादिनेत्यर्थः ॥

## तात्पर्यचन्द्रिका

**नापीशपक्षेद्विवचनानुपपत्तिः । यतः यथैकस्मिन्नेवपाशेऽदितिः पाशानिति श्रुतिः । तथैकस्मिन्नीश्वरेस्तु पिबन्ताविति वागपि ॥ १ ॥ यथा नवमे द्विबहुपत्नीकेष्वपि प्रयोगेषु पत्नीं सन्नह्येत्येकवचनांतो मन्त्रः । यथा वाग्नीषोमीयपशु सम्बन्धिन्येकस्मिन्नेव पाशे ''अदितिः पाशा''नित्यग्नीषोमीयपशुप्रकरणस्थमन्त्र गतं बहुवचनम् । अन्यथाहि बहुपाशयुक्तेषु पशुगणेषु पाशमन्त्रस्योत्कर्षः स्यात् । स च नेष्टः । गुणभूतप्रत्ययार्थबहुत्वस्यानुसरणाय तदाश्रयत्वेन प्रधानभूतप्रातिपदिकार्थो-त्कर्षायोगेनैकस्मिन्नपि बहुवचनस्य कथं चिन्नेयत्वात् । तथेहाप्येकस्मिन्नपि ब्रह्मणि द्विवचनमन्येन सह द्वित्वादस्तु । अस्यापि ब्रह्मप्रकरणस्थत्वात् । ''युवं हिस्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्या''दिति श्रुतं यजमानद्वित्वादितु द्व्यादिप्रातिपदिकार्थत्वात् संख्यानभिधानेऽपि कारकाभिधानेन प्रत्ययस्य सार्थक्य-वत्प्रातिपदिकस्य सार्थक्यासम्भवात् । रामकृष्णावित्यादाविव च प्रकृते रूपविशेषेणैव यजमाने रूपविशेषेणद्वित्वासम्भवाच्चैक यजमानकदर्शपूर्णमास प्रकरणादुत्कृष्टम् । यस्मिन्पञ्चपञ्चजना इत्यत्र तु बहुत्वस्य प्रातिपदिकार्थत्वेऽपि ब्रह्मणो बहुरूपत्वाददोषः ।**

**प्रकाशिका** – एवमभोक्तृत्वं बाधकं नेत्युपपादनेन तस्य कर्मफलभोगाभावा''दित्यादि टीकां विवृत्याधुना द्विवचनमपि न बाधकमित्याह ॥ नापीत्यादिना विष्णोरेव द्विरूपत्वादित्यन्तेन ॥ द्विवचनानुपपत्तेश्चतुर्धापरिहारं विवरिष्यन् द्विवचनमुपपन्नमिति वदतो यदभिप्रेतं द्विवचनबोध्यस्य द्वित्वस्यैकस्मिन्ब्रह्मण्ययोगात्तदनुरोधेन पिबत्प्रातिपदिकं छत्रिन्यायेन

भोक्त्रभोक्तृसमुदाये लक्षणयावर्तत इति तत्तावदयुक्तम् । गुणभूतप्रत्ययार्थानुरोधेन प्रधानभूतप्रातिपदिके लक्षणाया अन्याय्यत्वात् । किन्तु प्रातिपदिकस्य मुख्यार्थं भोक्तारमुपेत्यैव तदनुरोधेन प्रत्ययार्थो द्वित्वमेव कथंचिन्नेयमित्येकं परिहारं ''अभेदैकत्ववत्येवघटे द्रव्यांतरसहिते द्वित्वदर्शना''दिति सुधावाक्यानुसारेण सदृष्टान्तमाह ॥ यत इत्यादिना किंचेत्यन्तेन ॥ यत इत्यस्य श्लोकेनान्वयः । यस्मात्पाशानिति बहुवचनमिवैकस्मिन्नपि द्विवचनं युज्यते तस्मान्नद्विवचनानुपपत्तिरिति । पाशानितिश्रुतिरित्येतदुपलक्षणमिति भावेन पूर्वार्धं व्यनक्ति ॥ यथा नवम इति ॥ तृतीये पादे ''अपूर्वे त्वविकारो प्रदेशात्प्रतीयते'' इति पञ्चमाधिकरणे दर्शपूर्णमास प्रकरणे ''पत्नीं सन्नह्ये''ति मन्त्रः किमेकद्विबहुपत्नीकेष्व विकारेण प्रयोक्तव्य उत द्विबहुपत्नीक प्रयोगयोर्द्विवचनबहुवचनाभ्यामूहितव्य इति विशये एकपत्नीके समवेताभिधायित्वसम्भवादन्यत्रैकवचनमन्याय्यनिगदम् । अतो द्विवचनबहुवचन योरूहितव्य इति प्राप्ते स्यादेवं यद्येकपत्नीकाभिप्रायमिदमाम्नानं स्यात् । न चैवम् । सर्वप्रयोगाणां समानविधानत्वात्सर्वाभिप्रायेणेदमाम्नानम् । तस्मात्सर्वेषु प्रयोगेष्वविकारेणैकवचनांत एव प्रयोज्य इति सिद्धान्तितम् । तत्र यथैकत्वाभावेऽप्येकवचनान्तो मन्त्रो निविशते तथेहापि ब्रह्मणि द्वित्वाभावेऽपि द्विवचनान्तवागस्त्वित्यर्थः ॥ यथावेति ॥ अत्रैव ''विप्रतिपत्तौ विकल्पस्स्यादसमर्थत्वाद्गुणे त्वन्याय्य कल्पनैकदेशत्वा''दिति चतुर्थेऽधिकरणे अग्नीषोमीये पशौ ''अदितिः पाशान्प्रमुमोक्तुदेव'' इति बहुवचनान्तः पाशमन्त्रश्श्रुतः । स किं प्रकृतावेव निविशतेऽथबहुपाशकेषु ''आग्नेयं कृष्णग्रीवमालभेते''त्यादिना विहितेषु पशुगणेषूत्कृष्यत इति संशये एकस्मिन्बहुवचनस्यायोगादुत्कर्ष इति प्राप्ते पाशप्रातिपदिकार्थान्वितं विभक्त्यभिहितं कर्मकारकं प्रकृतावपि पाशकर्मक मोचनाभिधानेन सम्भवन्निवेशं नोत्कर्षं सहते । संख्यामात्रं त्वसम्भवदपि गुणत्वान्न प्रातिपदिकं प्रधानभूतं कारकं चालमुत्क्रष्टुम् । अतो न संख्यावशेन मन्त्रस्योत्कर्षः । बहुवचनस्य त्वेकस्मिन्नपि पाशे योगोऽवयवबहुत्वाभिप्रायेण छान्दस इति सिद्धान्तितम् । तथेहाप्येकस्मिन्नेव ब्रह्मण्यन्येन सह द्वित्वादस्तु द्विवचनमित्यर्थः । एकवचनस्याद्यं बहुवचनस्य द्वितीयमिति विवेकः ॥ अन्यथेति ॥ तदधिकरण पूर्वपक्षापादनमस्त्वित्यत आह ॥ स चेति ॥ उक्तं च शाबरभाष्ये ''गुणे त्वन्याय्यकल्पना स्यान्न प्रधाने गुणश्च विभक्त्यर्थः प्रधानं प्रातिपदिकार्थ इत्यादि'' नन्वस्याग्नीषोमीय प्रकरणस्थत्वात्तत्प्रकरणानुग्रहाय तत्र कथंचिन्निवेश उक्तः । अत एव तत्र ''प्रकरणाच्चे''ति गुणसूत्रमित्यत आह ॥ अस्यापीति ॥ उत्तरत्र ''यस्सेतु''रित्यादिभिः पूर्वत्र ''यस्य ब्रह्म च

क्षत्रं चे''त्यादिभिर्ब्रह्मविषयैर्वाक्यैस्सन्दष्टत्वेन गुहाविष्टत्वादिना लिङ्गेन च ब्रह्मप्रकरणत्वावगमात्। एवं चान्येन सह द्वित्वादेव द्विवचनोपपत्तौ न तदनुरोधेन लक्षणया प्रकृत्यर्थो बाधनीय इति। ननु विषमोयमुपन्यासः। तत्र प्रकृत्यर्थस्योत्कर्षभिया प्रत्ययार्थस्य बाध उक्तः। इह तूक्तरीत्येश्वरस्य भोक्तृत्वाज्जीवस्य च भोक्तृत्वस्य प्रत्यक्षादिसिद्धत्वात्पिबत्प्रातिपदिकेन जीवेश्वरयोर्ग्रहणे प्रातिपदिकार्थस्य भोक्तृत्वस्य प्रत्ययार्थस्य द्वित्वस्य च मुख्यस्यैव सम्भवादिति चेन्मैवम्। ऋतशब्दितधर्मफलभोक्तृत्वस्य जीवेऽनुपपत्त्या तस्य लक्षणीयत्वात्। अत एव टीकादौ पूर्वं द्विवचनस्यैवेश्वरे सावकाशत्वोक्तावप्यत्र पूर्वमृतपानकर्तृत्वस्येश्वरैकनिष्ठत्वमुक्तम्। ननु तर्हि कथं तृतीयाध्यायस्य तृतीयपादे ''द्वित्वबहुत्वयुक्तं वा चोदनात्तस्य'' इति चतुर्दशेऽधिकरणे ''युवं हिस्थस्स्वर्पती'' इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्। एते असृग्रमिन्दव इति बहुभ्योयजमानेभ्य'' इत्यत्र प्रत्ययार्थ संख्यानुरोधेन प्रातिपदिकमुकृष्यत इत्युक्तमित्यतस्तद्वैषम्यमाह ॥ युवं हिस्थ इति ॥ स्तोत्रस्यादौ पठनीया ऋक् प्रतिपदित्युच्यते। एतामृचं प्रतिपदं प्रथमां कुर्यादित्यर्थः। नन्विदं सूत्रकृदेव पर्यहार्षीत्। यदाह ''अर्थाभावात्तु नैवं स्याद्गुणमात्रमितर''दिति। सत्यम्। तस्य प्रत्ययार्थाधीनोत्कर्षभ्रमव्युदासाय स्पष्टीकरणमेतत्। तत्र किं प्रतिपदावेकयजमानकज्योतिष्टोऽथ द्विबहुयजमानकेषु कुलाया हीनादिषूत्क्रष्टव्ये इति संशये नित्ये कर्मण्यशक्तिकृतां गत्यङ्गीकाराद्यदैको- यजमानो ज्योतिष्टोममनुष्ठातुं न शक्नुयात्तदा ''वसन्ते वसन्ते ज्योतिषा यजेते''त्याख्यातोपात्तगुणभूतोपादेय कर्तृगतमेकत्वं क्रत्वं कमपि त्यक्त्वा द्वौबहवोवायजेरन्निति ज्योतिष्टोम एव प्रतिपन्निवेशसम्भवान्नोत्कर्ष इति प्राप्ते अशक्तिन्यायस्योपादेयाङ्गविषयत्वाद्यजमानगतैकत्वस्य कालादिवदनुपादेयत्वात्तत्त्यागायोगेन प्रकृतौ निवेशासम्भवात्कुलायादिषूत्कर्ष इति सिद्धान्तितम्। तत्र प्रकृतौ यजमानद्वित्वाभावादुत्कर्ष इति सत्यम्। तथापि प्रत्ययार्थाभावान्नोत्कर्षः। तस्य कारकाभिधानेनापि चारितार्थ्यात्। किन्तु पातिपदिकार्थाभावेनैवेति प्रातिपदिकार्थस्य प्रकृतत्वेऽनवकाशं द्वेधाह ॥ संख्येति ॥ दर्शपूर्णमासप्रकरणादिति लेखकदोष मूलः पाठोयम्। ज्योतिष्टोमप्रकरणस्थत्वात्सौत्रप्रतिपद्विधानस्येत्याहुः। ननु प्रातिपदिकार्थसंख्यायाः प्रकृतावसम्भवेन यद्युत्कर्षस्तर्हि ''न संख्योपसङ्ग्रहा''दिति नये ''यस्मिन्पञ्चपञ्चजना'' इति प्रातिपदिकार्थस्य बहुत्वस्यैकस्मिन्नसम्भवेऽपि कथं तत्रैव निवेशोऽभ्युपगत इत्यत आह ॥ यस्मिन्निति ॥ न च तथा यजमाने सम्भवतीत्युक्तमिति भावः।

**पाण्डुरङ्गि** – अन्येन सह द्वित्वादस्त्विति ।। पाशानन्वयेऽपि द्वित्वस्योपपत्त्यर्थमेवान्यसाहित्यस्योप योगाद्विवचनं छान्दसमस्मिन्पक्ष इति भावः । ननु च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् । दृष्टान्ते अदितिः पाशानिति बहुवचनस्याग्नीषोमीय प्रकरणस्थमन्त्र गतत्वेन बहुपाशयुक्तेषूत्कर्षासम्भवेन तत्र गुणभूतप्रत्ययार्थबाहुल्यस्यानुसरणाय प्रधानभूतप्रातिपदिकार्थोत्कर्षायोगेनैकस्मिन्नपि बहुवचनस्यास्वारस्यसम्भवेऽपि प्रकृतेपि बन्तावित्यादि द्विवचनस्य ब्रह्मप्रकरणस्थत्वाभावेनान्यत्रोत्कर्षसम्भवेन प्रकृत्यर्थस्वारस्यानुसारेण प्रत्ययास्वारस्य कल्पनस्यासम्भवादित्यत आह ।। अस्यापीति ।। नन्वदितिः पाशानित्यत्र प्रकृत्यर्थस्वारस्यानुसारेण प्रत्ययार्थास्वारस्यादर्शनात् । यदि तु ऋतं पिबन्तावित्यत्र प्रकृत्यर्थस्वारस्यानुसारेण प्रत्ययार्थास्वारस्यं चेत्कल्प्यते तर्हि दर्शपूर्णमास- प्रकरणस्थस्य युवं हिस्थः स्वर्पतीति द्वयोर्यजमानयोः प्रतिपदं कुर्यादिति श्रुतस्य यजमानादि- द्वित्वस्य प्रकरणान्तर उत्कर्षस्य दर्शनात्प्रकृतेऽपि ऋतं पिबन्तावित्यस्य प्रकरणान्तर उत्कर्षोऽपि किं न स्यादित्यतस्तद्वैषम्यमुपपादयति ।। युवं हीति ।। श्रुतं यजमानद्वित्वादित्तु कयजमानकदर्शपूर्णमासप्रकरणादुत्कृष्टमित्यर्थः ।

तत्र हेतुमाह ।। द्व्यादीति ।। तथाच तत्र प्रकरणादुत्कर्षाभावे प्रकृत्यर्थस्यैवास्वारस्यापत्त्या प्रकरणादुत्कर्षः । न तु प्रत्ययार्थास्वारस्यवत्प्रकृत्यर्थस्यास्वारस्यं भवत्वित्याशङ्क्य प्रत्ययार्थो द्विविधः । संख्यारूपः कारकरूपश्चेति । तत्र संख्यारूपार्थानभिधानेऽपि कारकरूपप्रत्ययार्थस्याभिधानेन प्रत्ययस्य सार्थक्यं सम्भवतीत्याह ।। संख्येति ।। रामकृष्णावित्यादाविति ।। रामकृष्णयोर्द्विरूपत्वेन सर्वत्र प्रसिद्धत्वादृतपानकर्तुर्द्वित्वस्योपपादयिष्यमाणत्वादद्याप्यसिद्धत्वेऽपि रामकृष्णादिवत्सम्भावनामात्रस्य कर्तुं शक्यत्वाद्यजमानद्वित्वस्य रूपभेदेनाप्य सम्भावितत्वात्तस्योत्कर्षेऽपि न प्रकृत उत्कर्ष इति भावः । ननु श्रुतस्य यजमानद्वित्वस्येव यस्मिन्पञ्चपञ्चजना इत्यत्र बहुत्वस्यापि प्रकृत्यर्थत्वात्तस्य चैकस्मिन्ब्रह्मण्यसम्भवात्तस्मात्प्रकरणादन्यत्रोत्कर्षः स्यादित्यत आह ।। यस्मिन्निति ।। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमात्रप्रदर्शनार्थं पूर्वं द्वयोर्यजमानयोरित्यत्र द्वित्वस्य प्रातिपदिकार्थतोक्तिः । अत एव तत्र रामकृष्णावित्यादिना रूपविशेषेणैवेत्यादिना वस्तुस्थितिरुक्तेति हृदयम् ।।

## तात्पर्यचन्द्रिका

ननु प्रोद्गातॄणामित्यत्रेव विभक्त्यर्थानेकत्वानुग्रहाय प्रकृतेऽपि छत्रिवत्प्रातिपदिकलक्षणैव युक्तेति चेन्न । तत्रैव प्रकरण उद्गातृशब्दलक्षणीयानां प्रस्तोत्रादीनां छन्दोगानामिवात्र ब्रह्मप्रकरणे लक्षणीयस्यान्यस्याभावात् । अत एव पाशानित्यत्र बहुत्वाय प्रातिपदिकलक्षणाऽनाश्रिता । उद्गातृपदेन छन्दोगानामिव पाशशब्देन बन्धकद्रव्यलक्षणायां प्रकरणे बन्धकबहुत्वस्याभावात् । यागसाधनद्रव्यमात्रलक्षणायां च पाशमन्त्रस्थस्य प्रमुमोक्त्वित्यस्यानन्वयात् । किं च यद्यपि टीकायां यौ गुहां प्रविष्टौ तौ छायातपौ वदन्तीत्युक्तत्वेन छायातपावित्यनेनोक्तं द्वित्वं विधेयविशेषणं तथापि ''अग्नीनादधीते''त्यादौ बहुत्वस्योद्देश्यविशेषणत्वेऽपि विवक्षादर्शनेन ''सत्रादुदवसायपृष्ठशमनीयेन यजेर''न्नित्यत्र च बहुत्वस्य विधेयविशेषणत्त्वेऽप्यविवक्षादर्शनेन निर्ज्ञातविशेषणत्वमेवाविवक्षायां तन्त्रमिति ग्रहैकत्वनये स्थितत्वादिह च ''यस्य ब्रह्म च क्षत्रं चे''त्यादिपूर्ववाक्ये यस्येत्येकवचनेनैकत्वसंख्याया निर्ज्ञातत्वाद्वित्वस्याविवक्षाऽस्तु । ''सप्तदश प्राजापत्यान् द्वा सुपर्णेत्यादौ तु प्रागेकत्वस्यानवधृतत्वात् ''अनश्नन्नन्य'' इत्यादिवाक्यशेषाद्यनुसाराच्च भेद आश्रितः । न ह्यौत्सर्गिकस्य क्वचिदपवादेनान्यथात्वे सर्वत्रापि तथात्वम् । उक्तं ह्यनुव्याख्याने-

उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् ।
व्यभिचार्यपवादेन मानमेव भविष्यति ।। इति

**प्रकाशिका** – ननु ''उद्गातृचमसमेकस्य श्रुतिसंयोगा''दित्यधिकरणे ''प्रैतुहोतुश्चमसः प्रसुब्रह्मण्यस्य प्रोद्गातॄणां'' इति मन्त्रगतबहुवचनानुग्रहाय प्रातिपदिकलक्षणाश्रयणादिहापि तथा स्यादित्याशङ्कां वैषम्येण समाधत्ते ।। नन्वित्यादिना ।। विवृतमेतत्प्राक् जन्माद्यस्य यत इति सूत्रे । छन्दोगत्वरूपधर्मस्येवेह कस्यचिदभावादित्यर्थः । न च जीवादिस्तथा । ब्रह्मप्रकरणत्वव्याघातादिति भावः ।। अत एवेति ।। लक्षणोपयोगिधर्माक्रान्तस्य कस्यचिदभावादेवेत्यर्थः । तादृशधर्मो बन्धकद्रव्यत्वं वा यागसाधनत्वं वा न द्वयमपि युज्यत इत्याह ।। उद्गात्रिति ।। नन्वेवं तर्हि ब्रह्मप्रकरणेऽन्यस्याभावेनान्येन सह द्वित्वमस्त्विति कथमिति चेदप्राकरणिकेन केनचिदस्तु । श्रौतस्य कथमेवं निर्वाह इति चेदुक्तानुपपत्तिबलादेवेत्यवेहि ।

वस्तुतश्श्रुतितात्पर्यविषयत्वमेव द्वित्वस्य नास्ति । पूर्वोक्तैरैकवचनान्तवाक्यविरोधादिति भावेन "यस्सेतुरिति चैकत्ववचनेन विशेषणा"दित्यनुव्याख्यानसूचितं परिहारान्तरमाह ॥ किञ्चेति ॥ द्वित्वस्याविवक्षास्त्वित्यन्वयः । ननूक्तं विधेयगतमित्यतस्तदनूद्याह ॥ यद्यपीति ॥ विवक्षेति ॥ "वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः" इति वाक्ये अग्नीनित्यत्र बहुत्वस्याविवक्षायां गार्हपत्याहवनीयान्वाहार्यपचनरूपाग्नित्रयाधीनासिद्धिर्न स्यादिति भावः ।

॥ सत्रादिति ॥ दशमस्य द्वितीयपादे "तेषां तु वचनाद्वियज्ञवत्सहप्रयोगस्स्या"दिति त्रयोदशेऽधिकरणे सत्रादिति वाक्यविहितः पृष्टशमनीयउदवसायिभिस्संहत्य प्रयोक्तव्य उतैकैकेनेति संशये यजेरन्नित्याख्यातोपात्तबहुत्वस्योपादेयकर्तृगामित्वेन विवक्षितत्वात्संहत्येति प्राप्ते स्यादेवं यदि बहुत्वं विधीयेत उदवसायेति तु क्त्वाप्रत्ययादुदवसानसमानकर्तृत्वावगमात्तत्र च बहूनां कर्तृत्वात्प्राप्तमेव बहुत्वं न विधेयम् । न चाविहितमङ्गं भवति । उदवसाने गम्यमानमपि बहुत्वमविवक्षितम् । तस्मादैकैकश्येन प्रयुंजीरन्निति सिद्धान्तितम् ॥ निर्ज्ञातेति ॥ निर्णीतविरुद्धविशेषणत्वमेवेत्यर्थः ॥ ग्रहैकत्वेति ॥ तत्र हि "दशैतानध्वर्युः प्रातस्सवने गृह्णाती"ति ग्रहाणां निर्ज्ञातैकत्वविरुद्धसंख्यत्वादेकत्वस्याविवक्षोक्तेरित्यर्थः ॥ यस्येतीति ॥ "यस्सेतुरिति चैकत्ववचनेने"त्युपलक्षणमिति भावः । कथं तर्हि क्वचित्संख्यया भेदोक्तिरित्यत आह ॥ सप्तदशेति ॥ प्राग्विवृतमेतदधिकरणम् ॥ वाक्यशेषादीति ॥ "स्थित्यदनाभ्यां चे"त्यत्र वक्ष्यमाणदिशा साशनानशनत्वरूपभेदकधर्मप्रतिपादनात् "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीती"ति वाक्यशेषानुसाराद्वासुपर्णेत्यत्र द्वित्वसंख्यया व्यक्तिभेद आश्रित इत्यर्थः । तथा प्राजापत्यशब्दाभिहितदेवताविशिष्टद्रव्यस्यैव सप्तदशत्वसंख्यान्वयानुसाराच्च यागेषु भेद आश्रित इत्यादिशब्दार्थः । "अन्यथा संख्यया कर्मभेदो न स्या"दिति प्रागुक्तदोषमुद्धरति ॥ न हीति ॥ औत्सर्गिकस्य संख्यया भेद इत्यस्य । क्वचित् पिबन्तावित्यादौ । अपवादेन निरवकाशलिङ्गप्रकरणनिर्ज्ञातविरुद्धविशेषणत्वादिनेत्यर्थः ॥ उक्तं हीति ॥ भक्तिपादे । अपवादेन व्यभिचार्यपीत्यर्थः ।

**पाण्डुरङ्गि** – तत्रेति ॥ उपलक्षणं चैतत् । छत्रिण इत्यत्रानेकेषामेकत्र गमनलक्षणक्रियासम्बन्धवत्प्रकृते उभयोरेकत्र क्रियासम्बन्धाभावाच्चेत्यपि द्रष्टव्यम् । लक्षणीयस्यान्यस्याभावादिति ॥ ब्रह्मलक्षणभूतऋतपानयोग्यस्येत्यर्थः । द्वा सुपर्णेत्यादेर्जीवेन सह द्वित्वोपपत्तावपि न तस्य पानम् । लक्ष्यस्य क्रियान्वयापत्तेर्न लक्ष्यत्वमिति भावः ।

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमात्रप्रदर्शनार्थं पूर्वम् । ननु ब्रह्मप्रकरणे लक्षणीयस्याभावेऽप्युभयोरेकक्रियासम्बन्धाभावेऽपि प्रातिपदिकलक्षणा भवत्वित्यत आह ॥ अत एवेति ॥ तत्प्रकरणे लक्षणीयस्यान्यस्याभावे एकक्रियासम्बन्धाभावे च लक्षणाया असम्भवादेवेत्यर्थः । अन्यथाऽदितिः पाशानित्यत्रापि प्रत्ययार्थबहुत्वापत्त्या प्रातिपदिकलक्षणा स्यादिति भावः । अस्तु तत्रापि लक्षणेत्यत आह ॥ उद्गातृपदेनेति ॥ एवं प्रकरणानुसारेण प्रत्ययार्थभूतद्वित्वस्यैवास्वारस्यमङ्गीकर्तव्यमित्युक्तम् । इदानीं तु यस्य ब्रह्म च क्षत्रं चेत्यादिपूर्ववाक्ये यस्येत्येकवचनेनैकत्त्वस्य निर्ज्ञातत्वात् । द्वित्वस्याविवक्षायामेकस्यैव बोधनं स्यात्तच्चानिष्टमिति भावः । बहुत्वस्येति ॥ तत्रानेकेषामधिकाराभावादित्यर्थः । नन्वेवं विधेयगतविशेषणत्वाद्वित्वस्याविवक्षायां सप्तदशप्राजापत्यानित्यत्रापि भेदो न स्यात् । तत्रापि बहुत्वस्य द्वित्वस्य वा विधेयविशेषणत्वेनाविवक्षितत्वादित्यत आह ॥ सप्तदशेति ॥ न च सप्तदशप्राजापत्यानित्यत्राप्येकत्वस्यावधृतत्वात्कथमेतदिति वाच्यम् । प्रत्येकमेकत्वावधारणेऽपि प्रत्येकं सप्तदशत्वाविधानात् । यत्र च समुदाये सप्तदशत्वं विधीयते तत्रैकत्वस्यानवगतत्वादिति ॥ औत्सर्गिकस्येति ॥ द्वित्वमविवक्षितमिति नियमस्यौत्सर्गिकत्वे सप्तदशप्राजापत्यानित्यादावेकत्वानवधारणादिरूपापवादकेनाविवक्षाया अभावेऽप्यपवादकाभावेऽविवक्षायास्सम्भवादिति भावः ।

## तात्पर्यचन्द्रिका

**अत्र तु गुहाप्रवेशादिना ब्रह्मत्वेन निश्चितस्य पातुः पूर्वत्र ''यस्य ब्रह्म च क्षत्रं चे''ति ''मृत्युर्यस्ये''ति ''क इत्थे''ति उत्तरत्र च ''यः सेतु''रित्याद्येकवचनाच्चैकत्वमवधृतम् । अत एव ''एकादशप्रयाजान् यजती''त्यत्र पञ्चप्रयाजानामेवावृत्त्यैकादशत्वमित्युक्तं पञ्चमे । नवमेऽपि ''अतिजगतीषु स्तुवन्त'' इति बहुवचनं विश्वापृतना इत्येकस्यामेवातिजगत्यामृचि सप्तकृत्वोऽभ्यासमात्रेण । न तु जगती व्यक्तिबहुत्वेनेत्युक्तम् । किञ्च । सम्बन्धादि यथैकस्मिंस्तथाऽनेकत्वमिष्यताम् । प्रमितत्वाद्विरोधं तु विशेषो वारयिष्यति ॥ दृश्यते हि ''प्रमेयत्वं प्रमेयं आनन्दं ब्रह्मणः भेदो भिन्न'' इत्यादावेकस्मिन्नेव विशेषणविशेष्यभावेन सम्बन्धः ।**

**प्रकाशिका –** प्रकृते किमपवादकमित्यत आह ॥ अत्र त्विति ॥ एकत्वावधारणमेवापवादकमित्यर्थः ॥ अत एवेति ॥ ''पञ्चप्रयाजा इज्यन्त'' इति प्रयाजानां

निर्ज्ञातसंख्यत्वादेवेत्यर्थः । पञ्चमे तृतीयपादे ''विवृद्धिः कर्मभेदात्पषदाज्यवत्तस्य तस्योपदिश्यत'' इत्याद्याधिकरणे ''एकादश प्रयाजान्यजति षडुपसद'' इति श्रुतसंख्या प्रत्येकं भवति किं वा सर्वसम्पादिनीति संशये प्रयाजानुपसदश्चोद्दिश्य संख्याविधानादुद्देश्यानां च साहित्यस्याविवक्षासम्भवात्प्रतिप्रयाजं प्रत्युपसदं संख्या स्यादिति प्राप्ते नैकैकशस्समुदितानां वा स्वरूपेण संख्यान्वयस्सम्भवति । एकस्य पञ्चानां चैकादशत्वायोगात् । अतस्संख्यान्वयसिद्धये प्रयाजाः प्रयोगं लक्षयन्ति । तं लक्षयन्तस्तत्राभिधानात्सहावगतास्तथैव लक्षयन्ति । संख्या चेयमनेकवृत्तिस्वभावासमस्तलक्षितप्रयोगगतापि शक्नोति सर्वेषां प्रयाजानामुपकर्तुम् । अतस्सर्वसम्पादिनी स्यादिति सिद्धान्तितम् । प्रयोगावृत्त्या दशसंख्यासम्पत्तौ तत्रैकस्य चरमस्य त्रिरावृत्त्यैकादशत्वमिति बोध्यम् । तथा नवमे द्वितीयपादे ''नैमित्तिकं तूत्तरत्वमानन्तर्यात्प्रतीयेत'' इति चतुर्थेऽधिकरणे द्वितीयवर्णके चिन्तितं द्वादशाहे चतुर्थेऽहनि त्रैशोकनामकं सामविहितम् । तच्च ''अतिजगतीषु स्तुवन्ती''त्यतिजगत्यामुत्पन्नम् । पूर्वत्र हि समछन्दस्के तृचे सामगानं कार्यमिति विचारितम् । इह च तृचमध्ये आद्या ''विश्वापृतन्या अभिभूत''मित्यतिजगती । उत्तरमृग्द्वयं च ''नेमिं नमन्ति''इति ''समीरेभासो अस्वर''न्निति च बृहतीछन्दस्कं पठ्यते । तत्र तृचगाने कर्तव्ये किं बृहत्योस्त्यागेनातिजगत्यौ द्वे आनीय समछन्दस्कासु तिसृष्वृक्षु गानं कार्यमुत विषमास्वेवेति संशये ''समासु गान''मिति पूर्वत्र निर्णीतत्वात् ''अतिजगतीषु स्तुवन्ती''ति बहुवचनानुग्रहाय च समासु गानमिति प्राप्ते उत्तरयोर्बृहत्योः पाठस्य क्रत्वर्थत्वात् । तत्परित्यागे च तयोरानर्थक्यात् ''एकविंशषोडशो वैराज''मिति श्रुतैकविंशत्वसंख्यासम्पत्तये च एकस्यामृचि सप्तकृत्वोऽभ्यस्यमानायामभ्या-सापेक्षयाऽतिजगतीबहुत्वस्योपपत्तेर्विषमछन्दस्कासु मानमिति सिद्धान्त इति । न त्विति तदधिकरणपूर्वपक्षनिरासः । एवं प्रत्ययार्थानुगुण्येन प्रातिपदिकबाधायोगात्तदनुरोधेन प्रत्ययार्थ एवान्यसाहित्येन वाऽविवक्षितत्वेन वा कथंचिन्नेय इति प्रौढ्या परिहारद्वयमुक्तम् । इदानीं नन्वत्रान्यस्याश्रवणात्तत्साहित्येन कथं द्वित्वमिति शङ्कां ग्रहेष्वेकत्वस्य स्वरूपतस्सत्त्वे-नानुवादत्ववत्प्रकृते ब्रह्मणि द्वित्वस्य स्वरूपत एवाभावेनानुवादत्वमपि न सम्भवतीति प्रागुक्तशङ्कां च निरसितुं ''द्वित्वं चैकस्य युज्यते । यस्सेतुरिति चैकत्ववचनेन विशेषणा''दित्यनुव्याख्यानानुरोधेन द्वित्वस्य विवक्षामुपेत्य द्वित्वैकत्वयोस्समावेशमाह ॥ किञ्चेति ॥ दृष्टान्तविवरणपूर्वं श्लोकं व्याचष्टे ॥ दृश्यते हीति ॥ एकस्मिन्नेवेति ॥ ''विज्ञानमानन्दं ब्रह्मे''त्यादावानन्दब्रह्मणोरेकत्वं सिद्धमिति भावः । सम्बन्ध इत्यनन्तरं तथेहाप्येकस्मिन्ब्रह्मण्यनेकत्वमस्त्विति योज्यम् ।

**पाण्डुरङ्गि** – ननु सप्तदशप्राजापत्यानित्यादाविव प्रकृतेऽप्येकत्वावधारणोपायाभावेन तदनवधारणादविवक्षाप्रयोजकीभूतस्य निर्ज्ञातविशेषणत्वस्याभावात्पिबन्तावित्यत्र द्वित्वस्याविवक्षा न सम्भवतीति ब्रह्मपक्षे द्वित्वानुपपत्तिरेवेत्यत आह ॥ अत्र त्विति ॥ निर्ज्ञातविशेषणत्वस्यापि विवक्षा किं न स्यादित्यत आह ॥ अत एवेति ॥ इदानीं प्रत्ययार्थभूतमनेकत्वमविवक्षितमिति न तस्यास्वारस्यं न वा विवक्षिततत्वमित्याह ॥ किञ्चेति ॥

## तात्पर्यचन्द्रिका

''नेह नाने''त्यादिना तु ब्रह्मणि भेद एव निषिद्धः । न त्वनेकत्वसंख्या । प्रत्युत ''अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानि तदेतद्ब्रह्मापूर्वमनपरमनंत'' मित्यादिश्रुत्या हि सा विहिता । विरोधं तु भेदप्रतिनिधिविशेषो वारयिष्यति । किञ्च ब्रह्मण आनन्दमात्रात्मकत्वे तत्स्फुरणाभावः ज्ञानमात्रात्मकत्व आनन्दाभाव इत्युभयथापि मोक्षस्यापुमर्थत्वं स्यात् । परमतेऽपि सुखप्रकाशस्य पुमर्थत्वात् । ज्ञानानन्दोभयात्मकत्वे तु सिद्धमेकस्याप्यनेकत्वम् । एवं च यथा नवमे ''मेधपतये मेधं मेधपतिभ्यां मेध''मित्यत्र मेधपतिशब्दार्थयोरग्नीषोमयोरेकवचननिर्वाहाय देवतात्वेनैकत्वम् । देवतात्वस्य व्यासक्तत्वात् । द्विवचननिर्वाहाय देवतात्वाधिष्ठानरूपेण द्वित्वमिति द्वित्वैकत्वयोस्समुच्चयस्तथेहापि ब्रह्मणः स्वरूपेणैकत्वं रूपविशेषेण द्वित्वमिति श्रौतयोर्द्वित्वैकत्वयोः समुच्चयोऽस्तु । ''इन्द्रो मायाभिः पुरुरूप ईयते यदेकमव्यक्तमनन्तरूपं एकं रूपं बहुधा यः करोति, पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः'' । इत्यादिश्रुतिस्मृतिभिरेव समुच्चयावगतेः । तदेतदभिप्रेत्योक्तमनुव्याख्याने ''द्वित्वं चैकस्य युज्यत'' इति । न्यायविवरणे च ''द्विवचनश्रुतेरपि न निरवकाशत्वम् । विष्णोरेव द्विरूपत्वा''दिति । ''न संख्योपसङ्ग्रहादपि नानाभावा''दित्यत्र तु निर्भेदस्य ब्रह्मण आधाराधेयभावानुपपत्तिशङ्का निर्भेदत्वेऽप्यनेकत्वस्यापि सत्त्वात्तन्मात्रेणाधाराधेयभावोपपत्तिरिति समाधास्यते । न त्वत्रैवैकस्यानेकत्वानुपपत्त्या शङ्का । येन पुनरुक्तिः स्यात् । अत एव तत्र टीका ''आधाराधेयत्वादिलिङ्गेनान्यत्रैव प्रसिद्धानां पञ्चजनादिशब्दाना''मिति ।

**प्रकाशिका** – ननु श्रुत्याऽनेकत्वनिषेधान्नैवमित्यत आह ।। नेह नानेति ।। किं च न गुणकर्मादिकं नानाभिन्नं नेति भेदस्यैव निषेध इत्यर्थः ।। इत्यादिश्रुत्येति ।। चतुर्थबृहदारण्यकश्रुत्येत्यर्थः । आदिपदेन ''युक्ता ह्यस्य हरयश्शता दशे''ति ''तस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति तस्य ह वा एतस्य पञ्चरूपाणि शतरूपाणि सहस्ररूपाण्यमितरूपाणी''त्यादि गृह्यते । एतेन ''प्रमितत्वा''दित्येतद्विवृतं भवति ।। भेदेति ।। घटपटयोर्भेदो द्वित्वनिर्वाहकः । इह तु भेदस्य ''नेह नाने''ति निषेधात् ''अयं वै दश चे''त्यादिनैकत्वानेकत्वयोः प्रमितत्वात्सोमकार्यनिर्वाहकेण सोमप्रतिनिधिना पूतिकेन सोमकार्यमिव भेदकार्यमविरोधकेन भेदप्रतिनिधिना स्वरूपसामर्थ्यापरपर्यायेण विशेषेण भविष्यतीत्यर्थः । समर्थितश्च विशेषपदार्थो मूलग्रन्थेषु तत्र तत्र । न्यायामृते द्वितीयपरिच्छेदे चेति भावः । यदप्यनुभाष्यसुधयोः ऋतं पिबन्ताविति द्विवचनविषयतया प्रकृतयोर्द्वित्वाधारयोः ''यस्सेतुरित्येकवचनेन विशेषणादभेदैकत्वाधारतयाऽवगमा''दित्यादिना प्रकृतवाक्य एव द्वित्वैकत्वयोरैकाधिकरण्यं प्रमितमित्यविरोध उक्तः तथापि तस्य स्पष्टत्वाद्वा विचारहीनवाक्यान्तरेऽपि प्रमितत्वमस्तीति भावेन वा ''अयं वै हरय''इत्यादिश्रुत्यन्तरोक्तिः । सुधायां प्रमितत्वोक्तावपि कथं निर्वाह इति शङ्कापि विरोधं त्वित्यादिना परिहृता । इदानीं ''आत्मान्तरात्मेति हरिरेक एव द्विधा स्थित'' इति भाष्यानुरोधेनात्मानाविति सौत्रपदसूचितपरिहारमाह ।। किञ्चेति ।। सिद्धमेकस्याप्यनेकत्वमिति ।। सत्यम् । कथं निर्वाह इति चेद्विशेषबलादित्येको निर्वाहः प्रागुक्तः । अन्यमपि दृष्टान्तपूर्वमाह ।। एवं चेति ।। एकस्यानेकत्वे प्रमिते सतीत्यर्थः । नवमे तृतीयपादे ''मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्तस्य चान्याय्यनिगदत्वात्सर्वत्रैवाविकारस्स्या''दिति द्वादशेऽधिकरणे चिन्तितं अग्नीषोमीये पशावध्रिगुप्रैषे ''आशासानामेधपतिभ्यां मेध''मिति क्वचिच्छाखायां श्रुतम् । क्वचित् 'मेधपतये मेध'मिति । तत्र किमुभयोर्विकृतिष्वविकार उत द्विवचनस्य देवतापर ऊह एकवचनस्य यजमानपर ऊहोऽथवोभयोर्यजमानपर ऊहः किं वोभयोर्देवतापर ऊह इति चतुर्धा संशये मेधपतिशब्देन मेधस्य पशोस्स्वामी यजमानो देवता भूतौ चाग्नीषोमौ चेत्युभयेऽप्युच्यन्ते। तेन द्विवचनमेकवचनं चान्याय्यनिगदमित्यनूह इत्येकः पक्षः । सम्भवत्यर्थपरत्वेऽन्याय्यनिगदत्वायोगात्प्रकृतौ द्विवचनान्तो देवतावचनस्तेनासौ देवताविवृद्धावूहितव्यः एकवचनान्तस्तु यजमानवचनस्तेन तद्विवृद्धावूहितव्य इति द्वितीयः एकोऽयं मन्त्रश्शाखाप्रभेदेन किंचिद्भिन्नश्श्रुतस्तेन यजमानपरत्वे मेधपतये यो मेधः पशुः तमाशासाना इति सम्बन्धः ।

देवतापरत्वे मेधपतिभ्यामाशासाना इति । न चैकस्य वाक्यस्य वचनव्यक्तिद्वयं सम्भवतीत्युभाभ्यां यजमानस्य वा देवताया वाऽनियमेनाभिधानम् । तत्र देवतापरत्वेऽग्नीषोमयोर्द्वित्वादेकवचनमयुक्तम् । यजमानपक्षे तु द्वित्वं पत्न्यभिप्रायत्वेनावकल्पत इति प्रकृतौ स्वामिपरावुभावपि स्वामिवशादूहितव्याविति तृतीय इति प्राप्ते मेधमाशासाना इत्युक्ते किमर्थमाशासाना इत्यपेक्षा भवति । तत्र मेधपतिभ्यामाशासाना इत्यपेक्षितार्थपूरणाय सम्बध्यते। न च यजमानायासावाशास्यते । तस्यैव हि देवताभ्यामाशास्यते । अतो देवतावचनम् । एकवचनं त्वग्नीषोमयोरुभयोर्व्यासक्तं देवतात्वम् । तेन देवतात्मनोभयोरेकत्वात्तदभिप्रायम् । द्विवचनं त्वग्नीषोमौ देवते इतिवदधिष्ठानापेक्षम् । तेन द्विवचनमधिष्ठानसंख्यावशात् । एकवचनं तु देवतासंख्यावशाद्विकृतिषूहितव्यमिति सिद्धान्त इति । एवं च यथा ब्रह्मणस्स्वरूपेणैकत्वेऽपि ज्ञानानन्दोभयात्मकत्वेनानेकत्वं मायिनां मते यथा च मीमांसकमते मेधपतय इत्यादेर्द्वित्वैकत्वयोर्देवतात्त्वादि- रूपभेदेनोपपत्तिस्तथेहापीत्यर्थः । ननु तत्र वचनद्वयेन द्वित्वमेकत्वं चावगतमित्यत आह ॥ इन्द्र इति ॥ तदेतदिति ॥ प्राचीनमिदं चेति मतद्वयमभिप्रेत्येत्यर्थः । अंत्यपक्षं मूलारूढं करोति ॥ न्यायविवरणे चेति ॥ एतेन ''द्विवचनं द्विरूपत्वाभिप्रायेणे''ति टीका न्यायविवरणमूलेति सूचितम् । नन्वत्रैव भगवति द्वित्वस्य व्युत्पाद्यत्वेऽत्रैव चतुर्थपादे ''न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्चे''ति तृतीयाधिकरणे

यस्मिन्पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥

इति वाक्ये पञ्चपञ्चेति वीप्सया प्रतिशरीरं पञ्चत्वसंख्याविशिष्टतया जनशब्देनोक्तः किं विष्णुरन्यो वेति संशये पञ्चजनशब्दस्य बहुत्वसंख्याविशिष्टवस्तुवाचित्वाद्बहुत्वस्येश्वरे विरुद्धत्वाच्चान्य इति प्राप्ते स्वगतभेदशून्यस्यापि नानारूपत्वेन बहुत्वसंख्योपसङ्ग्रहाविरोधाद्विष्णुरेवेति सिद्धान्तितत्वेन तेन गतार्थमिदमित्यत आह ॥ न संख्येति ॥ तत्र न बहुत्वानुपपत्तिः पूर्वपक्षयुक्तिः । किन्तु यस्मिन्निति सप्तम्या निर्दिष्टस्य तमेवेति वाक्यशेषबलेन विष्णुत्वात्तदाधेयतयोक्तानां पञ्चजनाकाशशब्दोक्तानां न विष्णुत्वम् । एकस्यैवाधाराधेयभावायोगादिति प्राप्ते अत्र सिद्धेनानेकत्वेन तत्समाधानं तत्र करिष्यते । अत एव तत्र टीका ''न ह्येकस्यैवाधाराधेयभावो युज्यत'' इत्यादि । न त्वनेकत्वं व्युत्पाद्यते । येन पौनरुक्त्यमित्यर्थः । एतेन न्यायविवरणटीकायामानन्दमयनयेन गतार्थत्वाशङ्कादि तु दिक्प्रदर्शनपरमिति भावः ।

**पाण्डुरङ्गि** – नन्वेवं वस्तुगत्याऽनेकत्वसंख्याभ्युपगमे वस्तुगत्याऽऽनन्दादिसम्बन्धोऽभ्युपेयः आनन्दं ब्रह्मण इति सम्बन्धव्यवहारस्य तत्रापि सत्त्वात् । यदि सम्बन्धाभावेऽपि विशेषबलाद्व्यवहारमात्रं तर्हि प्रकृतेऽप्यनेकत्वसंख्याभावेऽपि विशेषबलादेव व्यवहार इति समानमित्यपरितोषादाह ॥ किंश्चेति ॥ व्यासक्तत्वात् । व्यासज्यवृत्तित्वादित्यर्थः । ननु न संख्योपसङ्ग्रहादपीत्यधिकरणे एकस्यानेकत्वानुपपत्तिशङ्काया रूपबहुत्वाभिप्रायेणापरिहृतत्वादत्रापि तत्प्रतिपादने पौनरुक्त्यमित्यत आह ॥ नेति ॥

## तात्पर्यचन्द्रिका

**यद्वैकस्यानेकत्वमपि तत्र सिद्धान्ते व्युत्पाद्यम् । अत एव तत्र ''बहुरूपत्वादधिकरणत्वाधेयत्वादि तस्यैव युज्यत'' इति न्यायविवरणेऽनेकत्वसंख्योक्त्यर्थ आदिशब्दः । अत्र तु कर्मबन्धरहितस्यापि भोक्तृत्वमात्रमिति भेदः । तत्राद्यपक्षे न संख्येति सूत्रे संख्योपसंग्रहशब्दोक्तैकस्यानेकत्वानुपपत्तिः पूर्वपक्षेऽभ्युच्चययुक्तिः । अपिशब्दोक्ताधाराधेयभावानुपपत्तिस्तु मूलयुक्तिः । द्वितीयपक्षे तु गुहां प्रविष्टाविति सूत्रे आत्मानौ हीति द्विवचनेनात्मान्तरात्माख्यरूपद्वयोक्तिः सिद्धान्तेऽभ्युच्चययुक्तिः । आदेयं मातीति व्युत्पत्त्याऽऽत्मशब्दोक्तं शुभभोक्तृत्वं मूलयुक्तिः । यद्वा अत्र भोक्तृत्ववदनेकत्वे व्युत्पादितेऽपि न तत्र केवलमाधाराधेयभावानुपपत्तिशङ्का । किन्तु द्वित्वयुक्तस्यास्तु ब्रह्मत्वं गुहाप्रविष्टत्वादिलिङ्गात् । पञ्चत्वयुक्ते तु न ब्रह्मलिङ्गाद्यस्तीत्येकस्यानेकत्वानुपपत्तिरूपसामान्यन्यायस्यानपवाद इति शङ्का ''प्राणस्य प्राण''मित्यादिब्रह्मलिङ्गानि सन्तीत्यादि समाधानं चेत्याद्यूह्यम् । ''नाणुरतच्छ्रुते'' रित्यत्र तु ''व्याप्ता ह्यात्मानश्चेतना'' इति वाक्ये ब्रह्मलिङ्गाभावादनपोदितेन बहुत्वेन जीवस्य प्राप्तत्वाद्व्याप्त्यणुत्वश्रुत्योर्विरोधे शङ्किते ''स आत्मेदं सृजती''त्यादिपूर्ववाक्ये ब्रह्मलिङ्गसद्भावात् ''तदयं प्राणोऽधितिष्ठती''त्यत्रैकवचनेन निर्दिष्टे ''आतेन यात''मिति द्विवचनवदत्रापि ''स आत्मे''त्येकवचननिर्दिष्टे ''व्याप्ता आत्मान'' इति बहुवचनम् । ततो न विरोध इति वक्ष्यत इति न तेनापि गतार्थता । सुखदुःखहेतुत्वरूपं गौणं छायातपत्वं प्रतियोगिभेदेनाविरुद्धम् । अत्र च सूत्रे यद्यपि समन्वेतव्यमृतपातृत्वमृतं पिबन्ताविति साक्षादेव वक्तव्यम् । तथापि**

**गुहाप्रविष्टत्वहेतुरूपमपि वक्तुमृतपातृत्वसमानाधिकरणगुहाप्रविष्टत्वोक्तिद्वारा तदुक्तिः। यद्यपि चात्र तत्तु समन्वयादित्यतोऽनुषक्तस्य तच्छब्दस्य पूर्वत्रानन्दमयस्तद्ब्रह्मेत्यादि-रूपेणान्वयवदुत्तरत्राप्यंतरस्तद्ब्रह्मेत्यादिरूपेणान्वयवच्चात्राप्यन्वयः सिद्धः । तथापि सूत्रे श्रौतद्विवचनस्य गतिं वक्तुमात्मान्तरात्माख्यरूपद्वयवाचिद्विवचनान्तात्मशब्द-प्रयोगः । अत्र च विषयवाक्यक्रमात्सूत्रक्रमः ।**

**प्रकाशिका** – ननु तत्र टीकायां न्यायविवरणे च ''आधाराधेयत्वादी''त्यादि पदास्वारस्यम् । टीकायां बहुत्वानुपपत्त्या पूर्वपक्षकरणं चास्वरसमित्यतस्सर्वस्वारस्यायाह ॥ यद्वेति । कथं तर्ह्यपौनरुक्त्यमित्यत आह ॥ अत्र त्विति ॥ पक्षद्वयेऽप्युभयत्रानेकत्वोक्तेर-पौनरुक्त्यं स्पष्टयति ॥ तत्राद्येति ॥ संख्योपसंग्रहादपि न विरोध इत्युक्त्या पूर्वपक्षे संख्यानुपपत्तिरर्थादुक्तेत्यर्थः ॥ अभ्युच्चयेति ॥ यथा परमते ईक्षतिनये प्रायपाठे निरस्तेऽपीत्यभ्युच्चयत्वेनात एव प्राण इत्यत्र तदुक्तिः । यथा वा सर्वत्रेतिनये स्वमते हेत्वन्तरेण पूर्वपक्षे चक्षुर्मयत्वादेरभ्युच्चयत्वेनोक्तिः । तथैव सुधायामुक्तेः । तथेहापीत्यर्थः । ''प्राणादयो वाक्यशेषा''दिति तत्रत्यगुणसूत्रव्यावर्त्यपूर्वपक्षानुरोधेन पक्षान्तरमाह ॥ यद्वाऽत्र भोक्तृत्ववदिति ॥ किं त्वित्यस्यानपवाद इत्यन्वयः । अत एव टीकायां ऋतं पिबन्तावित्यादाविव स्वगतभेद-शून्यस्यापि परमात्मनो बहुरूपत्वेन बहुत्वोक्तिः किं न स्यादिति चेन्न । प्रतिशरीरमात्मान्त-रात्मेतिवद्बहुत्वे मानाभावा''दित्युक्तमिति भावः । प्राणादीनां प्राणत्वादिप्रदत्वलिङ्गानीत्यर्थः ॥ इत्यादीति ॥ आदिपदेनाधाराधेयभावोऽपि रूपभेदाद्युज्यत इति समाधानं गृह्यते ॥ इत्याद्यूह्यमिति ॥ अत्रैकस्यानेकत्व आत्मान्तरात्मेतिवत्तत्र प्रतिशरीरं बहुत्वे मानं नेति शङ्कायां शरीरान्तर्गताकाशप्राणादिपञ्चजननियामकत्वेन तेषु नानाभावस्य न्यायप्राप्तत्वाद्बहुत्वं सिद्धमिति समाधानमूह्यमित्यर्थः ।

ननु द्वितीयस्य तृतीयपादे ''उत्क्रान्तिगत्यागतीना''मिति नये जीवः किं व्याप्तोऽथाणुरिति संशये ''व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्चे''ति श्रुतेर्बहुवचनावरुद्धाया ईश्वरविषयत्वायोगेन जीवविषयत्वावश्यंभावेन श्रुतिबलाद्व्याप्त इत्याशङ्कातन्निरासयोर्नाणुरतच्छ्रुतेरिति चेन्नेतराधि-कारादिति गुणसूत्रेण कृतत्वात्तेन पौनरुक्त्यमित्यत आह ॥ नाणुरिति ॥ अनपोदितेनेति ॥ अत एव तत्र टीका ''न चेश्वररूपबाहुल्यार्था । बाधकं विना श्रुतेर्बाधायोगा''दितीति भावः । ''अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं चापुण्यं चे''त्यणुत्वश्रुतिर्ज्ञेया । ऐतरेयके ''अथ

देवरथ'' इत्युपक्रम्य ''तदयं प्राणोऽधितिष्ठती''त्युक्त्वा ''तदुक्तमृषिणा आतेन यातं मनसो जवीयसे''ति द्विवचनान्तमन्त्र उदाहृतः । एवं द्विवचनं न बाधकमित्युक्त्वा तत्प्रसङ्गप्राप्त-पौनरुक्त्यं च व्युदस्तम् । अधुना प्रागुक्तं छायात्वमपि न बाधकम् । तस्या विद्याश्रयत्व-रूपत्वाभावात् । किन्तु यथा छाया प्राणिनां सुखहेतुस्तथा विदुषां सुखहेतुत्वादातपवदज्ञानां दुःखहेतुत्वाच्छायातपावित्युच्येते रूपविशेषावित्याशयेन टीकोक्तमेवाह ॥ सुखेति ॥ ''स छायेव विदुषां प्रभुः । आतपः पापिना''मिति तद्भाष्योक्तस्मृतेः । परपक्षेऽपि छायातप-शब्दयोरविद्याविद्यावद्वाचकत्वाभावादिति भावः । तदुक्तं तत्वप्रदीपे ''अमरासुराणां छायात-परूपाविति योजनायोगादमराणामाह्लादकावसुराणां तापकावित्यर्थ'' इति । एतेन ''छायातपत्वं चान्यत्र व्याख्यात''मिति न्यायविवरणटीका विवृता अतो बाधकाभावाद्गुहा-विष्टत्वादिसाधकभावात्पिबन्तावीश्वररूपविशेषावेवेति स्थितम् । सूत्राक्षरासामंजस्यमाशंक्याह ॥ अत्रेति ॥ ऋतं पिबन्तावित्येवोक्तौ न लिङ्गोक्तिस्स्यादिति भावः । यद्यपि ऋतं पिबन्तावित्युक्तौ ऋतपातृत्वद्वित्वरूपपूर्वपक्षयुक्त्योस्सूचनमस्ति तथापि पूर्वपक्षयुक्तितोऽपि सिद्धान्तयुक्तिसूचनस्य ज्यायस्त्वादिति भावः । धर्मिनिर्देशे प्रयोजनमुक्त्वा साध्यनिर्देशस्यापि तदाह ॥ यद्यपीति ॥ विच्छेदशङ्कानिवृत्त्यर्थमुक्तं पूर्वत्रोत्तरत्रापीति ॥ द्विवचनस्य गतिं वक्तुमित्युपलक्षणम् । ''आदेयमुपादेयं सुखं मात्यनुभवती''त्युत्तरनयसुधोक्तनिर्वचनेन ऋतं पिबन्ताविति प्रातिपदिकार्थोक्तिद्वाराऽनशनश्रुतेर्गतिं वक्तुं चेत्यपि ध्येयम् ॥ अत्रेति ॥ पूर्वं ऋतं पिबन्ताविति वाक्यम् । उत्तरं तु यस्सेतुरिति वाक्यमिति तत्क्रमात्क्रमः । यद्यपि श्रुतिरूप-साधकोक्तिपरत्वाद्वितीयस्य प्राथम्यमुचितं तथापि तस्योत्तरवाक्यगतत्वेन विषयवाक्य-गतत्वाभावात्क्रम इति भावः ।

**पाण्डुरङ्गि –** नन्वेतदयुक्तम् । तथा सति न संख्योपसङ्ग्रहादपीति सूत्रोक्ताया एकस्याने-कत्वानुपपत्तिरूपयुक्तेरुक्तिस्तत्र न स्यात् । किं च बहुरूपत्वादधिकरणाधेयत्वादिकमिति न्यायविवरणेऽनेकत्वसंख्योक्त्यर्थादिशब्दानुपपत्तिश्च स्यादित्यस्वरसादाह ॥ यद्वेति ॥ ननु प्रथमपक्षे न संख्योपसङ्ग्रहादित्यस्यास्वारस्यमुक्तरीत्या द्वितीये तु गुहां प्रविष्टावित्यस्येत्यत उभयानुसाराय पक्षान्तरमाह ॥ यद्वेति ॥

## तात्पर्यचन्द्रिका

अन्ये तु ऋतं पिबन्तौ बुद्धिजीवौ गुहाप्रविष्टत्वादेस्तत्र सम्भवात्सर्वगते ब्रह्मण्यसम्भवाद्बुद्धेरपातृत्वेऽपि छत्रिन्यायेन पिबच्छब्द इति प्राप्ते ऋताख्यकर्मफलपानलिङ्गेनैकस्य जीवत्वे निश्चिते द्वितीयस्तज्जातीयश्चेतनः परमात्मैव । नन्ववचेतना बुद्धिः । अस्य गोर्द्वितीयेन भाव्यमित्युक्ते गवान्तरेणेवाश्वादिना सद्वितीयत्वाप्रतीतेः । एवं च प्रथमावगतऋतपानेन पिबतोर्जीवात्मपरमात्मत्वे निश्चिते चरमं गुहाप्रविष्टत्वादिकं कथंचिन्नेयम् । ब्रह्मणोऽपातृत्वेपि छत्रिन्यायेन पिबच्छब्द इति सिद्धान्त इत्याहुः ॥ अत्र ब्रूमः ॥

बुद्धिस्थत्वाद्भोक्तृतादेः पिबन् स्याच्चेतनः कथम् ।
चित्त्वेऽपि द्वित्वपूर्वस्याबाधार्थं सद्वितीयता ॥ १ ॥
विरूपयाऽपि बुद्ध्यास्तु किं च बुद्धेस्सरूपता ।
वर्तते सहजीवेन पारतन्त्र्यादिरूपतः ॥ २ ॥

त्वन्मते जपाकुसुमगतस्य लौहित्यस्य स्फटिक इव बुद्धिगतस्य कर्तृत्वादेर्जीवेऽध्यासात्कथं पातृत्वलिङ्गेनैकस्यापि चेतनत्वम् । येन तत्साजात्येन द्वितीयोऽपि चेतनः स्यात् । न हि लोके देह आत्मत्वमध्यस्तमित्यात्मा द्रष्टव्य इत्यादिश्रुतावात्मशब्दो देहपरः । भोक्तृत्वादेश्चिदचित्संवलनधर्मत्वे चान्योन्यधर्माध्यासोक्तिरयुक्ता स्यात् । एवं च परमते बुद्धेरेव पातृत्वेन प्रकृत्यर्थसम्भवात् । ज्ञानक्रियाशक्तिभेदेन प्रत्ययार्थस्य द्वित्वस्यापि कथंचित्संभवात्प्राणसहिता बुद्धिरेव पिबन्तावित्युच्यताम् । अथ द्वित्वे स्वारस्यमपेक्षसे तर्ह्यारोपितेन पातृत्वेन युक्तो जीवो बुद्धेर्द्वितीयस्स्यान्नतु तेनापि रहितं ब्रह्म । अथ श्रुतेरारोपितविषयत्वं न सहसे तर्हि छत्रिन्यायेन पातृत्वरहितं सजातीयं जडान्तरमेव बुद्धेर्द्वितीयमस्तु । चेतनस्य परमात्मनस्तु न कथंचिदनुप्रवेशः ॥ अस्तु वा जीवस्य पातृत्वम् । तथापि गोर्द्वितीयेनेत्यत्र द्वित्वस्य मुख्यस्य लाभात्सजातीयग्रहणम् । इह तु ब्रह्मग्रहणे जीवस्य ब्रह्माभेदान्न तात्त्विकं द्वित्वम् । तथाच यथाचन्द्रः सद्वितीय इति प्रामाणवाक्याद्विजातीयस्याप्यकल्पितभेदस्य नक्षत्रादेरेव धीर्नतु सजातीयस्यापि कल्पितभेदस्य चन्द्रान्तरस्य तथाऽत्रापि चेतनत्वेन

जीवस्य सजातीयत्वेपि कल्पितभेदस्य ब्रह्मणो न धीः । किन्तु विजातीयत्वे धर्मिसमसत्ताकभेदाया बुद्धेरेव । न हि द्वित्ववत्साजात्यं शाब्दम् । येन तदनुरोधे द्वित्वं बाध्येत । अपि चास्य जरठस्य गोर्द्वितीयेन बलवता भाव्यमित्युक्ते चरमस्या शाब्दस्य बलवत्त्वस्याबाधार्थं प्रथमेन जरठत्वेन तदाक्षिप्तदुर्बलत्वेन वा साजात्यस्ये प्रकृतेऽपि चरमस्यापि शाब्दस्य गुहाप्रविष्टत्वस्याबाधार्थं प्रथमपातृत्वाक्षिप्तेन चेतनत्वे साजात्यस्यैव बाधोऽस्तु । न हि ''यो वेद निहितं गुहायां'' इत्यादिश्रुतिसिद्धम ब्रह्मणो गुहानिहितत्वं ''सर्वगतस्य ब्रह्मणोऽर्भकौकस्त्वं न पारमार्थिक''मि वदतस्तव मते तात्त्विकम् । अस्तु वा जीवस्य ब्रह्मणा सद्वितीयत्वेऽपि द्वित्वादे वाधः । तथापि कर्मफलभोक्तृत्वेन चेतनत्ववत्पारतन्त्र्यस्याप्याक्षेपात्परतन्त्रा बुद्धि र्जीवस्य द्वितीया स्यात् । चेतनस्य भोक्तृत्वनियमाभावेऽपि भोक्तुश्चेतनत्व नियमवत्परतन्त्रस्य भोक्तृत्वनियमाभावेऽपि कर्मफलभोक्तुः पारतन्त्र्यनियमात् सम्भवति च बुद्धेर्भोगकरणत्वात्काष्ठानि पचन्तीत्यादाविव कर्तृत्वोपचारः । गोर्द्वितीयेनेत्यत्र तु गोत्वस्य शाब्दत्वात्तेनैव साजात्यं वाच्यमिति नातिप्रसङ्गः । छायात पत्वमपि चेतनाचेतनत्वादिना बुद्धिजीवादौ युक्तम् । किं च पूर्वपक्षे सिद्धान्ते च बुद्धे ब्रह्मणि च छत्रिवल्लक्षणैव । पाता तु जीव एवेति प्रमेये विशेषाभावेन व्यर्था चिन्ता

मात्रयापि प्रमेयस्य भेदाभावे हि वादिनोः । शब्दमात्राय कलहो न युक्त मूर्खयोरिव ॥ १ ॥

यच्चोक्तं ''विशेषणाच्चे''ति सूत्रस्योत्तरवाक्ये ''आत्मानं रथिनं विद्धी''ति जीवस्य गन्तृत्वेन ''सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद''मिति परमात्मनश्च गम्यत्वेन विशेषणात्तावेवात्रापिबन्तावित्यर्थ इति । तन्न । जीवस्य रथित्वेन ''बुद्धिं तु सारथिं विद्धी''ति बुद्धेश्च सारथित्वेन विशेषणात्तावेवात्र पिबन्तावित्यपि प्रसङ्गात् किं च पिबन्तावित्यस्य लक्षणया ब्रह्मपरत्वेऽपि जीवपरत्वस्यापि सत्त्वादिहचाध्याये ईक्षतेरित्यादौ सदादिशब्दानामन्यपरत्वं निरस्य ब्रह्मपरत्वस्यैवोक्तेराद्याध्यायासङ्गतिः न चोक्तरीत्या साक्षात्सङ्गतिसम्भवे प्रासङ्गिकसङ्गतिर्युक्ता । यथाहुः ''साक्षाद्युक्तं न प्रसज्यत'' इति । तदेतदभिप्रेत्योक्तं भाष्ये ''न च जीवे समन्वयोऽभिधीयत'' इति अत्रापि परमतेऽपि जीवब्रह्मणोर्भोक्तृत्वाभोक्तृत्वाभ्यां भेदसिद्धिः ॥

**प्रकाशिका** – अन्ये त्विति ।। ऋतं पिबन्तौ बुद्धिजीवौ जीवेश्वरौ वेति संशये बुद्धिजीवावेव । गुहाविष्टत्वलिङ्गात् । नियतहृदयगुहाविष्टत्वस्य परिच्छिन्नयोर्बुद्धिजीवयोरेव युक्तत्वात् । सर्वगते ब्रह्मणि तदयोगात् । ''सुकृतस्य लोक'' इति सुकृतलोकावस्थानेन कर्मगोचरानतिक्रमस्य जीवस्य भोक्तृतया बुद्धेस्तु भोगसाधनतया तयोरेवोपपत्तेः । छायात्वरूप-तमस्त्वस्य जडतया बुद्धौ प्रकाशत्वरूपातपत्वस्य जीवे सम्भवाच्च । बुद्धेरपातृत्वेऽपि पातृजीवसाहचर्याच्छत्रिवदुपपत्तेस्तावेव पिबन्ताविति प्राप्त इत्यर्थः । तदुक्तं भामत्यां -

नियताधारताबुद्धिर्जीवसंवेशिनी न हि ।
क्लेशात्कल्पयितुं युक्ता सर्वगे परमात्मनीति ।
ऋतपानेन जीवात्मा निश्चितोऽस्य द्वितीयता ।
ब्रह्मणैव सरूपेण न तु बुद्ध्या विरूपया ।
प्रथमं सद्वितीयत्वे ब्रह्मणाऽवगते सति ।
गुहाश्रयत्वं चरमं व्याख्योऽयमविरोधतः।।

इति भामतीं हृदि निधाय सिद्धान्तमनुवदति ।। ऋताख्येति ।। कथंचिदिति ।। सालग्रामे हरिरितिवदुपलब्धार्थो देशविशेषोपदेशः । सुकृतस्य लोकवर्तित्वमपीश्वरे छत्रिन्यायेन नेयम् । छायातपत्वं च जीवस्याविद्याश्रयतया ब्रह्मणस्तदनाश्रयतयानेयमित्यर्थः । पिबतश्चित्त्वेऽवगते तदनुरोधात्सजातीयस्य ग्रहणं चरमस्य बाध इत्यादि स्यात् । तदेवासिद्धमित्याह ।। बुद्धिस्थत्वादिति ।। टीकारीत्याऽभ्युपेत्याप्याह ।। चित्त्वेऽपीति ।। स्वमतेऽभावाद्धेतोर-सिद्धिमाशंक्य पूर्वार्धं व्याचष्टे ।। त्वन्मत इति ।। ''एतत्सर्वं मन एवे''त्यादिश्रुतेरिति भावः । नन्वारोपितपातृत्वेनापि जीव एव पिबच्छब्देन बोध्यत इत्यत आह ।। न हीति ।। तन्मतेऽपि केवलबुद्धिस्थत्वमसिद्धमित्यत आह ।। भोक्तृत्वादेरिति ।। अन्योन्यधर्मेति ।। ''अन्योन्यस्मिन्न-न्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्ये''ति भाष्योक्तिरयुक्ता स्यादित्यर्थः । शक्तिभेदेऽपि न व्यक्तिभेद इति गुहाविष्टत्वमिव द्वित्वं न स्वरसमित्याशंक्याह ।। अथेति ।। तेनापि आरोपितपातृत्वेनापि ।। न कथंचिदिति ।। पातृत्वेन सजातीयत्वेन वेत्यर्थः । ''चित्त्वेऽपी''ति पादत्रयं व्याचष्टे ।। अस्तु वेति ।। कल्पितभेदस्य सत्त्वाद्द्वित्वं स्यादित्यत उक्तं न तात्विकं द्वित्वमिति । अत्राप्यतात्विकमेव द्वित्वं बोध्यतामित्यत आह ।। तथा चेति ।। एतेन ''द्विवचनमिति चेत्तर्हि जीवेश्वराङ्गीकारोऽपि न स्यात् । तयोरैक्याङ्गीकारात् ।

काल्पनिकोऽस्ति तयोर्भेद इति चेत्तर्हीश्वरस्यैवाद्भुताचिंत्यैश्वर्यवशाद्विरूपत्वेन द्वित्वमुपपाद्यता'' मिति सुधावाक्ये ईश्वरस्यैवास्त्वित्यापादने बीजमुक्तं भवति । ननु बुद्धावपि कल्पित-भेदवत्त्वमविशिष्टमित्यत आह ॥ धर्मिसमेति ॥ ननु प्रथमावगतं साजात्यं मुख्यमुपेत्य चरमावगतं द्वित्वमेव गुहाविष्टत्वमिवातात्विकं गृह्यतामित्यतोऽस्य शाब्दत्वात्साजात्यस्य तदभावादित्याह ॥ न हीति ॥ किं त्वाक्षिप्तमित्यर्थः । यदपि प्रथमे न चरमस्य गुहाप्रविष्टत्वस्य बाध इति तदप्ययुक्तमित्याशयेन द्वित्वपूर्वस्येत्यत्र पूर्वपदार्थं विवृण्वन्नाह ॥ अपि चेति ॥ जरठस्य वृद्धस्य । प्रथमेन श्रुतेनेति शेषः । जरठस्य द्वितीयो बलवानजरठ एवोपादीयते । तद्वदिह गुहाप्रविष्टत्वस्य त्वन्मते परिच्छिन्नयोर्बुद्धिजीवयोरेव मुख्यत्वेन सर्वगते ब्रह्मण्यमुख्यत्वेन ब्रह्मग्रहणे तद्बाधः स्यात् । स च न युक्तः । आक्षिप्तेन शाब्दबाध-स्यान्याय्यत्वात् । अतस्तदबाधाय द्वितीया विरूपापि बुद्धिरेव ग्राह्येत्यर्थः । ब्रह्मपक्षे गुहाविष्टत्वममुख्यं तात्विकं नेत्येतदुपपादयति ॥ न हीति ॥ ब्रह्मणोऽर्भकौकस्त्वं न पारमार्थिकमित्यर्भकौकस्त्वसूत्रगततदीयभाष्यानुवादः । "किं च बुद्धे"रित्यादिपादत्रयं व्याचष्टे ॥ अस्तु वेति ॥ ननु चेतनस्यैव भोक्तृत्वे तेन व्यापकस्य चेतनत्वस्याक्षेपेपि कथं पारतन्त्र्यस्याक्षेप इत्यतोऽस्यापि तद्व्यापकत्वात्समव्याप्तेस्तूभयत्राप्यभावादिति भावेनाह ॥ चेतनस्येति ॥ कूटस्थचेतने तदभावादिति भावः ॥ कर्मेति ॥ कर्मवशत्वादिति भावः ।

ननु बुद्धेः पारतन्त्र्येण साजात्येऽपि करणभूतायाः कथं भोक्तृत्वेन पिबन्ताविति कर्तृकोटिनिवेश इत्यत आह ॥ सम्भवतीति ॥ तर्हि गवादावप्येवं सुवचत्वेन सजातीयस्य तत्र धीर्न स्यादित्यत आह ॥ गोरिति ॥ ननु छायातपत्वविशेषणाज्जीवेश्वरावित्युच्यत इत्यत आह ॥ छायेति ॥ बुद्धिजीवादौ चेतनत्वाचेतनत्वादिनेति यथायोगमन्वयः । आदिपदेन बुद्धिप्राणयोर्ग्रहणम् । छायातपत्वं च तमस्त्वप्रकाशत्वादिना कथंचिदुपेयमिति । एवं अथ द्वित्वे स्वारस्यमित्यादिना ग्रन्थेन "किं च पिबतोर्बुद्धिजीवत्वे किं छिन्नं किं वा जीवेश्वरत्वे लब्ध"मिति टीकावाक्यस्य प्रातिपदिकार्थपातृत्वस्य प्रत्ययार्थद्वित्वस्य च बुद्धिजीवपक्षे न छेदः। जीवेश्वरत्वे त्वीश्वर आरोपितपातृत्वस्याप्यभावेन प्रातिपदिकार्थस्य जीवेश्वरयोरैक्यांगीकारेण प्रत्ययार्थद्वित्वस्य च लाभो नास्तीति । तथा बुद्धिजीवत्वे श्रौतं गुहाप्रविष्टत्वं न छिन्नम् । जीवेश्वरत्वे तु सर्वगतेश्वरेऽर्भकौकस्त्वरूपं गुहाप्रविष्टत्वं नेति तन्न लब्धम् । साजात्यलाभ-स्त्वप्रयोजकः । साजात्यस्याश्रौतत्वादिति । तथा बुद्धिजीवत्वे पारतन्त्र्यादिना साजात्यमपि न छिन्नम् । चेतनाचेतनत्वादिना छायातपत्वं च न छिन्नम् । जीवेश्वरत्वे तु तयोरैक्येन न मुख्यं

साजात्यादिलब्धमिति च त्रेधा तात्पर्यं निरूप्य अधुना परेणापि जीवे तदभ्युपगमात् । ईश्वरे समन्वयसिद्धिरिति चेन्न । ईश्वरे लिङ्गस्यौपचारिकत्वाभ्युपगमादिति तदुत्तरटीकावाक्यानुरोधेन तस्य तात्पर्यांतरं व्यनक्ति ।। किं चेत्यादिना ।। ननु तेन बुद्धिजीवावित्युक्तम् । मया तु जीवेश्वरावित्यतोऽयमेव विशेष इत्यत आह ।। मात्रयेति ।। ब्रह्मेति शब्दमात्रमेतदित्यर्थः । एतेन त्वन्मते मन्मत इव गुहाविष्टत्वस्याहेतुत्वाद्ब्रह्मग्रहणे पिबत्प्रातिपदिकाक्षिप्तसाजात्यस्यैव हेतुत्वात्सूत्रे लाघवाय सुबोधाय साजात्यसूचनाय च प्रथमानुल्लङ्घद्योतनाय च पिबन्तावित्येव निर्देशस्स्यात् । न च सर्वगतस्य ब्रह्मणो गुहावच्छिन्नत्वायोगाद्गुहागतौ बुद्धिजीवौ न ब्रह्मेति पूर्वपक्षयुक्तिसूचनाय तदुपादानम् । ''नियताधारताबुद्धिजीवसंवेशिनी''ति भामत्युक्तेरिति वाच्यम् । ''जीवमुख्यप्राणलिङ्गादिति चे''दित्यादाविव पूर्वपक्षपरत्वद्योतकनिर्देशाभावात् । ''सम्भोगप्राप्तिरिति चे''दित्यतश्चेदित्यनुकर्षस्य क्लिष्टत्वात् । ''अर्भकौकस्त्वा''दिति पूर्वनयसूत्रेण गुहावच्छेदनिबन्धनशङ्कायाः परिहृतत्वाच्चेत्याद्यसूत्राक्षरासामंजस्यं स्पष्टमिति भावेन विशेषणबलाज्जीवेश्वरावत्र प्रतिपाद्यौ वाच्याविति शङ्कानिरासाय द्वितीयसूत्रार्थमप्यनूद्य निराह ।। यच्चेति ।। ''इति व्याख्यानमयुक्तम् । समन्वयासङ्गतत्वा''दित्यादिटीकां व्यनक्ति ।। किं च पिबन्तावित्यस्येति ।। ननु जीवपरत्वेऽपि ब्रह्मपरत्वमात्रेण सङ्गतिस्स्यादित्यत आह ।। इह चाध्याय इति ।। ननु जीवेश्वरभेदस्यासत्यत्वाज्जीवपरत्वद्वारा ब्रह्मण्येव समन्वयः प्रसज्यत इत्यत आह ।। न चेति ।। अस्मद्रीत्या साक्षादित्यर्थः । यद्वा देवताधिकरणमिव प्रसङ्गादिदमत्र निवेशितमित्यत आह ।। न चेति ।। प्रसज्यते प्रसङ्गात्प्राप्यत इत्यर्थः ।

**पाण्डुरङ्गि** – छायात्वं ब्रह्मणो न युक्तं जीववदविद्याश्रयत्वाभावादिति पूर्वपक्षोक्तं बाधकं परिहरति ।। सुखेति ।। प्रतियोगिभेदेन विद्वदविद्वद्रूपप्रतियोगिभेदेनेत्यर्थः । ननु भोक्तृत्वादिक-महंकारधर्मः । अहंकारश्च चिदचित्संवलनात्मक इति तत्र चिद्भागस्यापि प्रविष्टत्वेन भोक्तृत्वादेश्चिद्रूपजीवधर्मता सम्भवत्येवेत्यत आह ।। भोक्तृत्वादेरिति ।। तथा सति वस्तुगत्या भोक्तृतादेस्तद्धर्मतापत्त्याऽन्योन्यधर्माध्यासोक्तेरयोगेन तत्प्रतिपादकयुष्मदस्मत्प्रत्ययगोचरयोरि-त्यादिभाष्यानारम्भस्स्यादिति । चित्त्वेऽपि द्वित्वपूर्वस्याबाधार्थं सद्वितीयता । विरूपयापि बुद्ध्याऽस्तु इत्येतत्संग्रहांशं व्याचष्टे ।। अस्तु वेति ।। ननु यथा ब्रह्मग्रहणे जीवस्य ब्रह्माभेदान्न तात्विकं द्वित्वं तथा बुद्धिग्रहणेऽपि बुद्धेरपि जीवाभिन्नत्वान्न तात्विकं द्वित्वमिति कथं बुद्धिरपि द्वितीयतया गृह्येतेत्यत आह ।। धर्मीति ।। जीवबुद्ध्योरभेदेन भेदस्य कल्पितत्वेऽपि बुद्धिजीवरूपधर्मिव्यावहारिकसत्तासमानसत्ताकस्य भेदस्य सत्त्ववत् जीवब्रह्मभेदस्य जीवब्रह्म

रूपधर्मिसमसत्ताकस्याभावेन द्वितीयतया ब्रह्मग्रहणासम्भवेऽपि बुद्धेर्द्वितीयतया ग्रहणं भवतीति भावः । ननु कल्पितभेदस्य ब्रह्मणोऽद्वितीयतया ग्रहणे द्वित्वबाधापत्त्या द्वित्वानुरोधेन साजात्यबाधकल्पने विजातीयग्रहणेन साजात्यबाधापत्त्या साजात्यानुसारेण द्वित्वस्यैव बाधः किं न स्यादित्यतः स्यादेतदेवं यदि द्वित्ववत्साजात्यमपि शाब्दं स्यान्न ह्येतदस्तीत्याह ।। न हीति ।। नन्वस्मत्पक्षेऽपि चरमश्रुतस्य गुहां प्रविष्टत्वस्य यो वेद निहितं गुहायां गुहाहितं गह्वरेष्ठं पुराणं गुहां प्रविश्यतिष्ठन्तीमित्यादिश्रुतिभिर्ब्रह्मलिङ्गत्त्वनिश्चयात्पूर्वपक्षिणा च तस्य ब्रह्मलिङ्गत्वाज्ञानेन ब्रह्मपक्षे बाधकत्वेन शङ्कितत्वमित्यत आह ।। न हि यो वेदेत्यादि ।। तात्विकत्वाभावे हेतुः सर्वगतस्येति । तथा च तद्बाधस्तदवस्थ एवेत्यर्थः । किं च बुद्धेस्सरूपता । वर्तते सहजीवेन पारतन्त्र्यादिरूपत इति सङ्ग्रहांशं व्याचष्टे ।। अस्तु वेति ।। ननु कर्मफलभोक्तृत्वेन पारतन्त्र्याक्षेपोऽनुपपन्नः । परतन्त्रस्य भोक्तृत्वनियमाभावादिति चेत्तर्हि कर्मफलभोक्तृत्वेन चेतनत्वाक्षेपोडपि न स्यात् । चेतनस्यापि भोक्तृत्वनियमाभावात् । न च चेतनस्य भोक्तृत्वनियमाभावेऽपि भोक्तुश्चेतनत्वनियमाद्भोक्तृत्वेन चेतनत्वाक्षेप इति वाच्यम् । तर्हि परतन्त्रस्य भोक्तृत्वनियमाभावेऽपि भोक्तुः पारतन्त्र्याक्षेपोऽपि सम्भवतीत्याशयवानाह ।। चेतनस्येति ।। न चाचेतनाया बुद्धेर्न भोक्तृत्वम् । भोगकर्तृत्वम् । भोगकर्तृत्वमेव हि भोक्तृत्वमिति वाच्यम् । ईशपक्षेऽपि साम्यात् । किं च बुद्धेरेव भोक्तृत्वव्यपदेश उपचारेणोपपद्यत । करणे कर्तृत्वोपचारात् । न चोपचारे प्रयोजनाभावः । रूढोपचारत्वादित्याह ।। सम्भवति चेति ।। रूढोपचारत्वप्रदर्शनार्थमेव काष्ठानि पचन्तीत्यादिदृष्टान्तप्रदर्शनमिति ।। नन्वेवमस्य गोर्द्वितीयेन भाव्यमित्यत्रापि विजातीयाश्वादिनापि सद्वितीयत्वापत्त्या सजातीयगवांतरेण सद्वितीयत्वं न स्यादित्यत आह ।। गोर्द्वितीयेनेत्यत्र त्विति ।। साक्षादिति ।। साक्षात्सङ्गतिसम्भवे प्रसङ्गसङ्गतिर्नाद्रियत इति संमतिग्रन्थार्थः ।

## तात्पर्यचन्द्रिका

**केचित्तु अत्तेत्यादि चतुःसूत्र्येकमधिकरणम् । एकप्रकरणस्य वाक्यविशेष-विषयाणां पादान्तराधिकरणान्तराव्यवहितानामुपजीव्योपजीवकभावेन परस्परान्वि-तार्थानां सूत्राणां विषयवाक्यभेदे सत्यपि भिन्नाधिकरणत्वायोगात् । अत्र चात्तेत्यादिसूत्रद्वयविषयभूतं ''यस्य ब्रह्मे''त्यादिवाक्यं गुहामित्यादिसूत्रद्वयविषयभूतं ''ऋतं पिबन्ता''वित्यादिवाक्यं चैकप्रकरणस्थमुपजीव्योपजीवकभावेनान्वितार्थं च ।**

तथा हि। ऋतमित्यादिवाक्यं यदि पूर्वपक्षरीत्या बुद्धिजीवविषयं स्यात्तदा ऋतमित्यादेर्ब्रह्माविषयतया "महांतं विभुमात्मान"मिति प्रस्तुतब्रह्मप्रकरणविच्छेदात् ऋतमित्यनेनाव्यवहितपूर्वं यस्येत्यादिवाक्यमपि व्यवहितेन महांतमित्यादिनैकप्रकरणतां त्यक्त्वा ऋतमित्यादिनैकप्रकरणतामापन्नं सत् ऋतमित्यादिवत्कर्मफलभोक्तृत्वरूपपातृत्वप्रतिपादकतया जीवविषयं स्यात्। यदा तु ऋतमित्यादिकं सिद्धान्तरीत्या जीवब्रह्मविषयं तदा तस्य ब्रह्मविषयतया ब्रह्मप्रकरणाविच्छेदाद्यस्येत्यादिकमपि संहर्तृत्वरूपात्तृत्वप्रतिपादकतया ब्रह्मविषयं स्यादिति पूर्वसूत्रद्वयार्थं प्रत्युत्तरसूत्रद्वयार्थस्योपजीव्यत्वादित्याहुः। तन्न॥ अस्मन्मते पूर्वसूत्रद्वयस्य बृहदारण्यकगतवाक्यविषयत्वेनोत्तरद्वयस्य च काठकगतवाक्यविषयत्वेनैककप्रकरणस्थविषयत्वाभावात्। किं च ऋतमित्यादिकं महान्तमित्यस्य यस्येत्यस्य च मध्ये यदि स्यात्तदा

विच्छिन्ना सामिधेनीनां निविद्भिः प्रक्रिया यतः।
न तु काम्यैः पुनः कल्पैः सन्धातुं सा हि शक्यते॥

इत्युक्तन्यायेन मध्यस्थनिविद्भिः सामिधेनीप्रकरणस्येव ऋतमित्यनेन ब्रह्माविषयेण ब्रह्मप्रकरणस्य विच्छेद इति शङ्का स्यात्। न त्वेतदस्ति। ऋतमित्यादेर्यस्येत्यस्मादपि परत्वात्। तथा च यस्येत्यस्य कथं ब्रह्मप्रकरणाद्विच्छेदाशङ्का। न च "नायमात्मा प्रवचनेन लभ्य" इति ब्रह्मपरपूर्ववाक्योक्तस्य दुरवबोधत्वरूपब्रह्मलिङ्गस्य "यस्ये"ति वाक्ये "क इत्थावेदयत्र स" इति प्रत्यभिज्ञानात्तदेकप्रकरणतेति त्वद्रीत्या "प्रकरणा"दिति सूत्रेणोक्तेऽपि तत्त्यागेन यस्येत्यस्यानन्तर्यरूपेण क्रमेण ऋतमिति वाक्ये नैकवाक्यतेति शङ्कितुं शक्यम्। लिङ्गादानंतर्यरूपक्रमदौर्बल्यस्य त्वन्मते एतच्छास्त्रपूर्वभागे पूर्वतन्त्र एव सिद्धत्वेन पुनरिह क्रमप्राबल्यशङ्कानुदयात्। सिद्धान्ते ऋतं पिबन्ताविति ब्रह्मप्रकरणे तच्छेषतया जीवोक्तिवत् "बुद्धिं तु सारथिं विद्धी"ति बुद्ध्युक्तिवच्च पूर्वपक्षेऽपि "यस्य ब्रह्मे"त्यादिब्रह्मप्रकरणे तच्छेषतया बुद्धिजीवोक्तिसम्भवाच्च।

**प्रकाशिका** – केचित्त्विति॥ अत्रेदमधिकरणशरीरम्। यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनमित्यत्रौदनोपसेचनसूचितोऽत्ता जीवः परमात्मा वेति संशये

अत्तृत्वस्य कर्मफलभोक्तृत्वरूपत्वात्तस्य च जीव एव सम्भवाज्जीव इति प्राप्ते अत्रात्तृत्वस्य ब्रह्मक्षत्रोपलक्षितचराचरग्रहणेन सर्वसंहर्तृत्वरूपत्वात्तस्य ब्रह्मण्येव सम्भवात् ''महांतं विभुमात्मानं मत्वा धीरो न शोचति । नायमात्मा प्रवचनेन लभ्य'' इति पूर्वत्र ब्रह्मप्रकरणे श्रुतस्य प्रसादादृते दुरवबोधत्वरूपलिङ्गस्येह ''क इत्थावेदे''ति श्रवणेन प्रत्यभिज्ञायमानतया ब्रह्मप्रकरणत्वावगमाच्च परमात्मैवात्तात्रोच्यते । न च वाच्यमुत्तरत्र ऋतं पिबन्ताविति वाक्ये कर्मफलभोक्तृत्वश्रवणेन बुद्धिजीवपरत्वं वा प्राणजीवपरत्वं वाऽवश्यं वाच्यम् । ब्रह्मणः कर्मबन्धविधुरत्वात् । एवं च प्रकरणाल्लिङ्गस्य बलवत्त्वेन ऋतपानाख्यलिङ्गेन महांतमिति ब्रह्मप्रकरणं विच्छिन्नम् । व्यवहितत्वात् । यस्य ब्रह्म चेति वाक्यं तु सन्निहितत्वान्न विच्छिन्नमिति प्रागुक्तोऽप्यत्ता न परमात्मेति । यतो गुहां प्रविष्टौ जीवात्मपरमात्मानावेव । अस्मिन्प्रकरणे ''गुहानिहितं गह्वरेष्ठ''मिति, परस्य ''गुहां प्रविश्य तिष्ठन्त''मिति जीवस्य गुहाप्रविष्टत्वदर्शनात् । अस्मिन्प्रकरणे ''मत्वा धीरो न शोचति । आत्मानं रथिनं विद्धी''त्यादिनोपास्यत्वोपासकत्वप्राप्यत्वप्रापृत्वविशेषणाच्च शेषभूतजीवद्वितीयश्छत्रिवत्पर-मात्मैवात्तेति सिद्धान्त इति । तदुक्तं -

अत्ता खल्वोदनादेर्भवभुगिति कठश्रुत्यधीतोऽप्यसौ स्यान्न । स्यान्मृत्यूपसिक्तस्थिरचर-निखिलग्रासतस्तल्लयोक्तेः ॥

जीवव्यावर्तनं च प्रकरणविदितं भोक्तृतोक्तिर्द्वयोस्तु । प्रेर्यत्वप्रेरकत्वप्रतिनियतरसाछत्रि-नीत्याथवा स्यात् ॥ इति ।

तदेतत्परमते विषयवाक्यानानुगुण्यादिनोक्तदूषणेन दूषितप्रायं मत्वा यदत्रैकाधिकरण्य-समर्थनं तदपि निराचिकीर्षुः श्रुतप्रकाशे दर्शितमैकाधिकरण्यसमर्थनमनुवदति ॥ एकप्रकरणेति ॥ भिन्नाधिकरणत्वायोगादित्यन्वयः । नन्वदृश्यत्वाधिकरणस्य द्युभ्वाद्यधिकरणस्य चाथर्वणिकैकप्रकरणगतवाक्यविशेषविषयस्य भिन्नत्वं दृष्टमित्यत उक्तं पादान्तरेति ॥ तत्रोभाभ्यां व्यवधानाद्यस्मिन्द्यौरित्यस्य ब्रह्मपरत्वेऽप्यदृश्यत्वादियुक्तस्याक्षरस्य ब्रह्मप्रकरणेऽपि तच्छेषतया प्रधानाद्युत्त्युपपत्त्या ब्रह्मत्वासिद्धेरुपजीव्योपजीवकंभावाभावाच्च । अत एव ''तद्धेतुव्यपदेशाच्च । मान्त्रवर्णिकमेव चे''त्यादिसूत्राणां पूर्वापरबहुवाक्यविषयत्वेऽप्य-व्यवहितत्वात्परस्परोपजीव्योपजीवकभावेनान्वितार्थपरतया चैकाधिकरण्यम् । अन्यथा तत्रापि भेदस्स्यादिति भावः । उपजीव्योपजीवकभावं श्रुतप्रकाशोक्तमेव दर्शयति ॥ तथा हीति ॥

पूर्वपक्षरीत्येति ॥ सा रीतिः प्राङ्न्या दर्शिता ॥ विच्छेदादिति ॥ ऋतपानाख्यलिङ्गापेक्षया प्रकरणस्य दुर्बलत्वादिति भावः । ननु ऋतं पिबन्तावित्येतदब्रह्मविषयं सन्न महांतमिति प्रकृतब्रह्मप्रकरणविच्छेदकम् । किन्तु यस्य ब्रह्म चेत्यनेनैव विच्छेदकरम् । यस्य ब्रह्मेत्येतत्तु वाक्यमनेनाब्रह्मविषयेण विच्छिन्नं सत् ''महांत''मित्यादिब्रह्मपरवाक्यैः ''क इत्थावेद''इति लिङ्गकृतप्रत्यभिज्ञावशेनैकवाक्यतामापन्नं सद्ब्रह्मपरमेव स्यादित्यत आह ॥ ऋतमित्यनेनेति ॥ महांतमित्यस्य व्यवहितत्वाद्यस्येत्यस्याव्यवहितत्वादित्यर्थः ॥ ऋतमित्यादिनेति ॥ अव्यवहितेनेत्यर्थः ॥

सिद्धान्तरीत्येति ॥ उक्ता रीतिः प्राक् ॥ उपजीव्यत्वादिति ॥ उत्तरवाक्यस्याब्रह्मपरत्वे ब्रह्मपरत्वे वा पूर्वस्यापि तथात्वादित्यर्थः ॥ बृहदारण्यकगतेति ॥ तस्यैव सूत्रानुगुणत्वेनोदाहरणतौचित्यान्नास्मन्मतेऽयं दोषः । किन्तु मायिनां मत एव । पादान्त्यप्राणनये सर्वत्रेति न ययोस्तादृशवाक्यविषयत्वेऽपि भिन्नपादस्थत्वादिति भावः । यदप्युपजीव्योपजीवकभावेनैकाधिकरण्यसमर्थनं तदप्ययुक्तमिति वक्तुं यत्तावदुक्तं ऋतमित्यादिकं यस्येत्यस्य महांतमित्यादिब्रह्मप्रकरणविच्छेदकमिति तत्तावन्न युक्तम् । तस्य तन्मध्यपतितत्वाभावादित्याह ॥ किञ्चेति ॥ इत्युक्तेति ॥ इति वार्तिकोक्तन्यायेनेत्यर्थः । तृतीयस्याद्यपादे ''सन्दिग्धे तु व्यवायाद्वाक्यभेदस्स्या''दिति दशमेऽधिकरणे दर्शपूर्णमासप्रकरणे ''उपव्ययत'' इति श्रुतमुपवीतं किं सामिधेन्यंगमुत दर्शपूर्णमासाङ्गमिति संशये पुरस्तादुपरिष्टाच्च सामिधेनीकीर्तनादवान्तरप्रकरणेन सामिधेन्यङ्गमिति प्राप्ते ''देवेद्धोमन्विद्ध'' इत्यादिभिर्निविद्भिर्व्यवधानात्सामिधेनीप्रकरणस्य विच्छेदान्न तदङ्गम् । न च ''एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्ये''त्यादि काम्यसामिधेनीनां प्रकरणानुवृत्तिश्शङ्क्या । तासां काम्यसामिधेनीनां स्वातन्त्र्येण प्रकृतत्वाभावात् । अतो महाप्रकरणेन दर्शपूर्णमासाङ्गमिति सिद्धान्तितम् । तत्र सिद्धान्तवार्तिकमेतत् । यतः यस्मात् । निविद्भिः निविन्नामकैर्देवेद्धोमन्विद्ध इत्यादिमन्त्रैः । विच्छिन्नं सामिधेनीनां अग्निसमिंधनार्थतया सामिधेनीनामिकानामृचां प्रकरणं तस्मात्प्रकरणं काम्यैस्सामिधेनीकल्पैः सामिधेनीविकल्पैः न पुनस्संधातुं संयोजितुं शक्यमित्यर्थः । ननूक्तमत्र यस्येत्येतद्व्यवहितेन महांतमित्यनेन विच्छिन्नं सन्निहितेन ऋतमित्यनेनैकवाक्यतामापद्यत इति । तन्न । प्रकरणात्सन्निधेर्दुर्बलत्वादिति भावेन तदाशङ्क्य निराह ॥ न चेत्यादिना ॥ क्रमेणेति ॥ स्थानरूपप्रमाणेनेत्यर्थः ॥ लिङ्गादिति ॥ तृतीयस्य तृतीये ''श्रुतिलिङ्गवाक्यप्रकरणस्थाने''ति बलाबलप्रकरणे दशमेऽधिकरणे राजसूये पञ्चेष्टिसोमयागास्समप्रधानतया श्रुताः ।

तत्राभिषेचनीयस्य सोमयागस्य सन्निधौ विदेवनादयः केचन पदार्थाश्श्रुताः । ते किमभिषेचनीयस्याङ्गमुत सर्वस्य राजसूयस्येति संशये सन्निधिविशेषादभिषेचनीयमात्राङ्गमिति प्राप्ते प्रकरणाविशेषात्सर्वराजसूयाङ्गमिति सिद्धान्तितम् । तथा च विंशतिलक्षण्येकं शास्त्रमिति वदतस्तव मते तत्रैव प्रकरणात्पाठसन्निधिरूपस्य स्थानस्य दौर्बल्यं सिद्धमिति नात्र तत्प्राबल्यशङ्कोपपद्यत इत्यर्थः । एवं यस्येत्यस्य ऋतमित्यनेन नैकवाक्यता युक्तेत्युक्तम् । इदानीमस्त्वेकवाक्यत्वम् । एवमपि न ब्रह्मप्रकरणविच्छेदशङ्का युक्तेत्याह ॥ सिद्धान्त इति ॥ तच्छेषतयेति ॥ ब्रह्मणः प्राधान्येन प्रतिपादनं जीवस्य ब्रह्मगुणभूततयेत्यर्थः । द्युभ्वादिनये त्वदुक्तरीत्यैवेति भावः । प्राधान्येनान्यप्रतिपादन एव प्रकरणविच्छेदः । एवं च प्रकरणविच्छेदाशङ्काया अयोगेन तत्समाधानार्थं गुहामित्यादिकमयुक्तमित्याशयः ।

**पाण्डुरङ्गि** – अस्मन्मत इति वदता एकप्रकरणस्थमेव विषयवाक्यं वदतां परेषामर्थदोष इति ध्वनितम् । ननु यस्य ब्रह्म च क्षत्रं चेत्यस्य वाक्यस्यानन्तर्यरूपेण क्रमेण ऋतमिति वाक्येनैकवाक्यतेति शङ्का किं न स्यादित्यत आह ॥ न चेति ॥ ननु लिङ्गेन यस्य ब्रह्मेत्यादेर्ब्रह्मप्रकरणत्वनिश्चयेऽप्यानन्तर्यरूपक्रमस्य दुर्बलत्वानिश्चयेन क्रमप्राबल्यशङ्कया क्रमेण ऋतमिति वाक्यैकवाक्यता शङ्का स्यादेवेत्यत आह ॥ लिङ्गादिति ॥ विंशल्लक्षणमेकं शास्त्रमति त्वत्सिद्धान्तादिति भावः ।

## तात्पर्यचन्द्रिका

**किंच यथा दृश्यत्वाधिकरणद्युभ्वाद्यधिकरणयोरेकप्रकरणस्थवाक्यविषयत्व उपजीव्योपजीवकभावे च सत्यपि भेदः तथाऽत्र किं न स्यात् । अस्ति हि तत्राप्युपजीव्योपजीवकभावः । ''यस्मिन्द्यौ''रित्यादिकस्योत्तरवाक्यस्य परमात्मपरत्वाभावे पूर्वस्य ''यत्तदद्रेश्य''मित्याद्यदृश्यत्वादिवाक्यस्य तत्परत्वासिद्धेः । अथादृश्यत्वाधिकरणद्युभ्वाद्यधिकरणयोर्वैश्वानराधिकरणव्यवहितत्वात् भिन्नपादनिवेशाच्च नैकाधिकरणतेति चेत् । न । ऐकाधिकरण्ययोग्ययोर्व्यवधानादेरेवायुक्तत्वात् । नन्वस्पष्टजीवादिलिङ्गकत्वाददृश्यत्वाधिकरणं द्वितीये स्पष्टजीवादिलिङ्गकत्वाद्द्युभ्वाद्यधिकरणं तृतीये निवेशितमिति चेन्न । अत्राप्यत्तृत्वस्य द्वितीयस्थत्वादस्पष्टजीवलिङ्गत्वेन ऋतशब्दवाच्यकर्मफलभोक्तृत्वस्य स्पष्टजीवलिङ्गत्वेन भिन्नपादनिवेशापातात् ।**

किञ्च औदुम्बराधिकरणेऽपि ''यस्य पर्णमयी जुहूर्भवति न स पापꣳश्लोकꣳशृणोती''ति वाक्यमुदाहरणम् । पर्णमय्यधिकरणेऽपि ''औदुम्बरो यूपो भवति ऊर्ग्वा उदुम्बर ऊर्क्पशवः ऊर्जैवास्मा ऊर्जं पशूनाप्नोती''ति वाक्यमुदाहरणम् । न च पौनरुक्त्यम् । औदुम्बराधिकरणे वाक्यद्वयगतः साधनप्रतिपादकः पूर्वभाग उदाहरणम् । पर्णमय्यधिकरणे तु साध्यप्रतिपादक उत्तरभाग उदाहरणमिति वार्तिक एवोक्तम् । एवं च यथा तयोः पूर्वोत्तरभागविषयत्वे उपजीव्योपजीवकभावे च सत्यपि भेदस्तथाऽत्र किं न स्यात् । न हि पर्णमय्यधिकरणोक्तेन ''न स पापं श्लोकं शृणोती''त्यादेः कामपदोपबन्धरहितत्वान्न साध्यसमर्पकत्वमित्यनेन विना औदुम्बराधिकरणोक्तं ''यस्य पर्णमयी जुहूर्भवती''त्यादेर्विधिविभक्तिरहितत्वान्न साधनसमर्पकत्वमित्येतत् सिद्ध्यति । साध्यस्य साधनं विनाऽयोगेनापापश्लोकश्रवणादेः साध्यत्वे पर्णमयीत्वादेर्बलात्साधनत्वापातात् । एवं चास्माकं मतेऽपि प्राणस्तथेत्यस्य सर्वत्रेत्यस्य चैकप्रकरणस्थवाक्यविषयत्वे तदुपजीव्योपजीवकभावे सत्यपि भिन्नाधिकरणता सिद्धा । ''तद्धेतुव्यपदेशाच्चे''त्यादौ समन्वेतव्यांतराभावादिनैकाधिकरणतेति दिक् ।

**प्रकाशिका** – यत्त्वेकत्रत्यवाक्यविशेषविषयत्वादैकाधिकरण्यमिति तदपि नेत्याह ॥ किञ्चेति ॥ ननु कथमुपजीव्योपजीवकभावः । ''न हि यस्मिन्द्यौः पृथिवीत्यादिवाक्यस्य परमात्मपरत्वमदृश्यत्वादिगुणकस्याक्षरात्परतः परस्य च परमात्मत्वोपपादकम् । परप्रकरणेऽपि तच्छेषत्वेन परमात्मप्रधानादिप्रतिपादनोपपत्तेः'' इत्युपजीव्योपजीवक भावाभावस्य श्रुतप्रकाश एवोक्तेरित्यतोऽत्रेव तत्रापि पूर्वपक्षे तद्भावमाह ॥ यस्मिन्निति ॥ अत्र यथा ऋतमित्यस्याब्रह्मपरत्वे तत्पूर्वस्य यस्येत्यस्यापि तथात्वं तद्वत्तत्रापि सम्भवात् । अविशेषात् । नन्वदृश्यत्वादिकं नान्यस्य शङ्कार्हमिति चेन्न । द्युभ्वाद्यायतनत्वं जीवस्य शङ्कमानेनादृश्यत्वादेरपि शङ्कितुं शक्यत्वात् । सर्वत्र प्रसिद्धेत्यत्रैकवाक्यत्वसिद्धये मनोमय इत्यादेरुत्तरवाक्यस्य जीवविषयत्वे ''सर्वं खल्विदं ब्रह्मे''त्यादिपूर्ववाक्यमपि जीवविषयमिति त्वयैवोक्तत्वात् । पूर्वस्य परमात्मपरत्वासिद्धिप्रकारस्य तत्रैवास्मदीयपूर्वपक्षे स्पष्टयिष्यमाणत्वाच्चेति भावः । तदुक्तमेवाधिकरणभेदनियामकमाशङ्क्य निराह ॥ अथेति ॥ व्यवधानादेरिति ॥ भिन्नपादनिवेश आदिपदार्थः । नन्वेवं सिद्धान्तेऽपि पादान्त्यप्राणनयसर्वत्रेतिनययोर्भिन्नपादनिवेशायोग इति चेन्न । पररीत्या परस्यापादनात् । न ह्येतत्परोक्तमुपजीव्यत्वादिकमधिकरणैक्ये बीजमिति सम्प्रतिपन्नम् । किं त्वप्रयोजकमित्यत्रैव तात्पर्यात् । स्पष्टमेतदग्रे ।

किञ्चेत्यादिना ''स्पष्टास्पष्टलिङ्गकवाक्यविषयत्वेनैकस्मिन्पादे सङ्गत्यनुपपत्ते'' रि
श्रुतप्रकाशोक्तमेवाशङ्कते ॥ नन्विति ॥ ननु प्राणस्तथेत्यादावपि भेदो न स्यादित्य
नैकप्रकरणगतवाक्यविषयत्वमधिकरणैक्यप्रयोजकम् । यथैकवाक्यविषयत्वेऽपि पूर्वोत्त
भागविषयकत्वेन भेदस्तथैहैकप्रकरणेऽपि पूर्वोत्तरवाक्यविशेषविषयकत्वेन भेदस्स्यादित्याह
किञ्चेति ॥ द्वे अप्यधिकरणे प्राक्पादांत्यप्राणाधिकरणे प्रपञ्चिते । ननु ''विधि
स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थक''मित्याद्याध्यायस्थद्वितीयपादीयौदुंबराधिकरणे ''औदुम्बरो य
भवती''त्यादिवाक्यमुदाहृतम् । शाबरभाष्ये ''द्रव्यसंस्कारकर्मसुपरार्थत्वात्फलश्रुतिरर्थवाद
इति चतुर्थपादीयपर्णमय्यधिकरणे ''यस्य पर्णमयी जुहू''रिति । तथा चैकवाक्यविषय
नेत्यतः ''इदं तत्र तच्चात्रेत्युभयमुभयत्रोदाहरण''मिति तन्त्रवार्तिकोक्तमेवाह ॥ औदुम्बरा
करणेऽपीति ॥ न केवलं पर्णमय्यधिकरण इत्यपेरर्थः । एवमग्रेऽपि ॥ साधनेति ॥ औदुम्
यूपो भवति पर्णमयी जुहूर्भवतीत्यंशः । वार्तिके औदुम्बराधिकरणवार्तिके । ''एकस्यैव न्याय
क्वचित्कश्चिदंशः परिशोध्यत इति पुनरारम्भ'' इत्यादिनेत्यर्थः । अस्तु ततः किमित्यत आह
एवं चेति ॥ नात्रोपजीव्यत्वाद्यस्ति । साधनपरत्वबोधकविधिप्रत्ययस्येवेह विधेरभावा
पूर्वभागस्य साधनपरत्वाभावबोधसम्भवेन तद्बोधायोत्तरभागस्य साध्यपरत्वाभावस्यानुपजीव
त्वादित्यतस्तदुपपादयति ॥ न हीति ॥ पूर्वभागस्य साधनपरत्वं न विधिप्रत्ययबलात्कल्प्यते
तदभावात् । किन्तूत्तरभागस्य साध्यसमर्पकत्वमुपजीव्यैव । साध्यस्य साधनापेक्षत्वात् । एवं
तस्य पशुकाम इत्यादाविव कामपदरहितत्वादिना पर्णमय्यधिकरणन्यायेन साध्यपरत्वाभ
सिद्धे पूर्वभागस्यापि साधनपरत्वाभावस्सिध्यतीति सिद्धान्त उपजीव्योपजीवकभाव इत्यर्थः
बलादिति ॥ विधिप्रत्ययाभावेऽपीत्यर्थः । चतु(स्मूत्र्या)भिन्नाधिकरणत्वसाधनेनान्यत
फलमाह ॥ एवं चेति ॥ ननु तर्हि ''तद्धेतुव्यपदेशात् । मान्त्रवर्णिकमेव च गीयत'' इत्यादे
भिन्नाधिकरणता च स्यादित्युक्तमित्यत आह ॥ तद्धेत्विति ॥ अधिकाशङ्काप्रापक
हेतुविशेषाभावादिरादिपदार्थः । यच्चोक्तं अत्तेतिसूत्रद्वये यस्य ब्रह्म चेत्यादिवाक्यं विषय इ
तन्न । ''सर्वं वा अत्ती''ति मदीयविषयवाक्ये सूत्रे प्रतिज्ञातस्यात्तुर्हेतूकृतस्य चराचरग्रहण
साक्षादुपादानेन यस्येति वाक्ये तदभावेनैतस्य सूत्रानानुगुण्यात् । सन्निधिमात्रे
प्रकरणविच्छेदशङ्कायोगस्योक्तत्वेन । ''प्रकरणाच्चे''त्युक्तप्रकरणविच्छेदशङ्कासमाधान
गुहामित्यादेरनारभ्यत्वाच्च । यदपि सिद्धान्ते गुहाविष्टत्वादिलिङ्गाज्जीवपरावुच्येते इति । तन्न
गुहाविष्टत्वस्य विष्ण्वेकप्रापकतायाः प्राक्समर्थितत्वेन तेन जीवप्राप्तेरयोगात् ।

या प्राणेन संविशत्यदितिर्देवतामयी ।
गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायते ।।

इत्यत्र महांतमिति ब्रह्मप्रकरणेन व्यजायतेत्यादेर्मत्स्यादिरूपेण स्वात्मजननपरत्वोपपत्त्या प्रकरणविच्छेदकाभावेन च देवतामयत्वायोगेन चास्यापि ब्रह्मपरत्वेन जीवपरत्वाभावाच्च । उक्तरीत्या विष्णोरेव मुख्यभोक्तृत्वेन जीवे तदभावेन छत्रिन्यायेन लक्षणोक्त्ययोगाच्चेत्यादि ध्येयमिति भावेनाह ।। दिगिति ।। यद्वा ''अनुकृते''रित्यधिकरणस्य ''शब्दादेवे'' त्यधिकरणस्य चैकत्रत्यवाक्यद्वयविषयकत्वेऽपि वक्ष्यमाणदिशोपजीव्यत्वादौ सत्यपि अव्यवहितत्वेऽपि भिन्नाधिकरणतोह्येति भावेनाह ।। दिगिति ।।

**पाण्डुरङ्गि** – किं चैकप्रकरणस्थवाक्यविषयत्वे उपजीव्योपजीवकभावे चाधिकरणभेद इति किमस्मिंस्तंत्रे तथादृष्टत्वादित्युच्यते किं पूर्वतन्त्रे । नाद्य इत्याह ।। किं चेति ।। न द्वितीय इत्याह ।। किं चौदुम्बराधिकरणेऽपीति ।। पूर्वभागः औदुम्बरो यूपो भवति यस्य पर्णमयी जुहूर्भवतीत्येवंरूप इत्यर्थः । साध्यभागः ऊर्ग्वा उदुम्बर इत्यादिरूपः । न पापं श्लोकं शृणोतीत्येवंरूप इत्यर्थः । उपजीव्योपजीवकभावमुपपादयति ।। न हीति ।। नन्वेकप्रकरणस्थ-वाक्यविषयत्वे उपजीव्योपजीवकभावे च सति यद्यधिकरणभेदस्तर्ह्यानन्दमयाधिकरणे तद्धेतुव्यपदेशादित्यस्याप्यधिकरणान्तरत्वं स्यादित्यत आह ।। तद्धेत्विति ।। समन्वेतव्यांत-राभावादिनेति ।। विकारशब्दब्रह्मशब्दादिपूर्वोत्तरपक्षीययुक्तीनां साधारण्येन चेत्यादिशब्दार्थः ।

## तात्पर्यचन्द्रिका

**यच्चोक्तं अत्तेत्यत्र साधारणाकारं विहायासाधारणाकारेण गौणार्थो वर्णनीय इति न्यायो व्युत्पादित इति । तन्न । प्रोद्गातॄणामित्यत्र षोडशर्त्विक्साधारणाकारं विहायासाधारणाकारेण भाष्यकारमत उद्गातृप्रस्तोतृप्रतिहर्तृसुब्रह्मण्यानां चतुर्णामेव वार्तिककारमतेऽपसुब्रह्मण्यानां त्रयाणामेव लक्षणायास्तृतीय उक्तत्वात् । ''मास-मग्निहोत्रं जुहोती''त्यत्राग्निहोत्रशब्दस्य होमत्वादिसाधारणाकारं हित्वा सूर्यदेवता-कत्वादिनित्याग्निहोत्रासाधारणाकारेणैव मासाग्निहोत्रे गौणतायाश्च सप्तम उक्तत्वेन पुनरिह तस्यावक्तव्यत्वादिति ।। टीकाक्षरार्थस्तु ।। तद्यदा विष्णोरन्यस्यैव स्यादित्यादि । पूर्वत्र सम्भवत्सर्वात्तृत्वं लक्षणत्वेनोक्तम् । ब्रह्मणि चाशुभभोक्तृत्वस्या**

सम्भवेऽपि ऋतपातृत्वरूपं शुभभोक्तृत्वं सिद्धान्तरीत्या सम्भवति । तत्र च पिबतोर्जीवेश्वरत्वमुपेत्य जीवे पातृत्वं मुख्यमीश्वरे त्वमुख्यमिति स्वीकारेऽसम्भवः । उभयोरपि मुख्यमिति स्वीकारे तु जीवस्यापि शुभभोक्तृत्वेनेश्वरवत्सर्वात्तृत्वस्यापि प्रसङ्गादतिव्याप्तिरित्यर्थः । तथा च द्वयोरपि पातृत्वं मुख्यमिति पूर्वपक्षोऽप्यत्राभिप्रेत इति द्रष्टव्यम् । यद्वा गुहाप्रविष्टत्वादिब्रह्मलिङ्गसहितस्यापि ऋतपातृत्वस्या-सम्भवोऽतिव्याप्तिर्वा यदा तदा तत्सहचरितस्य पूर्वोक्तात्तृत्वस्याप्यसम्भवोऽति-व्याप्तिर्वा स्यादित्यर्थः । तथा च लक्षणमयुक्तमिति । यद्यपि सर्वसंहर्तृत्वरूपं लक्षणं ब्रह्मण्येवेति पूर्वपक्षिणापि स्वीकृतम् । अत एव टीका ''कर्मभोगं विनापि संहर्तृत्वमात्रेण तदुपपत्ते''रिति । तथापि सिद्धांत्यभिप्रेतं संहर्तृत्वविशेषात्मकं भक्षयितृत्वरूपं लक्षणमयुक्तमिति भावः ॥ यस्सेतुरिति पिबतोरेकवचनेन विशेषणादित्यादि ॥ विशेषणाच्चेति सूत्रं यः सेतुरित्यादिभाष्येणैकवचनेन विशेषणात् ब्रह्मशब्देन विशेषणाच्चेति द्विधा व्याख्यातमिति भावः । उपलक्षणं चैतत् । सेतुत्वाक्षरत्वादिना विशेषणात् । ब्रह्मणश्च परत्वेन विशेषणादित्यपि व्याख्येयमिति ॥ इति गुहाधिकरणम् ।

**प्रकाशिका** – ॥ यच्चेति ॥ अत्तेतिसूत्रे ब्रह्मक्षत्रोपलक्षितचराचरस्य मृत्यूपसेचनत्व-विशेषणेनादनीयत्वलाभात्तत्सूचितस्य कृत्स्नात्तृत्वस्य संहर्तृत्वरूपत्वादत्ता विष्णुरित्युक्ते मृत्यूपसेचनत्वस्य मृत्युवशत्वाभावाभिप्रायेणोपपत्तेर्न तद्विशेषणेन ब्रह्मक्षत्रादेरदनीयत्वसिद्धि-रित्याशङ्क्य उपसेचनशब्दस्य गौणत्वेऽपि तद्वश्यत्वाभावरूपसाधारणाकारोपचारं विना स्वयमद्यमानत्वे सत्यन्यस्यादनहेतुत्वरूपविशेषाकारेणोपचार इत्यदनीयत्वसिद्धिरित्युक्त्वा साधारणाकारं विहायेत्यादिना सूत्रस्य तात्पर्यार्थ उक्तः । सोऽप्ययुक्तः । पौनरुक्त्यादित्यर्थः । तार्तीयं प्रोद्गात्रधिकरणं जन्माधिकरणे साप्तमिकं सामाग्निहोत्राधिकरणं च पादांत्यप्राणनये प्रपञ्चितम् । भाष्यकृन्मते प्रोद्गातृशब्दस्य षोडशर्त्विक्साधारणाकारं प्रकरणगतत्वं विहाय छन्दोगत्वरूपेणासाधारणाकारेणोद्गात्रादीनां चतुर्णां लक्षणयोक्तत्वात् । वार्तिकमते तु स्तोत्र-कारित्वसदस्सन्निहितत्वादिना ततोऽप्यसाधारणाकारेणापसुब्रह्मण्यानां त्रयाणामेव लक्षण-योक्तत्वात् । तथैव मासाग्निहोत्रेऽग्निहोत्रशब्दस्यासाधारणाकारेण गौणताया उक्तत्वादित्यर्थः । एतेन रामानुजरीतिं प्रायोऽनुसरतः कस्यचिन्मतमपि निरस्तं ध्येयम् । ''आत्मांतरात्मेति

हरिरेक एव द्विधा स्थित'' इत्यादिवचनविरोधेन शिव इति सिद्धान्तस्यायुक्तत्वाच्चेति । अत्र टीकायां ''तद्दतपानकर्तृत्वं यदि विष्णोरन्यस्यैव स्यात्तदा न तस्य सर्वात्तृत्वम् । यदि चान्यस्यापि भवेत्तदा लक्षणस्यातिव्याप्ति''रित्युक्तम् । तत्रानुपपत्तयः । पूर्वं सर्वात्तृत्वस्य लक्षणत्वेनाभिमतत्वादेकदेशस्यान्यमात्रगतत्वेऽपि नासम्भवः । न चैकदेशाभावादेव सर्वात्तृत्वमपि नेत्युच्यत इति वाच्यम् । सिद्धान्तेऽप्यशुभभोक्तृत्वाभावेन तद्दोषताद-दस्थ्यापातादित्येका । पूर्वपक्षे ऋतपातृत्वस्य जीवेश्वरोभयगतत्वोपगमेनान्यस्यैवेत्ययुक्त-मित्यन्या। यदि चेत्यत्रापि भगवति पातृत्वस्यैव पूर्वपक्षेऽनङ्गीकृतत्वेनान्यस्यापीत्यपि-पदास्वारस्यमित्येका। एकदेशस्यान्यमात्रगतत्वेऽपि कृत्स्नात्तृत्वस्यातिव्याप्त्यप्रसरादित्यपरा। ता एता निरसितुमाह ।। सम्भवति ।। असम्भव इत्यन्तेनाद्ययोर्निरासः । मुख्यमित्युक्त्या द्वितीयायाः । शेषेणाद्याया इति विवेकः । उभयोरपि मुख्यमित्यनेन तृतीयायाः सर्वात्तृत्वस्यापि प्रसङ्गादित्यनेनांत्यानिरस्तेति ध्येयम् । नन्वत्र छत्रिन्यायस्य टीकायामुक्तेः कथमुभयोर्मुख्य-त्वोक्तिरित्यत आह ।। तथा चेति ।। छत्रिन्यायोऽसम्भवपक्ष एवेति भावः । पूर्वं सर्वात्तृत्वं सङ्कुचितमुपेत्यासम्भवातिव्याप्ती उपपादिते । अधुनाऽसङ्कुचितमेव तदादाय तदुपपादयति ।। यद्वेति ।। पिबतोर्जीवेश्वरत्वमुपेत्य ब्रह्मलिङ्गसहचरितमपि पातृत्वं जीवे मुख्यमीश्वरे त्वमुख्यमिति स्वीकारे चराचरवाचकसर्वत्वरूपब्रह्मलिङ्गसहचरितमपि प्रागुक्तं सर्वात्तृत्वं जीव एव मुख्यमीश्वरे त्वमुख्यमित्यापत्त्याऽसम्भव इत्यर्थः । यद्युभयोरपीदं मुख्यं तदा प्राक्तनमपि सर्वात्तृत्वं द्वयोस्स्यात् । ब्रह्मलिङ्गबाधस्योभयत्र तुल्यत्वात् । तथा चातिव्याप्तिरित्यर्थः । ननु टीकायां ''तथा च लक्षणमयुक्त''मिति पूर्वपक्षोपसंहारोऽयुक्तः । ''कर्मफलभोगं विनापी''त्यादि पूर्ववाक्ये प्रागुक्तसंहर्तृत्वाङ्गीकारप्रतीतेरित्याशङ्कापूर्वं तद्व्याचष्टे ।। लक्षणमयुक्तमितीति ।। ''यस्सेतुरिति पिबतोरेकवचनेन विशेषणादेक एव पाता । स च ब्रह्मत्वविशेषणाच्च विष्णुरेवे''ति वाक्यस्योद्भाष्यत्वभ्रमं निराह ।। यस्सेतुरित्यादिना ।। ''सेतुत्वादक्षरत्वत'' इति स्वोक्तं टीकाविरुद्धमिति भ्रमं वारयति ।। उपलक्षणमिति ।। व्याख्येयमिति ।। ''यस्सेतुरीजानानामक्षरं ब्रह्म यत्पर''मिति भाष्यं सूत्रस्य सेतुत्वादिविशेषणादित्यर्थ-वर्णनपरतया व्याख्येयमित्यर्थः । शिष्टं स्पष्टमिति भावः ।। गुहाधिकरणम् ।। ३ ।।

**पाण्डुरङ्गि –** तद्यदीत्यादिटीकाऽनुपपन्ना । कर्मफलभोक्तृत्वस्यान्यनिष्ठत्वेऽपि जन्मादि-सूत्रोक्तसर्वसंहर्तृत्वादिरूपसर्वात्तृत्वस्य ब्रह्ममात्रनिष्ठत्वोपपत्त्याऽसम्भवाभावात् । न च भक्षयि-तृत्वरूपमपि सर्वात्तृत्वं ब्रह्मलक्षणत्वेनाभिमतमित्यन्यस्य तदङ्गीकारे तदसम्भव इति वाच्यम् ।

सर्वात्तृत्वमित्यत्र सर्वशब्दस्य सङ्कुचितवृत्तित्वाभ्युपगमे कर्मफलभोक्तृत्वांशेऽपि सङ्कोचापत्त्या असङ्कुचितत्वे चाशुभफलभोक्तृत्वस्यापत्त्या तस्य लक्षणत्वासम्भवात् । न च सम्भवत्सर्वात्तृत्वमेव लक्षणत्वेनाभिमतमिति वाच्यम् । कर्मफलभोक्तृत्वस्यापि कर्मबन्धरहिते ब्रह्मण्यसम्भवात् । तथा च कथमसम्भवः । एवं यदि चान्यस्यापीत्यादिटीकाप्यनुपपन्नैव । कर्मफलभोक्तृत्वरूपस्य ऋतपानकर्तृत्वस्यान्यनिष्ठत्वेऽपि लक्षणत्वेनाभिमतस्य सर्वात्तृत्वस्य ब्रह्ममात्रनिष्ठत्वेनान्यत्राभावेन लक्षणस्यातिव्याप्त्यसम्भवादित्यतो व्याचष्टे ॥ पूर्वत्रेत्यादिना ॥ अस्मिन्पक्षे द्वयोरपि पातृत्वं मुख्यमिति कुत्राप्यनुक्तस्य पूर्वपक्षस्य कल्पनं समायातीत्यतः पक्षांतरमाह ॥ यद्वेति ॥ टीकाकारैः स्पष्टतया ब्रह्मशब्देन विशेषणादित्यनुक्त्वाऽस्पष्टत्वादेकवचनेन विशेषणादिति व्याख्यातम् । तेन च तावन्मात्रमेवार्थ इति भातीत्यतो व्याचष्टे ॥ विशेषणाच्चेतीति ॥ पिबतोर्ब्रह्मत्वसाधकत्वेन स्वोक्तस्य सेतुत्वाक्षरत्वादेरुत्सूत्रितत्वभ्रांतिवारणाय तदप्युपलक्षणत्वेन सूत्रार्थतया योजनीयमित्याह ॥ उपलक्षणं चैतदिति ॥ गुहाधिकरणम् ॥ ३ ॥

## अन्तरधिकरणम्

**॥ ॐ अन्तर उपपत्तेः ॐ ॥ अत्र "य एषोंऽतरक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे"त्युक्तस्य चक्षुरंतस्स्थस्याभयस्याग्नित्वात् "अभयं तितीर्षतां पार"मिति पूर्वोक्ताभयोऽप्यग्नि र्न तु विष्णुरिति पूर्वपक्षोत्थानादनन्तरसङ्गतिः । अत्र चक्षुरंतस्स्थोऽग्निर्विष्णुर्वेति चिन्ता । तदर्थमन्तस्स्थे श्रुतममृतत्वादिकं किं गौणं किं वा मुख्यमिति । तदर्थं "य एष आदित्ये पुरुषः सोहमस्मी"त्यक्ष्यभिन्नादित्यस्थपुरुषे प्रयुक्तोऽहंशब्दः किमग्निपरः किं वा ब्रह्मपर इति । तदर्थं ब्रह्मपरत्वे "अस्मद्विद्यात्मविद्या चे"त्युक्तो विद्याभेदो न घटत उत घटत इति ।**

**प्रकाशिका** – ॥ ॐ अन्तर उपपत्तेः ॐ ॥ भाष्यदिशाऽऽनन्दमयनयेन सङ्गतिप्रतीतेः पूर्वेण तामाह अत्रेति पूर्वोक्तेति विशेषणाच्चेति सूत्रोक्तेत्यर्थः । सङ्गतिराक्षेपिकी भाष्यं तु फलपरं वा येन केनचित्पूर्वेण सङ्गतिर्वाच्या न त्वव्यवहितेनेति निर्बन्ध इत्याशयं वाऽऽदित्यांतस्स्थितत्वलिङ्गस्यापि समन्वयाशयं वा नेयमिति भावः । नन्वस्याभयस्याग्नित्वे प्राक्तनस्यापि कुतस्तत्वं अभ्यासार्थवादसहिताग्निश्रुतिबाहुल्यरूपविशेषहेतोरत्रेव तत्राभावात् न

हीन्द्रस्यात्मेत्यत्रेन्द्रस्यान्यत्वे इन्द्रो राजेत्यत्रापि अन्यत्वं प्रत्युत तत्रोक्तलिङ्गैस्तस्य विष्णुधर्मत्वाध्यवसायेनात्रापि तेन विष्णुत्वस्यैव निर्णयोपपत्तेरिति चेन्मैवम् । अभयत्वमन्यतो भयशून्यत्वम् । तच्च स्वतन्त्रस्यैव । नत्वन्यनियतस्य । तथा चात्राभयत्वमग्नेरवश्यमिति स्वतन्त्रवस्तुद्वयायोगात् प्राक्तनमप्यभयत्वं तस्यैवेति तद्बलेनेतरदपि कथंचिन्नेयम् । एकेनापि निरवकाशेन बहूनां बाधसम्भवाद्ब्रुहाविष्टत्वस्याग्नावप्युपपत्तेः । ब्रह्मत्वस्यात्रेव तत्रापि नेतुं शक्यत्वात् । अमृतत्वं तस्मिन् शङ्कमानेनाक्षरत्वादेरपि तत्रैव शङ्कितुं शक्यत्वात् । अस्याभयत्वस्याक्षेपेण तेन विष्णुत्वशङ्कानवकाशादिति तात्पर्यात् । एवं फलपरभाष्यसमर्थनमपि ध्येयम् । विषयटीकां व्यनक्ति ॥ अत्रेति ॥ छान्दोग्ये चतुर्थेऽध्याये ''उपकोसलो ह वै कामलायनः सत्यकामेजाबाले ब्रह्मचर्यमुवास । तस्य ह द्वादशवर्षाण्यग्नीन्परिचचार । सहस्मान्यानन्तेवासिनस्समावर्तयंस्तं हस्मैव न समावर्तयति ॥ तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्परिचचारीत् । मात्वाग्नयः परिप्रावोचन् । प्रब्रूह्यस्मा इति तस्मैहाप्रोच्यैव प्रवासांचक्रे। सहव्याधिनाऽनशितुं दध्रे । तमाचार्यजायोवाच ब्रह्मचारिन्नशान किं नु नाश्नासीति। सहोवाच बहव इमेऽस्मिन्पुरुषे कामानानात्ययाव्याधिभिः परिपूर्णोस्मि नाशिष्यामीति । अथ हाग्नयस्समूदिरे तप्तो ब्रह्मचारी कुशलं नः परिचचारीद्धंतास्मै प्रब्रूमेति । तस्मैहोचुः । प्राणो ब्रह्मकं ब्रह्मखं ब्रह्मे''त्याद्युपक्रम्य सम्भूतोपदेशानन्तरं ''अथ हैनं गार्हपत्योनुशशास पृथिव्यग्निरन्नमादित्य इति । य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति । स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति जोग्जीवति नास्यापरपुरुषाः क्षीयंत उप वयं तं भुञ्जामोऽस्मिन्लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्त'' इत्यादिना गार्हपत्यान्वाहार्यपचनाहवनीयरूपत्रेताग्नीनामादित्यचन्द्रविद्युद्गतस्य स्वात्मत योऽपदेशमुक्त्वा ''ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या चेत्युप-संहृत्याम्नायते ''य एषोंऽतरक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभय-मेतद्ब्रह्मैतस्मिन्न किं च न श्लिष्यति तद्यदप्यस्मिन्सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छति । एतं संयद्वाम इत्युपासीत एतं सर्वाणि वामान्यभिसंयंति य एवं वेद । एष उ एव वामनिरेष हि सर्वाणि वामानि नयति य एवं वेद । एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति य एवं वेद । अथ यदुचैवास्मिंश्छव्यं कर्म कुर्वन्ति यदुचनार्चिषमेवाभिसम्भवंत्यर्चिषोह रह्न आपूर्यमाण-पक्षमापूर्यमाणपक्षाद्यान्षड्डुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादि-त्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः । स एनान्ब्रह्म गमयती''त्यादि ।

तत्रत्यश्चक्षुरंतस्स्थो विषय इत्यर्थः । अत्राक्षिस्थ इति वक्तव्ये चक्षुरित्युक्तिरादित्याभेद-स्फोरणाय। आदित्यश्चक्षुर्भूत्वेत्यादेः । अत्राक्षिपदोक्तं चक्षुः प्राचां मतरीत्या देवतारूपम् । टीकारीत्या जडरूपमिति ज्ञेयम् । मुख्यमिति चिन्तानन्तरं किं बाधकमस्त्युत नेति चिन्ता स्पष्टेति नोक्ता ॥ अक्ष्यभिन्नेति ॥ वक्ष्यमाणदिशेति भावः । एतच्च हेतुहेतुमद्भावघटनाय । अन्यथाऽऽदित्यस्थ पुरुषे प्रयुक्ताहंशब्दस्याग्निपरत्वेऽप्यक्षिस्थस्याग्नित्वानापत्तेः ॥ विद्येति ॥ ''उपकोसलैषा सोम्यास्मद्विद्याऽऽत्मविद्या चे''त्युक्तविद्याभेद इत्यर्थः । उपलक्षणमेतत् । सावधारणाभ्यासोर्थवादश्चेत्यपि ध्येयम् । यदा विद्याभेदो न युक्तस्तदा कं ब्रह्मेत्याद्यात्मविद्या । य एषोऽन्तरादित्य इति विद्या त्वस्मद्विद्येति वाच्यत्वादादित्यस्थपुरुषे प्रयुक्ताहंशब्दस्याग्नि परत्वाद्बाधकात्तदभिन्नाक्षिस्थे श्रुतामृतत्वादिकं गौणमित्यग्निश्रुत्यादि बलादग्निरेव चक्षुरंतस्स्थ इति पूर्वपक्षे फलम् । यदा तु घटते तदाहंशब्दस्य शास्त्रदृष्ट्या ब्रह्मपरत्वसम्भवाद्बाधकाभावे-नामृतत्वादिकं मुख्यमेवेति तद्बलाद्विष्णुरिति सिद्धान्ते फलमिति स्पष्टमिति भावः । नन्वत्र वक्ष्यमाणदिशा टीकादिरीत्या चादित्यवाक्येऽग्निप्रयुक्ताहंशब्दसावधारणाभ्यासार्थवाद-विद्याभेदानां भावेन तद्बलात्तस्याग्निपरत्वं निर्धार्याक्षिवाक्यस्याप्येतदनुसारेणाग्निपरत्वमुच्यते पूर्वपक्षे । न त्वक्षिवाक्यस्थप्रापकबलेन । तत्र तदभावात् । तथा चादित्यवाक्यमेवोदाहृत्यादि-त्यांतस्स्थः किमग्निर्विष्णुर्वेति चिन्ता । तदर्थं सोऽहमित्यग्निप्रयुक्तोऽहंशब्दोऽग्निपरो विष्णुपरो वेति । तदर्थं तस्य विष्णुपरत्वे सोऽहमस्मि स एवाहमस्मीत्यादिसावधारणाभ्या-सार्थवादविद्याभेदोक्तयो न युज्यंते युज्यन्ते वेति चिन्तनीयम् । यदि न युज्यन्ते तदाग्नेरेवादित्यस्थत्वमन्यथा तु विष्णोरिति फलिष्यति । आदित्यस्थत्वेनोक्तानन्दमयापेक्षश्च ऋजुर्भवति । आदित्यस्थस्य विष्णुत्वे चार्थादक्षिस्थोऽपि स एवेति सिध्यति । तथा च सूत्रेऽक्षिवाक्योपादानाय तत्रत्यात्मशब्दार्थोक्तिपरशब्दोऽपि व्यर्थ इत्यन्तरित्येव सूत्रं स्यात् । अन्तर इत्यपि न वक्तव्यमिति लाघवम् । स्थानादिसूत्रं च न कर्तव्यं स्यादिति चेन्मैवम् । बलवद्विष्णुश्रुतिलिङ्गादि बलेनादित्यस्थस्य विष्णुत्वे निर्णीते सत्येवाहंशब्दादेश्शास्त्रदृष्ट्यादिना विष्णौ घटनाया वर्णनीयत्वात् विष्णुश्रुत्यादेश्चाक्षिवाक्य एव भावेनादित्यवाक्ये विष्णुपरत्वाव-धारणस्याक्षिस्थस्य विष्णुत्वनिर्णयाधीनत्वेनाक्षिवाक्यस्यैवोदाहर्तव्यत्वात् । न च सुखविशिष्टे-त्युक्तेन कं ब्रह्मेति ब्रह्मप्रकरणेनादित्यस्थस्य विष्णुत्वनिर्णयोऽस्त्विति शङ्क्यम् । तस्याग्निप्रयुक्ताहंश्रुत्यादिनाविच्छेदस्य पूर्वपक्षिणा चोद्यमानत्वात् । न च श्रुतोपनिषदिति सूत्रोक्तोपसंहारस्थब्रह्मलिङ्गबलेन प्रकरणाविच्छेदस्सुज्ञान इत्यतः ''सुखविशिष्टाभिधानादेव च,

श्रुतोपनिषत्कगत्यभिधानाच्चे''त्येव पूर्यत इति वाच्यम् । तावता बलवद्विष्णुश्रुति-लिङ्गानामनुपदर्शनेन प्रकरणमात्रेणाहंशब्दाभ्यासादेर्बाधायोगाद्यथान्यासमे वानवद्यम् । अत एवामृतत्वादिकं किं गौणमित्यादिचिन्तोपदर्शिता । यद्यप्यमृतत्वादेर्मुख्यत्वेऽपि न पूर्वपक्षिणः क्षतिः । तादृशस्यापि तेनाग्नौ शङ्क्यमानत्वात् । तथापि वास्तवाभिप्रायेण गौणं मुख्यमिति कोटिप्रदर्शनम् । मुख्यसम्भवस्याभिमानमात्रत्वात् ।

**पाण्डुरङ्गि** – ॥ ॐ अन्तर उपपत्तेः ॐ ॥ ब्रह्मजिज्ञासा कर्तव्येत्युक्तमित्यानन्दमयाधि-करणभाष्यवदादित्ये विष्णुरित्येतदधिकरणीय भाष्यमपि विचारसांफल्यमात्रपरं न तु सङ्गतिपरमित्यभिप्रेत्य स्वयमवान्तरसङ्गतिमाह ॥ अत्रेति ॥

## तात्पर्यचन्द्रिका

पूर्वपक्षस्तु । चक्षुरंतस्स्थोऽग्निरेव । ''य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मी''त्यग्निनादित्यस्थस्य स्वात्मतयोपदिष्टत्वात् । चक्षुरादित्यदेवतयोश्च ''आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविश''दित्यादिश्रुत्यैक्यात् । यद्यप्यक्षिणी प्राविशदित्यत्र बाधकवशादक्षिशब्दो नादित्यदेवतापरः किन्तु जडपरः । तथाप्यन्तरक्षिणीत्यत्र चक्षुःपर्यायः स देवतापर एव । अभिमान्यधिकरणन्यायेन तस्याक्ष्यभिमानिदेवता-यामेव मुख्यत्वात् । ''यश्चक्षुषि तिष्ठंश्चक्षुषोन्तर'' इति श्रुत्यन्तरेऽन्तरपुरुषाधि-करणत्वेनोक्तस्य चक्षुष इहांतरक्षिणीति प्रत्यभिज्ञानाच्च । तत्रोक्तस्य च चक्षुषो ''यं चक्षुर्न वेदे''ति वाक्यशेषेण चेतनत्वात् । स्थानादिसूत्रादौ जडस्य स्थानत्वोक्तिस्तु परंपरया स्थानत्वात् । अत एव भाष्ये सन्न्यायरत्नावल्यां च ''अक्ष्यादित्ययोरैक्या'' दित्येवोक्तम् । तत्वप्रदीपे च ''अक्षीन्द्रिय- प्रेरकादित्ययोरैक्या''दित्येवोक्तम् । ''अक्ष्यादित्ययोरेकविधत्वा''दिति टीकापि भाष्याद्यनुसारेण प्रकारभेदनिषेधमुखेन प्रकार्यैक्यपरा नेया । यद्वा अक्षिणी प्राविशदित्यत्रेवान्तरक्षिणीत्यत्राप्यक्षिशब्दो जडपरः । एवं च स्थानादिसूत्रादिस्वारस्यम् । ''य एष आदित्ये पुरुषो दृश्यते य एषोंऽतरक्षिणि पुरुषो दृश्यत'' इति वाक्यद्वयवैयर्थ्यं च । न चैवमक्ष्यादित्ययोर्भिन्न-त्वादादित्यस्थत्वेऽप्यक्षिस्थत्वासिद्धिरिति वाच्यम् । आदित्यश्चक्षुरिति श्रुतावादि-त्यमण्डलस्थ चेतनस्य जडाक्षिप्रवेशोक्त्या जडाक्ष्यादित्यमण्डलयोरेकचेतनस्थानत्वेनै-कविधत्वात् । ''य एष आदित्ये पुरुषो दृश्यत'' इत्यत्राप्यादित्यपदेन

**मण्डलमेवोच्यते। ''ऐक्या''दिति भाष्येऽपि जडाक्ष्यादित्ययोरैक्यायोगादेकविधत्व-मेवाभिप्रेतमिति टीकार्थः । यद्यप्यंशाधिकरणे ''असावादित्यस्त्रिवृस्त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिके''ति श्रुत्या त्रिवृत्त्येऽवक्ष्यादित्ययोः साम्यं वक्ष्यते । तथापि न तदिह वक्ष्यते । तेनादित्यस्थस्याक्षिस्थत्वासिद्धेः ।**

**प्रकाशिका** – उपपत्तेरित्यादिसिद्धान्तहेतुव्यावर्त्यैरग्निप्रापकश्रुत्यर्थवादाभ्यासैः पूर्वपक्षयन्य एषोंऽतरक्षिणीति वाक्येऽग्निरेवेत्यादिबह्वग्निश्रुतिसद्भावाच्चेत्यन्तटीकां तावद्व्यनक्ति ॥ पूर्वपक्ष-स्त्वित्यादिनाऽऽग्निपरतेत्यन्तेन ॥ नन्वग्निनाऽदित्यस्थस्य स्वात्मतयोपदेशेऽप्यक्षिस्थस्याग्नित्वं कुत इत्यतश्चक्षुरादित्यशब्दयोर्भाष्यतत्वप्रदीपाद्यनुरोधेन देवतापरत्वमुपेत्य तत्रोपपत्तिं वदंस्तावत्परिहारमाह ॥ चक्षुरिति ॥ आदित्यो मण्डलदेवता चेतनश्चक्षुरभिमानी भूत्वाऽक्षिगोलके प्राविशदित्यर्थः । नन्वक्षिणी इत्यत्राक्षिशब्दस्य गोलकपरत्वादत्राप्य-क्षिशब्दस्य न देवतापरत्वमित्याशङ्क्य साधयति ॥ यद्यपीति ॥ बाधकेति ॥ आदित्यदेवता-याश्चक्षुर्देवतायां प्रवेशायोगरूपादित्यर्थः । चक्षुःपर्यायः चक्षुरिन्द्रियपर्यायो न तदधिष्ठान-गोलकपर्याय इत्यर्थः । सः अक्षिशब्दः ॥ अभिमानीति ॥ द्वितीयस्याद्यपादे ''अभिमानि-व्यपदेशस्तु विशेषानुगतिभ्यां'' इति तृतीयेऽधिकरणे ''मृदब्रवी''दित्यादिवाक्यं प्रमाणं न वेति संशये मृत्त्वादिहेतुना मृदादेर्जडत्वानुमानादभिमानिचेतनस्यानुपलम्भादिबाधितत्वाज्जडस्य च वक्तृत्वाद्ययोगादप्रमाणमिति प्राप्ते निरवकाशजडत्वयुक्तिनिर्दोषवेदवाक्यप्रामाण्योभयान्यथानुप-पत्त्या ''पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजस'' इत्यादिवचनेन च देवतातद्विग्रहतदन्तर्धानशक्त्यादिसिद्धेः अभिमन्यमानगतमृत्त्वादिमृच्छब्दप्रवृत्तिनिमित्तस्याभि-मान्यधीनत्वस्याकाशनये ''यतोऽत्यंतपराधीनं चेतनादप्यचेतन''मित्युक्तदिशा सिद्धत्वात् ''तदधीनत्वा''दित्यत्रोक्तन्यायेन स्वातंत्र्यस्य शब्दवृत्तौ मुख्यनिमित्तत्वेन मृदादिशब्दानाम-भिमानिषु मृदादिजडेभ्यो मुख्यत्वान्मृदादिशब्दैर्देवताया एवाभिधानमिति वक्तृत्वाद्युपपत्तेः प्रमाणमेवेत्युक्तम् । तेन न्यायेन मुख्यत्वादित्यर्थः । तथा च मुख्यामुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति न्यायेन मुख्यदेवताया एव ग्रहणं न त्वमुख्यजडस्येति भावः । युक्त्यंतरं चाह ॥ य इति ॥ चक्षुःशब्दस्य देवतापरत्वं कुत इत्यत आह ॥ तत्रेति ॥ श्रुत्यंतर इत्यर्थः । जडस्य वेदनप्रसक्तेरभावेन न वेदेति निषेधायोगात्तदन्यथानुपपत्त्या चेतनत्वसिद्धिरिति भावः । व्यक्तमेतदुत्तरनये । ननु ''स्थानादिव्यपदेशाच्चे''ति सूत्रे ''तद्यदस्मिन्सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छती''ति श्रुतौ जडस्यैवाक्ष्णो सञ्ज्ञाख्यशक्तिव्यपदेशादक्षिशब्देन चेतनग्रहणे

सर्पिराद्यलेपस्थानशक्तिव्यपदेशो न युक्त इत्यत आह ।। स्थानेति ।। असङ्गविष्ण्वाधारदेवताधारत्वाभिप्रायेण सिद्धान्ते तदुक्तिरित्यर्थः । अक्ष्णोर्जडत्वोपगमपरतया प्रतीयमानापि टीका चेतनपरत्वेन नेयेत्याह ।। अक्षीति ।। विधाशब्दस्य प्रकारार्थत्वादेकविधत्वादित्यनेनाक्ष्णोर्यद्देवताधिष्ठानत्वं तद्देवताधिष्ठानत्वमादित्यमण्डलस्यापि । न तु देवतान्तराधिष्ठानत्वमिति प्रकारभेदनिषेधप्रतीतावप्युभयाधारत्वरूपैकप्रकारवान्प्रकारी चेतन एक एवेति नेयेत्यर्थः । इदानीमनेकस्वारस्यानुरोधेन टीकारीत्याक्ष्णोर्जडत्वमुपेत्याक्ष्यादित्ययोरैक्यप्रकारमाह ।। यद्वेति ।। आदिपदेन सर्पिर्वेति श्रुतिर्गृह्यते ।। वाक्यद्वयेति ।। चेतनपक्षे द्वयोरेकदेवताकत्वादन्यतरवैयर्थ्यमिति भावः । एकविधत्वादिति टीकावाक्यं टीकोक्तव्यावर्त्यशङ्काव्यक्तिपूर्वं व्यनक्ति ।। न चेति ।। एवं जडत्वे । ननु य एष आदित्य इत्यत्रादित्यश्चक्षुर्भूत्वेत्यादाविवादित्यशब्दस्य चेतनपरत्वे मण्डलाभिमानि चेतनस्थस्यैव स्वात्मत योपदेशादक्ष्णश्चैकचेतनस्थानत्वेनैकविधत्वादक्षिचेतनस्थ एवाग्निरिति वाच्यमित्यत आह ।। य एष इति ।। एवं च प्राचीनरीत्याऽक्ष्यादित्यदेवतयोरेकत्वादादित्यदेवतांतस्स्थस्य स्वात्मतयोपदेशेऽक्षिदेवतांतस्स्थोऽपि स एव । उभयदेवताया एकत्वादित्यर्थः । टीकाकृन्मतेऽक्ष्यादित्ययोर्जडत्वेऽप्येकदेवताधिष्ठानत्वादादित्यमण्डलस्थस्याग्नित्वं आदित्यस्थस्य स्वात्मतयोपदेशादिति हेतुर्न व्यधिकरण इति सिद्धम् ।

**पाण्डुरङ्गि** – अक्ष्यादित्ययोरैक्यादित्ययुक्तम् । आदित्यशब्दस्य मण्डलपरत्वे मण्डलस्याक्षिषु प्रवेशासम्भवेन तद्गतचेतनपरत्वात् । य एषोऽतरक्षिणीत्यत्राक्षिशब्दस्य मण्डलपरत्वात् । न चात्राप्यक्षिशब्दस्य चेतनपरत्वेनाक्ष्यादित्ययोरैक्यं युक्तमिति वाच्यम् । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदित्यत्राक्षिशब्दस्य चेतनपरत्वे तत्रादित्यमण्डलस्थचेतनस्य तत्र प्रवेशासम्भवेनाक्षिशब्दस्य चेतनपरत्वासम्भवेन गोलकपरत्वस्यैव वक्तव्यत्वात् । तदनुसारेणान्तरक्षिणीत्यत्रापि गोलकपरत्वस्यैव विद्यमानत्वेन जडस्याक्ष्णश्चेतनेनादित्यैक्यासम्भवादित्यत आह ।। यद्यपीति ।। बाधकवशादिति ।। अक्षिशब्दस्य चेतनपरत्वे तत्र चेतनप्रवेशानुपपत्तिरूपबाधकवशादित्यर्थः । चक्षुश्शब्दस्य देवतापरत्वेन तत्पर्यायाक्षिशब्दस्यापि देवतापरत्वमेवेत्याह ।। चक्षुःपर्याय इति ।। अभिमान्यधिकरणन्यायेनेति ।। अभिमन्यमानवाचकानां शब्दानामभिमानिनि मुख्यत्वादिति न्यायेनेत्यर्थः । यश्चक्षुषि तिष्ठन्निति श्रुत्यन्तरेतरपुरुषाधिकरणत्वेनोक्तस्य चक्षुषोऽतरक्षिणीत्यत्र प्रत्यभिज्ञानेऽप्यंतरक्षिणीत्यत्रोक्तस्याक्षणश्चेतनत्वं कुतः । यश्चक्षुषि तिष्ठन्निति वाक्योक्तस्य चक्षुषोऽप्यचेतनत्वादित्यत आह ।।

तत्रोक्तस्येति ॥ ज्ञानप्रसक्तौ सत्यां तदभावश्चेतनत्वाभावेन सम्भवति । अचेतने ज्ञानप्रसक्तेरेवाभावात् । तथा च तदन्यथानुपपत्त्या चक्षुषश्चेतनत्वसिद्धिरित्यर्थः । नन्वक्षिशब्दस्य चेतनपरत्वे तद्यदस्मिन्सर्पिर्वोदकं वा सिंचतीत्यादिवाक्योक्ता सङ्गत्वरूपस्थानशक्तेरसम्भवेन जडस्यैव सम्भवेनाक्षिशब्देन जडपरत्वमेवास्थेयमित्यत आह ॥ स्थानादीति ॥ परंपरयेति ॥ मञ्जूषास्थोऽपि हि मणिर्गेहस्थ इति गीयत इति न्यायेनांतरपुरुषाधिकरणचेतनाधिष्ठानत्वेन परंपरया स्थानत्वादित्यर्थः ॥ अत एवेति ॥ उक्तरीत्याऽऽदित्यशब्दवच्चक्षुश्शब्दस्यापि देवतापरत्वेनाक्ष्यादित्ययोरैक्यस्याभिप्रेतत्वादेवेत्यर्थः । नन्वेवमक्ष्यादित्ययोरैक्यं चेत्तर्हि टीकायामक्ष्यादित्ययोरेकविधत्वादित्येकविधत्वोक्तिरयुक्तेत्यत आह ॥ अक्ष्यादित्ययोरिति ॥ प्रकारभेदनिषेधमुखेनेति ॥ स्थानभेदात्तापकत्वतदभावादिना तदभेदानुपपत्तिरित्याशङ्क्य

अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथास्थितिः ।
तदेव नाणुमात्रोऽपि भेदस्स्वांशांशिनोः क्वचित् ॥

इति न्यायेन प्रकारभेदनिषेधनेत्यर्थः । नन्वेवमक्ष्यादित्ययोरेकविधत्वादिति टीकाया भाष्याद्यनुसारेण प्रकारभेदनिषेधमुखेन प्रकार्यैक्यपरत्वेन व्याख्याने गौणत्वापत्तिः । किं च परंपरया स्थानत्वेन स्थानादिसूत्रादौ जडस्य स्थानत्वोक्तौ स्थानादिसूत्रस्याप्यस्वारस्यम् । य एष आदित्ये पुरुषो दृश्यते य एषोंऽतरक्षिणि पुरुषो दृश्यत इत्यत्र वाक्यद्वयवैयर्थ्यं च स्यादित्यस्वरसाट्टीकानुसारेण पक्षान्तरमाह ॥ यद्वेति ॥ नन्वेवमादित्यश्चक्षुरित्यत्रादित्यशब्दस्यादित्यमण्डलपरत्वे जडयोरक्ष्यादित्यमण्डलयोरैक्याभावेनाक्ष्यादित्ययोरिति भाष्यविरोध इत्यत आह ॥ ऐक्येति ॥ एकविधत्वमिति ॥ एकचेतनाधिष्ठितत्वरूपमेकविधत्वमित्यर्थः । ननु चाक्ष्यादित्ययोरेकचेतनाधिष्ठितत्वेनैकविधत्वं कुत उच्यते । त्रिवृत्त्वादिनाप्येकविधत्वसम्भवादित्यत आह ॥ यद्यपीति ॥

## तात्पर्यचन्द्रिका

**न च वाच्यमक्ष्यादित्यस्थयोरेकत्वेऽपि सोऽहमस्मीत्यत्रोपदेष्टा नाग्निः किन्तु विष्णुरिति । ''अग्नीन्परिचचार । अथ हाग्नयः समूदिर'' इत्यादिना बहुकृत्वोऽग्निश्रुतेः । बहुवचनांताग्निश्रुतेश्च । ''अथ हैतं गार्हपत्योऽनुशशास अथ हैनमन्वाहार्यपचनोऽनुशशास अथैनमाहवनीयोऽनुशशासे''त्यग्निविशेषत्वेन प्रसिद्धत्रेताग्निरूप-**

बह्वग्नीनां श्रुतेश्च । स्वीकृता च सिद्धान्तिनापि तत्राग्निगार्हपत्यादिशब्दानामग्निपरता । न च वाच्यमग्नीनामेवोपदेष्टृत्वेऽपि शास्त्रदृष्टचेति न्यायेनाहमित्यस्यान्तर्यामिपरतेति । ''ब्रह्मैवाक्षिस्थत्वेनोपास्य''मिति । ''उपवयं तं भुञ्जाम'' इत्यग्नीनामुपासकपालकत्वादिना स्तुतिरूपार्थवादस्य तेषामुपास्यत्वं विनाऽयोगेन तेषामेवाहंशब्दार्थत्वात् । न ह्यन्य उपासकपालकोऽन्यश्चोपास्य इति युक्तम् । ''सोऽहमस्मि स एवाहमस्मि'' इति सावधारणमभ्यासाच्च । अभ्यासो ह्यभ्यस्यमानशब्दस्वरसप्रतिपन्नेऽर्थे तात्पर्यार्थः। अग्निरेव चाग्निप्रयुक्ताहंशब्देन स्वरसप्रतिपन्नः । किं च ''कुशलं नः पर्यचारीद्धंतास्मै प्रब्रवाम । उपवयं तं भुञ्जाम'' इत्यादौ सिद्धान्तेऽपि बहुकृत्वोऽस्मच्छब्देनाग्नीनामेव निर्देशात्तेषामेवेहाप्यहंशब्दार्थत्वम् । किं चास्मद्विद्याऽऽत्मविद्या चेति विद्याशब्दोऽभ्यस्यत इति विद्याभेदार्थं कं ब्रह्मेत्यादिकात्मविद्याऽऽदित्यस्थादिविद्या त्वग्निविद्येति स्वीकार्यम् । आदित्यस्थ एव चाक्षिस्थ इति पूर्वमेवोक्तमित्यक्षिस्थोऽग्निरेव । तदेतदभिप्रेत्योक्तं न्यायविवरणे ''सोऽहमस्मि स एवाहमस्मीत्याद्यभ्यासार्थवादसहितबहुश्रुतिभ्य'' इति । अत्र चोक्तरीत्या त्रिविधा बहुश्रुतिरग्नीनामुपदेष्टृत्वे हेतुः । अर्थवादाभ्यासौ तूपदेष्टॄणामग्नीनामेव सोऽहमस्मीत्यत्रास्मच्छब्दार्थत्वे हेतुः । आदिशब्देन च ''कुशलं नः पर्यचारी''दित्याद्यभ्यासावभिप्रेतौ । यद्वा टीकोक्तरीत्या न्यायविवरणस्थाभ्यासः ''यश्चासावादित्य'' इत्यादिसमाख्याबाधे हेतुः । ''अपहते पापकृत्या''मित्यर्थवादस्तु ब्रह्मपक्षेऽपूर्वतेति शङ्कानिरासे हेतुः । अत्र च टीकायां न्यायविवरणस्याद्या योजना स्फुटेति तामुपेक्ष्य न्यायविवरणोक्तसाहित्यस्वारस्यार्थं समाख्यातोऽभ्यासः प्रबलः । अपूर्वत्वादप्यर्थवाद इति न्यायव्युत्पादनार्थं च द्वितीययोजनैवोक्ता ।

**प्रकाशिका** – अथाप्यसिद्धो हेतुः । सोऽहमस्मीतिश्रुतावहंशब्दस्याग्निपरत्वे मानाभावेनादित्यस्थस्य स्वात्मतयोपदेशाभावादिति भावेन ''न चात्रोपदेष्टा नाग्निरिति युक्त''मिति न्यायविवरणटीकोक्तव्यावर्त्यां शङ्कापूर्वं ''एतस्मिन्प्रकरणे अथ ह्यग्नय'' इत्यादि टीकां व्यनक्ति ॥ न च वाच्यमित्यादिना ॥ विष्णुरिति ॥ ''अहं हि सर्वयज्ञानां भोक्ता चे''त्यादाविव विष्णुप्रयुक्त एवायमहंशब्द इति स एवार्थ इत्यर्थः । उपदेष्टुरग्नित्वे त्रिविधाग्निश्रुतीर्मानीकरोति ॥ अग्नीनिति ॥ ''योऽसावादित्ये पुरुषः सोऽहमस्मी''त्यतः पूर्वं ''तस्य

द्वादशवर्षमग्नीन्परिचचार तप्तो ब्रह्मचारी कुशलमग्नीन्परिचचारीत् अथाग्नयस्समूदिरे ते होचु''रिति बहुकृत्वश्श्रूयते बहुवचनांततया च । बहुवचनांतस्य प्रसिद्धाग्निपरत्वेन मुख्यबहुत्वार्थतयोपपत्तौ न विष्णुपरत्वं क्लेशेन कल्प्यमिति भावः । अत्राग्निशब्दस्यांतरधिकरणन्यायेन विष्णुपरता किं न स्यादित्यतः तत्रेवात्र निरवकाशविष्णुलिङ्गाभावेनाग्न्यर्थतैवेति भावेनाह ॥ स्वीकृता चेति ॥ एतेन ''बहुश्रुतिभ्य'' इति न्यायविवरणविवरणपरा ''एतस्मिन्प्रकरणेऽथ हाग्नयस्समूदिरे गार्हपत्योऽनुशशासेत्यादिबह्वग्निश्रुतिसद्भावाच्चे''ति टीका बहुकृत्वोऽग्निश्रुतीनां सद्भावात् बहुवचनांताग्निश्रुतीनां सद्भावात् गार्हपत्यान्वाहार्यपचनादिरूपाणां बहूनामग्नीनां श्रुतिसद्भावाच्चेति त्रेधा व्याख्याता । तेन बहुश्रुतिभ्यइत्येतदपि त्रेधा व्याख्यातं ध्येयम् । एवं ''अभ्यासार्थवादसहितबहुश्रुतिभ्य'' इति न्यायविवरणे बहुश्रुतिभ्य इत्यंशं व्याख्यायार्थवादसहितेत्यंशं टीकोक्तादपि प्रकारात्प्रकारांतरेण व्यावर्त्य शङ्कापूर्वं व्याचष्टे ॥ न च वाच्यमिति ॥ उपासकपालकत्वादिनेति ॥ ''उपवयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्चय एवं विद्वानुपास्त'' इत्यत्र भुञ्जामः पालयाम इत्यग्नीनां वचनम् । भुजोऽनवन इति सूत्रेणानवन व्यतिरिक्तेऽभ्यवहार एवात्मनेपदविधानात्परस्मैपदप्रयोगात्पालकत्वं ज्ञायत इति भावः । अर्थवादस्य चातुर्विध्यादुक्तं स्तुतीति ॥ अभ्यासोऽपि सोऽहमस्मीत्यादिरूप एकः अग्निप्रयुक्तास्मच्छब्दाभ्यासरूपोऽन्यः विद्याशब्दाभ्यासश्चेति त्रिविधोऽभिमत इत्याह ॥ सोऽहमिति ॥ यद्यपि प्रब्रवामेत्यत्र नास्मच्छब्दनिर्देशोऽस्ति । तथाप्युत्तमपुरुषप्रयोगाद्वयमिति लभ्यते । ''अस्मद्युत्तम'' इति विधानादिति भावः । अस्त्वादित्यस्थविद्याग्निविद्येति । अक्षिस्थोऽग्निरित्यत्र किमायातमित्यत आह ॥ आदित्यस्थ एवेति ॥ उक्तमर्थं न्यायविवरणारूढतया दर्शयति ॥ अत्र चेति ॥ स्वयमेकं पक्षमुत्प्रेक्ष्य टीकोक्तपक्षमनुपपत्तिनिरासपूर्वं साधयितुमाह ॥ यद्वेति ॥ प्राक्पक्षे साहित्यपदास्वारस्यमिति हृदयम् । तेन श्रुतेरेव प्राधान्यं तद्बाधनिरासे न तदुपोद्बलकत्वस्यैव प्रतीतेरिति व्युत्पादनार्थमिति प्रदर्शनार्थमित्यर्थः । समन्वयादित्यत्रैव व्युत्पादितत्वात् ।

**पाण्डुरङ्गि** – एतत्प्रकरणे अथ हाग्नयस्समूदिरे इत्यादिटीकाऽसङ्गतेत्यतस्तन्निवर्त्याशङ्कामुत्थापयति ॥ न च वाच्यमिति ॥ बहुश्रुतिभ्य इति न्यायविवरणानुसारेण प्रवृत्तां अथ हाग्नयस्समूदिरे गार्हपत्योऽनुशशासेत्यादिबह्वग्निश्रुतिरिति टीकां बहुकृत्वोऽग्निश्रुतेर्बह्वग्नीनां श्रुतेश्चेति त्रेधा व्याचष्टे ॥ अग्नीन्परिचचारेति ॥ ननु चाग्नीन्परिचचारेत्याद्यभ्यस्यमानगार्हपत्यादिशब्दानामपि ब्रह्मपरत्वात्कथमयमभ्यासो ब्रह्मपरत्वे बाधक इत्यत आह ॥ स्वीकृता चेति

।। टीकोक्ता सोऽहमस्मि स वाहमस्मीत्यभ्यासादिति युक्तिरुपलक्षणमन्यापि ज्ञातव्येत्यभिप्रेत्य तां युक्तिमाह ।। उपवयं तमिति ।। यद्वा शास्त्रदृष्टचेति न्यायेनाहंशब्दस्यांतर्यामिपरत्वेऽपि प्रकृतेऽहंशब्दस्य गार्हपत्यादिपरत्वे बाधकाभावान्नांतर्यामिपरत्वम् । न केवलमहंशब्दस्याग्निपरत्वे बाधकाभावमात्रं किन्तु साधकमपि तिष्ठतीत्याह ।। उपवयंतमिति ।। टीकोक्ता सोऽहमस्मि स एवाहमस्मीत्यभ्यासादिति युक्तिमाह ।। सोऽहमिति ।। न च टीकोक्तोऽभ्यासोऽपि ब्रह्मपर एवेति कथमहंशब्दस्यांतर्यामिपरत्वाभावे तस्य हेतुत्वमित्यत आह ।। अभ्यासे हीति ।। ननु चास्तु शब्दस्वरसप्रतिपन्नेऽर्थेऽभ्यासस्य तात्पर्यनिश्चायकत्वम् । अग्निप्रयुक्ताहंशब्देनापि स्वरसप्रतिपन्नं ब्रह्मैवेति तत्रैव तात्पर्यनिश्चायकत्वमभ्यासस्येत्यत आह ।। अग्निरेवेति ।। सोऽहमस्मि स एवाहमस्मीति न्यायविवरणे कण्ठोक्ताभ्यासमुपपाद्य इत्याद्यभ्यासार्थवादेति न्यायविवरणे आदिशब्दोक्तमभ्यासमर्थवादं चाग्न्यादिशब्दानामन्तर्यामिपरत्वाभावे हेतुतया योजयति ।। किं चेति ।। उक्तरीत्येति । अग्नीन्परिचचार अग्नयस्समूदिर इत्यादिना बहुकृत्वोऽग्निश्रुतेर्बहुवचनांताग्निश्रुतेश्च अथ हैनं गार्हपत्योऽनुशशास अथ हैनमन्वाहार्यपचनोऽनुशशास अथ हैनमाहवनीयोऽनुशशासेत्यग्निविशेषत्वेन प्रसिद्धत्रेताग्निरूपबह्वग्नीनां श्रुतेश्चेत्युक्तरीत्येत्यर्थः ।। अर्थवादाभ्यासाविति ।। उपवयं तं भुञ्जान इत्यर्थवादः । सोऽहमस्मीत्यभ्यासश्चेत्यर्थः । बहुश्रुतीनामग्नीनामेवोपदेष्टृत्वे हेतुत्वात् । अर्थवादाभ्यासयोश्चाग्नीनामेवास्मच्छब्दार्थत्वे हेतुत्वात् । उभयोरप्येककार्यकारित्वे हि साहित्यमुपपद्यते । न हि दण्डादिना घटस्तंत्वादिना च पट उत्पद्यत इत्येतावतैव दण्डतं त्वोस्साहित्यं सम्भवतीत्यस्वरसादाह ।। यद्वेति ।। ननु बहुश्रुतिरग्नीनामुपदेष्टृत्वे हेतुः । अर्थवादाभ्यासौ तूपदेष्टॄणामग्नीनामेव सोऽहमस्मीत्यत्रास्मच्छब्दार्थत्वे हेतुरिति न्यायविवरणस्याद्या योजना टीकायां कुतो नोक्तेत्यतस्तदनुक्तौ हेतुं वदन्नेव द्वितीययोजनोक्तौ हेतुं चाह ।। अत्र चेति ।।

## तात्पर्यचन्द्रिका

**तत्र चात्रत्यादित्यस्थस्याग्नित्वे सिद्धे तद्बलेन समाख्याश्रुत्युक्तादित्यस्थस्य पूर्वपक्षिणा विष्णुत्वाक्षेपेऽपि ततः प्राग्विष्णौ समाख्या शङ्का युक्ता । तथा शास्त्रदृष्टचेत्यत्रोक्तस्य ब्रह्मण्यहंशब्दो मुख्य इत्यस्याच्छादनादग्नेरादित्यस्थस्यौपचारिकत्वोक्तिर्युक्ता । अत्र हि मंचानां क्रोशनमौपचारिकमित्यत्र क्रोशनवत्सुपुरुषेषु मञ्चशब्द इवादित्यस्थत्ववति विष्णावग्निप्रयुक्तोऽहंशब्द उपचरित इति प्रतीयते । अन्यथा**

समाख्योत्त्ययोगात् । तथाऽत्यलौकिक ब्रह्मग्रहणेऽग्निग्रहणादप्यपूर्वतातिशयाद्वा । दिवाग्नेः प्रभाया अदर्शनेनादित्यप्रवेशस्यानुमानसिद्धत्वाद्वा । विष्णुग्रहणेऽपूर्वता शङ्का च युक्तेति द्रष्टव्यम् । यद्यप्यपहते पापकृत्यामित्यादि फलम् । तथापि स्तुतिरूपार्थ-वादताप्यस्तीति वा वस्तुतः फलवत्त्वं फलं फलोक्तिस्त्वर्थवाद इति वा । अपहते पापकृत्यां लोकीभवतीत्यादेः प्रत्येकं फलोक्तित्वेऽपि समुदायस्यानेकफलत्वेनोप-सनास्तुतिरूपार्थवादत्वमिति वाऽभिप्रायः । न च ''सर्वमायुरेति ज्योग्जीवती'' त्यल्पफले न स्तुतिर्ब्रह्मपक्षे युक्ता । तस्मादक्षिस्थोऽग्निरेव । अमृतत्वाभयत्वादिकं तु स्वकार्य ऐश्वर्यमात्रेणाग्नेरिन्द्रत्ववत्स्वाधमदेवतादिभ्योऽमृतिभयादिराहित्येन वा । उक्तार्थवादसहितबहुश्रुतिबलादात्यंतिकामृतत्वादियोगेन वाऽग्नेरेवेति ॥

**प्रकाशिका** – ननु टीकायां न समाख्याविरोधा शङ्का युक्ता । पूर्वपक्षे ''यश्चासावादित्य'' इत्यस्याग्निपरत्वेन विष्णुपरत्वाक्षेपादित्यतस्तत्समाधत्ते ॥ तत्र चेति ॥ नन्वथाप्यौ-पचारिकत्वशङ्का न युक्ता । शास्त्रदृष्ट्या तूपदेश इत्यत्राहंशब्दस्य विष्णौ मुख्यताया उक्तत्वादित्यत आह ॥ तथेति ॥ अत एव न्यायविवरणटीकायां ''न च प्राणो वा अहमस्मीतिवदन्तर्याम्यपेक्षयेति वाच्यम् । सोऽहमस्मीत्युक्त्वा पुनस्स एवाहमस्मीति सावधारणमुक्तत्वात् । अवधारणेन च प्रकारान्तराणां सर्वेषां व्यावर्तितत्वा''दिति ग्रन्थेनोपचारचोद्यादपीदं पृथगाशङ्क्य निरस्तमिति भावः । ननु व्यधिकरणमेतत् । टीकायामग्नेरादित्यस्थत्वमौपचारिकमिति शङ्कितम् । नत्वहंशब्द औपचारिक इति । तत्राहंशब्दस्य विष्णौ मुख्यत्वोक्तेः का सङ्गतिरित्यतस्तस्यैवमेवार्थ इत्याह ॥ अत्र हीति ॥ अत एव न्यायविवरणटीकायामागमे भद्रसेन इतिवत्सोऽहमस्मीत्युपचारः किं न स्यादित्येवोक्तम् ॥ अन्यथेति ॥ अग्नेरादित्यस्थत्वस्यौपचारिकत्व इत्यर्थः । ननु यदपि विष्णुग्रहणेऽपूर्वत्वं शङ्कितं तन्न । अग्निग्रहणेऽप्यपूर्वतालाभात् । न ह्यग्नेरक्षिस्थत्वमक्षादिसिद्धमित्यत आह ॥ तथेति ॥ टीकोक्तस्यार्थवादत्वमाक्षिप्याह ॥ यद्यपीति ॥ अपहते अपहन्ति । अर्थवादेन कथं ब्रह्मपक्षनिरास इत्यत आह ॥ न चेति ॥ स्वकार्य इति ॥ ''ऐन्द्र्या गार्हपत्यमुपतिष्ठत'' इति विनियोगवशादिन्द्रप्रकाशके ''कदाचनस्तरीरसिनेन्द्रे''ति मन्त्रेण गार्हपत्याग्नेर्हविश्श्रपणादि-स्वकार्य ऐश्वर्यमात्रेणेन्द्रपदप्रतिपाद्यत्वं तद्वदित्यर्थः । उक्तं च वार्तिके

स्यादग्नेर्गौणमिन्द्रत्वं यज्ञसम्बन्धकारितम् ।
इन्दत्यर्थानुसाराद्वा स्वकार्ये सोऽपि हीश्वर ॥

इति । ''अग्निज्ञानात्सर्वपापाश्लेषान्मोक्षोपपत्ति'' रिति भाष्यसूचितं पक्षमाह ॥ उक्तार्थवादेति ॥ प्राचीनपक्षस्तु ''आत्मादिशब्दोऽप्यमुख्यार्थोऽगीकार्य'' इति न्यायविवरणटीकोक्तः ।

**पाण्डुरङ्गि** – ननु च विष्णुपक्षे ''यश्चासावादित्य'' इति समाख्या कथं स्यात् । निर्णीतस्थले समानोक्तिर्हि समाख्येत्युच्यते । न च प्रकृते साऽस्ति । य एष आदित्ये पुरुषो दृश्यत इत्यत्रादित्यस्थस्याग्नित्वे सिद्धे ''यश्चासावादित्य'' इति वाक्योक्तादित्यस्थस्य पूर्वपक्षिणाऽनभ्युपगतत्वात् । तथा च कथं समाख्योक्तिरित्यत आह ॥ तत्र चेति ॥ ततः प्राक् य एष आदित्ये पुरुषो दृश्यत इत्यत्रादित्यस्थस्याग्नित्वे सिद्धे यश्चासावादित्य इति वाक्योक्तादित्यस्थस्याग्नित्वसिद्धेः प्रागित्यर्थः । ननु च न च वक्तव्यमग्नेरादित्यस्थत्वमौपचारिकं किं न स्यादिति टीकायामहंशब्दस्य ब्रह्मण्युपचरितत्वमाशङ्कितम् । तदनुपपन्नम् । शास्त्रदृष्ट्या तूपदेशो वामदेववदित्यत्राहंशब्दस्य ब्रह्मण्येव मुख्यत्वस्य प्रतिपादितत्वादित्यत आह ॥ तथेति ॥ नन्वत्र शास्त्रदृष्टयेति न्यायाच्छादनं किमर्थम् । न चान्यथा तन्न्यायेनाहंशब्दस्यात्मनि मुख्यत्वादौपचारिकत्वशङ्कानुपपत्त्या तन्न्यायाच्छादनमिति वाच्यम् । तत्राहंशब्दस्याग्नौ मुख्यत्वाङ्गीकारेणादित्यस्थत्वस्यैवौपचारिकत्वशङ्कनादित्यत आह ॥ अत्र हीति ॥ अथ ततः प्रतीत एवार्थोऽस्तु बाधकाभावादित्यत आह ॥ अन्यथेति ॥ न च वक्तव्यमग्नेरादित्यस्थत्ववति विष्णावग्निप्रयुक्तोऽहंशब्द उपचरितः किं न स्यादित्यर्थमनङ्गीकृत्याहंशब्दस्याग्नौ मुख्यत्वमेवाङ्गीकृत्यादित्यस्थत्वकथनस्यौपचारिकत्वमिति शङ्काग्रन्थाभिप्रायकल्पने इत्यर्थः । आदित्यस्थत्ववति विष्णावग्निप्रयुक्तोऽहंशब्द उपचरित इति पक्षे विष्णोरादित्यस्थत्वप्रतिपादक यश्चासावादित्य इति युज्यते अन्यथा तु नेति तदन्यथानुपपत्त्योक्ताभिप्राये कल्पनीये शास्त्रदृष्टयेति न्यायाच्छादनमावश्यकमेवेत्यर्थः ।

ननु टीकायां न च विष्णुग्रहणेऽपूर्वतयाऽभ्यासस्य बाध इति शङ्कितम् । तदयुक्तम् । विष्णुपक्ष इवाग्निपक्षेऽप्यपूर्वतायास्सत्त्वेन तस्या विष्णोरेवादित्यस्थत्वसाधकत्वादित्यतस्तदुपपादयति ॥ दिवेति ॥ तथा च स्वबोधनीयपुरुषगताज्ञानविरोधिना स्वानुपजीविना मानांतरेणाग्राह्यार्थत्वमपूर्वत्वम् । प्रकृते तु य एष आदित्ये पुरुषो दृश्यते इत्येतद्वाक्यबोधनीयास्मदाद्यज्ञानविरोधिना एष आदित्य इत्येतद्वाक्यानुपजीविना दिवा प्रभाया अदर्शनरूपमानांतरेण ग्राह्यो योऽग्नेरादित्यस्थत्वलक्षणार्थस्तदर्थत्वस्यैवापत्त्याऽग्निपक्षेनापूर्वतेति भावः । ननु स य

एतदेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेतीत्यर्थवादादित्युक्तं टीकायाम् । तदनुपपन्नम् । अपहते पापकृत्यामित्यादेः फलत्वेनार्थवादत्वाभावादित्यतष्टीकोक्तमर्थवादत्वमुपपादयितुं शङ्कते ॥ यद्यपीति ॥ नन्वेवं फलार्थवादयोरभेद इत्यत आह ॥ वस्तुत इति ॥ नन्वत्राप्यर्थात्मकत्वेन भेदे फल एव पर्यवसानं स्यादित्यतः पक्षांतरमाह ॥ अपहत इति ॥ न चापूर्वतया य एष इति वाक्यस्य विष्णुपरत्वे शङ्किते अपहते पापकृत्यामित्याद्यर्थवादस्याग्निपरत्व इव विष्णुपक्षेऽपि सम्भवेन विष्णोरादित्यस्थत्वाबाधकत्वादित्यतोऽर्थवादस्य विष्णुपक्षेऽनुपपत्तिं दर्शयति ॥ न च सर्वमायुरेतीति ॥ सर्वमेवायुर्यंतीत्यादिवदस्यापि मोक्षपरत्वे मोक्षप्रदत्वस्याप्यग्नेरेवोक्तत्वात्तदाक्षेप इति द्रष्टव्यम् । नन्वग्नेरेवादित्यस्थत्वेऽमृतत्वाभयत्वादेरनुपपत्तिरित्यतस्सिद्धान्तीयलिङ्गानि सावकाशयति ॥ अमृतत्वेति ॥

## तात्पर्यचन्द्रिका

**सिद्धान्तस्तु ॥ अग्नेः ''परिह्येनं म्रियंते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः । भीषाऽस्मादग्निश्चे''त्यादिश्रुत्यादिभिर्मृतिभयादिमत्त्वेन मुख्यामृतत्वादेर्निरवकाशत्वात्। अमुख्यस्य च मुख्यसम्भवेऽयोगात् । भाष्ये च ब्रह्मात्मशब्दयोर्निरवकाशतायाः प्रागेवोक्तत्वात् । स्थानादिव्यपदेशसुखविशिष्टाभिधानादीनां निरवकाशतायास्तत्रैवोक्तत्वात् । जीवपक्षेऽनवस्थादेश्च बाधकत्वाद्विष्णुरेवाक्षिस्थः । तदेतदभिप्रेत्योक्तं न्यायविवरणे ''निरवकाशोपपत्तेरेव प्राबल्य''मिति । न च बह्वग्निश्रुत्यादिबाधः । अग्नीनामेवोपदेष्टृत्वात् । कुशलं न इत्यादावस्मच्छब्दोऽग्निपरोऽपि सोऽहमित्यत्र बाधकादंतर्यामिपरः । अभ्यासोऽपि पूर्वापराविरुद्धेऽर्थे तात्पर्यस्य लिङ्गम् । अग्नेरादित्यस्थत्वं चामृतमित्याद्युत्तरवाक्यैः कं ब्रह्मेत्यादिपूर्ववाक्यैश्च विरुद्धम् ।**

**धर्मैक्येऽपि भवत्येव विद्याभेदः प्रकारयोः ।**
**भेदमात्रेणापि यथा दहरप्राणविद्ययोः ॥ १ ॥**

**अस्मद्विद्याऽऽत्मविद्ययोश्च ब्रह्मविद्यात्वेऽप्याद्याया अग्न्यन्तर्यामित्वप्रकारकत्वात् द्वितीयायाश्च सर्वगतत्वप्रकारकत्वात् । ब्रह्मविषयकदहरप्राणवैश्वानरादिविद्यानामिव प्रकारभेदात्पृथगुक्तिरिति ॥**

**प्रकाशिका** – अमृतत्वाभयत्वब्रह्मात्मशब्दस्वबन्धनिमित्तकचक्षुरसङ्गत्वापादकत्वपूर्णसुखत्वादिश्रुतिलिङ्गप्रकरणरूपविष्णुप्रापकाणां "उपपत्ते"रित्यादिसूत्रोक्तानां निरवकाशत्वात्परहेतूनां सावकाशत्वात्परपक्षे बाधकसत्त्वाच्च विष्णुरेवाक्षिस्थ इति भावेन "विष्णुरेव चक्षुरंतस्स्थ" इत्यादिटीकोक्तं प्रमेयं निष्कृष्य दर्शयति ॥ सिद्धान्तस्त्वित्यादिना ॥ अग्नेर्मृतिभयादिमत्त्वेनेत्यन्वयः । "म्रियंते पञ्चदेवता" इति ऋग्भाष्योक्तमाह ॥ तमिति ॥ एनं वायुगं विष्णुं परीत्यैतरेयब्राह्मणे । अस्मादस्य भयेनेति तैत्तिरीये । भयादस्याग्निस्तपतीति कठश्रुत्यादिरादिपदार्थः । अत्राभयत्वादेश्चंद्रिकायां पूर्वपक्षिणाऽऽक्षेपे कृतेऽपि परहेतूनां सावकाशत्वस्याग्रे स्पष्टत्वात् "कम्पना"दित्यत्र टीकोक्तदिशाऽमृतत्वादेर्हेतूकरणमविरुद्धमिति ज्ञेयम् ॥ प्रागेवेति ॥ "अभ्यासात् प्रसिद्धोपदेशा"दित्यादौ ॥ स्थानादीति ॥ "स्थानादिव्यपदेशाच्चे"त्यत्र "तद्यदस्मिन्सर्पिर्वोदकं वे"त्यक्षिस्थपुरुषसम्बन्धादक्ष्णोरसङ्गाख्यशक्तिर्व्यपदिश्यते । यथा "एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामानि संयन्ति । एष उ एव वामनि"रित्यादिना संयद्वामत्वादिस्वरूपशक्तिश्चोच्यते । एतदुभयं च "स ईशस्सोऽसपत्नस्सहरिः परः परो वरीयान् । यदिदं चक्षुषि सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छति स वामनस्स भामन" इति श्रुत्या "यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुभिः । स वामन" इति स्मृत्या च विष्ण्वेकनिष्ठम् । "सुखविशिष्टाभिधानादेव चे"त्यत्र "कं ब्रह्म खं ब्रह्मे"त्युपक्रमे श्रुतं विशिष्टसुखत्वं पूर्णसुखत्वमुच्यते । तच्च "आनन्दं ब्रह्मणः आनन्दो ब्रह्मे"त्यादिना निरवकाशम् ।

"श्रुतोपनिषत्कगत्यभिधाना"दित्यत्र श्रुतैतद्विद्यानां "स एनान् ब्रह्म गमयती"ति ब्रह्मगत्यभिधानात्तस्य चाक्षिस्थस्य विष्णुत्वं विनाऽयोगात् अन्यविद्ययाऽन्यगतेरयुक्तत्वादिति भाष्यादावेवोक्तत्वादित्यर्थः । "अनवस्थितेरसम्भवाच्च नेतर" इत्यत्र वामनिभामन्यादिशब्दबलेनाग्नेर्जीवप्रेरकतया चक्षुस्स्थत्वेऽभिमते सति तस्य जीवत्वात्प्रेरकान्तरापेक्षायां तत्रापि तथेत्यनवस्थानात् अग्नेरपि प्रेर्यजीवत्वसाम्येन प्रेरणस्यासम्भवाच्च नाग्निरक्षिस्थइत्युच्यमानत्वादित्यर्थः । टीकाया मूलमाह ॥ तदेतदिति ॥ उपपत्तेरेव प्राबल्यं किमुतात्मशब्दसहिताया इत्येवकारार्थः । उपपत्तेर्निरवकाशत्वोक्तिसूचितं परहेतूनां सावकाशत्वं भाष्याद्युक्तं व्यक्तमाह ॥ न चेत्यादिना ॥ अग्निपरोऽपीति ॥ यथोक्तं न्यायविवरणटीकायां "अग्निःप्रसिद्ध एवास्तु । सोऽहमस्मीत्यादि त्वंतर्याम्यपेक्षया सावकाश"मिति ॥ बाधकादिति ॥ अमृतत्वादिबाधकादित्यर्थः । श्रुतिगतिमुक्त्वाऽभ्यासगतिमाह ॥ अभ्यासोऽपीति ॥ "अवधारणं चान्तर्यामिणो

विशेषाभावमात्रप्रतिपादनार्थ'' मित्यन्यत्र टीकायामुक्तरीत्याऽवधारणगतिरपि ध्येया । उक्तं च तत्वप्रदीपे ''अत्र चोक्तं छन्दोगोपनिषद्भाष्ये भगवतैव स एवाहमस्मीत्यंतर्यामिणोस्सर्वविशेषा-भावज्ञापनार्थ''मित्यादि । ननु विद्याशब्दाभ्यासस्य का गतिरित्यतः ''न चास्मद्विद्येत्युक्ति-विरोध'' इत्यादिटीकोक्तं प्रमेयं सङ्गृह्य विवृणोति ॥ धर्म्यैक्येऽपीति ॥ ''यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्मे''ति छान्दोग्यस्थदहरविद्या ब्रह्मपरेति दहरनये साधयिष्यते । ''प्राणो वा आशाया भूयानि''ति तत्रैव सप्तमगता प्राणविद्या भूमाधिकरणे ब्रह्मपरेति वक्ष्यते । ''अभिविमानामात्मानं वैश्वानरमुपास्त'' इति तत्रैव पञ्चमस्था वैश्वानरविद्या वैश्वानरनये निर्णेष्यत इति ता ब्रह्मपरा इति भावः ॥ प्रकारेति ॥ दहरहृत्पद्मस्थत्वप्राणस्थत्वविश्व-नरांतरत्वादिप्रकारभेदादित्यर्थः ।

**पाण्डुरङ्गि** – मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इति न्यायेनाग्नेरमृतत्वादेर्मुख्यत्वाभावेन विष्णोरेव तद्भावेन मुख्यस्यैव ग्रहणं युक्तं न त्वग्नेरित्यरुच्या पक्षांतरमाह ॥ उक्तार्थवादेति ॥ पूर्वपक्षीयाणि बाधकानि परिहर्तुमाह ॥ न चेत्यादिना ॥ नन्वभ्यासस्य पूर्वापराविरुद्धे स्वरसप्रतिपन्नेऽर्थे तात्पर्यार्थत्वेऽप्यग्नेरादित्यस्थत्वस्यापि पूर्वोत्तराविरुद्धत्वात्स्वरसप्रतिपन्नत्वाच्च न तात्पर्यार्थत्वमभ्यासस्स्यादेवेत्यत आह ॥ अग्नेरिति ॥ नन्वस्मद्विद्याऽऽत्मविद्या चेति विद्याशब्दोऽभ्यस्यत इति विद्याभेदार्थं कं ब्रह्मेत्यादिकाऽऽत्मविद्या आदित्यस्थादिविद्या त्वग्निविद्येति स्वीकार्यतया चाग्नेरेवादित्यस्थत्वेऽक्षिस्थत्वमपि तस्यैवेत्यत आह ॥ धर्म्यैक्येऽपीति ॥

## तात्पर्यचन्द्रिका

**सूत्रक्रमस्तु । आद्ये सूत्रे विषयवाक्यस्थश्रुतिलिङ्गोक्तिः । अत्र चान्तरुपपदाद्रमतेः ''ञमंताड्ड'' इति डप्रत्ययान्तेनांतरशब्देनान्तस्स्थित्वा रमणमुच्यते । न त्वन्तःस्थि-तिमात्रम् । तथात्वे हि लाघवाय श्रुत्यनुगमाय चांतस्तद्धर्मेतिवदन्तरित्येवावक्ष्यत् । न त्वंतर इति । श्रुतौ चात्मशब्देनादेयं मातीति व्युत्पत्त्या रमणमुच्यते । तदुक्तमनुव्याख्याने**

**अन्तस्स्थित्वा रमणकृदंतरस्समुदाहृतः ।**
**रमणं चात्मशब्देनादेयं मातीति चोच्यत ॥ इति ॥**

**द्वितीये तदुत्तरवाक्यस्थलिङ्गोक्तिः । तृतीये प्रकरणोक्तिः । तत्र च "कं ब्रह्मे"ति ब्रह्मशब्दोक्तं पूर्णत्वरूपं श्रैष्ठ्यं विशिष्टत्वम् । विग्रहस्तु सुखेन विशिष्ट इति वा, विशिष्टं च तत्सुखं चेति वा,सुखेषु विशिष्टमिति वा । तत्राद्ये सुखेन श्रैष्ठ्यं सुखस्य श्रैष्ठ्यं विना नेति सुखस्यापि तत्सिद्धिः । द्वितीये "कडाराः कर्मधारय" इति विशिष्टशब्दस्य परनिपातः । तृतीये "सप्तमी"ति योगविभागात्समासः । एवकारस्तु, तिष्ठतु तावत्खं ब्रह्मेति पूर्णज्ञानाभिधानम् । तन्निरपेक्षपूर्णसुखाभिधानादेवेति सूचनायेति टीकायामेवोक्तम् । चतुर्थे सूत्रे प्रकरणविच्छेदाशङ्कायामुपसंहारस्थलिङ्गेनोद्धारः । पञ्चमे परपक्षे बाधकोक्तिरिति ॥**

**प्रकाशिका –** ॥ श्रुतीति ॥ "आत्मेति होवाचे"त्यात्मश्रुतिः । "एतद्ब्रह्मे"ति ब्रह्मश्रुतिः । अमृतत्वाभयत्वरूपे लिङ्गे । नन्वत्र "अन्तस्तद्धर्मोपदेशा"दितिवदन्तरुपपत्तेरित्येव वाच्यं न त्वंतर इत्यत आह ॥ अत्र चेति ॥ यद्वाऽत्र क्रियाभावलिङ्गमुच्यते इत्युक्तमयुक्तम् । सूत्रे भावस्यैव प्रतीत्या क्रियाया अप्रतीतेरित्यत आह ॥ अत्र चेति ॥ रमु क्रीडायामित्यस्यांतश्शब्द उपपदे सति ञमंतत्वात् "ञमंताड्ड" इत्युणादिसूत्रेण डप्रत्यये डित्यभस्यापि टेर्लोपे उणादयो बहुलमित्युपपदांत्यलोपे दीर्घाभावे चांतर इति भवति । ञमिति प्रत्याहारः । ननु ञमंताड्ड इत्यत्र वृत्तौ "डकारस्येत्संज्ञा प्राप्ता बहुलवचनान्न भवति । रम्यते रमयते वा रण्डापुनर्भू"रित्युक्तम् । तथाप्युणादेर्यथा प्रयोगं वर्णनीयत्वेन दण्डमण्डरण्डादिप्रयोगनिर्वाहायेत्संज्ञा नेत्युक्तावप्यंतर इत्यादिनिर्वाहायेत्संज्ञोत्सर्गप्राप्ता भवत्येवेति भावः । यद्वाऽऽद्यस्य तृतीये विद्याचुंचुरित्यादिसिद्धये "षःप्रत्ययस्य चुटू इति योगविभागकरणं चुटू इत्यस्यानित्यत्वज्ञापनार्थ"मिति वृत्त्यादावुक्तत्वेन रण्डादण्ड इत्यादावभावेऽपि क्वचिदित्संज्ञा भवत्येव । ननु श्रुत्यनुक्तं कथं सूत्र्यत इत्यत आह ॥ श्रुतौ चेति ॥ आङ्पूर्वाद्दातेर्मन्यतेश्च क्विपि सति आदेयमुपादेयं सुखं सुखसाधनं वा मात्यनुभवतीति सुधोक्तनिर्वचनेनेत्यर्थः ॥ इति चेति ॥ न केवलं सूत्रे श्रुतौ चेत्यर्थः । नन्वेवं सूत्रेऽतर इत्यस्य चक्षुरंतस्स्थ आत्मेत्यर्थतयाऽऽत्मशब्दस्य प्रतिज्ञाभागप्रविष्टत्वात्कथमात्मश्रुतित्वेन हेतूकरणम् । मैवम् । अन्तस्स्थत्वमात्रस्यैव साध्यताविवक्षायामात्मश्रुतेर्हेतुत्वस्याभिमतत्वात् । अत एव भाष्ये "चक्षुरंतस्स्थो विष्णुरेवे"त्येवोक्त्वा "ब्रह्मशब्दाद्युपपत्तेश्चे"त्युक्तम् । न्यायविवरणटीकायां च चक्षुरन्तस्थो हरिरेव । अमृतत्वाभयत्वोपपत्तेः । आत्मादिशब्दा"दित्युक्तम् । सूत्रे चामृतत्वाभयत्वरूपनिरवकाशोपपत्तेरेवोक्तिः । अत्र टीकायां "चक्षुरन्तर" इति सामान्योक्तिः ॥ द्वितीय इति

॥ स्थानादिसूत्रे । तत्र स्थानादीत्यस्य स्थानशक्तिरात्मशक्तिरित्यर्थः ॥ लिङ्गेति ॥ पुरुषसम्बन्धनिमित्तसर्पिराद्यसङ्गत्वादिलिङ्गेत्यर्थः । यदत्रोक्तं श्रुतप्रकाशे ''अक्ष्णोर्निर्लेपत्वं नाक्षिस्थस्य विष्णुत्वे हेतुः । तत्सम्बन्धेन काचादिलेपस्याप्यभावप्रसङ्गा''दिति । तन्न । ''स ईशस्सोऽसपत्नः यत्स्थानत्वादिदं चक्षुरसङ्गसर्ववस्तुभि''रित्यादिप्रागुक्तश्रुतिविरोधात् । ''इतिहासपुराणाभ्यां वेदं समुपबृंहये''दित्युक्त्या स्मृतिवशेन श्रुत्यर्थस्य च वाच्यत्वात् । क्वाचित्ककाचादिदोषस्य तदीयदुरदृष्टसहायेनेश्वरेणैव कारितत्वादिति ॥ तृतीय इति ॥ सुखविशिष्टेत्यत्रोपक्रमे कं ब्रह्म खं ब्रह्मेति पूर्णसुखत्वरूपब्रह्मलक्षणाभिधानात्प्रकरणस्य वैष्णवत्वावगमादिति तत्रोच्यत इत्यर्थः । ननु श्रुतौ कं ब्रह्मेति सुखस्यैवोक्त्या तत्सम्बन्धाभिधानाभावाद्विशिष्टपदमयुक्तमित्यतो न सम्बन्धवाचकं तदित्याह ॥ तत्र चेति ॥ तत्र ब्रह्मपदेन न विष्णुरित्यभिमतम् । किं तु कं सुखं पूर्णमित्येव तस्यार्थ इति भावः । तर्हि विशिष्टसुखाभिधानादिति विशिष्टपदस्य पूर्वनिपातस्स्यात् । ''उपसर्जनं पूर्व''मिति पाणिनिस्मरणात् । अस्य च विशेषणत्वेनोपसर्जनत्वादित्यत आह ॥ विग्रहस्त्विति ॥ सप्तमीति ॥ ''सप्तमी शौंडै''रिति सूत्रेण शौण्डादिभिरेव सप्तमीतत्पुरुषविधानात्तत्र च विशिष्टपदस्यापाठाद्योगविभागेन सप्तम्यंतमिष्टविषये समस्यत इत्यभियुक्तोक्तेस्समास इत्यर्थः । विष्णोस्सुखरूपत्वात्सुखेष्विति विग्रहप्रदर्शनम् । ''नन्वत्र सुखाभिधानादित्येव पूर्तौ विशिष्टपदं व्यर्थम् । न व्यर्थम् । सुखस्यान्यत्रापि सत्त्वेन व्यभिचारापत्त्या तन्निरासकत्वा''दिति सुधायामेवोक्तेरिति भावः ॥ चतुर्थ इति ॥ श्रुतोपनिषदिति सूत्रे विद्याशब्दाभ्यासेनेति भावः ॥ लिङ्गेनेति ॥ ''स एनान्ब्रह्म गमयती''त्येतद्विद्याफलत्वेन ब्रह्मगत्यभिधानरूपलिङ्गेनेत्यर्थः ।

**पाण्डुरङ्गि –** ॥ अन्तरुपपदादिति ॥ अत्र चान्तश्शब्दसमानार्थकोऽन्तशब्द एव विवक्षित इति वा उपपदांत्यलोपो विवक्षित इति वा समाधानं बोध्यमिति । तेन रोरीति रेफलोपे ढ्रलोप इति दीर्घत्वेंऽतार इति स्यादिति निरस्तं भवति ॥ प्रकरणोक्तिरिति ॥ प्रकरणादौ विद्यमानोपक्रमादेः प्रकरणनिश्चायकत्वादिति भावः ।

## तात्पर्यचन्द्रिका

**परमतद्वयेऽपीदमन्तस्तद्धर्मेत्यनेन गतार्थम् । तत्रादित्यस्थत्ववदक्षिस्थत्वस्याप्युक्तेः । न च तत्रोद्गीथोपासनस्थमक्षिवाक्यं विषयः । अत्र तूपकोसलविद्यास्थमक्षिवाक्यमित्येतावतैवागतार्थत्वम् । श्रूयन्ते च तत्रेवात्राप्यन्यत्रासम्भववन्तोऽमृत-**

त्वादयो ब्रह्मधर्माः । ब्रह्मशब्दश्चात्राधिकः । न चात्र "य एषोऽन्तरक्षिणि पुरुषो दृश्यत" इति प्रसिद्धवदभिधानाद्दृश्यत्वोक्तेश्चाधिका शङ्का । तत्रापि "य एषोंऽतरक्षिणि पुरुषो दृश्यत" इति श्रुतेः । अत्रोक्तं भामत्याम् । तत्राक्षिस्थो जीवविशेष इति पूर्वः पक्षः । अत्र तु छायेति । भाष्ये तु सम्भवमात्रेण जीवाद्युक्तिः । तथा च जीवविशेषस्यापि ब्रह्मवत्परोक्षत्वाद्दृश्यत्वादिकमयुक्तम् । छायायां तु युक्तमित्यधिकाशङ्केति ।। तन्न । दृश्यत्वानुपपत्त्या जीवपक्षत्यागे छायायां विषयवाक्यस्थपुरुषत्वामृतत्वादेः पूर्ववाक्योक्तस्य तज्ज्ञानेन पापालेपस्य चोत्तरवाक्योक्तस्य संयद्वामत्वादेश्च सर्वथाप्ययुक्त्या छायापक्षस्य सुतरां त्याज्यत्वात् । छायायां स्तुत्यर्थममृतत्वाद्युक्तिश्चेज्जीवेऽपि तदर्थमेव दृश्यत्वाद्युक्तिरस्तु । तस्मान्न परमते पूर्वपक्षोत्थानम् । अस्माकं मते तु अन्तस्तद्धर्मेत्यत्रेन्द्रादि- श्रुत्येन्द्रादेरन्तस्स्थत्वमिति प्राप्ते नेति सिद्धान्तः । अत्रत्वग्रेश्चक्षुरंतस्स्थत्वमभ्यासार्थवादसहितबहुश्रुतिभ्य इति प्राप्ते नेति सिद्धान्त इति भेदः ।

**प्रकाशिका –** ।। परमतद्वयेऽपीति ।। मायिनामिदमधिकरणशरीरम् । "य एषोऽन्तरक्षिणि पुरुषो दृश्यत" इति श्रुतोऽक्षिस्थः किं छायापुरुष उत ब्रह्मेति संशये पूर्वं ऋतं पिबन्तावित्यत्र पातृत्वलिङ्गेन प्रथममवगतचेतनद्वयानुरोधेन पश्चादवगतगुहाप्रवेशादयः कथंचिद्व्याख्याताः । तद्वदिहापि "दृश्यत" इति प्रत्यक्षाभिधानात्तस्य च छायायामेव सम्भवाद्दृश्यत्वेन प्रथममवगते छायापुरुषे तदनुरोधेनामृतत्वाभयत्वादयस्स्तुतिरूपेण कथंचिद्व्याख्येयाः । उक्तं च भामत्यां—

"एष दृश्यत इत्येतत्प्रत्यक्षेऽर्थे प्रयुज्यते ।
परोक्षं ब्रह्म न तथा प्रतिबिम्बं तु युज्यते ।। १ ।।
उपक्रमवशात्पूर्वमितरस्योपवर्णनम् ।
कृतं न्यायेन येनैव स खल्वत्रानुषज्यते" ।। २ ।। इति ।।

एवं प्राप्ते ब्रह्मैव अमृतत्वाभयत्वादेस्तस्मिन्नेवोपपत्तेः । न च दृश्यत्वेन प्रथमावगतछायैवात्रोच्यत इति वाच्यम् । दृश्यत इत्येतस्मादपि पूर्वं चेतनवाचिपुरुषपदेन परमात्मन एवावगतत्वात् । य एष इति सर्वनामशब्दौ सन्निहितपुरुषपदार्थं प्राप्य निराकाङ्क्षौ । दृश्यत इत्येतदपि सन्निहितपुरुषपदार्थं प्राप्य निराकाङ्क्षम् । पुरुषे च तद्विषयकशास्त्रजन्यज्ञानस्यातिस्फुटत्वाद्दृश्यत्वोपचारः । तदुक्तं भामत्यां-

अनिष्पन्नाभिधाने द्वे सर्वनामपदे सति ।
प्राप्य सन्निहितस्यार्थं भवेतामभिधातृणी ।। इति ।।

यद्यपि भाष्ये ''किं प्रतिबिम्ब उत जीवोऽथेन्द्रियस्याधिष्ठातृदेवतोत परमात्मे''ति कोटिचतुष्टयं प्रदर्शितम् । तथापि भामत्यां ''जीवदेवतयोरधिकाशङ्कायोगात्सम्भवमात्रेण जीवदेवते भाष्य उपन्यस्ते'' इत्युक्त्वा कोटिद्वयमेव प्रदर्शितम् । रामानुजीयानां तु किमक्ष्याधारः पुरुषः प्रतिबिम्बजीवदेवताविशेषेष्वन्यतम उत परमात्मेति संशये य एष इति पदाभ्यां प्रसिद्धत्वेन दृश्यत इत्यभिधानाच्चोपक्रमानुगुण्येनान्यस्य स्तुत्यर्थत्वेन नेयत्वात् प्रतिबिम्बादिष्वन्यतम इति प्राप्ते निरुपाधिकात्मत्वामृतत्वाभयत्वब्रह्मत्वसंयद्वामत्वादीनां परमात्मन्येवोपपत्तेः प्रसिद्धत्वेन निर्देशस्य ''यश्चक्षुषि तिष्ठन्नि''त्यादिश्रुत्यन्तरे प्रसिद्ध-त्वेनोपपत्तेः आपरोक्ष्यस्य च तदुपासनानिष्ठयोग्यापेक्षयोपपत्तेः परमात्मैवाक्षिस्थ इति सिद्धान्त इति । तत्र मतद्वयस्यैकरूप्येणान्तर्नयसुधावाक्यानि विवृण्वन्मिलित्वा दोषमाह ।। गतार्थमिति ।। ननु तत्र ''य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत'' इत्यादित्यस्थत्वमुक्तम् । इह त्वक्षिस्थत्वमुच्यत इति वा तत्राद्याध्यायगतोद्गीथोपासनागतवाक्यं विषय इह तु चतुर्थाध्याय-गतोपकोसलविद्यास्थं विषय इति वाक्यभेदेन वा तत्र ''सैवक्र्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्मे''त्यादिसार्वात्म्यादेरिवात्र ब्रह्मलिङ्गाभावेन वा य एष इति प्रसिद्धत्वेन दृश्यत इत्यपरोक्षत्वेनात्र निर्देशेन तद्वाक्यवैलक्षण्येन विशेषशङ्कासत्त्वेन वा पौनरुक्त्यनिरासस्सेत्स्य-तीत्यत आद्यं निराचष्टे ।। तत्रेति ।। ''इत्यधिदैवत''मित्युक्त्वाऽनन्तरं ''अथाध्यात्म'' मित्युपक्रम्य ''य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवकर्तत्सामे''त्यादिश्रवणात् । उदाहृतं चैतत्त्वयापि तत्रेति भावः । द्वितीयं निराह ।। न चेति ।। एतावतैवेति ।। तथात्वे वाक्यानंत्येन प्रतिवाक्यमधिकरणारम्भे शास्त्रापर्यवसानं स्यादिति भावः । तृतीयं निराह ।। श्रूयन्ते चेति ।। ब्रह्मशब्दश्चेति ।। यद्यपि तत्रापि तद्यजुस्तद्ब्रह्मेत्यस्ति ब्रह्मशब्दः । तथापि ब्रह्मणश्शब्दो ब्रह्मशब्द इत्यात्मशब्दश्चात्राधिक इत्यर्थ इत्याहुः । अन्ये तु लेखकदोषमूलोऽयम् । आत्मशब्दश्चात्राधिक इत्येव पाठ इत्याहुः । अत एवान्तर्नयसुधायां सन्ति च तत्राप्यमृतत्वादयो ब्रह्मधर्मा इत्येवोक्तम् । अपरे तु ब्रह्मशब्दश्चेति यथाश्रुत एव पाठः । अयमर्थः । कं ब्रह्म खं ब्रह्मेत्युपक्रमे द्विर्ब्रह्मशब्दः एतदमृतमभयमेतद्ब्रह्मेति मध्ये स एनान्ब्रह्म गमयतीत्यंते च ब्रह्मशब्दश्रवणाद्ब्रह्मशब्दश्चात्राधिको बहुल इत्यर्थ इत्याहुः । चतुर्थं प्रत्याह ।। न चात्रेति ।। एवं मतद्वयसाधारण्येन पौनरुक्त्यमुपपाद्य यद्भामत्यां गतार्थत्वमाशङ्क्य समाहितं तदनूद्य निराह ।।

अत्रोक्तमिति ।। छायेति ।। प्रतिबिम्ब इत्यर्थः । कथं तर्हि भाष्ये जीवदेवते अप्युपन्यस्ते इत्यत उक्तं भाष्य इति ।। तदीयभाष्ये । किमतो यद्येवमित्यतस्ततो विशेषशङ्कामाह ।। तथा चेति ।। पूर्ववाक्येति ।। ''अहं तु ते तद्वक्ष्यामि तद्यथा पुष्करपलाश आपो न श्लिष्यंत एवमेवंविदि पापं कर्म न श्लिष्यत इति । ब्रवीतु मे भगवानिति । तस्मै स होवाच य एषोंऽतरक्षिणि पुरुषो दृश्यत'' इति श्रवणादक्षिस्थज्ञानेन पापालेपस्य पूर्ववाक्योक्तस्यायुक्त्येत्यर्थः । ''एष उ एव वामनिरेष हि सर्वाणि वामानि नयती''त्यत्र त्वदुक्तरीत्या पुण्यफलोत्पत्तिकारण-त्वादिरूपसंयद्वामत्वादेरित्यर्थः । ननूक्तममृतत्वादिकं स्तुत्यैव कथंचिन्नेयमिति तत्राह ।। छायायामिति ।। जीवेऽपीति ।। अविद्यमानकथनस्योभयत्र तुल्यत्वात् । तथा च न ततो विशेषाशङ्केति भावः । ननु भवन्मतेऽपि ''ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठा''मित्यग्निश्रुत्याऽग्नेः ''अन्तः प्रविष्टं कर्तार''मित्यादावन्तस्स्थत्वमिति प्राप्ते विष्णोरेवेति तत्रैवोक्तत्वादिह पुनरग्नेरन्तस्स्थत्वशङ्कायोगात्पौनरुक्त्यमित्यत आह ।। अस्माकमिति ।। तत्रांतस्स्थत्व-सामान्यमिह चक्षुरन्तस्स्थत्वं तत्रेन्द्रादीनामनेकेषामिह त्वग्नेरेव तत्र श्रुतिमात्रेणेह त्वभ्यासादिभिरिति महान् भेद इत्यर्थः ।।

**पाण्डुरङ्गि** – इत्येतावतैवेति ।। अन्यथा विषयवाक्यभेदमात्रेणाधिकरणभेदेऽतिप्रसङ्गस्स्या-दित्यर्थः । अस्तु वा सुखसम्बद्धत्वमेव सुखविशिष्टत्वम् । तथापि तत्किं शुद्धस्य किं वा विशिष्टस्येति विकल्प्य क्रमेण दूषयति ।। त्वन्मत इत्यादिना ।। गतेरित्यनूद्य प्राप्तेरिति व्याख्यानम् ।। यच्चेति ।। अनेनानवस्थितेरिति द्वेधा व्याख्यातम् ।। सदा चक्षुष्यवस्थित्य-भावादिति ।। यदैव हि कश्चित्पुरुषश्चक्षुरासीदति तदा चक्षुषि पुरुषच्छाया दृश्यते । अपगते तस्मिन्न दृश्यत इति भावः ।। एवं सूत्रान्तरेऽपीति ।।

## तात्पर्यचन्द्रिका

**परसिद्धान्तोऽप्ययुक्तः । यतः ।**

**कार्यब्रह्मपरत्वं चेदमृतत्वाद्यसम्भवः । अकार्यपरता चेत्स्यादर्चिरादेरसम्भवः।।१।।**

**न हि कार्यब्रह्मणश्चतुर्मुखस्यामृतत्वाभयत्वापरि(मित)च्छिन्नसुखत्वादिर्हेतुर्युक्तः । न वा तत्साध्यं चक्षुरंतस्स्थत्वं युक्तम् । तस्य ''यश्चक्षुषि तिष्ठन्नि''त्यादिभिरकार्यब्रह्म-भूतांतर्यामिधर्मभूतत्वात् । अकार्यब्रह्मपरत्वे तु श्रुतौ ''तेऽर्चिषमभिसम्भवन्ती''ति**

सूत्रे च ''श्रुतोपनिषत्के''त्यर्चिराद्युक्तिर्न स्यात् । त्वन्मते तस्य कार्यब्रह्ममार्गत्वात् । यच्चोक्तं परममहतो ब्रह्मणोऽत्यल्पं चक्षुरधिष्ठानं नेति शङ्कानिरासार्थं स्थानादिसूत्रमिति तन्न । ''अर्भकौकस्त्वा''दित्यनेनास्याः परिहृतत्वात् । यच्च तृतीयसूत्रे सुखविशिष्टत्वं सुखसम्बद्धत्वम् । तथा च कं ब्रह्मेति सुखविशिष्टस्य ब्रह्मणः प्रक्रान्तत्वादक्षिवाक्येऽपि ब्रह्मैवोच्यत इत्यर्थ इत्युक्तम् । तन्न । सुखसम्बन्धस्य जीवेऽपि सत्त्वेन वाक्यशेषोक्तं सुखनिष्ठमपरिच्छिन्नत्वरूपश्रैष्ठ्यमेव सूत्रस्थविशिष्टशब्दार्थ इति वक्तव्यत्वात् त्वन्मते ब्रह्मणः सुखमात्रत्वेन तत्सम्बन्धाभावाच्च । विशिष्टस्यापि न वाक्यशेषोक्तापरिच्छिन्न-सुखसम्बन्धः ।

यत्तु श्रुतोपनिषत्कस्य श्रुतरहस्यस्य ब्रह्मविदः श्रुत्यन्तरे प्रसिद्धा याऽर्चिरादि-मार्गरूपा गतिः तस्या इहाभिधानादिति चतुर्थसूत्रव्याख्यानम् । तन्न । त्वन्मतेऽर्चि-रादेरुपासकगतित्वेन ब्रह्मविद्गतित्वाभावात् । किं च कगत्यभिधानादिति सूत्रे ''स एनान् ब्रह्म गमयती''ति श्रुत्युक्तगतेः प्राप्तेः कं ब्रह्मेति श्रुतौ कशब्दनिर्दिष्ट-ब्रह्मविषयत्वोक्तौ श्रुत्यनुसरणसिद्धिः । ब्रह्मप्राप्तिसाधनविद्यायाः साक्षाद्ब्रह्मविषय-त्वसिद्धिश्च । विद्यातत्साध्यप्राप्त्योरेकविषयत्वनियमात् । न तु मार्गस्यार्चि-रादित्वमात्रोक्तौ । व्यर्थश्च ''शेषाद्विभाषे''ति वैभाषिकः कप्रत्ययः । सूत्रस्थगति-शब्दश्च न मार्गे स्वरसः । यच्च छायायाः सदा चक्षुष्यवस्थित्यभावात् जीवस्य च कृत्स्नशरीरेन्द्रियसम्बन्धिनश्चक्षुष्येवावस्थित्यभावात् अमृतत्वादीनां छायादावसम्भवाच्च नेतर इति पञ्चमसूत्रव्याख्यानं तन्न । अनवस्थिति शब्दस्य प्रसिद्धार्थत्यागात् । सदाशब्दादेरध्याहार्यत्वाच्च । कृत्स्नसम्बन्धेऽपि जीवस्य ब्रह्मण इवोपासनार्थं चक्षुस्स्थानोक्तिसम्भवाच्च । उपपत्तेरित्यनेनैवान्यत्रामृतत्वाद्यसम्भवस्यार्थादुक्तत्वेना-सम्भवादित्यस्य वैयर्थ्याच्च । एवं सूत्रान्तरेऽप्यनुपपत्तिरूह्या । अत्र केषाञ्चिन्मतं परमतान्न विशिष्टमिति तद्दूषणेनैव दूषितम् । कैश्चिदत्र अत एव च सद्ब्रह्मेति सूत्रमीक्षत्यधिकरणे प्रतिज्ञाविरोधादिति सूत्रवत्प्रक्षिप्तमिति तदुपेक्ष्यम् । अत्रापि ''अनवस्थितेरसम्भवाच्च नेतर'' इति जीवनिषेधाद्भेदधीः ॥

प्रकाशिका – परसिद्धान्तोऽपीति ॥ स प्राज्ञया विवृतः । यत इत्यस्य श्लोकेनान्वयः । किमत्र कार्यं ब्रह्मोच्यतेऽथाकार्यं ब्रह्मेति सिद्धान्त्यत इति विकल्पौ हृदि कृत्त्वा क्रमेण निराह ॥

कार्येति ।। पूर्वार्धं व्यनक्ति ।। न हीति ।। तस्य संसारित्वेन मृतिभयादेरवर्जनीयत्वादिति भावः । न वेत्येतदुपपादयति ।। तस्येति ।। उत्तरार्धं व्यनक्ति ।। अकार्येति ।। तदीयार्थानुरोधेन कप्रत्ययान्ततया सूत्रप्रतीकग्रहणम् । सूत्रार्थस्त्वग्रे व्यक्तः । एवमधिकरणशरीरं निरस्य सूत्रार्थान्निराचिकीर्षुराद्ये मन्मत इव क्रियालिङ्गपरत्वाभावेनान्तस्तद्धर्मेति वदन्तरुपपत्तेरित्येव निर्देशः स्यादिति प्रतिज्ञादूषणं सूत्रक्रमस्त्वित्यत्रोक्तदिशा व्यक्तं कार्यब्रह्मेत्यादिनोपपत्तेरिति हेत्वंशो दूषित इति मत्वा वा अग्रे तत्र दोषोत्प्रेक्षामतिदिदिक्षुर्वा द्वितीयसूत्रार्थमनूद्य निराह ।। यच्चेति ।। शङ्कानिरासायेदं सूत्रम् । न त्वस्माकमिवाक्षिस्थस्य ब्रह्मत्वे हेत्वंतरपरम् । ''यः पृथिव्यां तिष्ठन्निति प्रक्रम्य ''यश्चक्षुषि तिष्ठन्नि''ति यदन्तर्यामिस्थानं निर्दिष्टं तस्यैवोपासनार्थं ''य एषोऽन्तरक्षिणी''तिव्यपदेशात् । आदिपदेन ''तस्योदितिनाम हिरण्यश्मश्रु''रित्याद्युक्त-नामरूपादेरप्युपासनार्थं व्यपदेशादिति गृह्यते । अस्याः अल्पस्थानत्वशङ्कायाः । उपलक्षणमेतत् । नामरूपादेर्जीवेऽपि सम्भवेन ब्रह्मत्वे तस्य हेतूकरणायोगाच्चशब्दायोगाच्चेत्यपि ध्येयम् ।। वाक्यशेषोक्तमिति ।। तन्मते ''यद्वाव कं तदेव खं यदेव खं तदेव क''मिति वाक्यशेषे कं ब्रह्मेत्युक्तकशब्दस्य लौकिकसुखपरत्वनिरासायापरिच्छिन्नवाचिना खशब्देन विशेषणात्सुखस्यापरिच्छिन्नत्वं लभ्यत इत्यङ्गीकारादेवमुक्तम् । ननु शुद्धस्य तदभावेऽपि विशिष्टस्य ब्रह्मणः सुखसम्बन्धो नायुक्त इत्यत आह ।। विशिष्टस्येति ।। श्रुत्यन्तर इति ।। अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजयन्ते । ''एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तंते'' इति वाजसनेयप्रसिद्धेत्यर्थः ।। इहेति ।। ''यदु चैतच्छक्यं कर्म कुर्वन्ति यदु च न तेऽर्चिषमेवाभिसम्भवन्ती''त्यादिनेत्यर्थः । प्रमेयानुपपत्तिमुक्त्वा सूत्रास्वारस्यमाह ।। किञ्चेति ।। इति सूत्र इति ।। सूत्रव्यक्तीकरण इत्यर्थः ।. कथं साक्षाद्ब्रह्मविषयत्वमित्यत आह ।। विद्येति ।। न ह्यन्यविद्ययान्यप्राप्तिर्युक्तेति भावः ।। न त्विति ।। तत्सिद्धिरिति सम्बन्धः । वक्तव्यं चैवमेव । अन्यथा श्रुतोपनिषद्गत्यभिधानादि-त्येतावता पूर्णत्वेन कशब्दवैयर्थ्यात् । न च बहुव्रीहिसमासान्तानुपादानेऽपशब्दता स्यादिति वाच्यम् । तस्य विकल्पितत्वेन कप्रत्ययं विनापि वक्तुं शक्यत्वादित्याह ।। व्यर्थश्चेति ।। न स्वरस इति ।। तस्य भावार्थकक्तिन्नंतस्य प्राप्त्यर्थत्वेन मार्गे तद्धेतुत्वादिना कथंचिद्वृत्त्यादिति भावः ।। प्रसिद्धार्थेति ।। अपर्यवसितानेकव्यक्तिकल्पनारूपानवस्थाने प्रसिद्धत्वादित्यर्थः ।।

सदेति ।। सदाशब्दस्य चक्षुष्येवेत्यस्यामृतत्वादीनामित्यस्य चाध्याहारादित्यर्थः । आद्यसूत्रस्थोपपत्तेरित्यंशेनासम्भवादित्यंशस्य पौनरुक्त्यमाह ।। उपपत्तेरिति ।। एवमुक्तमार्थिक-

पौनरुक्त्यमधिकरणान्तरस्थसूत्रेष्वप्यनुसन्धेयमित्याह ॥ एवमिति ॥ ''अतद्धर्माभिलापात् । अतच्छब्दा''दित्यादौ सूत्रान्तर इति भावः । यद्वा स्थानादिसूत्रचतुष्टयेऽनुपपत्तिमुक्त्वाऽऽद्य-सूत्रेऽप्यनुपपत्तिरूह्येत्याह ॥ एवमिति ॥ सा च विवृता प्रागस्माभिः । तद्दूषणेनैवेति ॥ एतेन सुधादौ पृथग्ग्रामानुजमतादूषणे बीजं सूचितम् । तथा हि । पौनरुक्त्यं तन्मतेऽप्युपपादितमेव । पूर्वपक्षानुदयश्च पूर्वस्माद्विशेषहेत्वभावेन स्पष्टः । आद्ये सूत्रेंऽतरित्येव निर्देशप्रसङ्गादन्तर-शब्दास्वारस्यम् । यच्चोक्तं ''स्थानादिव्यपदेशाच्चे''त्यस्य स्थानं स्थितिः । आदिपदेन नियमनादिकमुच्यते । चक्षुषि स्थितिनियमनादीनां परमात्मन एव ''यश्चक्षुषि तिष्ठन्नि''त्यादौ व्यपदेशाच्चेत्यर्थ इति तन्न । मद्रीत्या स्व- वाक्यगतहेतूक्तिपरत्वसम्भवे श्रुत्यन्तरप्रदर्शनपर-त्वायोगात् । स्थानशब्दस्याधिष्ठानपरत्वप्रसिद्ध्या प्रसिद्धार्थत्यागापाताच्च । प्रतिपत्त्येकमात्र-योर्लाघवेन स्थित्यादीति निर्देशापाताच्च । यदपि ''कं ब्रह्मे''ति प्रकृतस्य सुखत्वविशिष्टस्य सुखविशिष्टस्य वा ब्रह्मणो ''य एषोऽन्तरक्षिणी''त्यादिनोपासनास्थानविधानार्थं संयद्वामत्वादिगुणविधानार्थं चाभिधानाच्चेति तृतीयार्थ इति तन्न । भावप्रधानताकल्पनापातात् । कं ब्रह्मेति सुखमात्राभिधानेन सुखसम्बन्धाभिधानाभावेन विशिष्टपदायोगाच्च । सुखसम्बन्ध-मात्रस्य व्यभिचारित्वेन त्वद्रीत्या ''यद्वाव कं तदेव ख''मिति वाक्यशेषोक्तापरिच्छिन्नत्व-रूपश्रैष्ठयस्यैव विशिष्टशब्दार्थत्वेन वक्तव्यत्वाच्च । कं ब्रह्म खं ब्रह्मेत्युक्तयोः कखयोर्भेदशङ्कया ''कं च खं च तु न विजानामी''ति प्रश्ने कखशब्दोक्तयोरानन्दज्ञानयोर्नभेद इति भावेन ''यदेव कं तदेव ख''मिति वाक्यशेषस्य प्रवृत्तत्वेन तेनापरिच्छिन्नत्वालाभात् । ब्रह्मशब्देनैव सुखेऽपरिच्छिन्नत्वरूपवैशिष्ट्यस्यैवौचित्याच्च । यदपि श्रुतोपनिषत्कस्याधिगतपरमपुरुषया-थात्म्यस्यानुसन्धेयतया या प्रतिपाद्यमानाऽर्चिरादिका गतिः तामपुनरावृत्तिलक्षणपरम-पुरुषप्राप्तिकरीमुपकोसलायाक्षिपुरुषं श्रुतवते ''तेऽर्चिषमभिसम्भवन्ती''त्यारभ्य ''इमं मानव-मावर्तं नावर्तंत'' इत्यभिधानाच्चेति चतुर्थार्थ इति तन्न । श्रुत्यननुगमात् । कशब्दवैयर्थ्या-द्गतिशब्दास्वारस्याच्च ।

यच्च प्रतिबिम्बादीनां नियमेन चक्षुष्यनवस्थितेरमृतत्वादीनां निरुपाधिकानां तेष्वसम्भवान्न छायादिरितरोऽक्षिस्थ इत्याद्यद्वितीयसूत्रोक्तहेत्वोरितरत्र व्यतिरेककथनार्थमन्तिममिति तन्न । प्रत्यधिकरणं सिद्धान्तहेतूनां पूर्वपक्ष्यभिमतेऽर्थे व्यतिरेककथनाय सूत्रान्तरस्यावश्यकतापत्तेः । अर्थाद्व्यतिरेकसिद्धाविहापि परमात्मन्युपपत्तिस्थितिकथनाभ्यामन्यत्रासम्भवानवस्थित्योर्लाभे-नाद्यद्वितीयाभ्यां पौनरुक्त्याच्च । आद्यद्वितीयसूत्रोक्तव्यतिरेकोक्तिपरत्वेऽसम्भवादनवस्थितेश्चेति

विन्यासापत्तेश्च । अनवस्थितिशब्दस्य प्रसिद्धार्थत्यागाच्च । सदाशब्दादेरध्याहार्यत्वाच्चेति दूषितमित्यर्थः । ननु कं ब्रह्म खं ब्रह्मेति निरतिशयानन्दं ब्रह्मेत्यभिहितमिति कथं ज्ञायते । यतो नाम ब्रह्मेत्यादाविव कं ब्रह्म खं ब्रह्मेति प्रसिद्धसुखाकाशयोरेव ब्रह्मदृष्टिर्विधीयत इत्याशङ्कायां पूर्ववाक्यस्य ब्रह्मपरत्वोपपादकं अत एव च सब्रह्मेति चतुर्थसूत्रमित्युक्तं रामानुजभाष्ये । तत्कुतो न व्याक्रियते नापि दूष्यत इत्यत आह ॥ कैश्चिदिति ॥ ईक्षतीति ॥ एतेन तत्रापि प्रतिज्ञाविरोधादिति पञ्चमं सूत्रं प्रक्षिप्तमेवेत्युक्तं भवति । पूर्ववाक्यस्य ब्रह्मपरत्वोपपादनं च भाष्याद्युक्तदिशा बोध्यमिति भावः । अद्वैतिमतप्रतिकूलमिदमित्याह ॥ अत्रापीति ॥ मिथ्याभेदपरत्वं च निरसिष्यत इति भावः । यत्कश्चिदाह अनवस्थितेरित्यतः प्राक्तनमेकमधिकरणम् । अनवस्थितेरिति त्वधिकरणान्तरम् । आद्यस्याक्षिवाक्यं विषयः । अंत्यस्य तु ''अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः । ईशस्सर्वस्य जगत'' इत्यादीति । तत्राद्येऽक्षिस्थश्छायाजीवान्यतरोऽथ शिव इति संशये जीवादिरिति प्राप्ते शिव इति सिद्धान्त इति । तन्न । अन्तर्नयेन पौनरुक्त्यात् । तत्राक्षिस्थत्वस्याप्युक्तेः । वाक्यभेदमात्रेणाधिकरणभेदायोगात् । अमृतत्वाभयत्वसंयद्वामत्ववामनित्वभामनित्वादीनां लिङ्गानां पुष्करपलाशवाक्योक्तपापाश्लेषरूपस्यार्चिरादिवाक्योक्तब्रह्मप्राप्तिरूपफलस्य कं ब्रह्मेति प्रकरणस्य च ब्रह्मत्वसाधकस्य च सत्त्वेन ततोऽप्याधिक्येन संशयस्यैवानुदयात् । यदत्रोक्तं शिवार्कमणिदीपिकायां अक्ष्याधारत्वस्य स्वमहिमप्रतिष्ठे शिवे मुख्यत्वायोगाद्रूपविशेषावच्छेदेनौपचारिकत्वकल्पने बाधकाभावादात्मब्रह्मश्रुत्योस्संयद्वामत्वादिगुणश्रवणस्य च इतिशब्दशिरस्कत्वेन मनो ब्रह्मेतीत्यादिवदतस्मिंस्तद्रूपप्रत्ययपरत्वावगमात् । तत्सहचारेणामृतत्वादिश्रवणस्यापि तन्मात्रपरत्वावगमात् अमृतत्वादेर्मुक्तौ सत्त्वेन भाविभावाभिप्रायेणोपपत्तेश्चेत्यादिप्रकारेण ब्रह्मप्रापकाणामन्यथासिद्धेः जीवे चाक्षिस्थत्वस्य मुख्यस्य सम्भवाज्जीव एवाक्षिस्थ इति विशेषशङ्केति तत्तुच्छम् । एकेन लिङ्गेन श्रुतिलिङ्गादीनां बहूनामन्यथानयनायोगात् । स्वमहिमप्रतिष्ठस्याप्यादित्याद्यंतस्स्थत्वस्थार्भकौकस्त्वस्य च प्रागेवोक्तत्वात् । ''हृदि ह्येष आत्मे''त्यादिना जीवस्य सदा हृदिस्थत्वात् । रूपादिग्रहणकाले चक्षुस्संयोगाङ्गीकारेऽपि नित्यं तत्रावस्थानाभावेन ''य एषोऽन्तरक्षिणी''ति नित्यवच्छ्रवणविरोधादेककालावच्छेदेनौपचारिकत्वावश्यंभावाच्च ।

यदपि य एष इति प्रसिद्धत्वेन निर्देशादक्षिस्थत्वस्य शिवे प्रसिद्ध्यभावाज्जीवादिरिति तदपि न । जीवेऽप्यप्रसिद्धेः । अन्तरधिकरणविषयवाक्य एवाक्षिस्थत्वस्य प्रसिद्धेश्च । यत्तु

सर्वपापोद्गतत्वेनादित्यान्तर्वर्त्यैव ब्रह्म नाक्ष्यन्तर्वर्तीत्यधिकाशङ्केति तदसारम् । यन्नाम तन्नामेत्यादिनाऽऽदित्याक्ष्यन्तःस्थयोरेकधर्मकत्वस्य तत्र श्रुतावेवोक्तेः । सर्वपापादुदितत्वस्याक्षिस्थेऽपि सिद्धेरिति दिक् । किञ्च ''सहरिस्सपरः परो वरीयान् यदिदं चक्षुषि सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छति स वामनस्स भामनः'' इत्यादि- समाख्याश्रुत्या ''यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुभिः । स वामन'' इत्यादिस्मृत्या शिवपरत्वसिद्धान्तस्य विरोधश्च ।

ज्ञानानन्दात्मकं पूर्णं परं ब्रह्म स्वयं हरिः ।
नैजानन्दबलोद्रेकः कमित्युक्तो मनीषिभिः ॥

इत्यादिस्मृत्याऽस्य प्रकरणस्य वैष्णवत्वबोधिन्या विरोधश्चेति । सूत्रेंऽतर इति निर्देशायोगः । उपपत्तेरिति हेतुरप्ययुक्तः । रुद्रस्य ''शिर उत्पिपेष स्तुहि श्रुतं गर्तसदं युवान''मित्यादिना मृतिपारतन्त्र्यादेरुक्तत्वेनामृतत्वादे रुद्रेऽनुपपत्तेः । ''तमेतास्सप्ताक्षितय उपतिष्ठन्ते या अक्षन्लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्त'' इत्यादौ रुद्रस्याक्षिस्थोपासकत्वोक्तेश्च । एवं सूत्रान्तरेऽनुपपत्तिरूह्या । यदप्यनवस्थितेरित्यधिकरणान्तरमिति तन्न । बाधकोक्त्यापेक्षितपरपक्षनिरासपरत्वेन पूर्वशेषत्वसम्भवेऽन्यथात्वायोगात् । ''ईशस्सर्वस्य जगत'' इति ब्रह्मलिङ्गसत्त्वेन तेन प्राणाग्निहोत्रप्रकरणबाधसम्भवेनाङ्गुष्ठमात्रत्वस्य च हृद्यपेक्षयेत्यत्र वक्ष्यमाणत्वेन संशयायोगात् । ''विदेहि रुद्रो रुद्रियं महित्व''मिति पराधीनपदप्राप्त्युक्त्या सर्वजगदीशत्वायोगाच्च । अङ्गुष्ठमात्रस्तल्लिङ्गादिति निर्देष्टव्ये परमतप्रतिक्षेपरूपतया प्रधानसूत्रनिर्देशायोगाच्चेत्यपि ध्येयम् ।

**पाण्डुरङ्गि** – यथाऽन्तर उपपत्तेरित्यत्रोपपत्तेरित्यनेनैवान्यत्रानुपुपपत्तेरुक्तत्वादन्यत्रानुपपत्तेः परस्यानवस्थितेरिति पञ्चमसूत्रवैयर्थ्यं एवमेतज्जातीयके द्रष्टव्य इत्यर्थः ॥

## तात्पर्यचन्द्रिका

**टीकाक्षरार्थस्तु अग्नेरेवादित्यस्थत्वमुच्यतेऽत एवेति ॥ अग्नेरादित्यस्थत्वस्योच्यमानत्वादेवेत्यर्थः । अनेन ''अतोऽक्ष्यादित्ययोरैक्या''दिति भाष्यस्थोऽतश्शब्दः सन्निहितेनैक्यादित्यनेन नान्वेति । प्रकृतस्यात इत्यनेन परामृष्टस्यादित्यस्थत्वस्यैक्ये हेतुत्वायोगात् । किं तु व्यवहितेन ''अत्राप्यग्निरेवोच्यत'' इत्यनेनान्वेतीत्युक्तं भवति**

।। वक्रसङ्गत्याऽधिकरणारम्भ इति ।। यद्यपि विष्णुज्ञानान्मोक्ष इत्युक्तमयुक्तम् । तद्यथेत्यत्राक्षिस्थस्याग्नेर्ज्ञानान्मोक्षश्रवणादिति ऋजुसङ्गत्यैवाधिकरणमारभ्याग्नेरे-वाक्षिस्थत्वमिति पूर्वपक्षे आदित्यस्थत्वं हेतूकर्तुं शक्यम् । पूर्वपक्षे तस्य हेतूकरणं च वक्रसङ्गत्याऽधिकरणारम्भेऽपि समम् । तथापि यथा सिद्धान्ते आदित्यदेवताया आदित्यमण्डलस्थत्वेऽप्यमृतत्वादिहेतुभिरिदमक्षिस्थत्वं ब्रह्मण एव । तथा पूर्वपक्षेऽग्नेरादित्यमण्डलस्थत्वेऽप्यक्षिस्थत्वं ब्रह्मण एवेत्यादित्यस्थत्वस्य विष्णौ समन्वयो न सिध्येत् । आदित्यस्थो विष्णुस्ततश्चार्थादक्षिस्थोऽपि स एवेत्या-नन्दमयाधिकरणोक्तमादित्यदेवतास्थत्वादिकमयुक्तम् । अग्नेरेवाक्ष्यादित्यदेवतास्थ-त्वादिति वक्रसङ्गत्याऽधिकरणारम्भे तु पूर्वोक्तस्य विष्णावादित्यदेवतास्थत्वस्येह पूर्वपक्षे आक्षेपात्तन्निरासस्य च विष्णोरेवादित्यस्थत्वमिति सिद्धान्ताभिप्रायं विनाऽसिद्धेस्तत्समन्वयः सिद्ध्यतीति भावः । यद्वाऽऽदित्यस्थत्वस्य पूर्वपक्षे हेतुमात्रत्वेनोक्तौ पूर्वपक्षहेतुरपि सिद्धान्तिना समन्वेतव्य इति नियमाभावान्न तत्समन्वय सिद्धिः । उक्तादित्यस्थत्वाक्षेपमुखेन तु पूर्वपक्षे सिद्धान्ते तत्समन्वयोऽपि कर्तव्य इति ''य एष आदित्ये पुरुषो दृश्यत'' इति वाक्यमपि ब्रह्मणि समन्वितं भवतीति भावः ।।

अग्नीनामिति बहुवचनमिति ।। भाष्ये बहुवचनादिकं ''अथ हैनं गार्हपत्योऽनुशशास य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि । अथ हैनमन्वाहार्यपचनोऽनुशशास य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि अथ हैनमाहवनीयोऽनुशशास य एष विद्युति पुरुषो दृश्यते सोऽहमस्मी''ति श्रवणाद्गार्हपत्यादीनां त्रयाणां क्रमेणादित्यादित्रितयस्थत्वं तथा च प्रसिद्धगार्हपत्य-स्यैवाक्षिस्थत्वमिति प्रदर्शनार्थम् । न तु त्रयाणामक्षिस्थत्वप्रदर्शनार्थमित्यर्थः ।।

ह्वयाम्यग्निमित्यादाविवेति ।। यथा ''ह्वयाम्यग्निं प्रथमं स्वस्तय'' इत्यत्राग्नेरुप-क्रमेऽपि ''सवितारमूतये । हिरण्ययेन सविता रथेने''त्यादिसवितृश्रुतिलिङ्गादिना तत्प्रकरणं सावित्रम् । अत एवोक्तमनुक्रमणिकायां ''ह्वयाम्येकादशसावित्र''मिति । तथाऽत्रापि ब्रह्मण उपक्रमेऽप्यस्मद्विद्येत्यग्नेरुक्तत्वादग्नीनामेवेदं प्रकरणमित्यर्थः ।।

तत्तत्प्रेरकत्वेनेति ॥ श्रुतौ वामेति भामेतिशब्दाभ्यां स्त्रीपुरुषरूपसर्वप्रेरकताया उक्तत्वादिति भावः । उक्तं हि तत्वप्रदीपे ''वामं सौन्दर्यम् । भामं तेजः । तत्प्रधानत्वात्स्त्रीपुरुषा वामभामशब्दशब्दिताः । तन्नेता वामनिर्भामनि''रिति ॥ दिव्यदृष्टिगोचर इति ॥ ततश्च श्रुतौ ''य एषोऽन्तरक्षिणि पुरुषो दृश्यत'' इति दृश्यत्वाद्युक्तिर्युक्तेति भावः ॥ छ ॥ **अन्तराधिकरणम् ॥ ४ ॥**

**प्रकाशिका** – ''यतो य एष आदित्ये पुरुषस्सोऽहमस्मि स एवाहमस्मीत्यग्नेरेवादित्यस्थत्वमुच्यतेऽत एवे''ति टीकावाक्यस्य पर्यवसितमर्थं वदन्यदेतच्छब्दाभ्यां वक्रवाक्यवचनभाष्ययोजनं फलमित्याह ॥ अग्नेरिति ॥ य एष आदित्ये पुरुष इत्यादावग्नीनामेवादित्यस्थत्वमुच्यते । अतोऽक्ष्यादित्ययोरैक्याद्य एषोऽन्तरक्षिणि पुरुषो दृश्यत इत्यत्राग्निरेवोच्यत इति भाष्यस्थ इत्यर्थः । ''अत्रादित्यस्थत्वलिङ्गस्यापि विष्णौ समन्वयसिद्ध्यर्थं वक्रसङ्गत्याऽधिकरणारम्भ'' इत्यत्र का नाम ऋजुसङ्गतिः । का च वक्रा । कथं ऋजुसङ्गतौ तत्समन्वयस्यासिद्धिः । वक्रायां तत्सिद्धिरिति न ज्ञायते । अतो द्वेधा तदभिप्रायमाह ॥ वक्रेति ॥ उक्तमिति ॥ ''तन्निष्ठस्य मोक्षोपदेशात् । नेतरोनुपपत्ते''रित्यादाविति भावः । तद्यथेह पुष्करपलाश आपो न श्लिष्यंत एवमेवंविदि पापं कर्म न श्लिष्यत'' इति तज्ज्ञानात्सर्वपापाश्लेषेण मोक्षस्यापि तदन्यथानुपपत्त्या सिद्धेर्मोक्ष- श्रवणादित्युक्तम् । आदित्यमण्डलस्थत्वेऽपि तस्य सिद्धान्तेऽनुमतत्वादिति भावः । वक्रसङ्गतिप्रकारं वदंस्तत्र समन्वयसिद्धिप्रकारमाह ॥ आदित्यस्थ इति ॥ ''यश्चासावादित्य इत्यानन्दमयस्यादित्यस्थत्वमुक्तम् । ततश्चार्थादक्षिस्थत्वमप्युक्त''मित्यादिटीकावाक्यस्यार्थानुवादोऽयमिति । यदानन्दमयाधिकरणोक्तमादित्यदेवतास्थत्वमार्थिकमक्षिस्थत्वं च तदयुक्तमित्यर्थः ॥

अक्ष्यादित्यदेवतास्थत्वादितीति ॥ अत्रायं क्रमः । अग्नेरेवाक्षिदेवतास्थत्वम् । कुत एतत् । योऽसावादित्ये पुरुषस्सोऽहमस्मीत्यक्ष्यभिन्नादित्यदेवतास्थत्वादित्येवं वक्रसङ्गत्येत्यर्थः । एतच्च प्राचीनटीकारीत्याऽक्ष्यादित्यशब्दयोर्देवतापरत्वमुपेत्य सङ्गत्युपपादनमिति ध्येयम् । ननु पूर्वत्र ''यश्चासावादित्य'' इत्यादित्यस्थत्वं नाम विष्णोरादित्यदेवतास्थत्वम् । यदाहुस्तैत्तिरीयभाष्ये ''स विष्णुस्सर्वजीवेषु नृषु देवेषु च स्थितः । एक एवे''त्यादि । उक्तं च प्राक् ''भेदव्यपदेशाच्चे''त्यत्र टीकायां ''स यश्चायमित्यानन्दमयस्यापकृष्टोत्कृष्टजीवेषु पुरुषादित्यपदोपलक्षितेषु स्थितिकथना''दिति । तथा च तत्रार्थादापाद्यमानमक्षिस्थत्वमेवेत्यक्ष्यादिशब्दस्य

देवतापरत्वपक्षे सङ्गत्युपपादनसम्भवेऽपि टीकाकृत्पक्षेऽक्ष्यादिशब्दस्य जडपरत्वेनान्यस्याक्षिस्थत्वे प्राचीनमप्यग्नेरेवेति कथमाक्षेप इति चेत् अत्राहुः वामनिभामनिशब्दोक्तसर्वस्त्रीपुंसप्रेरकत्वेनाग्नेस्तदक्षिस्थत्वे स एव पूर्वत्राप्युक्तादित्यमण्डलस्थ आपन्न इति तेनैवोपपत्तौ तत्रस्थतया किमीश्वरेणेत्याक्षेप इति अग्नीनामिति बहुवचनमादिपदद्वयं च बह्वग्निश्रुतिसूचनाय प्रयुक्तमिति वाक्यस्य तात्पर्यमाह ।। अग्नीनामिति ।। सुखविशिष्टसूत्रे ''न चोपक्रमविरोधः । ह्वयाम्यग्निमित्यादाविवोपपत्ते''रित्युक्तम् । तद्दुर्गमार्थत्वाद्व्यनक्ति ।। यथेति ।। अनवस्थितेरिति सूत्रटीकायां ''तत्तत्प्रेरकत्वेन तत्तच्चक्षुस्थितेरभिप्रेतत्वा''दित्युक्तम् । श्रुतौ प्रेरकत्वबोधकपदाश्रवणात्कथमेतदित्यत आह ।। श्रुताविति ।। उपसंहारे ''विष्णुरेवाक्ष्यादित्यस्थो दिव्यदृष्टिगोचर'' इत्युक्तम् । तस्य प्रयोजनमाह ।। ततश्चेति ।। शिष्टमुपन्यासमुखेन स्पष्टीकृतमिति भावः ।। अन्तराधिकरणम् ।। ४ ।।

**पाण्डुरङ्गि** – तथापि यथा सिद्धान्त इति ।। विष्णोरादित्यस्थत्वानाक्षेपो हि आदित्यस्थत्वं विष्णोरिति सिद्धान्त्यभिप्रायस्य पूर्वपक्षिणं प्रति ज्ञापकाभावात् । सिद्धान्ते आदित्यमण्डलस्थत्वमादित्यदेवताया एवेति पूर्वपक्षी ज्ञात्वा पूर्वपक्षं कुर्यात् । तस्य चैवमनुसन्धानं स्यादित्यनुवादोऽयमित्यवगन्तव्यम् । एवं च पूर्वपक्ष इत्यादिकं नासङ्गतम् । सिद्धान्तफलाक्षेपस्यैव पूर्वपक्षफलत्वान्मोक्ष दत्ववदादित्यस्थत्वस्याक्षेपस्य कर्तुमशक्यत्वादादित्यस्थत्वादक्षिस्थोऽग्निरिति पूर्वपक्षे कृते अग्नेरादित्यस्थत्वेऽप्यक्षिस्थत्वं ब्रह्मण एवेत्येवं सिद्धान्तस्य कर्तुं शक्यत्वेनाग्नेरादित्यस्थत्वनिराकरणपूर्वकं विष्णौ तस्यासमर्थने यत्रादित्यस्थत्वं तत्राग्निस्थत्वमिति व्याप्तेस्सिद्धान्तिनं प्रत्यभावेनानैकान्तिकहेतुं पूर्वपक्षी न कुर्यादित्यर्थः । इदं च पूर्वपक्षे हेतूकृतस्य सिद्धान्तिना समन्वयोऽवश्यं वाच्य इति नियममङ्गीकृत्योक्तम् । शास्त्रदृष्टचेत्यादौ तथा दर्शनात् । तथापि विकारशब्दादित्यादौ तददर्शनात्पक्षांतरमाह ।। यद्वेति ।। यद्वा ननु ऋजुसङ्गत्याऽधिकरणारम्भेत्यादित्यस्थत्वस्य हेतूकृतत्वेऽपि । पूर्वपक्षिणा हेतूकृतस्यापि सिद्धांतिना समन्वेतव्यत्वे नियमाभावादादित्यस्थत्वलिङ्गसमन्वयोऽपि सेत्स्यतीत्येव वक्रसङ्गत्याऽधिकरणारम्भोऽनुपपन्न एवेत्यरुचेराह ।। यद्वेति ।। तत्तत्प्रेरकत्वेनेति टीकायामन्यथाऽनवस्थितेः सूत्रानुपपत्तेरिति तात्पर्यं द्रष्टव्यम् ।। छ ।। अन्तराधिकरणम् ।। ४ ।।

## अन्तर्याम्यधिकरणम्

॥ ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ अत्र चक्षुरंतस्स्थस्य ब्रह्मत्वे हेतूकृतामृतत्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भाष्य एवोक्तम् । अत्रान्तर्यामी किं प्रकृत्यादिः किं वा विष्णुरिति चिन्ता । तदर्थं यस्य पृथिवी शरीरमित्यादिनोक्तं पृथिव्यादेरंतर्यामिणं प्रति शरीरत्वं किं ब्रह्म प्रति न युक्तमुत युक्तमिति । तदर्थं शरीरत्वं किं रूढमुत यौगिकमिति । तदर्थं किं रूढौ बाधकं नास्त्युतास्तीति । तदर्थं यं पृथिवी न वेदेत्यादिनांतर्यामिण्युक्तं पृथिव्याद्यविदितत्वं किं प्रकृत्यादौ युक्तमुत नेति । तदर्थं यं पृथिवीत्यादौ पृथिव्यादिशब्दः किमचेतनपरः किं वा तदभिमानिचेतनपर इति । अचेतनपरत्वे ह्यचेतनाविदितत्वं प्रकृत्यादेरपि सम्भवति । अन्यथा तु न सम्भवतीति । पूर्वपक्षस्तु ।

**प्रकाशिका** – ॥ ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ ''तत्र चैतदमृतमित्युक्तममृतत्वमुच्यते'' इत्यादिभाष्यटीकयोः पूर्वश्रुतिसङ्गतेरेव प्रतीत्या पूर्वाधिकरण-सङ्गत्यप्रतीतेः ''श्रुत्यादिसङ्गतिं दर्शयती''ति टीका न युक्तेत्यत आह । हेतूकृतेति ॥ उपपत्तेरित्यनेनेत्यर्थः । सङ्गतिराक्षेपिकीत्यर्थः ॥ उक्तमिति ॥ श्रुति- सङ्गत्यविनाभूत-त्वादुक्तप्रायमित्यर्थः । पूर्वाक्षेपसमर्थनं पूर्ववद्धयेयम् । एतेनेहामृतत्वस्यैवाक्षेपात्तेन प्राग्वदन्त-र्यामी च विष्णुरिति शङ्कानवकाशस्सूचितः । अत्र पूर्वपक्षेंऽतरत्वमप्यन्यस्यैवेति वक्ष्यमाणत्वात् ''सर्वेषां भूतानामन्तरपुरुष'' इति ''विवक्षितगुणोपपत्ते''रित्यत्र विष्णुलिङ्गतया निर्णीतेनांत-रत्वेन विष्णुः किं न स्यादित्यपि शङ्का प्रत्युक्ता । अमृतत्वाक्षेपस्तु सन्निधानाद्भाष्यादावत्रापि दर्शितः । यद्यप्यत्र ''यश्चक्षुषितिष्ठन्नि''ति चक्षुस्स्थस्यात्रोक्तपूर्वपक्षन्यायेनान्यत्वात् प्रागक्षि-स्थोऽपि स एवेत्याक्षेप ऋजुः । यद्यत्रांतर्यामी विष्णोरन्यस्तर्हि ''अन्तर्याम्यमृत'' इत्युक्तामृतत्वमपि तस्यैवेति प्रागमृतत्वयुक्तोऽक्षिस्थोऽपि स एवेत्याक्षेपो वक्रः । प्राचीनस्सौत्रप्रतिज्ञांशस्य । अयं च हेत्वंशस्य । अतस्स एव वाच्य इति भाति । तथापि सर्वानुगुण्याय वाऽमृतत्वमुखेन चक्षुरादिस्थस्यापि विष्णुत्वशङ्का मा भूदिति वा तदाक्षेप उक्तः । अत्र सुधोक्तः साक्षादन्तरवस्थानविशिष्टरमणरूपान्तरत्वाक्षेपस्तु प्रागेव सर्वत्रेति नये विवृत इति भावः । एतेन स्थाननिर्देशोपपादनाय पृथिव्यादिस्थाननिर्देशो दृष्टान्तितः । तस्याक्षेपा-त्सङ्गतिरिति कल्पतरूक्तं निरस्तम् । स्थानसूत्र एवमर्थस्य निरासात् । प्रधानहेत्वाक्षेपसम्भवे

त्वद्रीत्या शङ्कानिरासकसूत्राक्षेपायोगात् । तदेतदाह ॥ ब्रह्मत्वे हेतूकृतेति ॥ एतेनैव चक्षुषि स्थित्यादेः परमात्मन एव यश्चक्षुषि तिष्ठन्निति निर्देशादित्युक्तस्य समर्थनार्थमेतदिति केषांचित्सङ्गत्युक्तिरप्यपास्तेति । एवं सङ्गतिटीकां विवृत्य विषयसंशयटीकां व्यनक्ति ॥ अत्रेति ॥ बृहदारण्यके तृतीये ''यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरोऽयं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरोयमयत्येष त आत्मान्तर्याम्यमृत'' इत्येवंरूपेणाबग्न्यंतरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजस्स्वधिदैवतं यस्सर्वेषु भूतेष्वित्यधिभूतं प्राण वाक्चक्षुः श्रोत्रंमनस्त्वगग्निज्ञानरेतस्स्वध्यात्मं श्रुतोंऽतर्यामी विषय इत्यर्थः । टीकायामधिदैवादिसर्वप्रकरणश्रुतांतर्यामिमात्रविषयताद्योतनायांतर्यामित्वं विषय इत्युक्तावपि सूत्रभाष्यानुरोधेनांतर्यामीत्युक्तम् । आदिपदेन तत्तदभिमानिजीवाः । अस्पष्टांशे फलफलिभावमाह ॥ अचेतनेति ॥ यदा वक्ष्यमाणदिशाऽचेतनपरत्वं तदा जडाविदितत्वस्य प्रकृत्यादेरुपपत्ते रूढौ बाधकाभावात् तादृक्शरीरत्वं विष्णोर्न युक्तमिति प्रकृत्यादिरेवेति पूर्वपक्षे फलम् । जीवादन्तर्यामिभेदोक्तिर्नेति पूर्वपक्षिणो भावः । यदा तु चेतनपरत्वं तदा तेन साकल्येनाविदितत्वस्य प्रकृत्यादावयोगाद्बाधकेन रूढित्यागाच्छीर्यमाणत्वयोगेन विष्णावपि तच्छरीरकत्वसम्भवाद्विष्णुरेवेति सिद्धान्ते फलमित्यर्थः । यद्यपि विष्णुरिति चिन्तानन्तरं तदर्थममृतत्वादिकं गौणमुत मुख्यमिति । तदर्थं बाधकमस्त्युत नेति । तदर्थं शरीरत्वं विष्णौ न युक्तमुत युक्तमिति । तदर्थं तत्किं रूढं यौगिकं वेत्येव यथासूत्रन्यासं चिन्तोपदर्शनीया । आद्ये सूत्रे साधकलिङ्गस्य द्वितीयादौ परलिङ्गसावकाशतायाश्चोक्तेः । तथापि सिद्धान्ते शरीरपदस्य यौगिकत्वोक्तेर्निर्बीजतानिरासायाधिदैवपदस्वारस्याय च तदभिप्रेतैवेयं चिन्ता दर्शिता । अत एव पूर्वपक्षटीकायां शरीरत्वस्याघटनेनैव पूर्वं विष्णावुक्ता । सिद्धान्तटीकायां च ''यद्यपि योगाद्रूढेः प्राबल्यं तथापि निरवकाशाविदितत्वादिलिङ्गबलेन योगाङ्गीकारो युज्यत'' इत्युक्तमिति भावः ।

**पाण्डुरङ्गि –** ॥ ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ पूर्वपक्षे सिद्धान्ते च फलफलिभावमाह ॥ अचेतनेति ॥

## तात्पर्यचन्द्रिका

**पूर्वपक्षस्तु । एष त आत्मान्तर्यामीत्युक्तोंऽतर्यामी प्रकृतिः । अन्तर्यामिणि श्रुतस्य पृथिव्याद्यात्मकत्वरूपस्य पृथिव्यादिशरीरत्वस्य पृथिव्याद्युपादाने प्रकृतौ सम्भवात् । शरीरशब्दस्येदं पूर्वपक्षशरीरमित्यादौ स्वरूपेऽपि प्रयोगात् । यद्यपि ''यस्य दिशः**

**शरीरं यस्यात्माशरीर''मित्युक्तं दिगादिशरीरत्वं प्रकृतौ न मुख्यम् । पृथिव्यादेः प्राकृतत्वेऽपि दिगादेरप्राकृतत्वात् । तथापि गौणं तदस्तु । ब्रह्मणस्तु पृथिव्यादिशरीरत्वमपि न मुख्यम् । न च नित्ये दिगादिके ब्रह्मप्रति शीर्यमाणत्वादिरूपं यौगिकमपि शरीरत्वमस्ति । यः पृथिव्यां तिष्ठन्नित्यादिकं तु ''व्याप्तं कार्येषु कारण''मित्युक्तेः । पटे तंतव इति प्रतीतेश्च कारणस्यापि कार्यस्थत्वाद्युक्तम् । कार्यकारणयोश्च भिन्नाभिन्नत्वादभेदेन तदात्मकत्वं भेदेन तत्स्थत्वं चाविरुद्धम् । पृथिवीं यमयतीत्यादिनोक्तं च नियम्यत्वं गौणम् । कार्यस्य कारणाधीनत्वात् । आत्मानं यमयतीत्येतदप्यात्मप्रवृत्तेः शरीरादिद्वारा प्रकृत्यधीनत्वात् । यमात्मा न वेदेत्येतदपि ''अप्रतर्क्यमविज्ञेय''मित्यादिना प्रकृतेर्दुर्ज्ञानत्वात् । ''द्रष्टा श्रोते''त्यादिनोक्तं च द्रष्टृत्वादिकं प्राकृतानामिन्द्रियाणां दर्शनादिसाधनत्वेन करणे कर्तृत्वोपचाराद्वाऽभिमानिद्वारा वा प्रकृतौ युक्तम् ।**

**प्रकाशिका** – ''सोंऽतर्यामी प्रकृतिर्भवे''दित्यादिटीकां विवृण्वन् ''पृथिव्यादिशरीरत्वं निरवकाश''मिति न्यायविवरणोक्तशरीरत्वरूपनिरवकाशलिङ्गेन पूर्वपक्षद्वयं वक्तुं ''न च स्मार्त''मिति सूत्रसूचितं प्रकृतिपूर्वपक्षं तावदाह ॥ एष त इति ॥ एतेन स इति टीकास्थतच्छब्दार्थो विवृतः । यस्य पृथिवीत्यादिसर्वात्मकत्वादित्यंतटीकार्थं निष्कृष्याह ॥ अन्तर्यामिणीति ॥ तत्रानुपपत्तिमाशङ्क्य निराह ॥ यद्यपीति ॥ गौणमिति ॥ दिगाद्यभिमानिदेहस्य प्राकृतत्वाद्दिगादिरपि तथोच्यत इति भावः ॥ ब्रह्मणस्त्विति ॥ प्रकृतौ किंचिदेवामुख्यं ब्रह्मणि तु सर्वमपीति न तद्ग्रह इत्यर्थः । ननु ब्रह्मणि योगाङ्गीकारे मुख्यं युज्यत इत्यत आह ॥ न च नित्येति ॥ हेतुगर्भम् । ननु ब्रह्मपक्षे यथा दिगादिशरीरत्वमयुक्तं प्रकृतिपक्षेऽपि तथा न युक्तम् । पृथिव्यादिशरीरत्वं चोभयत्रापि युक्तमिति चेन्न । योगाद्रूढे रथकाराधिकरणन्यायेन बलवत्त्वादिति भावः । इयता ग्रन्थेनाद्यादिचिन्तात्रयस्थपूर्वपक्षकोटयो हेतुहेतुमद्भावापन्नतया विवृताः । इदानीं बाधकं नास्तीत्यादिकोटीर्विवरीतुकामः किमत्र बाधकम् । ''यःपृथिव्यां तिष्ठन् य आत्मनि तिष्ठ''न्नित्युक्तपृथिव्याद्याधारकत्वं वा ''यमयती'' त्युक्तपृथिव्यादिनियामकत्वं वा ''आत्मानं यमयती''युक्त चेतननियामकत्वं वाऽऽत्माविदितत्वं वा ''अदृष्टो द्रष्टाऽश्रुतश्श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाते''त्युक्तद्रष्टृत्वादिकं वेति कल्पान् हृदि कृत्वा ''न च पृथिव्यां तिष्ठन्नित्यादेरनुपपत्ति''रित्यादिटीकां विवृण्वन्क्रमेण निराह ॥ य

इति ॥ इत्युक्तेरिति ॥ ''कारणेषु स्थितं कार्यं व्याप्तं कार्येषु कारण''मिति पञ्चमगीतातात्पर्योक्तेरित्यर्थः । प्रत्यक्षं चाह ॥ पट इति ॥ एतेन टीकोपलक्षणमिति सूचितम् । टीकोक्ते विरोधं हृद्याशंक्य स्वयं समाधत्ते ॥ कार्येति ॥ गौणतां व्यनक्ति ॥ कार्यस्येति ॥ आत्मानमिति माध्यंदिनपाठः । विज्ञानमित्येव काण्वपाठः । यमिति ॥ पृथिव्याद्यविदितं त्वग्रे सावकाशयिष्यत इति भावः । इत्यादिना गीतावाक्येनेत्यर्थः ।

**पाण्डुरङ्गि** – यस्य पृथिवीशरीरमित्यादिनांऽतर्यामिणः पृथिव्यादिशरीरत्वश्रवणात्तस्य च प्रकृतानुपपत्तेरिति टीकाऽनुपपन्ना । प्रकृतेरिव विष्णोरपि पृथिव्यादिशरीरत्वोपपत्तेः । न च पृथिव्यादिशरीरत्वं नाम पृथिव्याद्यात्मकत्वं विवक्षितमिति वाच्यम् । तस्य च प्रकृतावसम्भवादित्यतः पृथिव्याद्यात्मकत्वस्य प्रकृतावुपपत्तौ नियामकमाह ॥ अन्तर्यामिणीति ॥ पृथिव्याद्युपादान इति तत्र हेतूक्तिः । शरीरशब्दस्य स्वरूपेऽपि प्रयोगादित्येवं टीकायामुक्तम् । तत्र दृष्टान्तस्तु नोक्त इत्यतो दृष्टान्तं वदन् व्याख्याति ॥ शरीरशब्दस्येति ॥ ननु दिगादिशरीरत्वस्य प्रकृतावभावेऽपि गौणस्यदिगादिशरीरत्वस्य प्रकृतौ सत्त्वेन प्रकृतेरन्तर्यामित्ववत् ब्रह्मणोऽपि गौणस्यदिगादिशरीरत्वस्य सम्भवादन्तर्यामित्वं किं न स्यादित्यतः प्रकृतौ दिगादिशरीरत्वस्य गौणत्वेऽपि पृथिव्याद्युपादानत्वेन पृथिव्याद्यात्मकत्वरूपपृथिव्यादिशरीरत्वस्य मुख्यत्वेनान्तर्यामित्वसम्भवेऽपि विष्णौ दिगादिशरीरत्ववत्पृथिव्यादिशरीरत्वस्यापि गौणत्वेनान्तर्यामित्वं न सम्भवतीत्यभिप्रायेणाह ॥ ब्रह्मणस्त्विति ॥ ननु शीर्यते नित्यमेवास्मादित्युक्तरीत्या यौगिकस्य पृथिव्यादिशरीरत्वस्य ब्रह्मण्यपि सम्भवाद्ब्रह्मणोऽप्यन्तर्यामिता स्यादित्यतः पृथिव्यादेर्यौगिकशरीरत्वसम्भवेऽपि दिगादेर्यौगिकमपि न सम्भवतीति न तस्यांतर्यामित्वमित्यभिप्रेत्याह ॥ न चेति ॥ अत्र यद्यपि प्रकृतौ पृथिव्यादिशरीरत्वस्य रूढत्ववद्विष्णौ पृथिव्यादिशरीरत्वस्य यौगिकत्वे न मुख्यत्वम् । ब्रह्मणि दिगादिशरीरत्वस्यामुख्यत्ववत्प्रकृतावपि दिगादिशरीरत्वममुख्यमेवेति प्रकृतेरेवान्तर्यामित्वमिति निर्णयो नोपपन्नः । तथापि रूढ्यपेक्षया योगस्यामुख्यत्वात्प्रकृतावेव रूढस्य शरीरत्वस्य सत्त्वाद्विष्णौ तु यौगिकत्वान्निर्णयोपपत्तिरिति हृदयम् । व्याप्तं कार्येषु कारणमित्यादिनेत्यत्र टीकास्थादिशब्दार्थमाह ॥ पटे तन्तव इति ॥ प्रतीतेश्चेति ॥ पृथिवीं यमयतीत्येतदुपचारेण नेतव्यमिति टीका । तत्रोपचारे निमित्तानुक्तेस्तत्र निमित्तं वदन्नेव व्याख्याति ॥ पृथिवी यमयतीत्यादिनोक्तं चेति ॥ पृथिवीं यमयतीत्येतदुपचारेण नेतव्यमित्येतदुपलक्षणम् ॥ आत्मानं यमयतीत्येतदपीति ॥ गौणमिति सम्बन्धः । ननु चान्तर्यामिणो द्रष्टा श्रोतेत्यादिना

द्रष्टृत्वमुच्यते। द्रष्टृत्वं च दर्शनकर्तृत्वं तच्च बुद्धिपूर्वप्रवृत्तिः । तथा च प्रकृतेः कथमन्तर्यामित्वम्। तस्या अचेतनत्वेन द्रष्टृत्वासम्भवादित्यत आह ॥ द्रष्टेति ॥ मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इति न्यायेन सम्भवति मुख्यार्थेऽमुख्यार्थग्रहणमन्याय्यमित्यरुचेराह ॥ अभिमानद्वारा वेति ॥ अन्यथेति ॥ जीवमात्रमन्तर्यामीत्येव पूर्वपक्ष इत्यर्थः । पृथिव्यादिजीवस्यैवैतदन्तर्यामित्वमित्युक्तं टीकायाम्। तत्र पृथिव्यादिरूप एव जीवोऽस्तीति प्रतीयते। तदयुक्तम्। पृथिव्यादिरूपस्य जीवस्याभावादित्यतः पृथिव्याद्यभिमानी जीवः पृथिव्यादिजीव इति मध्यमपदलोपीसमासोऽत्राभिमत इत्यभिप्रेत्याह ॥ पृथिव्यादीति ॥ पृथिव्यादिजीवानामन्तर्यामित्वे पृथिव्यादिशरीरत्वादेस्तस्मिन्नतिसुघटत्वादिति टीकायां हेतुरुक्तः । तत्र कथमतिसुघटत्वमित्यत आह ॥ तान्प्रतीति ॥ तदसम्भवात् प्रत्येकं सर्वनियंतृत्वासम्भवदित्यर्थः।

## तात्पर्यचन्द्रिका

अत्र यदुक्तमुभाभ्यां जीवमात्रमन्तर्यामीत्येव पूर्वः पक्षः । न तु प्रकृतिः । तस्याद्रष्टृत्वाद्यसम्भवादिति । तन्न । त्वन्मते ''तदैक्षते''ति श्रुतस्येक्षणस्य प्रकृतौ गौणत्वेनेक्षत्यधिकरणपूर्वपक्षवत् द्रष्टृत्वादेर्दर्शनरूपे ब्रह्मण्यारोपितत्वेन मायाविशिष्टनिष्ठत्वेन वाऽत्रत्यसिद्धान्तवच्च पृथिवीशरीरत्वादिप्रकृतिलिङ्गेन प्रधानेऽपि द्रष्टृत्वादेर्गौणत्वेनारोपितत्वेन वा चेतनविशिष्टनिष्ठत्वेन वा पूर्वपक्षस्य सम्भवात्। अन्यथा ''न च स्मार्तें''ति सूत्रे प्रकृतेर्निषेधो न स्यात् । पृथिव्याद्यभिमानिनां जीवानां वैतदन्तर्यामित्वम् । तान्प्रति पृथिव्यादेः स्थूलशरीरत्वात् । अत्र भामत्यां ''यःसर्वांल्लोकानंतरो यमयती''ति श्रुतस्य सर्वनियंतृत्वस्याभिमानिजीवेषु प्रत्येकमसम्भवान्नैवं पूर्वपक्ष इत्युक्तम्। तन्न। स्वाङ्गीकृतजीवमात्रपक्षेऽपि तदसम्भवात्। य इत्याद्येकवचनस्य समुदायपरत्वं त्वभिमानिपक्षेऽपि समम् । प्रत्युत जीवमात्रपक्ष एवायुक्तः। ''यस्य पृथिवीशरीर''मित्यादिनोक्तस्य पृथिव्याद्येकैकशरीरत्वस्य ''यस्य प्राणाश्शरीर''मित्यादिनोक्तस्य प्राणवाक्चक्षुःश्रोत्रादिशरीरत्वस्य चायोगात् । तस्मादभिमानिनामेवान्तर्यामित्वम् । न तु विष्णोः । तस्य पृथिव्याद्यात्मकत्वतद्देहत्वयोरयोगात् । न च तेन शीर्यमाणत्वादिना पृथिव्यादेस्तच्छरीरत्वम् । योगाद्रूढेर्बलीयस्त्वात्। ''यं पृथिवी न वेदे''त्युक्तं पृथिव्यादिनाऽविदितत्वं च तस्य

**जडत्वादभिमानिन्यपि युक्तम् । ''यमात्मा न वेदे''ति चेतनस्य पृथगुक्तेः पृथिव्यादिशब्दो नाभिमानिचेतनपरः । ''यः पृथिव्या अन्तर'' इत्युक्तमन्तरत्वं यदि भिन्नत्वं यदि वाऽन्तस्स्थत्वं द्वयमपि पृथिव्यादिशरीरकेऽभिमानिन्यपि युक्तम् । ''य आत्मनि तिष्ठन्नात्मानं यमयती''त्येतदपि तत्वाभिमानिनामस्मदाद्यात्मनियामकत्वाद्युक्तम् ।''यमात्मा न वेदे''ति त्वभिमानिजीवानां दुर्ज्ञानत्वाद्युक्तम् । यद्वा ''यःपृथिव्या''मित्यादाविव ''य आत्मनी''त्यत्राप्यात्माभिमानिजीव एवात्मान्तर्यामित्वेनोच्यत इति ॥**

**प्रकाशिका** – अत्र यदुक्तमिति ॥ स्पष्टयिष्यते चैतदग्रे ॥ गौणत्वेनेति ॥ गौणश्चेदिति सूत्रे द्वाभ्यामपि गौणत्वेनोक्तत्वादिति भावः ॥ प्रधानेऽपि द्रष्टृत्वादेर्गौणत्वेनेति ॥ नन्वक्षराधिकरणटीकायां द्रष्टृत्वादिश्रवणाज्जडप्रकृतेरसन्देहनिविष्टत्वमिति वक्ष्यत इति तद्विरुद्धयत इति चेन्न । तत्र द्रष्टृत्वादेः प्रथमतः श्रवणादिह चरमश्रुतद्रष्टृत्वादेः प्रथमावगतपृथिव्यादिशरीरस्थत्वपृथिवीस्थत्वादिना लिङ्गेन कथंचिन्नेयत्वादिति तात्पर्यात् । अत एव तत्र वक्ष्यति टीकाकारः ''उत्तराधिकरणे त्वीक्षणस्य प्रथमाप्रतीतेरस्त्यवकाश इती''ति भावः । किमर्थमेवमित्यतो विपक्षे सूत्रविरोधमाह ॥ अन्यथेति ॥ यदत्रोक्तं श्रुतप्रकाशे तदग्रे निरसिष्यते। एवं पृथिव्यादिशरीरत्वं नाम तदात्मकत्वमित्युपेत्यैकः पूर्वपक्षष्टीकाविवरणेन विवृतः । इदानीं तद्देहत्वमर्थमुपेत्य ''शारीरश्चे''ति सूत्रसूचितं द्वितीयं पक्षं ''पृथिव्यादिजीवस्य वैतदन्तर्यामित्व''मित्यादिटीकां विवृण्वन्नाह ॥ पृथिव्यादीति ॥ भाष्यसूत्रानुरोधेन टीकायामेकवचनोक्तावपि तज्जात्यभिप्रायमिति भावेन बहुवचनोक्तिः । अन्यथा भामतीमतरीत्या टीकायामपि जीवसामान्यमेवाभिमतमिति मन्दस्य शङ्का स्यात् । जीवसामान्यपक्षश्चाग्रेतनदोषदुष्टः । अत एव टीकायामुत्तरत्र ''प्रकृत्यादिलिङ्गेन तेषामन्तर्यामित्व''मिति ''अतोऽन्तर्यामी न विष्णुः । अपि तु प्रकृत्यादय'' इति च बहुवचनोक्तिः । अन्यथा तस्येति प्रकृत्यादिरित्येव च निर्देशस्स्यादिति भावः । अत्र परोक्तं बाधकमाशङ्क्याह ॥ अत्रेति ॥ नैवमिति ॥ किन्तु जीवसामान्यमित्यर्थः ॥ तदिति ॥ सर्वलोकनियंतृत्वस्य प्रत्येकं जीवेऽसम्भवादित्यर्थः । न प्रत्येकं जीवानां तन्नियंतृत्वम् । किंतु मिलितानाम् । यस्सर्वाँल्लोकानित्येकवचनं समुदायाशयमित्यत आह ॥ य इति ॥ अभिमानिनामप्युक्तरीत्या तत्तल्लोकनियामकत्वेन मिलित्वा सर्वलोकनियंतृत्वोपपत्तेरित्यर्थः ॥ प्रत्युतेति ॥

प्राणचक्षुरादीन्द्रियपृथिव्यादिभूतसङ्घातशरीरकत्वाज्जीवस्य पृथिव्यादिमात्रशरीरकत्वमयुक्तम् । अभिमानिनां तु तत्तन्मात्रनियामकत्वेन तत्तन्मात्रस्थूलशरीरकत्वं युक्तमिति भावः । ''विद्यमानेऽपि विष्णुलिङ्गेन तस्यांतर्यामित्व''मित्यादिटीकार्थमाह ॥ न तु विष्णोरित्यादि ॥ ''पृथिव्यादिशरीरत्वस्य कयापि विधयाऽवकाशाभावा''दिति टीकायां ''विधाशब्दस्य पृथिवीभिन्नत्वचिच्छरीरत्वोररीकारेणे''ति वाक्यानुरोधेन तदात्मकत्वतद्देहत्वरूपप्रकारद्वयमर्थं विवृत्य योगवृत्त्यापीत्यप्यर्थमभिप्रेत्य योगवृत्त्या विष्णौ घटनामाशङ्क्य निराह ॥ न च तेनेति ॥ बलीयस्त्वादिति ॥ तस्य जन्मादिनयपूर्वपक्ष एव व्युत्पादितत्वादिति भावः । रूढित्यागेन बाधकमाशङ्क्याह ॥ यमिति ॥ तस्य पृथिव्यादेः । जडत्वे युक्तिमाह ॥ यमिति ॥ माध्यंदिनपाठानुरोधेनात्मेत्युक्तम् । यं विज्ञानं न वेदेति काण्वपाठस्यैवोक्तौ विज्ञानशब्दस्या-त्मशब्दस्येव जीवे प्रसिद्ध्यभावेन चेतनाज्ञेयत्वं न स्पष्टं भायादिति भावः । नन्वथाप्यंतरपुरुष इत्यत्र निर्णीतांतरत्वं वा आत्मनि तिष्ठन्नित्यादिनोक्तं चेतननिष्ठत्वं वा चेतननियमनं वा रूढौ बाधकमस्त्वित्यतः क्रमेण निराह ॥ य इत्यादिना ॥ पूर्वमात्मशब्दस्य जीवसामान्यपरत्वं तद्वाक्यस्थ य इत्यादि यच्छब्दस्य पृथिव्यादितत्वाभिमानिजीवसमुदायपरत्वमुपेत्य तल्लिङ्गं सावकाशमित्युक्तम् । इदानीमात्मशब्दस्सकलचेतनपर एव । य इत्यादियच्छब्दस्तु सकलात्माभिमानिचेतनपरः । पूर्वत्र पृथिव्यादिशब्दैस्तदभिमानिजीवस्यैव ग्रहणेनात्रापि तत्प्रायपाठेन तथैव ग्राह्यत्वात् । आत्माज्ञेयत्वादि चात्माभिमानिनो जीवस्य दुर्ज्ञेयत्वादिना युक्तमिति भावेनाह ॥ यद्वेति ॥ एवं चांतर्यामिणोऽन्यत्वादमृतत्वस्यापि तस्यैव वाच्यत्वात्प्रागुक्तहेतुना नाक्षिस्थो विष्णुरिति भावः ।

**पाण्डुरङ्गि –** ननु पृथिव्यादीनामनेकत्वान्नांतर्यामित्वम् । यस्सर्वानित्यंतर्यामिण एकत्वस्य बोधनादिति चेन्न । तथा सति जीवमात्रमित्यपि न स्यात् । तेषामप्यनेकत्वसाम्यात् । न च जीवानामनेकत्वेऽपि तत्समुदायापेक्षयैकवचनोपपत्तिरिति वाच्यम् । तथा सत्यभिमानिपक्षेऽपि समुदायविवक्षया तदुपपत्तिरिति भावेनाह ॥ य इतीति ॥ ननु जीवमात्रस्यैकस्मिन्काले पृथिव्यादिशरीरत्वासम्भवेऽपि कदाचित्कस्यचिदित्येवंरूपेण जीवमात्रस्य पृथिव्यादि-शरीरत्वमुपपन्नमित्यरुचेराह ॥ यस्य प्राणा इति ॥ प्रथमसूत्रोक्तं पृथिव्याद्यविदितत्वमपि सावकाशमित्यतो न प्रकृतपक्षे बाधकमित्याह ॥ यं पृथिवी न वेदेति ॥ ननु कथं पृथिव्यादेर्जडत्वेन तदविदितत्वं जीवस्य । उच्यते । पृथिव्यादिशब्दानामभिमानिचेतन-परत्वात्तदविदितत्वस्य जीवेऽपि सम्भवादित्यत आह ॥ यमात्मा न वेदेति ॥ चेतनस्य

पृथगुक्तेरिति ।। अन्यथा पौनरुक्त्यं स्यादिति भावः ।। अभिमानिन्यपीति ।। अभिमानिनः पृथिव्यादिरूपशरीराद्भिन्नत्वात्तदन्तस्स्थत्वाच्चेति भावः ।। तत्वाभिमानिनामिति ।। पृथिव्याद्यभिमानिनामित्यर्थः । ननु पृथिव्यादेर्जडत्वेन तदविदितत्वस्याभिमानिनि सम्भवेऽपि पृथिव्याद्यभिमानिनामात्माविदितत्वं कथम् । आत्मनश्चेतनत्वेन तदविदितत्वस्यासम्भवादित्यत आह ।। यमात्मेति ।। नन्वेवं प्रायपाठबाधः । यःपृथिव्यामित्यादौ पृथिव्याद्यभिमा-निजीवस्यांतर्यामित्ववद्य आत्मनीत्यत्रांतर्यामिपरत्वाभावेन पृथिव्याद्यभिमानिदेवतानामन्त-र्यामित्ववचनस्य प्रायपाठविरुद्धत्वादित्यरुच्या पक्षांतरमाह ।। यद्वेति ।। जीव एवेति ।। चतुर्मुख इत्यर्थः ।।

## तात्पर्यचन्द्रिका

सिद्धान्तस्तु ।।

पृथिव्यादेर्जडत्वे स्यादप्रसक्तनिराक्रिया ।
चित्त्वे तु तेन कात्स्नर्येनावेद्यत्वं नेश्वरं विना ।। १ ।।

''यं पृथिवी न वेदे''त्यादौ पृथिव्यादेर्जडत्वे यमित्यस्य वैयर्थ्यम् । ''यमात्मा न वेदे''त्यस्यानुपपत्तिश्च । अप्रसक्प्रतिषेधापातश्च । ''नान्तरिक्षे न दिवी''त्यन्तरिक्षा-दावप्रसक्तचयननिषेधस्तु ''हिरण्यं निधाय चेतव्य''मिति विधिस्तुत्यर्थः । प्रकृते तु न तथा ।। तस्मात्पृथिव्यादिस्तदभिमानिचेतन एव । तेन च साकल्येनावेद्यत्वं भाष्योक्तश्रुत्यादिभिर्हरेरेव । अन्तरत्वं च

बाह्यापेक्षां विना यस्तु रमते सोंऽतरः स्मृतः ।
अतिप्रियत्वाच्च हरेरंतरत्वमुदाहृतम् ।।

इति स्मृत्युक्तं स्वतो नित्यतृ(प्तात्)प्तत्वात् ''प्रेयः पुत्रा''दित्यादिश्रुत्या परमप्रेयोरूपत्वा(पा)च्च ब्रह्मणोऽन्यत्र न युक्तम् । किं च श्रुत्यन्तरे ''दिव्यो देव एको नारायण'' इत्युपक्रम्य ''यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेदे''त्याद्युक्त्वा ''एष सर्वभूतांतरात्मापहतपाप्मा दिव्यो देव एको नारायण'' इत्युपसंहारान्नारायण एवान्तर्यामी ।

पृथिव्यादेः शरीरत्वं यौगिकं गौणमेव वा ।
रूढस्यानुपपन्नत्वादग्नेरिन्द्रत्ववद्भवेत् ॥ १ ॥

यथा ''इन्द्रो नभस्वा''नितीन्द्रशब्दो गार्हपत्येऽपि स्वोचितैश्वर्यस्य सद्भावाद्योगेन वा इन्द्रवद्यज्ञसाधनत्वाद्गौण्या वा वृत्त्या वर्तते । उक्तं हि -

स्यादग्नेर्गौणमिन्द्रत्वं यज्ञसम्बन्धकारितम् ।
इन्दत्यर्थानुसाराद्वा स्वकार्ये सोऽपि हीश्वरः ॥ इति ।

तथा शरीरशब्दोऽपि पृथिव्यादिषु योगेन वा शरीरवत्तन्नियम्यत्वेन गौण्या वा वृत्त्या वर्तताम् । चेतनानामपि देहद्वारा शीर्णताऽस्त्येव ।

**प्रकाशिका** – अधिदैवाधिभूताध्यात्मप्रकरणेषु पृथिव्याद्यविदितत्वतदन्तरत्वरूपनिरवकाशलिङ्गसत्त्वेन तद्बलेन पृथिव्यादिशरीरत्वस्य कथंचिन्नेयत्वादन्तर्यामी विष्णुरिति भावेन ''अन्तर्यामी विष्णुरेवे''त्यादिटीकां विवृण्वन्नविदितत्वस्य निरवकाशत्वं तावदाह ॥ पृथिव्यादेरिति ॥ यदुक्तं पृथिव्यादेर्जडत्वेन तदवेद्यत्वं प्रकृत्यादौ युक्तमिति तत्र बाधकत्रयं वदन्पूर्वार्धं व्यनक्ति ॥ यमिति ॥ जडे ज्ञानमात्रस्यैवाभावेन न वेदेत्येव वाच्यम् । न तु यमिति विषयविशेषोपादानमित्यर्थः ॥ यमात्मेति ॥ पृथिव्यादौ ज्ञानमात्रनिषेधे य आत्मेत्यादावपि तथात्वापत्त्या चेतनस्य ज्ञानसामान्यनिषेधायोग इत्यर्थः । श्लोकेऽप्रसक्तेत्युक्तिरुपलक्षणमिति भावः ॥ अप्रसक्तेति ॥ जडे ज्ञानप्रसक्तेरेवाभावादिति भावः । ननु ''पृथिव्यामग्निश्चेतव्यो नांतरिक्षे न दिवि हिरण्यं निधाय चेतव्यमित्यत्रेष्टकावेदिकारूपाग्निचयनस्य ''नांतरिक्ष'' इत्यप्रसक्तविषयत्त्वेऽपि यथा नित्यानुवादत्वं तद्वत्स्यादित्यत आह ॥ नेति ॥ आद्यस्य द्वितीये पादेऽर्थवादनये ''अभागिप्रतिषेधा''दिति गुणसूत्रेणान्तरिक्ष इत्यादेरप्रसक्तनिषेधेनाप्रामाण्यमाशङ्क्य ''अंत्ययोर्यथोक्त''मिति सिद्धान्तगुणसूत्रेण हिरण्यस्तुत्यर्थमितरनिन्दा क्रियते । असति प्रसङ्गे निषेधो नित्यानुवाद इत्युक्तमभियुक्तैः । इह तु न तथा । विधेयांतराभावादिति भावः । एवेत्यनेनाभिमानिनयन्यायेन पृथिव्यादिशब्दानामभिमानिन्येव मुख्यत्वान्मुख्यसम्भवे नामुख्यं ग्राह्यमिति सूचितम् । एतेन ''पृथिव्यादीनामधिदैवत्वेन जडत्वाभावा''दिति टीका विवृता । आत्मा न वेदेति पृथगुक्तिस्त्वात्माभिमानिपरत्वाद्युक्तेति भावः । ततश्च किमित्यत उत्तरार्धं व्यनक्ति ॥ तेन चेति ॥ चेतनेनेत्यर्थः । लेशेन विदितत्वस्य सर्वत्र सम्भवेन

तन्निषेधायोगात्तदन्यथानुपपत्त्यैव साकल्येनाविदितत्वं लभ्यते । तच्च "न ते विष्णो जायमान" इत्यादिभिर्हरेरेवेत्यर्थः । "यःपृथिवीमन्तरो यमयती"ति श्रुतांतरत्वमपि निरवकाशमित्याह ॥ अन्तरत्वं चेति ॥ अन्यत्र न युक्तमित्यन्वयः ॥ स्मृत्युक्तमिति ॥ बृहदारण्यभाष्योक्त-स्मृत्युक्तमित्यर्थः । पूर्वार्धतात्पर्यं स्वतो नित्यतृप्तत्वादिति । उत्तरार्धतात्पर्यं प्रेय इत्यादि ॥ श्रुत्येति ॥ वाजसनेयश्रुत्येत्यर्थः । सूत्रभाष्याद्युक्तमुपलक्षणं मत्वा स्वयं समाख्यामप्याह ॥ किञ्चेति ॥ श्रुत्यन्तरे सुबालोपनिषदि । "तदाहुः किं तदासीन्नैवेह किं च नाग्र आसीत् । अमूलमनाधारा इमाः प्रजाः प्रजायन्ते । दिव्यो देव एको नारायणश्चक्षुश्च द्रष्टव्यं च नारायणश्श्रोत्रं च श्रोतव्यं च नारायण" इत्युपक्रम्य "अन्तश्शरीरे निहितो गुहायामज एको नित्यः । यस्य पृथिवी शरीरं यः पृथिवीमन्तरे संचरन् यं पृथिवी न वेद । यस्यापश्शरीरं योऽपोंऽतरे संचरन् यमापो न विदुः" इत्यादिना पृथिव्यब्वाय्वाकाशमनोहंकारबुद्धिचित्ता-व्यक्ताक्षरमृत्युस्थत्वादिकमुक्त्वा अन्ते "एष सर्वान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इत्युक्तत्वादित्यर्थः । अस्य प्रसिद्धत्वाद्भाष्यादावनुक्तिः ।

यद्वाऽधिदैवादिष्विति सामान्योक्त्या श्रुत्यन्तरस्थाधिदैवादिप्रकरणस्यापि सूत्रादौ सङ्ग्रहसूचनादत्र तदुक्तिः । यद्वा तद्धर्मश्च व्यपदेशश्चेति समाहारद्वंद्वेन सम्भृतिद्युव्याप्तीतिवदयं सूत्रभाष्यटीकासु तद्धर्मव्यपदेशादिति निर्देश इति मत्वा व्यपदेशशब्दार्थतया समाख्योक्तिरिति सूत्रादेरर्थांतरमपि ध्येयम् । यदपि पृथिव्यादिशरीरत्वं परसाधकं स्वबाधकं तस्यातद्धर्मा-भिलापादिति द्वितीयसूत्रांशलब्धं सावकाशत्वं "योगवृत्त्या तस्मिन्पृथिव्यादिशरीरत्व-व्यपदेशोपपत्ते"रिति भाष्यटीकोक्तमन्यत्रोक्तसावकाशत्वप्रकारं च संगृह्याह ॥ पृथिव्यादेरिति ॥ ननु रूढिर्बलवतीत्यत उक्तं रूढस्येति ॥ उक्तबाधकेभ्य इति भावः । दृष्टान्तांशं व्यनक्ति ॥ यथेति ॥ "कदाचनस्तरीरसिनेन्द्र" इति पुरोनुवाक्या । "निवेशन" इति याज्या । "इन्द्रो न तस्था" वित्युपरिष्टाल्लक्षणश्रवणात् । तत्रैंद्र्या गार्हपत्यमुपतिष्ठत इति श्रौतविनियोगेन मन्त्रस्य गार्हपत्यशेषतया तत्प्रकाशकत्वान्मन्त्रस्थेन्द्रशब्दस्येदिधात्वर्थस्योचितैश्वर्यरूपयोगेन वा यज्ञसाधनत्वगुणमूलया गौण्या वृत्त्या वेत्यर्थः ॥ उक्तं हीति ॥ तृतीये वार्तिककृतेत्यर्थः । पूर्वार्धं व्यनक्ति ॥ तथेति ॥

शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् ।
रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगत् ॥

इतीत्युक्तयोगेनेत्यर्थः । ननु यौगिकमपि शरीरत्वं पृथिव्यादेरपि चित्त्वेनायुक्तम् । यस्यात्मा शरीरमित्याद्ययोगश्च । चेतननित्यताया ''यावदात्मभावित्वाच्च न दोष'' इत्यादौ सेत्स्यमानत्वादित्यत आह ॥ चेतनानामपीति ॥ तादृशदेहसम्बन्धश्च ''ज्ञोत एव, युक्तेश्चे''त्यत्र सेत्स्यतीति भावः । एतेन दिशामप्यवान्तराभिमानिदेहद्वारा शीर्णताऽस्त्येवेति तत्रापि नायुक्तमिति ध्येयम् ।

**पाण्डुरङ्गि** – यमित्यस्य वैयर्थ्यमिति ॥ विशेषविधेश्शेषनिषेधनांतरीयकत्व-वद्विशेषनिषेधस्य शेषविधिनांतरीयकत्वस्यापि सत्त्वात् यमिति विशेषनिषेधेनान्यज्ञानत्वं लभ्यते । तच्च पृथिव्यादेर्जडत्वादयुक्तमिति भावः । नन्वभिमानिजीवानां दुर्ज्ञानत्वादात्मा न वेदेत्युपपन्नमित्यरुच्याऽह ॥ अप्रसक्तेरिति ॥ किं चाभिमानिपरत्वे यः पृथिव्या अन्तर इत्युक्तांतरत्वानुपपत्तिः । ननु चान्तरत्वं यदि भिन्नत्वं यदि वाऽन्तस्स्थत्वं द्वयमपि पृथिव्यादिशरीरकेऽभिमानिनि युक्तमित्युक्तमित्यत आह ॥ अन्तरत्वं चेति ॥

## तात्पर्यचन्द्रिका

**शरीरत्वस्य गौणत्वं च बृहदारण्यकभाष्य उक्तम् । तेन पुराणादिषु प्रपञ्चे ब्रह्मकायत्वाद्युक्तिरपि समर्थिता । एवं च ''य आत्मनि तिष्ठ''न्नित्यादिकं च क्लेशेन न नेयमिति । एतदेवाभिप्रेत्योक्तं न्यायविवरणे ''पृथिव्यादिशरीरत्वं च न निरवकाशम् । यौगिकशरीरत्वोपपत्तेर्विष्णोरपी''ति ॥ सूत्रक्रमस्तु । आद्ये स्वपक्षसाधकोक्तिः । द्वितीये प्रधानजीवपक्षयोः साधकाभावोक्तिः । तृतीयसूत्रस्थस्य शारीरश्चेत्यस्यात्रापि सम्बन्धात् तृतीये जीवपक्षे बाधकोक्तिरिति ।**

**प्रकाशिका** – गौणत्वं भाष्यटीकयोर्नोक्तमित्यत आह ॥ शरीरत्वस्येति ॥

पृथिव्याद्या देवतास्तु देहवद्यद्वशत्वतः ।
शरीरमिति चोच्यन्ते यस्य विष्णोर्महात्मन ॥

इति स्मृत्या शरीरस्य यथा जीववशत्वं तथा पृथिव्याद्यभिमानिजीवानामीश्वरव-शत्वात्तच्छरीरत्वमिति गौणत्वमुक्तमित्यर्थः । तथा च भाष्यद्वयानुसाराद्द्वयमप्यस्माभिरुक्तमिति भावः । गौणत्वोक्तेः फलमाह ॥ तेनेति ॥ गौणत्वकथनेनेत्यर्थः ॥ पुराणादिष्विति ॥ ''स

विश्वकायः पुरुहूत ईशस्सत्यं परं ज्योतिरजःपुराण'' इत्यादि भागवतादिष्वित्यर्थः ॥ कायत्वादीति ॥ देहत्वविग्रहत्वाद्युक्तिरादिपदार्थः ॥ क्लेशेनेति ॥ भेदाभेदादिना ॥ यौगिकेति ॥ गौणशरीरत्वेत्यपि ग्राह्यम् । अविदितत्वादिनिरवकाशबाधकबलेन प्रथमप्राप्ताया अपि रूढेः परित्यागोपपत्तेरिति भावः ॥ आद्य इति ॥ ''अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशा''दित्यत्र भाष्यादावविदितत्वांतरत्वयोरुक्तेरिति भावः । द्वितीये न च स्मार्तमतद्धर्माभिलापादित्यत्र । भाष्ये त्रिगुणत्वोपादानत्वादिप्रधानधर्मोक्त्यभावात्कापिलस्मृतौ पृथिव्याद्यात्मकतयोक्तप्रधानं नान्तर्यामीत्युक्त्या संसारित्वादितद्धर्माभिलापाभावाज्जीवोऽपि नेति लब्धत्वात्प्रधानजीवेत्युक्तम् । जीवपदाभावात्कथमेतदित्यत आह ॥ तृतीयेति ॥ एतेन जीवपक्षे साधकं नेत्यनुक्त्वा कथं बाधकोक्त्यवसर इति प्रत्युक्तम् । एतेन ''यज्जीवोंऽतर्यामीत्युक्तं तदपि संसारित्वाद्यतद्धर्माभिलापादिना निरस्तमपि विशेषयुक्त्या निराकुर्वत्सूत्र''मिति टीकोक्तं सूत्रारूढं दर्शितम् । ''अतद्धर्माभिलापा''दित्यत्र समासनिर्वाहस्तु ''नानुमानमतच्छब्दा''दित्यत्र करिष्यत इति भावः ॥ तृतीय इति ॥ ''शारीरश्चोभयेऽपि हि भेदेनैनमधीयत'' इत्यत्रात्मनोंऽतर इति माध्यंदिनाः विज्ञानादंतर इति कण्वाश्च जीवमन्तर्यामिणो भेदेनाधीयत इति शारीरो नान्तर्यामीति भेदाध्ययनरूपबाधकोक्तिरित्यर्थः । यद्यपि चकारात् ''यस्तेजसि तिष्ठन्नित्यादिना श्रीदुर्गारूपायाश्चित्प्रकृतेरपि भेदेनाधीतत्वान्न चित्प्रकृतिरन्तर्यामीत्यभिप्राय'' इति तत्वप्रदीपरीत्या चित्प्रकृतिपक्षेऽतिबाधकोक्तिपरत्वं भाति । तथापि टीकारीत्यैवमुक्तिः ।

**पाण्डुरङ्गि** —ननु च भाष्यतट्टीकयोः पृथिव्यादेर्यौगिकशरीरत्त्वमेवोक्तम् । भवद्भिश्च शरीरवत्तन्नियम्यत्वेन गौणं शरीरमित्युच्यते । तत्कुतोऽवगन्तव्यम् । भाष्यानुक्तत्वेन मूलभूतप्रमाणाभावादित्यत आह ॥ शरीरत्वस्येति ॥ एवं आदिपदेनात्मानं यमयतीत्यस्य सङ्ग्रहः ॥ क्लेशेनेति ॥ नत्वभिमानिनामस्मदाद्यात्मकत्वनियामकत्वाभिप्रायेणात्माभिमानिचतुर्मुखरूपजीवविशेषाभिप्रायेण चेति क्लेशेन नेयमित्यर्थः ।

## तात्पर्यचन्द्रिका

**अत्र यद्यपि ''आत्माविज्ञानमिति च सर्वजीवाभिमानवान् । ब्रह्मैवोक्त'' इति बृहदारण्यकभाष्य आत्मादिशब्दश्चतुर्मुखपर इत्युक्तम् । तथापि पूर्वपक्षे ''य आत्मनी''त्यादावात्मादिशब्दस्यात्माभिमानिपरत्वे ''यः पृथिव्यामित्यादौ पृथिव्यादिशब्दस्यापि तदभिमानिपरत्वापातेन ''यः पृथिव्या''मित्यादेरेव भेदाध्ययनत्व-**

प्रसङ्गात् । पूर्ववादिना पृथिव्यादिशब्दानां जडपरता । आत्मविज्ञानशब्दयोस्तु शारीरपरता वाच्येत्यभिप्रेत्य तं प्रति य आत्मनीत्यादेः शारीरभेदे प्रमाणत्वोक्तिः । यद्वा जीवाभिमानिनश्चतुर्मुखादपि तन्नियामकत्वादिना भिन्नस्यांतर्यामिणः किमु वक्तव्यं तदभिमन्यमानजीवेभ्यो भिन्नत्वमिमत्यभिप्रेत्य तदुक्तिः । यद्वा ''यःपृथिव्या''मित्यादौ तत्तदभिमानिन एव तदन्तर्यामित्वमिति वदता पूर्ववादिना ''य आत्मनी''त्यत्रापि जीवात्माभिमानिन एव तदन्तर्यामित्वं वाच्यम् । तच्चायुक्तम्। ''आत्मा विज्ञान''मिति स्मृत्याऽभिमानिप्रायपाठेनाभिमान्यधिकरण-न्यायेन च जीवाभिमानिन एवात्मशब्दार्थत्वादन्तर्यामिणश्च ''य आत्मनी''त्यादिना ततो भिन्नत्वेनाधीतत्वादित्यभिप्रेत्य तदुक्तिः । यःपृथिव्यां तिष्ठन्नित्यादिकं पृथिव्याद्यभिमानिभ्यो भेदेनाध्ययनं तु न्यायतौल्येनोक्तप्रायत्वान्न पृथगुक्तम् । श्रुतौ ''यः पृथिव्यां तिष्ठ''न्नित्यादेः प्राथम्येऽपि भाष्ये ''य आत्मनि तिष्ठन् यो विज्ञाने तिष्ठ''न्निति वाक्ययोरुपादानं तु तयोरैकार्थ्यं तत्र चेतनपरत्वस्योभयवादिसंमतत्वं च दर्शयितुम् । यद्यप्यंतरशब्दस्य बृहदारण्यकभाष्ये बाह्यापेक्षां विना रमणादिरर्थ इत्युक्तम् । अत्रापि च भाष्येंऽतरत्वमाद्यसूत्रस्थतद्धर्मशब्दस्यार्थ इत्युक्तम् । भेदेनाध्ययनं तु ''य आत्मनि तिष्ठन् यस्यात्मा शरीरं य आत्मानं यमयत्येष त आत्मे''त्यादिभेदकाध्ययनात्सिद्ध्यति । न च ''एष त आत्मे''त्यत्रात्मशब्दः स्वरूपार्थः । त इति षष्ठ्या औपचारिकत्वापातात् । शरीरशब्दसन्निधानेनात्मशब्दस्य शरीरप्रतिसम्बन्धिपरत्वाच्च । अत एव भाष्ये य आत्मनीत्याद्यप्युदाहृतम् । तथापि टीकायां साक्षादेव भेदाध्ययनसिद्ध्यर्थं ''य आत्मनोंऽतर'' इत्यत्रत्यांतरशब्दस्य विविक्तत्वमर्थः । बृहदारण्यकभाष्यं तु ''य आत्मानमन्तर'' इत्यत्रत्यान्तर-शब्दविषयम् । अत एव श्रुतौ न पुनरुक्तिः । ''य आत्मनोंऽतरः यो विज्ञानादन्तरः योऽद्भ्योंऽतर'' इत्यादौ पञ्चम्युपपत्तिश्च । ''यं पृथिवी न वेद यः पृथिव्या अन्तर इत्यादिने''त्याद्यसूत्रीयभाष्ये तु प्रतीकमुखेन पृथिवीमन्तर इति वाक्यमुपात्तमित्यभिप्रेत्यान्तरो विविक्त इत्युक्तम् ॥

**प्रकाशिका** – एतद्भाष्यस्य भाष्यान्तरविरोधं वा अन्यत्रोक्तार्थे जीवान्तर्यामिभेदाध्यय-नासिद्धिं वा अर्थद्वयोक्तेर्वैयर्थ्यं वा हृदि कृत्वा तदनूद्य निराह ॥ अत्र यद्यपीति ॥

पृथिव्यादिशब्दस्यापीति ॥ अन्यथा प्रायपाठविरोध इति भावः । अभिमानिपरत्वे को दोष इत्यत आह ॥ य इति ॥ पृथिव्यादिशब्दानामभिमानिचेतनपरत्वे य इत्यनेन तदन्यस्य ग्रहणादेष त आत्माऽन्तर्यामीति पृथिव्याद्यभिमानिचेतनभिन्नस्यांतर्यामितापत्त्याऽभिमानिजीव एवान्तर्यामीति पक्षो न स्यादिति जडपरता वाच्येत्यर्थः । भाष्य आत्मादिशब्दस्य सर्वजीवार्थत्वोक्तेः कृत्यमुक्त्वाऽन्यत्र चतुर्मुखपरत्वोक्तेः फलमाह ॥ यद्वेति ॥ तदुक्तिः चतुर्मुखपरत्वोक्तिः । तथा चात्मविज्ञान- शब्दयोश्चतुर्मुखपरत्वमेव । न शारीरार्थकत्वम् । अत्र भाष्ये शारीरभेदस्य प्रदर्शनं तु कैमुत्यलब्धस्य । न तु शब्दार्थत्वेन प्राप्तस्येत्यर्थः । ननु पृथिव्याद्यभिमानिजीवानामन्तर्यामित्वे शङ्किते तेषामेवान्तर्यामिणा भेदस्यादौ वाच्यत्वेनावश्यवाच्यस्य साक्षादवचनमनुपयुक्तम् । चतुर्मुखस्य तत्कथनं तु साक्षादित्ययुक्तमित्यतश्चतुर्मुखपरत्वमवश्यं वाच्यमिति भावेन तदुक्तिं साधयति ॥ यद्वेति ॥ स्मृत्येति ॥ प्रागुक्तयेत्यर्थः ॥ अभिमानीति ॥ पृथिव्याद्यभिमानिप्रायपाठेनेत्यर्थः ॥ अभिमान्यधिकरणेति ॥ तत्राभिमन्यमानशब्दानामभिमानिनि मुख्यत्वोक्तेरिति भावः । नन्वेवं पृथिव्यादिशब्दानामप्यभिमानिपरत्वात्तत्राप्यभिमानिनोंऽतर्यामिणा भेदोक्तिसम्भवेन भाष्ये य आत्मनीत्यादिविशिष्य प्रदर्शनमयुक्तमित्यत आह ॥ यः पृथिव्यामिति ॥ प्रथमातिक्रमे हेतुमाह ॥ श्रुताविति ॥ टीकायां ''आत्मनस्सकाशादन्तरो विविक्त'' इत्युक्तम् । तदाचार्य- सूक्तिविरुद्धमित्याशङ्क्य समाधत्ते ॥ यद्यपीति ॥

बाह्यापेक्षां विना यस्तु रमते सोंऽतरस्स्मृतः ।
अतिप्रियत्वाच्च हरेरन्तरत्वमुदाहृतम् ॥

इत्यनेनेति भावः । भेदोक्त्यर्थमर्थान्तरमेतत्किं नेति भ्रमं निराह ॥ भेदेनेति ॥ भेदकेति ॥ सप्तमीषष्ठ्यादिरूपभिन्नविभक्तिनिर्देशरूपेत्यर्थः । भेदकत्वं साधयति ॥ न चेति ॥ टीकायामित्यस्य इत्युक्तमित्यनेनान्वयः ॥ पञ्चमीति ॥ ''अपादाने पञ्चमी''ति प्रकरणे ''अन्यारादितरर्ते दिक्शब्दांचूत्तरपदाजाहि युक्त'' इति सूत्रेऽन्य इत्यर्थग्रहणेन पञ्चमीविधानाद्बाह्यानपेक्षरमणार्थत्वे पृथिव्या इत्यस्य वैयर्थ्यं च स्यादिति भावः । तर्हि भाष्ये ''यं पृथिवी न वेद यः पृथिव्या अन्तर इत्यादिनाऽधिदैवादिषु तद्धर्मव्यपदेशा''दित्युक्तिः कथमित्यत आह ॥ यमिति ॥ अविदितत्वस्योक्त्यर्थं यमित्यादेरवश्यवाच्यत्वात्तन्मुखेन यःपृथिवीमन्तर इत्येतदेवाभिप्रेतमित्यर्थः । अत एव टीकायां वाक्यविशेषमनुपादायाद्यसूत्रे ''पृथिव्याद्यविदितत्वतदन्तरत्वाख्यधर्मव्यपदेशा''दिति सामान्येनोक्तमिति भावः ॥

**पाण्डुरङ्गि** – ननु द्वितीये प्रधानजीवयोस्स्वपक्षसाधकाभावोक्तिरयुक्ता । जीवमात्रस्यांतर्यामिणस्सकाशाद्भेदप्रतिपादनार्थं चतुर्मुखस्यांतर्यामिणस्सकाशाद् भेदप्रतिपादकवाक्योदाहरणस्यासङ्गतत्वात् । न च तत्राप्यात्मशब्दो जीवपर इति तदुक्तिर्युक्तेति वाच्यम् । तथा सति बृहदारण्यकभाष्यविरोधस्स्यात् । तत्रात्मा विज्ञानमिति चेत्यादिनाऽऽत्मादिशब्दानां जीवविशेषचतुर्मुखपरतयोक्तत्वादित्यत आह ॥ अत्र यद्यपीति ॥ नन्वेवं पूर्वपक्षरीत्या भेदव्यपदेशोक्तौ वास्तवभेदव्यपदेशाभावाज्जीवमात्रस्यान्तर्यामिणस्सकाशाद्भेदसिद्धिर्न स्यादित्यरुच्याऽऽह ॥ यद्वेति ॥ अस्मिन्पक्षे कैमुत्येन लाभेऽपि साक्षान्न तल्लाभ इत्यतःपक्षान्तरमाह ॥ यद्वेति ॥ नन्वभिमान्यधिकरणन्यायेनात्मशब्दस्य तदभिमानिचेतनपरत्ववत्पृथिव्यादिशब्दानामपि चेतनपरत्वेन यः पृथिव्यां तिष्ठन्नित्यादिनोक्तस्यांतर्यामिणः पृथिव्याद्यभिमानिभ्यो भेदव्यपदेशस्य सत्त्वात्सोऽपि कुतो नोक्त इत्यत आह ॥ यद्वेति ॥ ननु टीकायामन्तरो विविक्त इति व्याख्यातम् । तदयुक्तम् । बृहदारण्यकवाक्यविरोधात् । एतद्भाष्यविरोधाच्च । बाह्यापेक्षां विना रमणस्यैव तदर्थत्वेनोक्तत्वात् । न च भेदव्यपदेशलाभार्थं तथा व्याख्यानम् । य आत्मनि तिष्ठन्नित्यादिनापि भेदव्यपदेशलाभोपपत्तेरित्यतस्तत्सार्थक्यं वक्तुमाह ॥ यद्यपीति ॥ अत एवेति ॥ य आत्मनि तिष्ठन्नित्यादेरपि भेदव्यपदेशस्य भाष्यकृदभिप्रेतत्वादेवेत्यर्थः ॥ साक्षादेवेति ॥ अन्यथा तु भेदकोक्त्या भेदलाभ इति भावः ॥ अत एवेति ॥ बाह्यापेक्षां विना रमणरूपस्य बृहद्भाष्योक्तस्यांतर इत्युभयत्रत्यान्तरशब्दविषयत्वे एकेनैव बाह्यापेक्षां विना रमणस्योक्तत्वेन द्वितीयेनापि तदुक्तौ पौनरुक्त्यं स्यादिति भावः । अत्र यद्यप्यात्मन इति पृथिव्या इत्येव चोदाहरणीयम् । तथाप्यात्मन इत्यस्य पञ्चमीत्वसिद्ध्यर्थं विज्ञानादित्यस्य पृथिव्या इत्यस्य पञ्चमीत्वसिद्ध्यर्थं चाद्भ्य इत्यस्योदाहरणम् । अन्यथा षष्ठीत्वान्न पञ्चम्यनुपपत्तिरिति शङ्का स्यादिति भावः ॥ पञ्चम्युपपत्तिश्चेति ॥ पृथिव्या इत्यादौ सादृश्यात्षष्ठीपञ्चमीसन्देहेऽपि विज्ञानादद्भ्य इत्यादौ पञ्चम्या निर्णीतत्वेन तत्प्रायपाठेन सर्वत्रापि पञ्चम्या निर्णयात् । तस्याश्च पृथिव्यादेरपादानत्वाभावेन कारकविभक्तित्वासम्भवादुपपदविभक्तित्वे पदान्तरयोगाभावात् । अन्यारादितरर्त इत्यत्रान्येत्यस्यान्यार्थकशब्दग्रहणपरत्वादन्तरशब्दपरत्वस्य च विभक्तिप्रतिरूपकान्तरेणेति यदन्तरं व्याघ्रहरीन्द्रयोर्वने इत्यादौ भेदभेदकयोः प्रयोगादत्र विभक्तत्वार्थेऽन्यः कृष्ण इत्यादाविव पञ्चम्या उपपत्तेरन्यथा चोपपत्तेरिति भावः । नन्वेवं पृथिव्या इत्यस्य यदि पृथिव्या भिन्न इत्यर्थस्तर्हि प्रथमसूत्रभाष्ये तद्ग्रहणमयुक्तम् । तस्य तद्धर्मत्वाभावादित्यत आह ॥ यमिति ॥

## तात्पर्यचन्द्रिका

॥ अन्ये तु शरीरादिराहित्याद्ब्रह्मणो न नियंतृत्वं पटवदिति प्राप्ते शरीरराहित्यमसिद्धम् । चैत्रकर्मनिर्मितस्य चैत्रशरीरत्ववद्ब्रह्मविषयकाविद्याकल्पितस्य जगतस्तच्छरीरत्वादिति सिद्धान्तः । तदुक्तं भामत्यां

देहेन्द्रियादिनियमेनास्य देहेन्द्रियांतरम् ।
तत्कर्मोपार्जितं तच्चेत्तदविद्यार्जितं जगत् ॥

इतीत्याहुः । तन्न । तदविद्याकल्पितस्य तच्छरीरत्वे ब्रह्मवत्स्वतः शरीरशून्यशुक्तिस्थाण्वाद्यज्ञानकल्पितस्य रूप्यदेहादेः शुक्तिस्थाण्वादिशरीरत्वापातात् । ब्रह्मणः स्वाविद्याकल्पितेनास्मदादिसंसारेण संसारित्वापाताच्च । जगदार्जनात्प्रागशरीरस्यैव स्रष्टृत्ववन्नियंतृत्वस्याप्युपपत्तेश्च । न चाशरीरस्यानियंतृत्वे शङ्किते गौणशरीरोपादानं युक्तम् । किञ्च शुद्धं न नियंतृ । अशुद्धं त्वविद्याकल्पितत्वान्नाविद्या विषयः । यच्चोक्तं देहादिनियंतुरपि जीवस्य भिन्ननियंतृनियम्यत्वे तन्नियंतुरीश्वरस्यापि भिन्ननियंतृनियम्यत्वेनानवस्थापातान्नियंतृ ब्रह्म नियम्यजीवाभिन्नमिति । तन्न । अभेदे सुतरां नियंतृत्वायोगात् । श्रुतिसूत्रयोर्भेदोक्त्ययोगाच्च । काल्पनिकभेदेन नियंतृत्वादिकं युक्तमिति चेत्तर्हि यथा देहादिनियंतुर्जीवस्य व्यावहारिकभेदवानीशो नियन्ता तथेशस्यापि व्यावहारिकभेदवानन्यो नियन्ता स्यादिति व्यावहारिकनियन्तृपरंपरयाऽनवस्था स्यात् । अथ ''न वैशेष्या''दित्युक्तन्यायेनेशस्य स्वातन्त्र्यादिविशेषान्न नियन्त्रंतरं तर्ह्यनवस्थापरिहारो नाभेदेन । किंतु स्वातन्त्र्येणेति सत्यभेद एवास्तु । किं चानवस्थातो बिभ्यता शरीरजीवयोरैक्यं स्वीकार्यम् । प्रमाणविरोधस्तु जीवपरैक्येऽपि ''भेदेनैनमधीयत'' इति सूत्र एवोक्तः । किं चैवं सति स्वकार्यं प्रति कारणस्यापि पृथिव्यादिकस्य ब्रह्मकार्यत्वे ब्रह्मणोऽप्यन्यकार्यत्वमित्यनवस्थापरिहाराय पृथिवीब्रह्मणोरभेदः स्यात् । प्रमाणविरोधस्तु जीवपरैक्येऽपि सम इत्युक्तम् ।

**प्रकाशिका** – अन्ये त्विति ॥ अत्रान्तर्यामी किं प्रधानमुत पृथिव्याद्यभिमानिदेवता किं वा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी जीवोऽथ परमात्मेत्यादि भाष्ये प्रदर्शितम् । भामत्यां तु

अचेतनस्य प्रधानस्य द्रष्टृत्वश्रोतृत्वविज्ञातृत्वादीनामेष त आत्मेत्युक्तात्मत्वस्य चायोगात् पृथिव्याद्यभिमानिनो देवस्य प्रतिनियतनियमनात् ''यस्सर्वांल्लोकानंतरो यमयति यस्सर्वाणि भूतान्यंतरो यमयती''त्युक्त सर्वलोकभूतनियमनायोगात् योगिजीवस्य च ''जगद्व्यापारवर्ज''मिति वक्ष्यमाणन्यायेन ज्ञानिनो नियमनादिव्यापाराभावान्न प्रधानाभिमानिदेवयोगिजीवानामत्र सन्देहविषयता । किंतु जीवमात्रं वा परमात्मा वेति सन्देहे जीवमात्रमेव । लोके चेतनस्य शरीरिणः स्वशरीरेन्द्रियादौ शरीरेण वास्यादौ नियमनादिकार्योपलम्भाज्जीवस्य च शरीरेंद्रियादिमत्त्वा द्रष्टृत्वादिसम्भवाच्च । अदृष्टादिद्वारा सर्वलोकादिनियन्तृत्वोपपत्तेश्च । य इत्येकवचनस्य च जात्यभिप्रायत्वात् । न च जीवस्याप्यन्यो नियन्ताऽऽवश्यक इति वाच्यम् । तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्थापत्तेः । उक्तं च-

स्वकर्मोपार्जितं देहं तेनान्यच्च नियच्छति ।
तक्षादिरशरीरस्तु नात्मान्तर्यामितां भजेत् ॥ इति ।

एवं प्राप्ते सर्वस्य विकारजातस्य तदविद्याशक्तिपरिणामत्वात्तस्य च चैत्रकर्मनिर्मितस्य चैत्रशरीरादित्ववद्ब्रह्मणश्शरीरेन्द्रियादिस्थानत्वाद्यथायथं पृथिव्यादिकार्यकारणैस्तानेव पृथिव्यादिदेवान् शक्नोति नियन्तुमित्यधिदैवादिषूक्तोऽतर्यामी ब्रह्मैव । आत्मत्वामृतत्वादिधर्माणां व्यपदेशात् । न चानवस्था । नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुत्या नियन्तृब्रह्मणो नियम्यजीवाद्भेदानभ्युपगमात् । अविद्याकल्पितजीव- परमात्माभेदाश्रयास्तु ज्ञातृज्ञेयभेदश्रुतय इति सिद्धान्त इत्यर्थः ॥ देहेन्द्रियादीति ॥ किमिदमशरीरत्वं यतो नियन्तृत्वाभाव उच्यते नियम्यातिरिक्तदेहराहित्यं वा देहसम्बन्धाभावो वा । नाद्यः । अस्य जीवस्य स्वदेहादिनियमने कार्येन देहान्तरमस्तीति व्यभिचार इत्यर्थः । द्वितीयं शङ्कते ॥ तत्कर्मेति ॥ जीवे स्वकर्मोपार्जितदेहसम्बन्धोऽस्तीति चेत्परस्यापि देहासम्बन्धोऽ सिद्ध इत्याह ॥ तदविद्येति ॥ तद्विषयत्वादविद्यायास्तदविद्यात्वम् । पूर्वपक्षभागस्य प्रागेवास्मदीयपूर्वपक्षे दूषितत्वात् अतिप्रसङ्गापादनेन सिद्धान्तांशं निराह ॥ तन्नेति ॥ रूप्यदेहादेरिति यथाक्रममन्वयः । नन्वगत्या स्रष्टृत्वाङ्गीकारेऽपि न नियमनं तथा वाच्यमित्यत आह ॥ न चेति ॥ अस्तु वा तदज्ञानकल्पितं तच्छरीरमिति । तथापि किं शुद्धस्येदं शरीरमुत विशिष्टस्येति विकल्प्य क्रमेण निराह ॥ किं चेति ॥ शुद्धस्य नियन्तृत्वमेव नास्ति । निर्विकारत्वात् । तस्य शरीराद्युपपादनक्लेशो व्यर्थः । विशिष्टं तु नियामकं भवति । तस्याविद्याविषयत्वाभावान्न तदीयत्वमविद्याया इति न तदविद्यार्जितं जगदिति न तच्छरीरत्वम् - उक्तं च -

आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥ इति ।

अनवस्थाशङ्कापरिहारौ च भाष्योक्तावनूद्य निराह ॥ यच्चेति ॥ प्रतिबन्दीमापादयन्नवस्थापरिहारं प्रकारान्तरेणैव तेनैव वाचयति ॥ तर्हीति ॥ उक्तन्यायेन सर्वत्रेत्यधिकरणसूत्रेणोक्तन्यायेनेत्यर्थः ॥ किं चेति ॥ कियन्तं दूरं गत्वाऽभेदाश्रयणेन किमित्यर्थः । ननु देहाभेदे तस्य नाशेऽस्यापि नाशेन स्वर्गाद्युद्देशेन धर्माधर्मादिविधायकप्रमाणविरोधोऽनुभवविरोधश्चेत्यत आह ॥ प्रमाणविरोध इति ॥ अनवस्थानिरासाय नियंतुर्नियम्याभेदेंऽगीक्रियमाणे कार्यस्याप्यभिन्नकारणजन्यत्वं स्यात् अन्यथोक्तदोषादिति जडाभेदोऽप्युपेयस्स्यादित्याह ॥ किं चैवं सतीति ॥ ननु यःपृथिव्यां तिष्ठन्नित्यादिभेदोक्तिर्विरुध्यत इत्यत आह ॥ प्रमाणेति ॥ उपलक्षणमिदम् । पृथिव्यादेः स्वातिरिक्तज्ञानप्रकाश्यत्वे ज्ञानस्यापि स्वव्यतिरिक्तज्ञानापेक्षत्वेनानवस्थाप्रसङ्गात्तन्निरासाय ज्ञानजडयोरभेदस्स्यात् । ज्ञानस्य स्वप्रकाशत्वे नियन्तुस्स्वातन्त्र्यमस्तु । एवं पृथिव्यादेस्स्वव्यतिरिक्तेन धारणे तत्रापि तथेत्यनवस्थेत्याद्यपि ध्येयम् ।

**पाण्डुरङ्गि** – ॥ तदुक्तं भामत्यामिति ॥ किमत्राशरीरत्वं यतो नियन्तृत्वाभावः । किं नियम्यातिरिक्तदेहरहितत्वं वा देहसम्बन्धाभावो वा देहभोक्तृत्वाभावो वा । नाद्य इत्याह ॥ देहेति ॥ देहादौ तत्तदात्मा तत्साक्षाद्बुद्धिस्थोऽस्येत्युक्तः । अथवा तस्माज्जीवात्मैवेत्युपसंहारस्थो जीवात्मा परामृष्टः । अस्य स्वदेहादिनियमनेन देहाद्यंतरमतोऽनेकान्तिकतेत्यर्थः । द्वितीयं शङ्कते ॥ तदिति ॥ परस्यापि देहासम्बन्धोऽसिद्ध इत्याह ॥ तदविद्येति ॥ तद्विषयत्वादविद्यायास्तदविद्यात्वम् । तृतीये तु सोपाधिकतैव । मुक्तस्यापि पराभेदेन पक्षत्वान्न साध्याव्याप्तिः ॥ शरीरजीवयोरिति ॥ शरीरजीवयोर्भेदे शरीरस्य भिन्ननियंतृनियम्यत्वापत्त्या अनवस्थापातादिति भावः ।

## तात्पर्यचन्द्रिका

**यच्चोक्तमेकस्मिन् शरीरे प्रत्यग्द्वयं नेति तन्न । मां प्रति दृष्टान्ताभावात् । ग्रहाद्याविष्टशरीरेऽहमर्थरूपप्रत्यग्द्वयदर्शनाच्च । ''हन्तास्माच्छरीरादुत्क्रामाम तद्यस्मिन्न उत्क्रान्ते हन्तेदं पुनः शरीरं प्रविशाम तद्यस्मिन्नः प्रपन्न'' इत्यादावेकस्मिन् शरीरे**

चक्षुराद्यभिमान्यनेकाहमर्थश्रवणाच्च । बाधकाभावाच्च । अन्तर्याम्युक्त्यनन्तरं 'नान्योऽतोऽस्ति द्रष्टे'ति द्रष्ट्रंतरनिषेधो बाधक इति त्वन्यत्र निरस्तम् । अत्र यदुक्तं विवरणे ''यो विज्ञाने तिष्ठ''न्नित्यादौ ब्रह्मणो जीवावच्छेदेषु नियन्तृत्वेनावस्थानं श्रूयते । तच्च यद्यप्यवच्छेदपक्षे न युक्तम् । घटावच्छिन्नाकाशप्रदेशे बाह्याकाशस्यादर्शनेन द्विगुणीकृत्य वृत्त्यनुपपत्तेर्जीवप्रदेशे ब्रह्मणोऽवस्थानायोगात् । तथापि प्रतिबिम्बपक्षे युक्तम् । जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनेन द्विगुणीकृत्य वृत्त्युपपत्तेरिति । तत्र ब्रूमः ।

घटाकाशे यथा बाह्याकाशं नैवोपलभ्यते ।
तथैव प्रतिबिम्बेऽपि बिम्बाकाशं न दृश्यते ॥ १ ॥

यथा घटस्यांतराकाशमात्रेऽवच्छिन्नाकाशे च सत्यपि बाह्याकाशं नास्ति । तथा जलस्यांतराकाशमात्रे प्रतिबिम्बाकाशे च सत्यपि बिम्बाकाशं नास्त्येव । ननु तथापि जलस्यांतरुक्तमाकाशद्वयं जलावच्छिन्नाकाशं चेति त्रयमस्ति । घटस्यांतस्तूक्ताकाशद्वयमेवेति वैषम्यमिति चेन्न । यस्याकाशादेर्जलेनावच्छेदस्तत्र प्रतिबिम्बनं च तत्र त्रितयसद्भावेऽपि यस्य प्रतिबिम्बनमात्रं दर्पणादौ मुखादेः तत्र त्रितयाभावेन प्रतिबिम्बपक्षपातायोगात् । ननु तर्हि ब्रह्मणोऽविद्ययाऽवच्छेदस्तत्र प्रतिबिम्बनं चेति द्वयमप्यस्त्विति चेन्न । यत्र द्वयं तत्र यद्यपि जलान्तर्जलावच्छिन्नाकाशे सत्येव पुनराकाशमात्रं प्रतिबिम्बाकाशं चास्ति । तथापि जलान्तर्बाह्याकाशस्य बिम्बाकाशस्य चाभावेन तत्स्थानीयस्य ब्रह्मणो जीवप्रदेशे नियन्तृत्वेनावस्थानायोगात् । आकाशमात्रस्थानीयस्य चिन्मात्रस्य त्वन्मतेऽनियन्तृत्वात् । तस्मादवच्छेदप्रतिबिम्बनयोर्विकल्पे समुच्चये वा ब्रह्मणोऽन्तर्यामित्वायोगः । किं चावच्छेदोपाधौ घटादाववच्छिन्नाकाशव्यतिरेकेणाकाशव्यक्त्यन्तरं प्रतिबिम्बनोपाधौ दर्पणादौ च प्रतिबिम्बव्यतिरेकेण मुखव्यक्त्यन्तरं नास्तीत्यन्यत्रोक्तम् ।

**प्रकाशिका** – ननु नानवस्थानिरासाय नियन्त्रभेदः । अपि तु प्रत्यक्चैतन्यद्वयायोगादुभयोरभेद इत्येतदनूद्य निराह ॥ यच्चेति ॥ मां प्रतीति ॥ जीवेशभेदवादे प्रतिशरीरं तयोस्सत्त्वादिति भावः ॥ अनेकाहमर्थेति ॥ बहुवचनप्रयोगादिति भावः । ननु तत्र प्रत्यक्त्वमेव

सत्यं, भिदा मिथ्येति चेत्, भेदस्सत्यः प्रत्यक्त्वं मिथ्येति किं न स्यात् । प्रत्यक्त्वे बाधकं नेति चेत्तुल्यं भेदेऽपीत्याह ॥ बाधकेति ॥ अतश्शब्दपरामर्शं दर्शयितुमन्तर्याम्युक्त्यनन्तरमित्युक्तम् । अन्यत्र न्यायामृते द्वितीयपरिच्छेदे अहं ब्रह्मास्मीत्यादिश्रुत्यर्थवर्णनप्रस्तावे । तत्रात इत्यनेन प्रस्तुतसर्वनियन्तारं परामृश्यान्यो द्रष्टा नास्तीत्युक्ते अस्मिन्ग्रामेऽयमेव सर्वनियामको नान्यः पुरुषोऽस्तीत्यादावन्यशब्दस्य प्रस्तुतसदृशपरतया व्युत्पन्नत्वेन इहापि सर्वनियामकद्रष्ट्रंतर-निषेधाद्भेदनिषेधाभावादिति निरस्तमित्यर्थः । नेह नानेत्यादिकमप्यन्यत्र प्रथमपरिच्छेदे निरस्तमिति भावः । विवरणे अवच्छेदपक्षेंऽतर्याम्यवस्थानं न युक्तम् । प्रतिबिम्बपक्ष एव युक्तमित्युक्तम् । तदयुक्तम् । पक्षद्वयेऽप्ययोगादिति दूषयितुमनुवदति ॥ अत्रेति ॥ अवच्छेदेति ॥ अविद्यावच्छिन्नो जीवस्तत्र प्रतिबिम्बितो वा जीव इति मतद्वयम् । तत्राद्य इत्यर्थः । कुत इत्यत आह ॥ घटेति ॥ युक्ततामाह ॥ जलेति ॥ अवच्छेदपक्षे यथाऽयुक्तता तथा प्रतिबिम्बपक्षेऽपीति परोक्तं दृष्टान्तीकृत्याह ॥ घटेति ॥ श्लोकं व्याचष्टे ॥ यथेति ॥ नास्त्येवेति ॥ तथा च बिम्बरूपत्वादन्तर्यामिणस्तत्र नावस्थानमिति भावः ।

प्रतिबिम्बपक्षेऽवच्छेदवैलक्षण्यमाशङ्कते ॥ नन्विति ॥ उक्तमिति ॥ बिम्बप्रतिबिम्बत्व-रहितमाकाशमात्रं प्रतिबिम्बाकाशं चेति द्वयमित्यर्थः ॥ द्वयमेवेति ॥ आकाशमात्रमवच्छिन्नं चेति द्वयम् । न तु प्रतिबिम्बाकाशमित्यर्थः । तस्यास्वच्छतया प्रतिबिम्बनानुपाधित्वादिति भावः ॥ त्रितयाभावेनेति ॥ तथा च ब्रह्मणोऽविद्यायां प्रतिबिम्बितमात्रत्वेन तत्र चिन्मात्रस्य प्रतिबिम्बितस्य च घटादावाकाशद्वयस्येव दर्पणादौ मुखमात्रप्रतिबिम्बमुखरूपद्वयस्येव भावेऽपि त्रितयाभावेनावच्छेदपक्षत्यागेन प्रतिबिम्बपक्षस्वीकारायोगादित्यर्थः । ननु सत्यं यत्रैकस्यैवा-वच्छेदः प्रतिबिम्बनं च तत्र सामान्प्रतिबिम्बितमवच्छिन्नं चेति त्रितयमन्यत्र द्वयमिति । तथापि प्रकृते तथास्त्विति शङ्कते ॥ नन्विति ॥ किमेतावता एकस्मिन्नेव देहेऽवच्छिन्नं प्रतिबिम्बितं चिन्मात्रं चेति ब्रह्मत्रयसिद्धावपि तत्रावच्छिन्नं वा प्रतिबिम्बितं वा नान्तर्यामी । तस्य नियम्यरूपजीवत्वात् । अथ तत्रत्यं चिन्मात्रं वा सार्वज्ञाद्युपेतं बिम्बभूतं ब्रह्म वा तथेति वाच्यमिति भावेनांत्ये दोषमाह ॥ यत्रेति ॥ द्वयं अवच्छिन्नं प्रतिबिम्बभूतं चेत्यर्थः । आद्ये दोषमाह ॥ आकाशमात्रेति ॥ विकल्प इति ॥ घटादावाकाशस्यैवावच्छेदमात्रम् । न प्रतिबिम्बनम् । दर्पणादौ मुख्यस्येव ब्रह्मणोऽविद्यायां प्रतिबिम्बनमात्रं न त्ववच्छेद इति विकल्पपक्षे जलादावेकस्याकाशस्येव ब्रह्मण एकस्मिन्देहेऽविद्ययाऽवच्छेदः प्रतिबिम्बनं चेति समुच्चयपक्षे चेत्यर्थः । पक्षद्वयेऽप्यन्तर्यामिभूतस्य तत्राभावादिति भावः । नन्ववच्छेदपक्षे

प्रतिबिम्बनपक्षे च यच्चिन्मात्रमाकाशस्थानीयं तदेवागत्यानियंतृ स्यादिति कश्चिद्ब्रूयात्तं प्रत्याह ॥ किं चेति ॥ अन्यत्र न्यायामृते ।

**पाण्डुरङ्गि** – यदुक्तं परैरेको हि प्रत्यगात्मा भवति । न द्वौ प्रत्यगात्मानौ सम्भवतः । एकस्यैव तु भेदव्यवहार उपाधिकृतः । यथा घटाकाशो मठाकाश इति । तद्वदिति । तदनूद्य दूषयति ॥ यच्चोक्तमिति ॥ मां प्रतीति ॥ एकस्यैव प्रत्यगात्मनो भेदव्यवहार उपाधिकृत इत्यत्र मां प्रति दृष्टान्ताभावात् । गगनेऽपि भेदस्य स्वाभाविकत्वेनोपाधिकृतत्वाभावेन तस्य दृष्टान्तत्वासम्भवादिति भावः ॥ अवच्छेदपक्ष इति ॥ सर्वगतस्य गगनस्य घटाकाशत्व-व्यपदेशः । तथा तदुपाध्यवच्छिन्ने ब्रह्मणि जीवत्वव्यपदेश इत्यवच्छेदपक्ष इत्यर्थः ॥ द्विगुणीकृत्येति ॥ सर्वगतस्य ब्रह्मण उपाध्यवच्छेदे प्राथमिकी वृत्तिः । पुनरवच्छिन्नेऽपि नियन्तृत्वादिसिद्ध्यर्थमनवच्छिन्नस्य वृत्त्यन्तरमाश्रयणीयम् । न चैतदुपलब्धचरमिति द्विगुणीकृत्य वृत्त्यनुपपत्तिः । गगनस्य त्ववच्छिन्ने वृत्त्यनङ्गीकाराद्वैषम्यमिति भावः । अन्तःकरणप्रतिबिम्बितजीवनियन्तृत्वेन ब्रह्मणस्तत्रावस्थानात् द्विगुणीकृत्य वृत्त्यनुप-पत्तिस्तत्रापि समेत्याशङ्क्याह ॥ प्रतिबिम्बेति ॥ किमवच्छेदपक्षं परित्यज्य प्रतिबिम्ब-पक्षमेवाश्रित्य ब्रह्मणोऽवस्थानं प्रतिपाद्यते । किं वा प्रतिबिम्बपक्षमभेदव्यवच्छेदपक्षं चाश्रित्यांतर्यामिणोऽवस्थानमिति । नाद्यः । अवच्छेदपक्ष इव प्रतिबिम्बपक्षेऽप्याकाशद्वयस्यैव प्राप्त्या बिम्बाकाशस्याभावादित्याह ॥ यथेति ॥ अथावच्छेदप्रतिबिम्बपक्षयोस्साम्यं विघटयति ॥ नन्विति ॥ उक्तमाकाशद्वयं स्वाभाविकाकाशः प्रतिबिम्बाकाशश्चेत्याकाशद्वयमित्यर्थः । तर्ह्यवच्छेदप्रतिबिम्बनवति त्रितयसद्भावेऽप्यवच्छेदमात्र इव प्रतिबिम्बनमात्रेऽपि द्वयस्यैव सत्त्वेनावच्छेदपक्षं परित्यज्य प्रतिबिम्बपक्षाश्रयणमयुक्तमित्याह ॥ यस्येति ॥ त्रितयाभावेनेति ॥ दर्पणादौ स्वाभाविकाकाशस्य प्रतिमुखाकाशस्य सद्भावेऽपि दर्पणादेर्जलादिवदनिबिड-द्रव्यत्वाभावेन दर्पणावच्छिन्नाकाशाभावेन त्रितयाभाव इत्यर्थः । नन्ववच्छेदपक्षमात्र इव प्रतिबिम्बपक्षमात्रेऽपि त्रितयाभावेऽपि ब्रह्मणोऽविद्ययाऽवच्छेदस्य प्रतिबिम्बस्य च सत्त्वादाकाशवत्त्रितयसिद्धिस्स्यात् । न चैवमवच्छेदपक्षस्याप्याश्रयणेऽवच्छेदपक्षो न युक्त इत्यादिपूर्वोक्तिव्याघात इति वाच्यम् । केवलावच्छेदमात्रपक्षे त्रितयलाभस्य तत्रानभि-प्रेतत्वादवच्छेद सहितप्रतिबिम्बपक्षे त्रितयलाभस्य चाभिप्रेतत्वात् । ततश्च न विरोध इति समुच्चयमाशङ्कते ॥ ननु तर्हीति ॥ एवमवच्छेदप्रतिबिम्बपक्षोभयाश्रयणेऽपि तेनांतर्यामिणस्सत्त्वसिद्धिरित्याह ॥ यत्रेत्यादि ॥ अवच्छेदपक्षाश्रयणेनाह ॥ बाह्याकाशस्येति ॥

प्रतिबिम्बपक्षाश्रयणेनाह ॥ बिम्बाकाशस्येति ॥ ननु जीवप्रदेशे चिन्मात्रावस्थाने चिन्मात्रस्यैवान्तर्यामित्वादन्तर्यामिणोऽवस्थानसिद्धिरित्यत आह ॥ आकाशमात्रेति ॥ अन्यथाऽपसिद्धान्तस्स्यादिति भावः ॥ तस्मादिति ॥ परेणावच्छेदपक्षस्य प्रतिबिम्बनसमुदाय-पक्षयोर्निराकृतत्वादिति भावः ॥ किं चेति ॥ तथा चास्याभ्युपगमवादेनोक्तत्वान्न ग्रन्थान्तरस्थस्वोक्तिविरोध इति भावः ॥ दर्पणादौ च प्रतिबिम्बव्यतिरेकेण मुखव्यक्त्यन्तरं नास्तीत्यन्यत्रोक्तमिति ॥ मुखप्रतिमुखानुगतमुखत्वातिरिक्तमुखमात्ररूपव्यक्त्यन्तरस्येव जीव-ब्रह्मानुगत चित्त्वातिरिक्तचिन्मात्ररूपस्याज्ञानाश्रयत्वयोग्यव्यक्त्यन्तरस्य चाभावाच्चेति न्यायामृते प्रथमपरिच्छेदेऽज्ञानस्य विवरणोक्तचिन्मात्राश्रितत्वभङ्गे उक्तमित्यर्थः ।

## तात्पर्यचन्द्रिका

**यच्चोक्तमुभाभ्यां आद्यसूत्रेऽधिदैवादिषु योऽन्तर्यामी स परमात्मेत्यन्वय इति । तन्न । तथात्वे अधिदैवादिष्वित्यस्य वैयर्थ्यात् । विषयवाक्यसूचनस्यान्तर्यामिपदेनैव सिद्धेः । अन्यथा ''अन्तस्तद्धर्मे''त्यादावादित्यादिष्वन्तरिति साध्यं निर्दिश्येत । तस्मादधिदैवादिप्रकरणेषु तद्धर्मव्यपदेशादिति यथाश्रुत एवान्वयः । वरं हि वैयर्थ्यादपि लक्षणा । एवं हि न केवलं तद्धर्मव्यपदेशमात्रम् । किं तु तस्याभ्यासोऽप्यस्तीत्युक्तं भवति । यच्च द्वितीयसूत्रे तद्धर्माभिलापो नाम प्रधानधर्मविरुद्धधर्माभिलाप इत्युक्तम् । तन्न । आद्यसूत्रस्थेन तद्धर्मव्यपदेशादित्यनेन पुनरुक्तेः । ब्रह्मधर्मो हि प्रधानधर्मविरुद्ध एव । तस्मान्त्रिगुणत्वादिधर्माभिलापाभावादित्येवार्थः । किं च ''भेदव्यपदेशात् । भेदव्यपदेशाच्चान्यः । सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्'' इत्यादिकमतीतं ''शारीरश्चोभयेऽपि हि भेदेनैनमधीयत'' इति वर्तमानं ''विशेषणभेदव्यपदेशाभ्यां च नेतरौ । भेदव्यपदेशा''दित्यादि चागामिभेदप्रतिपादकम् ।**

**अद्वैतिभिर्व्याक्रियते कथमद्वैतदूषकम् ।
सूत्रजातं स्वसिद्धान्ततया लज्जां विनैव तु ॥ १ ॥
यदि मिथ्यार्थवादीनि सूत्राणीत्येव कीर्तनम् ।
सूत्रव्याख्या तर्हि वेदबोध्यमिथ्यात्वबोधकः ॥ २ ॥**

बौद्धागमोऽपि वेदस्य व्याख्यारूपः प्रसज्यते ।
बौद्धोऽपि ब्रह्मसूत्राणि व्याख्यायांते भवानिव ॥ ३ ॥
मिथ्यैषोऽर्थः किं तु तत्वं शून्यमेवेति कीर्तयेत् ।
असद्वैत्यादिवचनं तस्य स्यात्तत्ववेदकम् ॥ ४ ॥
अपौरुषेयभावेन प्रयुक्ता च प्रमाणता ।
व्यावहारिकमात्रेण नार्थेन परितुष्यति ॥ ५ ॥
असकृत् श्रुतिभिःसूत्रे भेदे यत्नेन साधिते ।
मिथ्यार्थतां कथं ब्रूयात्सूत्राणां भाष्यकृत्स्वयम् ॥ ६ ॥
सौगता वेदबाह्या हि वेदाप्रामाण्यवादिनः ।
अवैदिका इति ज्ञात्वा वैदिकैः परिवर्जिताः ॥ ७ ॥
वेदान्प्रविश्य वेदानामप्रामाण्यं प्रसाधयन् ।
मायी तु यत्नतस्त्याज्यो वैदिकैर्हितशत्रुवत् ॥ ८ ॥

**टीकाक्षरार्थस्तु स्पष्टः ॥ छ ॥ अन्तर्याम्यधिकरणम् ॥ ५ ॥**

**प्रकाशिका** — एवमधिकरणप्रमेयं परमते निरस्य मायिमते रामानुजमते च सूत्राक्षरार्थानुपपत्तिमाह ॥ यच्चेति ॥ केषांचिदधिकरणशरीरं परमतादनतिभिन्नत्वान्न पृथग्दूषितम् । तथा हि । प्रधानस्य वाक्यशेषोक्तद्रष्टृत्वाद्ययोगेन शङ्कितुमयोग्यत्वादयमन्तर्यामी ऐश्वर्ययोगविशेषनिमित्तप्रकृष्टादृष्टवान् जीवविशेषः परमात्मा वेति सन्देहे वाक्यशेषे ''द्रष्टा श्रोता मन्ते''ति करणजन्यदर्शनश्रवणमननादिरूपज्ञानवत्ताश्रवणात्तस्य च जीव एव सम्भवात् द्रष्टेत्यादेः करणजन्यज्ञानपरत्वमनङ्गीकृत्य रूपादिसाक्षात्कारमात्रपरत्वेऽङ्गीक्रियमाणे रूपादिसाक्षात्कारस्य जीवपरयोस्साधारण्येनास्मिन्प्रकरणे ''नान्योऽतोऽस्ति द्रष्टे''ति द्रष्ट्रन्तरनिषेधायोगात्करणायत्तज्ञान परत्वाज्जीवस्यैतादृशद्रष्टृत्वेन निषेधायोगात्तद्बलेन ''आत्मनि तिष्ठन्नात्मनोंऽतरोऽयमात्मा न वेदे''त्यादिषु पृथिव्यादिसर्वभूतान्तः प्रवेशसर्वनियमनसर्वशरीरकत्वादितद्धर्मोपदेशात्परमात्मैव । द्रष्टेत्यादिवाक्यशेषस्तु रूपादिसाक्षात्कारमात्रपरो न करणायत्तज्ञानपरः । स च ''पश्यत्यचक्षुः स शृणोत्यकर्ण'' इत्यादिना परस्यैव । नान्योऽतोऽस्तीति द्रष्टृंतरनिषेधस्तु स्वातन्त्र्येण द्रष्टन्तरनिषेधपर इति सिद्धान्त इति । अत्र प्रधानपूर्वपक्षस्य प्रागेव समर्थनेन तत्त्यागो युक्तः । अन्यथा न च स्मार्तमिति प्रधानप्रत्याख्यानायोगः ।

यदत्रोक्तं श्रुतप्रकाशे न च स्मार्तमिति दृष्टान्त एवोपन्यस्तो न प्राधान्येन । अत एव न च स्मार्तमतद्धर्माभिलापात् शारीरश्चेत्येवमन्तमेकं सूत्रमिति । तन्न । दृष्टान्तत्वद्योतकाभावात् । अन्यथा नानुमानमतच्छ्ब्दात्प्राणभृच्चेत्यादावपि तथात्वापत्तिः । दृष्टान्तोपादानस्य वैयर्थ्याच्च । न च शारीरस्स्मार्तवदित्यादिविन्यासापाताच्च । प्रधानशङ्कानुदयादेवं कल्पनमिति चेन्न । तच्छङ्कोदयस्य मूल एवोक्तत्वात् । शारीरश्चेति चशब्दास्वारस्याच्च । अस्यापि जीवमात्रनिरासपरत्वे योगविभागायोगेन अतद्धर्माभिलापाच्छारीरश्चोभयेऽपि हि भेदेनैनमधीयत इत्येकवाक्यतयैव विन्यासः स्यादिति । नन्वधिदैवादिचिह्नितेषु वाक्येष्विति विषयसूचनार्थं तदित्युक्तमित्यत आह ॥ विषयेति ॥ ननु भवन्मतेऽप्यधिदैवादिप्रकरणेष्विति प्रकरणलक्षकत्वाल्लक्षणादोष इत्यत आह ॥ वरं हीति ॥ अत एव ''एकादश वै पशोरवदानानि । तानि द्विरवद्यती''ति वाक्यवैयर्थ्यपरिहाराय ''यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपाकार्ये''त्यत्र वपाशब्दे पाशुकहविर्मात्रलक्षणेति स्वीकृतं मीमांसकैरिति भावः । अत्र सूत्र एवमपि न वैयर्थ्यानिस्तार इत्यत आह ॥ एवं हीति ॥ अत्राधिदैवाधिलोकादिष्विति पाठः कैश्चित्कल्पित एव न वास्तव इति ध्येयम् ॥ इत्युक्तमिति ॥ उभाभ्यामिति वर्तते ॥ तस्मादिति ॥ अत्र समासोपपत्तिस्त्वतच्छब्दादित्यत्र वक्ष्यत इति भावः । तृतीयसूत्रं मायिमतेऽनुपपन्नमिति वदन्प्रसङ्गादतीतानागतभेदसूत्राणि सर्वाण्यप्ययुक्तानीत्याह ॥ किं चेति ॥ भेदप्रतिपादकमित्यस्य सूत्रजातमिति श्लोकगतेनान्वयः । इत्यादि चेत्यपि तेनैवान्वेति । का कथं तेत्यत उक्तमद्वैतदूषकमिति । मिथ्याभेदपरत्वेनाद्वैताविरोधित्वात्का लज्जाप्रसक्तिरित्यत आह ॥ यदीति ॥ ननु यथाऽर्थवादानां मिथ्यार्थावलम्बनेन प्राशस्त्यतात्पर्यात्प्रामाण्यं तद्वत्सूत्रादीनि सर्वाणि मिथ्यार्थवादीन्यपि तात्विकशुद्धचैतन्यतात्पर्यविषयोपेतानि भविष्यन्ति । नैवं बौद्धमत इत्यत आह ॥ बौद्धोऽपीति ॥ ननु न तस्य तथा वचने तत्वावेदकं वचनं मानमस्ति मम त्वस्ति सदेवेत्यादिकमित्यत आह ॥ असद्वेत्यादीति ॥ ननु तेनासदर्थकत्वमागमादेरुच्यते । मया तु व्यावहारिकसदर्थकत्वमित्यत आह ॥ अपौरुषेयेति ॥ अयुक्तं च मिथ्यार्थकथनमित्याह ॥ असकृदिति ॥ तन्मतदूषणस्य फलमाह ॥ सौगता इति ॥ प्रविश्य विचार्य । ननु ''अस्माया मेधास्रजो विनि''रिति मायावीति भाव्यम् । सत्यम् । ''व्रीह्यादिभ्यश्चे''ति इनि प्रत्यये मायीति साधु ॥ स्पष्ट इति ॥ उपन्यासमुखेन विवृत इत्यर्थः ।

एतेनात्रान्तर्यामी नारायणश्चतुर्मुखो वेति पूर्वपक्षं कृत्वा अधिदैवादिषु श्रूयमाणोऽन्तर्यामी शिव एव । सर्वान्तरत्वरूपधर्मस्याथर्वशिरसि ''ते देवा रुद्रमपृच्छ''न्निति प्रस्तुतरुद्रनिष्ठतया

''सोंऽतरादन्तरं प्राविश''दिति श्रवणादिति केनचित्प्रलपितं प्रत्युक्तम् । सूत्रोपात्तप्रधानपक्षत्यागायोगात् । ''दिव्यो देव एको नारायण'' इति मूलोक्तसमाख्याविरोधेन तत्र तत्र भाष्योदाहृतानेकवचनविरोधेन शिवान्तर्यामित्वस्य बाधितत्वाच्च ''सोंऽतरादन्तरं प्राविश''दित्यथर्वशिरोवाक्येऽपि न शिवस्यान्तर्यामित्वमुच्यते । किं तु स इति प्राक्प्रकृतरुद्रान्तर्यामिणं नारायणमेव परामृश्यांतरादन्तरं प्राविशद्दिशश्चैवान्तरेति नारायणस्यैवान्तर्यामित्वमुच्यते । 'विश प्रवेशने' इति धातुनिष्पन्नविष्णुशब्दार्थस्य ''सर्वा दिशो विष्टोऽस्मी''त्यैतरेयभाष्योक्तदिशा प्राविशदित्यनेन ज्ञापनाच्च । अन्यथा ''अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित'' इत्यादिविरोधापत्तेः । विस्तरस्तु गुरुपादकृतपरतत्वप्रकाशिकायां ध्येयः । सूत्रास्वारस्यं च रामानुजमत इव ज्ञेयम् ॥ छ ॥ अन्तर्याम्यधिकरणम् ॥ ५ ॥

**पाण्डुरङ्गि** — ननु च भवत्पक्षेऽप्यधिदेवादिष्वित्यस्य यथाश्रुतस्यानन्वयः । प्रकरणेष्वित्युक्तावपि लक्षणा स्यादित्यत आह ॥ वरं हीति ॥ लक्षणाप्रयोजकं प्रयोजनं चाह ॥ एवं हीति ॥ छ ॥ अन्तर्याम्यधिकरणम् ॥ ५ ॥

## अदृश्यत्वाधिकरणम्

**ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ** ॥ अत्रान्तर्यामिणो ब्रह्मत्वे हेतूकृतस्य ''यं पृथिवी न वेदे''त्युक्तस्यादृश्यत्वस्याक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः । अत्रादृश्यत्वादिगुणकमक्षरं किं प्रकृत्यादि किं वा विष्णुरिति चिन्ता । तदर्थं ब्रह्मणोऽक्षरत्वे ''अक्षरात्परतःपर'' इति वाक्यशेषोक्तमक्षरस्य परत्वावधित्वं न सम्भवत्युत सम्भवतीति । तदर्थं परत्वावधिभूतमक्षरमदृश्यत्वादिगुणकाक्षरादनन्यदुतान्यदिति । अनन्यत्वे परत्वावधित्वस्य ब्रह्मण्ययोगान्न तस्याक्षरत्वं युक्तम् । अन्यत्वे तु युक्तम् ॥

पूर्वपक्षस्तु ॥ जडप्रकृतेरेवादृश्यत्वादि । अदृश्यत्वादिगुणकेऽक्षरे पृथिव्यादिदृष्टान्तपूर्वकं ''तथाऽक्षरात्सम्भवतीह विश्व''मिति विश्वोपादानत्वोक्तेः । न च कारणत्वमात्रेऽयं दृष्टान्तः । तस्य ''सम्भवतीह विश्व''मित्यनेनैव सिद्ध्या दृष्टान्तवैयर्थ्यात् । अबाधेऽन्तरङ्गस्योपादानत्वस्य त्यागायोगाच्च । चित्प्रकृतेर्वाऽदृश्यत्वादिकम् । तत्राक्षरशब्दस्य ''कूटस्थोऽक्षर'' इत्यादिस्मृतिसिद्धत्वात् । न

चाक्षराधिकरणन्यायेन ब्रह्मणि स सावकाश इति वाच्यम् । विश्वोपादानत्वस्य तत्रासम्भवात् । चित्प्रकृतौ तु विश्वोपादानाभिमानित्वेन तत्सम्भवात् । चतुर्मुखो वाऽदृश्यत्वादिगुणकः । ''स ब्रह्मविद्या''मिति ब्रह्मशब्दात् । न च विष्णौ स मुख्य इति वाच्यम् । पूर्वत्र ''ब्रह्मा देवानां प्रथमः सम्बभूवे''ति, उत्तरत्र च ''तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत'' इति जायमानत्वलिङ्गेन चतुर्मुखपरेण ब्रह्मशब्देन सन्दष्टस्य ''स ब्रह्मविद्या''मिति ब्रह्मशब्दस्यान्यपरत्वायोगात् । रुद्रो वाऽदृश्यत्वादिगुणकः । ''कर्तारमीश''मितीशशब्दात् । न च ''शब्दादेव प्रमित'' इति वक्ष्यमाणन्यायेन स विष्णुपर इति वाच्यम् । रुद्रे प्रसिद्धसर्वज्ञशब्दात् । न चासौ यौगिकत्वेन प्रकृताक्षरस्य विशेषणं न तु रुद्राख्यविशेष्यपर इति वाच्यम् । रूढेर्बलवत्त्वात् । सर्वविदित्यनेन पुनरुक्तेश्च । तस्मादुक्तबाधकात् ''अक्षरात्परतः पर'' इति निकृष्टत्वेन श्रुतत्वाच्चाक्षरं न ब्रह्म । न च ''तथाऽक्षरा''दित्यादावेवाक्षरशब्दो ब्रह्मपरः ''अक्षरात्परतःपर'' इत्यत्र तु प्रकृतिपर इति वाच्यम् । प्रकृतहानाप्रकृतस्वीकारापातात् । पूर्वपक्षे त्विदं निकृष्टत्वं चित्प्रकृतिपक्षेऽक्षरात्परत इति पञ्चम्योः सामानाधिकरण्येन पक्षान्तरे तु वैयधिकरण्येन युक्तम् । न चाब्रह्मपक्षे परविद्याविषयत्वं बाधकम् । ''परा चैवापरा च। तत्रापरा । ऋग्वेदो यजुर्वेद'' इत्यपरविद्यात्वेनोक्तऋगादिविषये शास्त्रयोनौ ब्रह्मण्येव तत्प्रतियोगिभूतपरविद्याविषयत्वासम्भवात् । ''अथ परा । यया तदक्षरमधिगम्यत'' इति श्रुत्या प्रकृतेरेव तत्सम्भवाच्च ॥

**प्रकाशिका —** ॥ ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ भाष्ये ''अदृश्यत्वादिगुणा विष्णोरुक्ता'' इति सामान्योक्तेः,तत्वप्रदीपे च ''अदृश्येऽनात्म्ये सहैव सन्तं न विजानन्ति देवाः स योतो श्रुत इत्यादिनाऽदृश्यत्वादिगुणा विष्णोरुक्ता'' इत्यादिपदप्रयोगात् टीकायां ''अदृश्येऽनात्म्य'' इति विशिष्योक्तावपि तुल्यन्यायतया प्राप्तां ''पूर्ववददृश्यत्वादिबलेन रूढिं परित्यज्य योगवृत्त्याऽक्षरशब्दो विष्णौ सम्भवती''ति न्यायविवरणटीकोक्त्या च लब्धां पूर्वसङ्गतिमाह ॥ अत्रेति ॥ नन्वदृश्यत्वं सामान्यं पृथिव्यविदितत्वं विशेषः तेन कथं तदाक्षेप इति । मैवम् । सर्वादृश्यत्ववति तदेकदेशपृथिव्यविदितत्वस्यापि ''मुखनासिकावचनोऽनु-नासिक'' इत्यत्र महाभाष्योक्तेन प्रासादवासिन्यायेन सत्त्वाद्वा पृथिव्याद्यधिदैवादिसर्वाविदि-तत्वस्यादृश्यत्वरूपत्वाद्वा ''सहैव सन्तं न विजानंति देवा'' इत्यत्रेव कैमुत्यलब्धत्वाद्वा

उभयत्राप्यपरिच्छिन्नवैभवस्य विवक्षितत्वाद्वा तदाक्षेपात् । यदत्रोभाभ्यामुक्तं प्राक् प्रधानस्य द्रष्टृत्वाद्ययोगेन निरासेऽपीह तथा बाधकाभावाददृश्यत्वादिकं प्रधानस्य स्यादिति शङ्कोदयात्सङ्गतिरिति तन्न । साक्षात्सौत्रहेत्वाक्षेपसम्भवेनेदृश्या अनादरणीयत्वादिति भावेनोक्तं ब्रह्मत्वे हेतूकृतस्येति । एतेनैव प्राग्घेतूकृतेनादृश्यत्वरूपब्रह्मधर्मेण ब्रह्म किं नाक्षरशब्देनोच्यत इति शङ्काया अप्यनवकाशः । ''अदृश्येऽनात्म्य'' इत्यादिटीकादि तु फलपरमिति भावः ।

ननु पूर्वं तद्धर्माभिलापाभावेन प्रधाननिरासेऽपि नेह तथा पृथिव्यादिदृष्टान्तपूर्वं विश्वोपादानत्वरूपतद्धर्माभिलापादिति वा पूर्वत्राविदितत्वरूपादृश्यत्वादिबाधकेन शरीरशब्दे रूढित्यागवदत्राक्षरशब्देनादृश्यत्वलिङ्गेन रूढित्यागः । अक्षरात्परतः पर इत्युत्कर्षावधित्वश्रवणादिति वा पूर्ववैषम्येणापि सङ्गतिरस्तीति चेत्सत्यम् । प्रधानहेत्वाक्षेपसम्भवे तस्यैव वाच्यत्वात्सिद्धान्तिशङ्का बीजनिरासार्थत्वाच्च पूर्वे हेत्वाक्षेप एवोक्तः । विषयसंशयटीकां व्यनक्ति ॥ अत्रेति ॥ टीकायामेवापेक्षितसमग्रविषयवाक्यं व्यक्तम् । यद्यपि गुणजातमेवात्र विषयः । लिङ्गपादत्वात् । टीकायां तथैवोक्तेश्च । तथाप्यक्षरस्य विशेष्यत्वात्तस्य चोपादानत्वान्न ब्रह्मेति पूर्वपक्षयुक्तिं सूचयितुं तथोक्तम् । अत एव टीकायामक्षरशब्दसाहित्येनान्यत्र-प्रसिद्धिरदृश्यत्वादिलिङ्गानामुक्ता । नन्वेवमक्षरनामैव समन्वीयताम् । पादसङ्गतिस्तूत्तराधिकरण इवानेकलिङ्गसमन्वयार्थत्त्वात्फलतो भविष्यति । उपादानत्त्वादक्षरं न ब्रह्मेति पूर्वपक्षश्च ऋजुः । उपादानत्त्वादक्षरस्यान्यत्वेन तद्विशेषणत्वाद्गुणजातमप्यन्यस्येति पूर्वपक्षस्तु वक्र इति चेन्न । अक्षरशब्दसमन्वयस्याक्षराधिकरणे सेत्स्यमानत्वात् । न च तेनैवेदं गतार्थम् । परावधित्वादिना बाधकेन तस्येहापवादेन पूर्वपक्षकरणात् । अन्यत्रासमन्वितगुणजातसमन्वयस्यैवेह कार्यत्वात् । अस्मिन्पादेऽन्यसाहित्येनैवान्यत्र प्रसिद्धेराश्रितत्वात् । गुणसमन्वये च पूर्वसङ्गतेस्साक्षाल्लाभाच्च गुणजातमेवात्र चिन्तितम् ॥ प्रकृत्यादीति ॥ चिदचित्प्रकृतिविरिंचरुद्रा इत्यर्थः ।

यद्यप्यत्र टीकायां ''अक्षरात्सम्भवतीह विश्व''मिति कारणवाक्यस्थाक्षरब्रह्मेशशब्दानां च विष्णाववकाशमाशङ्क्य परत्वावधित्वश्रवणेनोज्जीवनात्तदनुरोधेन विष्णुरिति चिन्तानन्तरं कारणवाक्यस्थाक्षरब्रह्मेशशब्दाः किं प्रकृत्यादिपरा अथ विष्णुपरा इति चिन्ता प्रदर्शनीया । तथापि तुल्यन्यायतया सा चिन्ता स्पष्टेति वा वाक्यशेषस्थाक्षरस्य परत्वावधित्वेन निकृष्टत्वे तदनन्यप्राचीनाक्षरस्यापि न ब्रह्मत्वमिति हेतुहेतुमद्भावस्येव प्राचीनकारणवाक्यस्थब्रह्मेश-शब्दयोर्न ब्रह्मपरत्वमित्यत्र स्पष्टं हेतुहेतुमद्भावाप्रतीतेरक्षरस्याब्रह्मत्वात्तद्युक्तकारणवाक्यस्य

तत्समानाधिकरणब्रह्मेशशब्दयोरपि न ब्रह्मपरत्वमिति अक्षरस्याब्रह्मत्वद्वारैव कारणवाक्यादेरब्रह्मपरत्वोक्त्यवश्यंभावाद्वा सङ्गतिभाष्यन्यायविवरणतट्टीकानुरोधाद्वाऽक्षरमुखैव चिंतोपदर्शिता ।

फलफलिभावमस्फुटत्वादाह ॥ अनन्यत्व इति ॥ यदि वक्ष्यमाणदिशा प्रकृतहानाप्रकृतकल्पनादोषापत्त्या ''अक्षरात्परत'' इत्युक्ताक्षरस्य ''अक्षरात्सम्भवतीह विश्व''मिति पूर्वोक्तस्य चाक्षरस्यैकत्वं तदाऽदृश्यत्वादिगुणकस्य विश्वकारणत्वेनोक्तस्यैव परत्वावधित्वात्तस्य च सर्वोत्तमे विष्णावयोगेन यथायथं प्रकृत्यादीति पूर्वपक्षे फलम् । यदा तु ''अक्षरत्रयमीरित'' मित्यादि वक्ष्यमाणरीत्याऽन्यत्वं तदाऽक्षरात्परत इत्युक्ताक्षरस्यापरत्वात् परत्वावधित्वस्य ब्रह्मण्यभावात्परविद्याविषयत्वेन विष्णुरेवेति सिद्धान्ते फलमित्यर्थः । उपादानत्वाक्षरब्रह्मेशशब्दान् क्रमेण प्रधानश्रीब्रह्मरुद्रप्रापकांष्टीकोक्तान्व्यंजयंश्चतुर्विधपूर्वपक्षटीकां व्यनक्ति ॥ जडप्रकृतेरेवेत्यादिना ॥ नन्वत्र निर्धारित एक एवादृश्यत्वादिगुणक इति पूर्वपक्ष उतानिर्धारितो यः कश्चिदिति सर्वेऽपीति वा । नाद्यः । अनेकप्रापकसत्त्वेन निर्धारणायोगात् । न द्वितीयः । संशयादविशेषापत्तेः । न तृतीयः । वाक्यभेदापातादिति चेन्न । अक्षरब्रह्मेशशब्दानामन्यप्रापकाणां विनाशित्वेन ''मम योनिर्महद्ब्रह्मे''त्यादिवचनेन कार्यस्य कारणाधीनतयेशितृत्वेन प्रधान एवोपपत्तेरित्यादिरूपेण पक्षचतुष्टयेऽप्यवधारणसम्भवेनाद्यस्य युक्तत्वादिति भावेन प्रकृतेरेवेत्युक्तम् । चित्प्रकृतेर्वेत्यादि वाशब्दाद्द्वितीयतृतीयावपि युक्ताविति सूचितम् । द्वितीये विष्ण्वन्यत्वेनावधारणसम्भवान्न सन्देहादविशेषः । अत एव टीकायां ''विष्णोरन्यस्य वे''ति संशयोक्तिः । ''न विष्णोरदृश्यत्वादीति तावत्पूर्वपक्ष'' इत्युक्तिः ''न विष्णुरदृश्यत्वादिगुणक'' इत्युपसंहारश्च । तृतीये वाक्यभेदस्य न्यायप्राप्तत्वादिति । यद्वा ''न विष्णोरदृश्यत्वादी''ति टीकोक्तव्यवच्छेद्याभिप्रायं जडप्रकृतेरेवेत्यवधारणम् । न तु कोट्यन्तरव्यवच्छेदाशयम् । तेन ''न विष्णोरदृश्यत्वादी''ति टीकोक्तस्य ''अदृश्यत्वादिकं जडप्रकृतेर्भवे''दिति टीकोक्तस्य च सङ्ग्रहः कृतो भवति । तेन विष्णोर्न चेन्निर्विषयतया वाक्यमिदममानं स्यादिति शङ्का च निरस्ता भवति । ''अस्य पृथिव्यादिदृष्टान्तेनोपादानतया जगत्कारणत्वेनोक्तेरिति टीकां व्यनक्ति ॥ अदृश्यत्वेति ॥ दृष्टान्तेत्येतदुपादानत्वसिद्ध्यर्थमुक्तम् । ऊर्णनाभेरादित्वेऽपि पृथिव्यादीत्युक्तेर्गतिर्वक्ष्यते ।

उपादानत्वमेव शङ्कापूर्वं व्यनक्ति ॥ न चेति ॥ तस्य कारणत्वमात्रस्य ॥ अन्तरङ्गस्येति ॥ कार्यानुस्यूतत्वादुपादानस्येति भावः । एतेन टीकायामेवमाशङ्क्य तथाऽक्षरब्रह्मेशशब्दानां च

विष्णाववकाशमाशङ्क्य सर्वत्र परतः पराभिधानेनैवोज्जीवनं यत्कृतं तदुपलक्षणमिति सूचितम् । तथा च वक्ष्यति ''इति निकृष्टत्वेन श्रुतत्वाच्चे''ति । ''चेतनप्रकृतेर्वे''त्यादिटीकां व्यनक्ति ॥ चित्प्रकृतेर्वेति ॥ अक्षराधिकरणन्यायेनेति ॥ ''अक्षरमम्बरान्तधृते''रित्यत्र ''एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे''ति श्रुतमक्षरं किं चित्प्रकृतिरथ विष्णुरिति संशये ''ये त्वक्षरमनिर्देश्यमव्यक्त''मित्यादौ श्रीतत्वेऽक्षरशब्दप्रयोगात्क्षराक्षरातीते विष्णौ तदयोगाच्छ्री-तत्त्वमेवेति प्राप्ते चतुर्विधनाशरहिते विष्णावेवाक्षरशब्दप्रवृत्तिनिमित्तस्य पौष्कल्यात् ''तस्मादक्षरं तस्मादक्षरमित्याचक्षत एतमेव सन्त''मिति श्रुत्यादौ तस्य प्रयोगाच्च विष्णुरेवाक्षरशब्दमुख्यार्थ इति तृतीये पादे वक्ष्यमाणन्यायेनेत्यर्थः । निर्विकारे श्रीतत्त्वेऽपि कथमुपादानत्वमित्यतः ''तस्याविकाराभिमानित्वाद्युज्यत'' इति टीकोक्तमेव व्यक्तमाह ॥ चित्प्रकृतौ त्विति ॥ ''हिरण्यगर्भस्य वे''त्यादिटीकां व्यनक्ति ॥ चतुर्मुखो वेति ॥ स ब्रह्मेति ॥ ''ब्रह्मा देवानां प्रथमस्सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहे''ति वाक्ये ब्रह्मशब्दादित्यर्थः । तस्य चतुर्मुखपरत्व एवैतद्विद्यायास्तत्परत्व-मित्यतस्तत्साधयति ॥ न चेत्यादिना ॥ पूर्वत्रेति ॥ अत एव तत्वप्रदीपे ब्रह्मा देवानामिति पूर्ववाक्यमप्युदाहृतमिति भावः ॥ जायमानत्वेति ॥ सम्बभूव जायते इति पदाभ्यामुक्तेनेत्यर्थः । उपादानत्वं च तदभिमानित्वेनेति भावः । एवमग्रेऽपि । ''रुद्रस्य वे''त्यादिटीकां व्यनक्ति ॥ रुद्रो वेति ॥ ईशशब्दादिति ॥ प्रकृतादृश्यत्वादिगुणकाक्षर एव ''यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीश''मित्युत्तरवाक्ये श्रुतत्वादित्यर्थः ॥ शब्दादेवेति ॥ अत्रैव तृतीयपादे ''ईशानो भूतभव्यस्ये''ति श्रुत ईशानो वायुरुत विष्णुरिति सन्देहे ऊर्ध्वं प्राणमुन्नयती''ति प्राणव्यवस्थापकत्वस्य ''मध्ये वामनमासीन''मिति मध्यमत्वस्य ''विश्वे देवा उपासत'' इति विश्वदेवोपास्यत्वस्य च श्रवणात् तेषां च ''एवमेवैष प्राण- इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते योऽयं मध्यमः प्राणः कुविदङ्गे''ति श्रुतिभिर्वायुधर्मत्वाद्वायुरिति प्राप्ते लिङ्गसहस्रादपि श्रुतेर्बलवत्त्वान्निरवकाशवामनश्रुत्या ईशानपदप्रवृत्तिनिमित्तस्य प्रेरकत्वादेर्विष्णावेव पौष्कल्या-दीशानो विष्णुरेवेति वक्ष्यते । ईशशब्दस्य चेशानशब्दपर्यायत्वादिति भावः । यद्यपि सर्वत्रेति नये अत्तेति नये चादित्यादिति श्रुत्योरिवान्तर्नयन्यायेनेशशब्दस्यापि सावकाशत्वशङ्का सुशका । तथापि तदधिकरणविषयवाक्ये ईशशब्दस्य तत्पर्यायस्य वाऽश्रवणाभावाद्वा तत्रैवात्र वाक्ये निरवकाशविष्णुलिङ्गाभावेन तन्न्यायाविषयत्वाद्वा तत्र तात्पर्यमात्रमेवाधिदैवगतशब्दानामुक्तम् । न तु शक्तिरपीति भावेन वा शब्दादेवेत्यत्रेशशब्दपर्यायस्येशानशब्दस्य साक्षादेव समन्वयोक्तेर्वा ''शब्दादेव प्रमित इति वक्ष्यमाणन्यायेने''त्युक्तम् ॥ प्रसिद्धेति ॥

यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः ।
तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥

इति श्रुतसर्वज्ञशब्दात्तस्य च ''कृशानुरेतास्सर्वज्ञो धूर्जटिर्नीललोहित'' इत्यमरोक्त्या रुद्रे प्रसिद्धत्वादित्यर्थः । यौगिकत्वे दोषमाह ॥ सर्वविदिति ॥ प्रातिस्विकबाधकोक्त्यान्यप्रापकाणां निरवकाशत्वमुक्त्वा टीकाद्युक्तेन साधारणबाधकान्तरेणापि तदाह ॥ अक्षरादिति ॥ यद्यपि टीकायां कारणत्वस्याक्षरब्रह्मेशशब्दानां च सावकाशत्वमाशङ्क्याक्षरात्परतः पर इति श्रुतनिकृष्टत्वेनैव तेषां निरवकाशत्वमुक्तम् । न तु दृष्टान्तोक्तविश्वोपादानत्वादिना । तथापि सति बाधके त्यागायोगात् ''अक्षरात्परतः पर इति श्रुतेरपी''ति न्यायविवरणगतापिशब्दस्य बाधकान्तरसमुच्चयार्थत्वमुपेत्य प्रातिस्विकबाधकोक्त्या च निरवकाशत्वमुक्तमिति ध्येयम् । अंत्यचिन्तास्थानन्यत्वकोटिं साधयितुं निकृष्टत्वेन श्रुतत्वं शङ्कापूर्वं साधयति ॥ न चेति ॥ विष्णोरिव पूर्वपक्षकोटीनामपि निकृष्टत्वेन श्रुतत्वमयुक्तम् । श्रीतत्वापेक्षया विष्णोरर्वागन्यस्याभावात् । तत्र सामानाधिकरण्येनान्वये चतुर्मुखादावयोगादित्यतः ''तस्यां सामानाधिकरण्येनोपपन्न''मिति टीकोपलक्षणमिति भावेन ''तस्मात्परस्याः प्रकृतेः परस्य हरेरभिधानादेव चे''ति तत्वप्रदीपोक्तिं हृदि कृत्वा सर्वत्र तदुपपत्तिमाह ॥ पूर्वपक्ष इति ॥ पक्षान्तरे त्विति ॥ अक्षराच्चतुर्मुखात्परतश्श्रीतत्वात्पर इति चतुर्मुखपक्षे । रुद्रपक्षे त्वक्षराद्रुद्रात्परतश्चतुर्मुखात्पर इति पुंमात्रविवक्षया ध्येयमिति भावः । ननु यथा सिद्धान्ते निकृष्टत्वश्रवणं बाधकं तथा पूर्वपक्षेऽपि परविद्याविषयत्वं बाधकमित्याशङ्क्य ''यदा वेदाद्यन्यविषयतया योज्यते तदा तस्यापरविद्यात्व'' मित्यादिसिद्धान्त टीकाव्यावर्त्यं परापरविद्ययोर्भिन्नार्थत्वमुपेत्याह ॥ न चेति ॥ ऋगादिविषयत्वोपपादनाय शास्त्रयोनावित्युक्तम् । शास्त्रयोनिसूत्रे तथोक्तत्वादिति भावः ॥ प्रतियोगीति ॥ विरोधीत्यर्थः ॥ प्रकृतेरिति ॥ प्रकृत्यादेरेवेत्यर्थः । नन्वक्षरात्परतः पर इति वाक्योक्तपरवस्तु किंचिदुपेत्यात्र प्रकृत्यादिरिति पूर्वपक्षकरणे ''चित्वे तु तेन कार्त्स्न्येनावेद्यत्वं नेश्वरं विने''ति प्रागुक्तदिशाऽपरिच्छिन्न-वैभवत्वपर्यवसन्नं मुख्यमदृश्यत्वं निकृष्टत्वेनाभ्युपेते प्रकृत्यादौ पूर्वपक्षिणा शङ्कितुमशक्यमिति कथं तादृशस्यानन्दमयादावुक्तस्य विष्णुधर्मस्य पूर्वपक्ष आक्षेपस्स्यात् । न चात्र श्रुतनिकृष्टत्वस्य परत्वस्य चाक्षरत्वेनाभिमते प्रकृत्यादावेव कथंचिदुपपन्नताभिप्रेतेतीश्वरस्य परत्वमेव नोपेयते पूर्वपक्षिणेति वाच्यम् । तथात्वे पूर्वत्र निर्णीतादृश्यत्वरूपविष्णुलिङ्गेनाक्षरस्य विष्णुत्वमेवोपेत्य परापरत्वोपपत्तिरुच्यताम् । न चाक्षरादित्यादिना श्रुतोपादानत्वादिना विष्णुनिरासेन

प्रकृत्यादिरुच्यत इति वाच्यम् । टीकायां परत्वावधित्वबाधकबलेनैव पूर्वपक्षप्रापकाणां निरवकाशत्वोक्तेरिति चेन्मैवम् । अदृश्यत्वं चक्षुरगोचरत्वमित्युपेत्यादृश्येनात्म्ये इत्युक्तादृश्यत्वस्यापि प्रकृत्यादावाशङ्कनात् । पूर्वाक्षेप चन्द्रिका त्वर्थान्तराभिप्राया । न चैवमपि ब्रह्मरुद्रयोर्जीवत्वेन ''अचक्षुश्श्रोत्रं तदपाणिपाद''मित्युक्तजीवधर्मभूतचक्षुरादिराहित्यं कथं घटताम् । येनादृश्येऽनात्म्य इत्यनात्म्यपदोक्तस्य जीवगुणराहित्यस्य टीकोक्त आक्षेप उपपद्येतेति वाच्यम् । तयोर्जीवत्वमेव नेतीति वा जीवोत्तमत्वेनेतरजीववैलक्षण्येन वा तदुपपत्तिरित्याशयादिति ।

**पाण्डुरङ्गि** – ॥ ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ पूर्वपक्षसिद्धान्तयोः फलफलिभावमाह ॥ अनन्यत्व इति ॥ अक्षराधिकरणन्यायेनेति ॥ अक्षरमम्बरान्तधृतेरित्यधिकरणन्यायेनेत्यर्थः । नन्वेवं चित्प्रकृतेरप्यदृश्यत्वमित्यपि न स्यात् । तस्या अपि विश्वोपादनत्वासम्भवादित्यत आह ॥ चित्प्रकृतौ त्विति ॥ रूढेरिति ॥ कृशानुरेतास्सर्वज्ञ इत्यभिधानादिति भावः ॥ सामानाधिकरण्येनेति ॥ परं यदक्षरं तस्मादिति सामानाधिकरण्येनेत्यर्थः ॥ पक्षान्तरे त्विति ॥

## तात्पर्यचन्द्रिका

**॥ सिद्धान्तस्तु ॥ परविद्याविषयत्वं तावद्भाष्योक्तश्रुत्यादिभिर्विष्णोरेव । युक्तं च ऋगादिवेद्यस्यापि विष्णोः परविद्याविषयत्वम् । यतः-**

**प्रवृत्तं च निवृत्तं च यथैकं कर्म कथ्यते ।**
**उपाधिभेदाद्विद्यापि तथैवैका पराऽपरा ॥ १ ॥**

**यथैकमेव कर्म निष्कामज्ञानपूर्वत्वोपाधिना निवृत्तं सकामत्वाद्युपाधिना च प्रवृत्तम् । ''निष्कामं ज्ञानपूर्वं च निवृत्तमिति चोच्यत'' इत्यादिस्मृतेः । यथा चैकमेवान्नमुपाधिभेदात्पथ्यमपथ्यं च तथा ऋगादिरूपैकैव विद्या सन्यायैः प्रमितब्रह्मविषयकशक्तितात्पर्योपाधिना परा । मोक्षसाधनप्रमाहेतुत्वात् । अन्यथा त्वपरा । तदहेतुत्वात् । तदुक्तं**

**ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।**
**ता एव परमा विद्या यदा विष्णोस्तु वाचका ॥ इति ।**

यत्त्वन्यैरुक्तं परशब्द ऋगादिविशेषरूपोपनिषत्परः । तत्सन्निधानाच्चापरशब्दो गोबलीवर्दन्यायेनोपनिषदितरऋगादिपर इति । तन्न । "सर्वे वेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेववेद्य" इत्यादिश्रुतिस्मृतिभिर्ब्रह्मणः सर्ववेदवेद्यत्वात् । उपनिषत्स्वपि ज्ञेयशुद्धब्रह्मविषयाणामुपासनादिवाक्यानां बहूनां मन्त्रेष्वपि ज्योतिरधिकरणोक्त-न्यायेन ब्रह्मपरभागस्य च दर्शनाच्च । रूपं द्विविधं नीलमनीलं चेतिवद्द्वे विद्ये वेदितव्ये परा चैवापरा चेत्यत्र परापरशब्दयोर्विरुद्धार्थत्वप्रतीतेश्च । न हि नीलपदमनीलविशेषपरं भवति ।

यत्तु कैश्चिदुक्तम् । परोक्षज्ञानमपरा विद्या । भक्तिरूपमपरोक्षज्ञानं तु परविद्येति । तन्न । श्रुतावृगादीनामपरविद्यात्वेनोक्तत्वात् । "यया तदक्षरमधिगम्यत" इति "येनाक्षरं पुरुषं वेद सत्यं प्रोवाचतां तत्त्वतो ब्रह्मविद्या"मिति च ज्ञानकरणस्यैव परविद्यात्वेनोक्तत्वाच्चेह विद्याशब्दस्य ज्ञानार्थत्वायोगात् ।

न चाधिगम्यत इत्यस्य प्राप्य इत्यर्थः । अधिपूर्वस्य गमेर्ज्ञाने प्रसिद्धेः । यद्यपि "व्रजयजोर्भावे क्यप्" इत्यनेन सूत्रेण भावे क्यब्विहितः । तथापि "संज्ञायां समजनिषदे"ति सूत्रे वृत्तौ "भाव इति न स्वर्यते" इत्युक्तत्वात् समजंति तस्यामिति समज्या । निषीदन्ति तस्यामिति निषद्येति समज्यादिशब्दानां भावार्थत्वा-भावस्योक्तत्वाच्च क्यबन्तो विद्याशब्दो वेदनकरणेऽपि मुख्य एव ।

"आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यत" इति पराशरवचनं तु आगमोत्थविवेकोत्थत्वाभ्यां ज्ञानस्य द्वैविध्यमाह ॥ नत्वत्रत्यपरापरशब्दयोः परोक्षापरोक्षज्ञानार्थताम् । ऊर्णनाभ्यादिरपि निमित्तमेवेत्यन्यत्रोक्तम् । "स ब्रह्मविद्या"मित्यत्र च ब्रह्मशब्दो न चतुर्मुखपरः । "सर्वविद्याप्रतिष्ठां येनाक्षरं पुरुषं वेद सत्य"मिति परविद्याविषयत्वादिब्रह्मलिङ्गात् ।

**प्रकाशिका** – धर्मोक्तेरिति सूत्रोपात्तनिरवकाशपरविद्याविषयत्वरूपभगवल्लिङ्गादिनान्य-प्रापकाणां सावकाशत्वात् अक्षरात्परत इत्युक्ताक्षरस्यान्यत्वेन बाधकाभावाच्च विष्णुरेवा-दृश्यत्वादिगुणकमक्षरमिति भावेन लिङ्गनिरवकाशत्वं तावत् "परविद्याविषयत्वस्य च

श्रुतिस्मृतिभिर्विष्णुधर्मत्वेनावगतत्वा''दिति टीकोक्तं व्यनक्ति । परविद्येति ।। अथ परा यया तदक्षरमधिगम्यत इत्युक्तमित्यर्थः । मोक्षसाधनविद्याया एव परविद्यात्वात्तद्विषयं च ''तमेवं विद्वानमृत इह भवति तत्कर्महरितोषं यत्सा विद्या तन्मतिर्यया अथ द्वे विद्ये वेदितव्ये परा चैवापरा च । तत्र ये वेदा यान्यंगानि यानि प्रत्यङ्गानि साऽपरा । अथ परा । यया स हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मे''त्यादिभिर्विष्णोरेव सिद्धमित्यर्थः । ननूक्तमपरविद्याविषयस्य परविद्याविषयत्वमयुक्तमित्यतो ''द्वे विद्ये वेदितव्ये इत्यत्र चे''त्यादि टीकां विवृण्वन्नाह ।। युक्तं चेति ।। कुत इत्यत ऋगादेरेव परविद्यात्वादिति भावेनाह ।। यत इति ।। श्लोकेनान्वयः । अत इति योज्यम् । पूर्वार्धं व्यनक्ति ।। यथेति ।।

निष्कामं ज्ञानपर्वं च निवृत्तमिति चोच्यते ।

निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ।।

इति व्यासस्मृतेरित्यर्थः । स्वर्गादिफलकामनां विनेत्यर्थः । कर्मेत्युपलक्षणं श्लोक इति भावेनाह ।। यथा चेति ।। उत्तरार्धं स्पष्टयति ।। तथेति ।। सन्न्यायैरिति ।। बलाबलत्वादिना सम्यगवधृतोपक्रमादिभिरित्यर्थः ।। प्रमितेति ।। नित्यसापेक्षत्वात्समासः ।। तदुक्तमिति ।। आथर्वणभाष्ये । स्वमते परापरविद्यात्वमुपाधिभेदेनैकत्रैव टीकाद्युक्तं व्युत्पाद्य प्रसङ्गात्परभाष्याद्युक्तमनूद्य निराह ।। यत्त्विति ।। ननु ऋगादीनां कर्मबोधकत्वात्कथं ब्रह्मपरतेति चेत्किमेकदेशस्यान्यपरत्वमुत कृत्स्नस्य । आद्य आह ।। उपनिषत्स्वपीति ।। द्वितीय आह ।। मन्त्रेष्वपीति ।। ''ज्योतिश्चरणाभिधाना''दित्यत्र स्वप्रदर्शितन्यायेनेत्यर्थः । परापरशब्दयोर्विशेषसामान्यभावेनार्थवर्णनमयुक्तमित्याह ।। रूपमिति ।। ''द्वे विद्ये वेदितव्ये ब्रह्मविषये परोक्षापरोक्षरूपे द्वे ज्ञाने उपादेये इत्यर्थ'' इति रामानुजभाष्योक्तमनूद्य निराह ।। यत्त्विति ।। विद्याशब्दस्य ज्ञानार्थत्वसम्भवेऽपीह तद्ग्रहणमयुक्तमित्याह ।। ययेति ।। यया विद्ययाऽधिगम्यते प्राप्यत इत्यर्थसम्भवान्न ज्ञानकारणमिह विद्याशब्दार्थ इत्यत आह ।। न चेति ।। ननु ''व्रजयजोर्भावे क्य''बिति पूर्वसूत्रादनुवृत्तस्य भावार्थकस्यैव क्यपः ''संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिण'' इति सूत्रे विहितत्वात्

तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ।
आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते ।।

इति पराशरवचने प्रयोगाच्च ज्ञानमेव विद्याशब्दार्थ इत्याशङ्क्याह ।। यद्यपीति ।। भाव इतीति ।। व्रजयजोर्भाव इत्यव्यवहितभावपदं न स्वर्यते । व्यवहितं त्वनुवर्त्यत इति भावः । तथा च ''भावे अकर्तरि च कारके संज्ञाया''मित्येतत् ''कृत्यल्युटोर्बहुल''मिति सूत्रपर्यन्तमनुवर्तते । एवं चेह भाव इत्यनुवर्तमाने व्रजयजोर्भाव इति पुनर्भावग्रहणं ''अकर्तरि च कारक'' इत्यस्य व्यावर्तनेन भाव एव यथा स्यादित्येवमर्थम् । अस्य च भावपदस्य संज्ञायामित्यत्रानुवृत्तौ हि विद्याशब्दो ज्ञान एव मुख्यस्स्यात् । तत्तु न स्वर्यते । स्वरितत्वेन नोच्चार्यते । नानुवर्त्यत इत्युक्तत्वात् संज्ञायां समजनिषदेति सूत्रे क्यबेवानुवर्तते । न त्वकर्तरि च कारक इत्येतद्व्यावर्तकं भाव इत्येतत्पदम् । स्वरितत्वाभावेन ''स्वरितेनाधिकार'' इत्युक्तस्वरितनिबन्धनाधिकार शब्दितानुवृत्तेरयोगात् उत्तरत्र कृत्यल्युट इति सूत्रपर्यन्तं सामान्यतोऽनुवर्तमाने भावे कर्तृव्यतिरिक्तकारके च क्यपो विधानाद्वेदन

रूपभाव इव वेदनकरणेऽपि मुख्य एवेत्यर्थः । उक्तं च प्रक्रियाप्रसादेऽपि ''अनन्तरभावग्रहणं न स्वर्यते । तेन भावादावर्थे'' इति । अत एवोक्तं सुधायां जिज्ञासानये ''यथार्थज्ञानतत्साधनयोर्विद्याशब्दस्य योगरूढिभ्यां प्रवृत्तत्त्वा''दिति । पराशरवचनस्य गतिमाह ।। आगमोत्थमिति ।। परोक्षेति ।। यथायोगमन्वयः । एवं परविद्याविषयत्व-मन्यत्रानवकाशतया सामर्थ्यप्रसङ्गात्परोक्तं च व्युदस्येदानीं पूर्वपक्षप्रापकाणां क्रमेण सावका-शत्वमाह ।। ऊर्णनाभ्यादिरिति ।। अन्यत्र प्रकृत्यधिकरणानुव्याख्यानादौ । तथा च तद्बलादक्षरात्सम्भवतीत्यत्र पञ्चम्या नोपादानत्वमर्थः । किं तु निमित्तत्वमेवेत्यर्थः । एतेनोपादानत्वरूपबाधकाभावेनाक्षरशब्दोऽक्षराधिकरणन्यायेन सावकाश इति न चित्प्रकृति-रिति पक्षोऽपि युज्यत इति सिद्धत्वान्नोक्तम् । चतुर्मुखप्रापकं सावकाशयति ।। स इति ।। आदिपदेन सर्वज्ञादिलिङ्गं गृह्यते ।

**पाण्डुरङ्गि** – पक्षान्तरे त्विति ।। चतुर्मुखरुद्रपक्ष इत्यर्थः । न स्वर्यते नानुवर्तत इत्यर्थः । अन्यत्र न्यायामृते । उपादानत्वभङ्ग इत्यर्थः ।

## तात्पर्यचन्द्रिका

**यच्चोक्तं सर्वज्ञपदं रुद्राख्यविशेष्यपरमिति तन्न । तस्य चतुर्मुखजन्यतया तज्जनकत्वायोगात् । किन्तु प्रकृतस्याक्षरस्य सर्वज्ञत्वविशेषणपरम् । अत एव सूत्रे**

विशेषणपदम् । सर्वविदित्यनेन पौनरुक्त्यं च टीकायामेव त्रेधा परिहृतम् । यद्यपि सर्वज्ञत्वविशेषणं चित्प्रकृतिचतुर्मुखरुद्राणामक्षरत्वनिषेधेऽपि हेतूकर्तुं शक्यम् । विष्णोरन्यस्य मुख्यसार्वज्ञाभावात् । तथापि चित्प्रकृत्यादीनामक्षरत्वे विश्वकर्तृत्वेन सर्वज्ञत्वस्यापि शक्यशङ्कत्वात् । श्रुतेरमुख्यसार्वज्ञविषयत्वसम्भवाच्च जडप्रकृतिमात्रनिषेधे भाष्ये हेतूकृतम् । यद्यपि च भेदव्यपदेशश्चित्प्रकृतिनिषेधेऽपि हेतूकर्तुं शक्यः । ''अक्षरात्परतः पर'' इति चित्प्रकृतितोऽपि भेदव्यपदेशात् । तथापि नाक्षरस्याक्षरात्परतः परत्वम् । विरोधादिति शङ्कोदयादक्षरभेदोक्तिं विना चित्प्रकृतितो भेदव्यपदेशो न सिद्ध्यतीति चतुर्मुखरुद्रमात्रनिषेधे भाष्ये हेतूकृतः । यद्यपि चात्र सौत्र इतरशब्दो जडप्रकृतिचतुर्मुखरुद्रपरः । तथापि चतुर्मुखरुद्रयोश्चेतनत्वेनैकीकृतत्वाद्विवचनं युक्तम् । ''अक्षरत्रयमीरित''मिति भाष्योक्तस्मृत्या चाक्षरव्यक्तीनां भेदव्यपदेशात्

पाण्डवस्यार्जुनस्यैव कार्तवीर्यार्जुनादिव ।
ब्रह्माक्षरस्य परता स्यादब्रह्माक्षराद्ध्रुवम् ॥ १ ॥

तदुक्तं न्यायविवरणे ''अक्षरात्परतः परस्याप्यक्षरान्तरत्ववचना''दिति ।

प्रकृताप्रकृतत्यागस्वीकारौ बाधके सति ।
दोषाय नैवैतस्यैव रेवतीष्विति वाक्यवत् ॥ १ ॥

यथा ''एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसामकृत्वापशुकामो ह्येतेन यजेते''त्यत्र यजेः प्रकृतिवाचिन्येतच्छब्दे सत्यपि प्रकृताग्निष्टुदाख्ययागत्यागोप्रकृतयागान्तरस्वीकारश्च दोषाय नैव भवतः । प्रकृतपरत्वे वाक्यभेदात् । तथा ''अक्षरात्परत'' इत्यस्य प्रकृतादृश्यत्वादिगुणकाक्षरपरताया बाधितत्वात्त्यागो प्रकृतप्रकृत्याख्याक्षरस्वीकारश्च । अत्र सूत्रक्रमस्तद्विषयवाक्यक्रमादिति ॥

**प्रकाशिका** – यदपि रुद्रप्रापकेशशब्दोपोद्बलकं सर्वज्ञपदमिति तत्राह ॥ यच्चेति ॥ सर्वज्ञ इत्यस्योत्तरार्धे ''तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत'' इति चतुर्मुखजनकत्वश्रवणात्तस्य च रुद्रेऽनुपपत्तेरित्याह ॥ तस्येति ॥ ''ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजस्स्मृत'' इत्याथर्वण-

भाष्योक्तस्मृतेरिति भावः ॥ प्रकृतस्येति ॥ विश्वहेतुतया प्रकृतस्येत्यर्थः ॥ सूत्र इति ॥ ''विशेषणभेदव्यपदेशाभ्यां च नेतरा''विति सूत्रे सार्वज्ञविशेषणादित्युक्तमित्यर्थः । ननु यौगिकत्वे सर्वविदित्यनेन पुनरुक्ततोक्तेत्यत आह ॥ सर्वविदिति ॥ त्रेधेति ॥ सामान्यविशेषतया वा सर्वं विन्दति लभत इति वा सर्वमुत्पादयतीत्युत्पत्त्यर्थकत्वेन वा विदिधातुर्नेय इत्युक्तमित्यर्थः । अत्र रामानुजभाष्यादौ ''विशेषणभेदे''ति हेतुद्वयस्य प्रत्येकं प्रधानादिनिरासकत्वमुपेत्यैकैकस्य प्रधानादिमात्रनिरासकत्ववर्णनं दूषितम् । भाष्ये तु विशेषणादित्यस्य प्रधानमात्रव्यावर्तकत्वं भेदव्यपदेशस्य ब्रह्मरुद्रमात्रनिषेधकत्वमुक्तम् । तत्र परोक्तदूषणालग्नतां वक्तुमक्षरस्य सर्वज्ञत्वविशेषणे किं लब्धमित्यतः प्रवृत्तं ''यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तप इति विशेषणान्न प्रकृति''रिति भाष्यमाक्षिप्य समाधत्ते ॥ यद्यपीति ॥ प्रकृतिपदस्य टीकायां जडपरत्वेन वर्णनस्यापि तात्पर्यमुक्तं भवति । सूत्रखण्डव्याख्यानपरं ''तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत इति भेदव्यपदेशान्न विरिञ्चः । ''जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इति भेदव्यपदेशादीशपदप्राप्तोऽपि न रुद्र'' इति भाष्यमाक्षिप्य समाधत्ते ॥ यद्यपि चेति ॥ भेदव्यपदेशकवाक्यमाह ॥ अक्षरादिति ॥ ननु विशेषणभेदव्यपदेशाभ्यां यदि जडप्रकृतिब्रह्मरुद्राणां निरासस्तर्हि नेतर इति बहुवचनान्तनिर्देशस्स्यादित्याशङ्क्य समाधिमाह ॥ यद्यपि चेति ॥ एवं पृथिव्यादिदृष्टान्तोक्त्यादीनि पूर्वपक्षोपोद्बलकानि सिद्धान्तबाधकानि निरस्येदानीं यदक्षरात्परत इति निकृष्टत्वेन श्रुतत्वरूपं बाधकान्तरं तदपि नेत्याह ॥ अक्षरेति ॥ एतेन भेदव्यपदेशेति सूत्रखण्डस्याक्षरव्यक्तीनां

अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ।
तामक्षरं परं प्राहुः परतः परमक्षरम् ।
हरिमेवाखिलगुणमक्षरत्रयमीरितम् ॥

इति स्मृत्या भेदव्यपदेशादित्यप्यर्थ उक्तो भवति । पञ्चम्यंतस्य श्लोकेनान्वयः । उभयोरर्जुनशब्दवाच्यत्वेऽपि परापरभाव इवेहापि स इत्यर्थः । ननूक्तमत्र प्रकृतहानाप्रकृत-स्वीकारौ स्यातामिति । तत्र ''परविद्याविषयत्वबलेन प्रकृतपरित्यागाप्रकृतग्रहणयोरुपपत्ते''रिति न्यायविवरणटीकोक्तमाह ॥ प्रकृतेति ॥ दृष्टान्तभागविवरणपूर्वं श्लोकं व्याचष्टे ॥ यथेति ॥

द्वितीयस्य द्वितीये पादे ''समेषु कर्म युक्तं स्या''दिति द्वादशेऽधिकरणे ''त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेक विंशमग्निष्टोमसामकृत्वाब्रह्मवर्चसकामो यजेते''त्यग्निष्टुत्संज्ञकं यागं विधाय पुनश्श्रुतं ''एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसामकृत्वापशुकामो ह्येतेन यजेते''ति वाक्यमुदाहृत्य किं पूर्वस्मिन्यागे पशुफलाय रेवत्याधारं वारवन्तीयं गुणो विधीयतेऽथ कर्मान्तरमिति संशये विशिष्टयागांतरविधौ गौरवात्प्रकृतहानादिदोषादेतच्छब्दाच्च पूर्वत्रैव फलाय गुणविधिः । न च यागस्य वारवन्तीयाख्यसामाश्रयत्वायोगः । अङ्गावतारन्यायेन यागाङ्गस्तोत्रद्वारा तदुपपत्तेः । न चाग्निष्टोमस्य स्तोत्रान्वयः फलान्वयश्च विधेय इति वाक्यभेदः । क्रत्वर्थवारवन्तीयस्याप्यग्निष्टोमस्तोत्रान्वयसिद्धेस्तस्या विधेयत्वादिति प्राप्ते आश्रयाश्रयिभावस्य क्रियाकारकरूपत्वाद्यागस्य साम्नश्च क्रियाकारकभावायोगेनाश्रयाश्रयिभावानुपपत्तेः अङ्गावतारन्यायस्याङ्गाङ्गिभावविषयत्वात् क्रत्वर्थत्वेन वारवन्तीयस्याचोदितत्वेनान्यतोप्राप्तस्तोत्रसम्बन्धस्य फलसम्बन्धस्य च विधौ वाक्यभेदप्रसङ्गात् एतच्छब्दस्य च प्रस्तूयमानपरत्वाद्विशिष्टं कर्मान्तरमिति सिद्धान्तितम् । अत्र यथा वाक्यभेदबलेनैतच्छब्दश्रवणेऽपि प्रकृतत्यागाप्रकृतस्वीकारौ न दोषाय यथाऽत्रापीत्यर्थः ॥ अत्रेति ॥ आद्ये सूत्रे ''यत्तदद्रेश्य''मित्युपक्रमगतं वाक्यं विषयः । तत्राद्दश्यत्वादिगुणक इति पुंल्लिङ्गनिर्देशस्तु ''अक्षरात्परतः पर'' इति पुंल्लिङ्गपरशब्दार्थापेक्षया । अत एव भाष्ये ''परतःपरः प्रतीयते'' इत्युक्तम् । एवं निर्देशोऽप्यक्षरात्परतः परस्याक्षरात्सम्भवतीत्यद्दश्यत्वादिगुणकाक्षरस्यैकत्वस्फोरणायाद्दश्यत्वादिगुणकमित्युक्तौ अक्षरात्सम्भवतीत्युक्तमक्षरं विष्णुः परतः परस्त्वन्य इति शङ्का स्यात् । सा मा भूदित्येतदर्थः । विशेषणेति द्वितीयसूत्रे तु ''तपसा चीयते ब्रह्मे''ति तदुत्तरवाक्यं विषयः । रूपोपन्यासाच्चेत्यत्र तु तदुत्तरं ''यदा पश्यः पश्यते रुक्मवर्ण''मिति वाक्यं विषय इति तत्क्रमात्क्रम इत्यर्थः ॥

**पाण्डुरङ्गि** – ॥ त्रेधेति ॥ सामान्यविशेषतया विदोत्पत्तौ ''विदऌ लाभ'' इति त्रेधेत्यर्थः । नन्वक्षरात्परतः पर इति निकृष्टत्वेन श्रुतत्वादक्षरस्याब्रह्मतेत्यतः तथाऽक्षरात्सम्भवतीत्यत्राक्षरशब्दस्य ब्रह्मपरत्वेऽपि अक्षरात्परतः पर इत्यत्र प्रकृतिपरत्वान्नानुपपत्तिरित्यत आह ॥ अक्षरत्रयमीरितमिति ॥ नन्वेवं प्रकृत-हानाप्रकृतस्वीकारापत्तिरित्यत आह ॥ प्रकृतेति ॥

## तात्पर्यचन्द्रिका

**अन्ये तु ॥ अचेतनं विश्वमचेतनस्य प्रधानस्यैव विकारो न तु चेतनस्य ब्रह्मणः । वैरूप्यात् । तस्मात् ''तथाऽक्षरात्सम्भवतीह विश्व''मित्यत्र प्रधानमेव हेतुतयोच्यत**

इति प्राप्ते विश्वं न ब्रह्मविकारः किन्तु तद्विवर्तः । सर्प इव रज्ज्वाः । अधिष्ठानाध्यस्यमानयोश्च न सारूप्यनियमः । तदुक्तं भामत्यां-

विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणो परिणामिनः ।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥ इति ।

तस्माददृश्यत्वादिगुणकं शुद्धं ज्ञेयं ब्रह्मैवेति सिद्धान्त इत्याहुः ॥ तन्न । निर्विशेषपरत्वेऽस्य पादासङ्गतेः । त्वन्मते ब्रह्मविवर्तताया आरम्भणाधिकरणादिषु सिद्धत्वेन विकाराश्रयणेनेह पूर्वपक्षानुदयाच्च । विवर्तपरत्वे श्रुतौ रज्जुसर्पादिदृष्टान्तस्यैव वक्तव्यतयोर्णनाभ्यादिदृष्टान्तोक्त्ययोगाच्च । श्रुतेर्विवर्तपरत्वेऽप्रामाण्यापातस्यान्यत्रोक्तत्वाच्च । यद्भूतयोनिमिति योनिपदाद्ययोगाच्च । न हि रज्जुः सर्पस्य योनिरित्युच्यते। न वा सर्पस्ततः सम्भवतीति । किं च त्वद्रीत्या धर्मोक्तेरिति सौत्रपदोपात्तैः ''यःसर्वज्ञ'' इत्यादिवाक्यशेषोक्तैः सार्वज्ञादिकैः तथा ''सूर्यद्वारेण ते विरजाः प्रयान्ती''ति सूर्यद्वारेण गम्यत्वादिकैश्च धर्मैर्विशिष्टं कथं विश्वविवर्ताधिष्ठानं मुमुक्षुज्ञेयं शुद्धं ब्रह्म स्यात् ।

यच्चोक्तं द्वितीयसूत्रे ''दिव्यो ह्यमूर्त'' इति दिव्यत्वादिविशेषणं जीवाद्भेदकमिति । तन्न । वस्तुतो निर्विशेषेऽदृश्य आरोपितविशेषणस्य तत्साध्यभेदस्य चाविरोधेऽपि मुमुक्षोर्भेदभ्रमनिरासायाभेदस्यैव वक्तव्यत्वेन भेदभेदकयोरुक्त्ययोगात् । विशिष्टरूपजीवाभेदभ्रमनिरासाय तदुक्तिरिति चेन्न । एकभ्रमनिरासाय भेदभेदकविषयभ्रमद्वयोत्पादनायोगात् । शुद्धबोधनेन भ्रमद्वयनिरासे च विशिष्टाभेदभ्रमस्यापि ''अदृश्यत्वादिगुणक'' इति प्रतिज्ञयैव लक्षणया शुद्धबोधिन्या निरासेन द्वितीयादिसूत्रवैयर्थ्यम् ।

यच्चोक्तं तृतीयसूत्रे ''पुरुष एवेदं विश्व''मिति सार्वात्म्यं रूपशब्दार्थ इति । तन्न । अस्मदुक्तरुग्मवर्ण इव सार्वात्म्ये रूपशब्दाप्रयोगात् । अत्रापि परपक्षे ''अदृश्यत्वादिगुणक'' इति गुणोक्तेः ''विशेषणभेदव्यपदेशाभ्या''मिति जीवादिभ्यो भेदोक्तेश्च निर्गुणत्वाद्वैतप्रतिकूलता स्फुटैव ॥

**प्रकाशिका** – ।। अन्ये त्विति ।। अदृश्यत्वादिगुणको भूतयोनि किं प्रधानमुत जीवोऽथ परमात्मेति सन्देहे नूपुरादेर्हेमपरिणामस्य हेमसरूपत्वदर्शनाद्रज्जुविवर्तस्य च भुजङ्गादेरज्जु-सारूप्यदर्शनात् जगतो जडस्य चेतनब्रह्मसारूप्यायोगेन ब्रह्मपरिणामविवर्तत्वयोरयोगात् ''अक्षरात्सम्भवतीह विश्व''मित्यचेतनं प्रधानमेव जगदुपादानतयोच्यते । भूतयोनिरिति योनिशब्दो यदि निमित्तवाची तदा जीव एवादृष्टद्वारा विश्वहेतुतयोच्यते । उक्तं च-

परिणामो विवर्तो वा सरूपस्योपलक्ष्यते ।
चिदात्मना तु सारूप्यं जडानां नोपपद्यते ।।
जडं प्रधानमेवातो जगद्योनिः प्रतीयताम् ।
योनिशब्दो निमित्तं चेत्कुतो जीवनिराक्रिया ।।

एवं प्राप्तेऽक्षरं भूतयोनिं प्रक्रम्य वाक्यशेषे ''यस्सर्वज्ञस्सर्ववि''दित्यादिना सर्वज्ञस्य विश्वहेतुत्वावगमान्न जडं प्रधानमदृश्यत्वादिगुणकमक्षरम् । न चाक्षरात्परतः पर इत्ययुक्तम् । तत्राक्षरशब्देन मायाशक्त्यपरपर्यायस्याव्याकृतस्य अश्नुते स्वकार्यमिति व्युत्पत्त्याक्षरपदे-नाभिधानाद्ब्रह्मैवाक्षरात्सम्भवतीह विश्वमित्यत्र चोच्यते । तदुक्तं भामत्यां

अक्षरं सर्वविद्विश्वयोनिर्नाचेतनं मतम् ।
अक्षरात्परत इति श्रुतिस्त्वव्याकृते मता ।
अश्नुते यत्स्वकार्याणि ततोऽव्याकृतमक्षरम् ।। रति

यत्तु सारूप्याभावान्न चिदात्मनः परिणामः प्रपञ्च इति । सत्यम् । विश्वं न ब्रह्मविकारः । येन सारूप्यापेक्षा । विवर्तस्तु स्यात् । विसदृशेऽपि शङ्खे पीतिमारोपदर्शनात् । सारूप्यनियमाभावादिति सिद्धान्त इत्याहुरित्यर्थः । अनादिवासनेति ।। हेतुमति विभ्रमे सादृश्याभावादनुयोगो युज्यते । अनाद्यविद्यातद्वासनाप्रवाहपतितस्तु नानुयोगमर्हतीत्यर्थः । ज्ञेयं ब्रह्मैव न तु प्रधानं जीवात्मा वोपास्यत्वेनेत्यर्थः ।। पादेति ।। तृतीयपाद एव निवेशापत्तेरिति भावः ।। आरम्भणेति ।। ''तदनन्यत्वमारम्भणशब्दादिभ्य'' इत्यत्र कारणाद्ब्रह्मणः परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यत इत्यादिना त्वद्भाष्यादौ विवर्तत्वस्य वर्णितत्वादिति भावः । आदिपदेन प्रकृत्यधिकरणादि ग्राह्यम् । उपलक्षणमेतत् । न विलक्षणत्वादित्यधिकरणे जगतो चेतनत्वादिना ब्रह्मविलक्षणत्वेन न ब्रह्मोपादानकत्वमिति प्राप्ते

वैलक्षण्येऽपि गोमयवृश्चिकादेः कार्यकारणभावोपलम्भात्तदुपादानकत्वं युक्तमिति सिद्धान्तितत्वेन परिणामत्यागेन विवर्तत्वाङ्गीकारायोगात् । एतच्छङ्कायास्तत्र सूत्र एव त्वन्मते निरासे नेहापि तथा पूर्वपक्षकरणायोगाच्चेत्यपि ध्येयम् । श्रुत्यनानुगुण्यं चाह ॥ विवर्तेति ॥ अन्यत्र न्यायामृतादौ ॥ योनिपदादीति ॥ सम्भवतीह विश्वमिति सम्भवशब्दः अन्नं च जायत इत्यादिशब्द आदिपदार्थः । तेषां कारणत्वप्रत्यायकत्वादिति भावः । आद्यसूत्रार्थं सिद्धान्ताननुगुणतया दूषयति ॥ किं चेति ॥

एवं हि सूत्रार्थः । अदृश्यादिगुणको भूतयोनिः परमात्मैव । यस्सर्वज्ञस्सर्वविदित्यादिना सार्वज्ञादिधर्मोक्तेरिति । तथा चैवंविधं ब्रह्म कथमधिष्ठानमित्यर्थः । नन्वेते धर्मा अतात्विकाः । अतो न दोष इति चेत्तर्हि प्रधानादिनिरासायोगात्सिद्धान्तानुत्थितिरिति भावः ॥ यच्चोक्तमिति ॥ ''दिव्यो ह्यमूर्तः पुरुषस्स बाह्याभ्यंतरो ह्यजः । अप्राणो ह्यमनाश्शुभ्र'' इत्यदृश्यत्वादिगुणकभूतयोनेश्शारीराद्विलक्षणत्वेन दिव्यत्वामूर्तत्वादिना विशेषणान्न जीवः । तथा प्रकृतस्य भूतयोनेरक्षरात्परतः पर इत्यक्षरात्परतः प्रधानात्पञ्चमीनिर्दिष्टात्पर इति प्रथमान्तत्वेन भेदव्यपदेशान्न प्रधानं भूतयोनिरित्यर्थ इत्युक्तमित्यर्थः । तत्रैतदधिकरणबोध्ये निर्विशेषे भूतयोनिशब्दार्थे ब्रह्मणि तत्वतो दिव्यत्वादिविशेषणस्य भेदस्य चाभावेन ताभ्यां जीवप्रधानव्यावृत्त्ययोगात् आरोपितयोस्तयोस्तत्र सम्भवोऽस्तीति चेत् तत्राह ॥ वस्तुत इति ॥ विशेषणेत्यादिकं लक्षणया शुद्धं बोधयतीति भेदभेदकोभयभ्रमोऽपि निवर्तिष्यत इत्यत आह ॥ शुद्धबोधनेनेति ॥ उपलक्षणमेतत् । त्वन्मते मन्मत इव विशेषहेतोरनुपन्यासेन दिव्यपुरुषत्वादिविशेषणेन प्रधानेऽप्ययुक्तेन द्वयोरपि निराससम्भवात् ''सकारणं कारणाधिपाधिप'' इतिवदक्षरात्परतो जीवादित्यपि वक्तुं शक्यत्वेन भेदव्यपदेशेनापि द्वयोर्निराससम्भवेन प्रत्येकमेकैकनिरासायोगात् । विशेषणभेदाभ्यां क्रमेण जीवप्रधाननिरासे सूत्रे नेतरे इत्येव स्त्रीलिङ्गेन नपुंसकलिङ्गेन वा निर्देष्टव्यत्वेन नेतरावित्यस्यास्वारस्यं च । मन्मते तु द्वाभ्यां क्रमेण प्रधानचेतनयोर्निरास इति नेतराविति पुल्लिङ्गस्वारस्यमित्यपि ध्येयम् । रूपशब्दाप्रयोगादित्युपलक्षणम् । त्वन्मते पूर्वसूत्रयोरन्यतरविवक्षितैकविज्ञाननिबन्धनसर्वविज्ञानांतर्गतत्वात्सर्वात्मभावस्येत्यपि ध्येयम् । इदमधिकरणं परैर्नारभ्यमेवेत्याह ॥ अत्रापीति ॥

**पाण्डुरङ्गि** – ॥ न सारूप्यनियम इति ॥ न खलु बाह्यसारूप्यनिबन्धनतस्सर्वो विभ्रम इति नियमनिमित्तमस्ति । आन्तरादपि कामक्रोधोन्मादस्वाप्नादेर्मानसापचारात्सारूप्यानपेक्षात्तस्यापि

भ्रमस्य दर्शनात् । अपि च हेतुमति विभ्रमे तदभावादनुयोगो युज्यते । अनाद्यविद्यातद्वासना-प्रवाहमध्यपतितस्तु नानुयोगमर्हतीति तदुक्तेरिति भावः । नन्वेतदधिकरणपूर्वपक्षदशायामा-रम्भाधिकरणसिद्धान्तानुन्मेषान्न तेनास्य गतार्थतेत्यत आह ॥ विवर्तपरत्व इति ॥ अन्यत्रेति ॥ न्यायामृत इत्यर्थः ॥ इति भाष्यार्थ इत्यर्थ इति ॥ न चैवं टीकागतसूत्रखण्डस्येति खण्डशब्दो व्यर्थः । नेतरावित्यस्य व्याख्यातत्वेन व्यावर्त्यत्वोपपत्तेरिति ज्ञेयम् ।

## तात्पर्यचन्द्रिका

**केचित्तु ॥ दृश्यत्वादिगुणकत्वं प्रधानस्य अक्षरात्परतः परत्वं तु जीवस्येति प्राप्ते द्वयमपि परमात्मन इति सिद्धान्त इत्याहुः । तन्न ।**

**दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।**
**अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ।**

इत्यमूर्तत्वव्याप्तत्वाप्राणत्वादिविशिष्टत्वेन श्रुतेऽक्षरात्परतः परे जीवत्वशङ्कानु-दयादिति ॥ टीकाक्षरार्थस्तु ॥ पृथिव्यादिदृष्टान्तेनेति ॥ श्रुतावर्णनाभिदृष्टान्तस्य प्राथम्येऽपि तत्र सृजत इत्यनेन कर्तृत्वप्रतीतेः पृथिव्यादीत्युक्तम् ॥ सामानाधि-करण्येनेति ॥ चित्प्रकृतेरुत्तमादुत्तमस्याभावेनाक्षरात्परत इति पञ्चम्योर्वैयधिकरण्या-योगादिति भावः ॥ उक्तार्थे हेतुतयेति ॥ तपसा चीयत इत्यत्रालोचनार्थेन तपःशब्देनाज्ञानप्रतीतौ तन्निरासाय "यस्य ज्ञानमयं तप" इत्यनेनोक्ते पूर्णज्ञानत्वे हेतुतया सार्वज्ञोक्तेरित्यर्थः ॥ सूत्रखण्डस्यार्थान्तरमाहेति ॥ सूत्रे विशेषणशब्दस्य न केवलं सर्वज्ञत्वविशेषणादित्येवार्थः । किन्तु परतः परत्वविशेषणादित्यप्यर्थः । एवं भेदशब्दस्य हिरण्यगर्भाद्रुद्राद्वा भेदमात्रं नार्थः । किं त्वक्षरव्यक्तीनां भेदोऽपि । तथा चाक्षराणां भेदव्यपदेशादक्षरात्परतः परत्वमक्षरस्यैव विशेषणमित्यपि सूत्रयोजनेति भाष्यार्थ इत्यर्थः । "इत्युक्त्वा प्रतीयत" इति भाष्ये क्रिययोः समानकर्तृ-कत्वाभावेऽपि क्त्वाप्रत्ययो "यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यत" इतिवद्द्रष्टव्यः ॥ छ ॥ अदृश्यत्वाधिकरणम् ॥ ६ ॥

**प्रकाशिका –** ।। केचित्त्विति ।। अत्र ''अथ परे''त्यादिवाक्ये प्रधानपुरुषौ प्रतिपाद्येते उत परमात्मैवेति संशये यत्तदद्रेश्यमित्यादिना पृथिव्याद्यचेतनगतदृश्यत्वादीनां प्रतिषेधात्तज्जातीयमचेतनं प्रधानमेवादृश्यत्वादिगुणकं भूतयोन्यक्षरम् । अक्षरात्परतः पर इति तु तस्याधिष्ठाता पुरुष एवेति तावेवात्र प्रतिपाद्याविति प्राप्ते प्रधानपुरुषयोरसम्भावितस्य सार्वज्ञादिधर्मस्योक्तेः फलाभिसन्धिरहितकर्माराध्यत्वपरापरविद्याविषयत्वादिना विशेष्यमाणत्वात् अक्षरादव्याकृताद्भूतसूक्ष्मात्परतस्समष्टिपुरुषात्पर इति भेदव्यपदेशात् ''अग्निर्मूर्धे''त्यादिना जगद्रूपोपन्यासाच्च न प्रधानजीवावत्रोच्येते । किन्तु परमात्मैवेत्याहुरित्यर्थः । तदुक्तं

दृश्यत्वादेर्निषेधो विकृतिमति भवत्यक्षरे सन्निकर्षात् ।
पश्चम्युक्ताक्षरं यत्तदवधिकपरः पञ्चविंशोऽस्तु मा भूत् ।।

सर्वज्ञत्वादिदृष्टेः प्रथमसमुदितं त्वक्षरं ब्रह्म शुद्धम् ।

पश्चादुक्तं तु जीवादिकमवधितया भेदतस्तत्परोक्तेः ।। इति ।। जीवत्वशङ्केति ।। उपलक्षणमेतत् । मन्मतरीत्या निरवकाशोपादानत्वादिना पूर्वपक्षसम्भवे सावकाशदृश्यत्वादिनिषेधेन नियमेनाचेतनोपस्थित्ययोगात् । अवर्णमचक्षुश्श्रोत्रमित्यादिना चेतनधर्मब्राह्मणत्वादिवर्णचक्षुरादिकरणनिषेधेनेह भूतयोनिश्चेतन इत्यपि वक्तुं शक्यत्वेन तेन प्रधानमात्रपूर्वपक्षायोगात्। द्वितीयसूत्रेऽक्षरव्यक्तीनां भेदव्यपदेशासिद्धेः तेन प्रकृतिनिरासस्य क्लिष्टत्वादित्यपि ज्ञेयम् । यत्तु कश्चिदाह अदृश्यत्वादिगुणकं प्रधानं जीवो वा शिवो वेति विशये महदादिपरिणामिनो भूतयोनित्वसम्भवात्प्रधानमक्षरम् । ''प्रधानममृताक्षर''मिति श्वेताश्वतरश्रुतावमृतशब्दिते जीवेऽक्षरपदप्रयोगाज्जीवो वेति प्राप्ते सार्वज्ञादितद्धर्मोक्तेश्शिव एवेति , तन्न । ''नारायणाद्ब्रह्मा जायते''नारायणाद्रुद्रो जायते, रुद्रस्य शिर उत्पिपेष न यस्येंद्रो वरुणो न मित्रो व्रतमर्यमा न मिनंति रुद्र'' इत्यादिना जननमरणाज्ञानादिमति रुद्रे मुख्यसार्वज्ञायोगात् । ''तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया । अथ परा । यया स हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मा । ऋगाद्या अपरा विद्ये''त्यादि वचनसिद्धपरविद्याविषयत्वरूपविष्णुलिङ्गविरोधेन शिव इति सिद्धान्तस्यानुदयात् । अन्यमिति प्रसिद्धेशशब्दिताद्रुद्रादस्य भूतयोन्यक्षरस्य भेदोक्तेश्च । ''तामक्षरं परं प्राहुः परतः परमक्षरम् । हरिमेवे''त्यादिस्मृतिविरोधाच्च । आथर्वणभाष्योदाहृतानेकवचन विरोधाच्चेत्यादि ध्येयम् ।

‘‘यथोर्णनाभिस्सृजते गृह्णते चे’’ति श्रवणादूर्णनाभ्यादिदृष्टान्ते नेति वाच्ये पृथिवीत्याद्युक्तिष्टीकायां न युक्तेत्याशङ्क्याह ।। श्रुताविति ।। ‘‘ऊर्णनाभिपृथिव्यादिदृष्टान्तेनाक्षरस्य जगदुपादानत्वमुक्त्वे’’ति तत्वप्रदीपवाक्यं त्वतद्गुणसंविज्ञानाश्रयेण वा ऊर्णनाभिदेहस्योपादानत्वाभिप्रायेण वा कथंचिन्नेयमिति भावः । ‘‘तच्च तस्यामक्षरात्परतः पर इति सामानाधिकरण्येनोपपन्न’’मिति वाक्यं सामानाधिकरण्ये हेतूक्त्या व्यनक्ति ।। चित्प्रकृतेरिति ।। द्वितीयसूत्रे ‘‘तपसा चीयते ब्रह्मेत्यत्राज्ञानप्रतीतौ तन्निरासाय यस्य ज्ञानमयं तप इत्युक्तार्थे हेतुतयाऽदृश्यत्वादिगुणकस्य सार्वज्ञविशेषणोक्ते’’रिति वाक्यं व्यनक्ति ।। तपसेति ।। तपसा सम्बध्यते ब्रह्मकर्तृ । अतपदिति फलितोऽर्थः । अर्थान्तरं विशदयति ।। सूत्रेति ।। पूर्वपक्षभाष्येऽनुपपत्तिं समाधत्ते ।। इत्युक्त्वेति ।। तत्र यथा वर्तमान इत्याद्यध्याहारस्तथाऽत्रापि इत्युक्त्वा इति श्रुते वाक्य इति वा इत्यभिधानात्परः प्रतीयत इति वाऽध्याहारेण योज्यमिति भावः ।। छ ।। अदृश्यत्वाधिकरणम् ।। ६ ।।

**पाण्डुरङ्गि** – नन्वित्युक्त्वा प्रतीयत इति वचनं प्रति श्रुतेः कर्तृत्वात्प्रतीतिं प्रति पुरुषस्य कर्तृत्वेन समानकर्तृत्वाभावात् क्त्वाप्रत्ययानुपपत्तिरित्यत आह ।। इत्युक्त्वेति ।। श्रवणं प्रति पुरुषस्य मोचनं प्रति च पापानां कर्तृत्वेन समानकर्तृत्वाभावेन क्त्वाप्रत्ययानुपपत्तिः । यदि च तत्र श्रुत्वा स्थित इति शेषपूरणेन समानकर्तृत्वं तर्हि प्रकृतेऽपि विचार्यमाण इति शेषपूरणेन समानकर्तृत्वमित्यभिप्रायः ।। छ ।। अदृश्यत्वाधिकरणम् ।। ६ ।।

## वैश्वानराधिकरणम्

**।। ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ।। अत्र यद्यपि वैश्वानरनाम्नः सूत्र एवाग्नाविष्णोः साधारण्यस्योक्ततयोभयत्र प्रसिद्धता । तथाप्यन्यत्र प्रसिद्धपावकत्वादिबहुलिङ्गसमन्वयस्याप्यत्रोक्तेर्बह्वनुग्रहस्य च न्याय्यत्वात् प्रथमातिक्रमे कारणाभावाच्च पादसङ्गतिरित्येके । इतरे तु । अन्यत्र प्रसिद्धलिङ्गांशेन द्वितीयपादसम्बन्धादुभयत्र प्रसिद्धनामांशेन च तृतीयपादसम्बन्धादुभयानुग्रहाय पादद्वयमध्येऽस्य निवेश इत्याहुः । तन्न । ‘‘अन्यत्र प्रसिद्धवैश्वानरनाम्न’’ इति टीकाविरोधात् । सूत्रोपात्तवैश्वानरशब्दस्यान्यत्र प्रसिद्धिसम्भवे उक्तकल्पनद्वयायोगाच्च । तस्मादित्थं पादसङ्गतिः । वैश्वानरशब्दस्य श्रुत्यन्तरेऽग्नौ प्रयोगाद्वा विषयवाक्येऽग्निशब्द-**

**सामानाधिकरण्याद्वाऽन्यत्र प्रसिद्धता नाभिप्रेता । येन ''स्थूलभुग्वैश्वानरः प्रथमःपाद'' इति श्रुत्यन्तरे विष्णावपि प्रयोगाद्वा ''आत्मानं वैश्वानर''मिति विषयवाक्ये ''गौणश्चेन्नात्मशब्दा''दित्यत्र विष्णुसाधारणतयोक्तात्मशब्दसामानाधिकरण्याद्वोभयत्र सिद्धता स्यात् । किं तु लोकतः । अत एव टीकायां ''लोकतोऽन्यत्र सिद्धे''त्युक्तम् । सूत्रोक्तं साधारण्यं त्वन्यत्र प्रसिद्धेर्विष्णुलिङ्गानां च निरवकाशत्वेन तुल्यबलतया । न तु वैश्वानरशब्दस्योभयत्र प्रसिद्ध्येत्यन्यत्र प्रसिद्ध्यविघातेनैव टीकायां दर्शितम् । अत्रानुव्याख्याने ''श्रुतिर्लिङ्गाधिका परे''ति वैश्वानरशब्दस्य नामत्वोक्तेर्लोकेऽग्नौ रूढत्वाच्च टीकायां नामतोक्ता । ''विश्वजीवान्तरत्वाद्यैर्लिङ्गै'' रिति सङ्क्षेपभाष्यकारीया लिङ्गत्वोक्तिस्तु सिद्धान्ते ब्रह्मणि यौगिकत्वाभिप्राया । अनन्तरं सङ्गतिस्तु गताधिकरणोक्तसर्वगतत्वाक्षेपेण पूर्वपक्षोत्थानादिति भाष्य एवोक्ता ।**

**प्रकाशिका** – ।। ॐ वैश्वानरस्साधारणशब्दविशेषात् ॐ ।। अत्र टीकायां ''लोकतोऽन्यत्र प्रसिद्धवैश्वानरनाम्नः पाचकत्वाद्यनेकलिङ्गसमन्वय सिद्ध्ये'' इत्यादिनाऽस्य न यस्यात्र पदेंऽतर्भाव उक्तः । स च सुधायां ''अस्याधिकरणस्य नात्रान्तर्भावस्सम्भवति । नामात्मकशब्दसमन्वयार्थत्वात् । नापि पूर्वत्र । लिङ्गसमन्वयस्याप्यत्र सिद्धत्वात् । न चोभयबहिर्भावः । अन्यत्रप्रसिद्धशब्दविषयत्वात् । न चावक्तव्यता । समन्वयासिद्धिप्रसङ्गात् । तत्कथमित्यतो लिङ्गाधिकेत्यत्रान्तर्भावस्समर्थितः । यद्वा पादद्वयार्थत्वेनैकत्र प्रवेशानुपपत्तेः पादद्वयशेषोऽय'' मित्यादिना ग्रन्थेन विवृतः । तत्र लोकतोऽन्यत्रप्रसिद्धेत्यंशस्य सूत्रविरोधशङ्कां समाधातुमाह ।। अत्र यद्यपीति ।। उत्तानदृशां समाधिद्वयमनूद्य निराह ।। तथापीति ।। नाम्न उभयत्र प्रसिद्धत्वेऽपीत्यर्थः ।। प्रथमेति ।। नामांशेन तृतीये लिङ्गांशेन लिङ्गपादेंऽतर्भावप्राप्तौ प्रथमस्य लिङ्गपादान्तर्भावस्यातिक्रमे कारणाभावाच्चेत्यर्थः । सम्भव इत्युक्तसम्भवप्रकारमेवाह ।। तस्मादिति ।। सङ्गतिः अन्तर्भावरूपा । यद्याकाशोऽर्थान्तरेत्यादाविव ''वैश्वानरमृत आजातमग्नि''मित्यन्यत्र प्रयोगेण वा सर्वगतत्वादेरादित्यादिशब्दसामानाधिकरण्येन वा श्रुत्यन्तरसामानाधिकरण्येनऽवान्यत्रप्रसिद्धता स्यात् तदा ''स्थूलभुग्वैश्वानर'' इत्यादौ प्रयोगादितौल्यस्य विष्णावपि सत्त्वेन ''श्रुत्यन्तरादिभिस्तुल्ये''त्युक्तलक्षणसत्त्वेनोभयत्र प्रसिद्धता स्यात् । न चैवम् । किन्तु लोकप्रयोगात् । स च विष्णौ नेति नोभयत्र प्रसिद्धतेत्यर्थः ।

सौत्रोक्तेष्टीकारीत्या गतिमाह ॥ सूत्रोक्तमिति ॥ ''अतः प्रसिद्धिलिङ्गयोरुभयोरपि निरवकाशत्वेन वैश्वानरश्रुतेरग्नाविष्णोस्साधारण्यमेव स्या''दिति टीकायामित्यर्थः । या तु न्यायविवरणटीकायां रूढ्यान्तरधिकरणन्यायेन च विष्णौ तदितरत्र श्रुतेस्साधारण्योक्तिस्साऽभ्युपेत्यवादेन नेया । यापि तत्वप्रदीपे ''पूर्वत्रान्यत्रप्रसिद्धिमात्रप्रतिषेधाज्ज्वलनजनार्दनयोस्साधारणस्य वैश्वानरशब्दस्य विष्णावेव प्रवृत्तिप्रदर्शनेनोभयत्रप्रसिद्धोभयविधपदकदंबकसमन्वयावसरसूचनमाचरत्यग्नाविष्णोरित्यादिने''त्युक्तिस्सापि टीकानुसारात् यद्यप्येवं साधारण्यं तथापि लोकतोऽन्यत्रप्रसिद्धत्वादत्र निवेश इत्याद्यभिप्रायेण योज्येति भावः । टीकायां वैश्वानरशब्दस्य नामत्वोक्तेर्मूलं वदन्ननुभाष्यविरोधशङ्कां च निराह ॥ अत्रेति ॥ लोकेऽग्नौ रूढत्वाच्चेति ॥ ''बहुभीरूढनामभि''रित्यनुभाष्योक्तेः ''श्रुतेरपि प्रसिद्धितो निरवकाशत्वा''दिति टीकोक्तेः, ''श्रुतेर्देवताभूतविशेषयोरूढत्वा''दिति न्यायविवरणटीकोक्तेः, ''वैश्वानरशब्दस्याविद्वद्रूढ्याग्निविषयस्यापी''ति सन्न्यायरत्नावल्युक्तेश्चेति भावः । एतेन नामत्वे फलतो लिङ्गत्वे साक्षादेवैतत्पादान्तर्भावोऽस्य सूचितः । एवं ''लोकतोऽन्यत्रे''त्यादिटीकां व्याख्याय ''श्रुत्यादिसङ्गति''मित्यादिटीकां व्यनक्ति ॥ अनन्तरेति ॥ पूर्वाधिकरणतद्विषयवाक्याभ्यामेतदधिकरणे तद्विषयवाक्ययोरित्यर्थः । आक्षेपप्रकारश्चाग्रे स्पष्टः । न च तद्भाष्यं प्रयोजनमात्रपरम् । उभयपरत्वे बाधकाभावादिति भावः । एतेन

सार्वात्म्यरूपोपन्यासादक्षरं ब्रह्म वर्णितम् ।
जाठरादावनैकांत्यशङ्का तस्य निरस्यते'' ॥

इति कल्पतरूक्तसङ्गतिर्निरस्ता वेदितव्या । वैश्वानरनामसन्निहितोन्मानत्वमुखेन पूर्वत्र प्रधानसूत्रप्रतिज्ञोपात्तसर्वगतत्वाक्षेपसम्भवेऽपीदृशस्यायुक्तत्वात् । सार्वात्म्ये रूपशब्दाप्रयोगेन त्वद्रीत्या सार्वात्म्यस्य ''रूपोपन्यासादि''ति सूत्रार्थतया वर्णनायोगस्योक्तत्वाच्चेति ।

## तात्पर्यचन्द्रिका

**अत्र वैश्वानरः किमग्न्यादिः किं वा ब्रह्मेति चिन्ता । तदर्थमग्निवैश्वानरादिशब्दानां ब्रह्मणि मुख्यत्वेऽग्न्यादिशब्दानां प्रसिद्धाग्न्यादौ लौकिकव्यवहारः तत्तत्सूक्तानां तत्तद्विद्यानां च ब्रह्मपरत्वे वैदिकसूक्तव्यवस्था विद्याव्यवस्था च न युक्ता उत युक्तेति ॥ पूर्वपक्षस्तु ॥ ''आत्मानं वैश्वानरमुपास्ते अयमग्निर्वैश्वानर'' इत्यादौ**

**श्रुतो वैश्वानरोऽग्निर्देवता वा भूतं वा । वैश्वानरश्रुतेस्तत्र प्रसिद्धेः । न च "अहं वैश्वानर" इति श्रुतिसमाख्यानात् पुरुषसूक्तसमाख्यानात् "को न आत्मा किं ब्रह्मे"ति प्रकरणात् "सर्वे पाप्मानः प्रदूयन्ते" इति स्वज्ञानेन सर्वपाप्मप्रदाह सर्वगतत्वादिलिङ्गाच्च वैश्वानरो ब्रह्मेति वाच्यम् । समाख्याप्रकरणलिङ्गानां श्रुतितो दुर्बलत्वात् । बहुत्वप्रयुक्तप्राबल्यादपि स्वभावप्राबल्यस्य बलवत्त्वाच्च । उक्तं हि-**

**द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः ।**
**तयोः स्वभावो बलवानुपजीव्यादिकश्च सः इति ॥**

**प्रकाशिका** – विषयसंशयटीकां व्यनक्ति ॥ अत्रेति ॥ छान्दोग्ये पञ्चमेऽध्याये वैश्वानरविद्यायां "प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलोद्दालकास्समेत्य मीमांसां चक्रुः । को न आत्मा किं ब्रह्मेति । ते ह मीमांसमाना निश्चयमलभमानाः केकयं राजानमुपसद्योचुः । आत्मानमेव वैश्वानरं सम्प्रत्यध्येषि । तमेव नो ब्रूही"त्युपक्रम्य श्रूयते "यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते । स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति । तस्य हवा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्दोहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोन्वाहार्यपचन आस्यमाहवनीय" इत्यादि । तथा वाजसनेये सप्तमे "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते" इत्यादि । तथा वैश्वानरसूक्ते "मूर्धानं दिवो अरतिं पृथिव्या वैश्वानर मृतआजातमग्निम् । कविं संम्राजमथितिं जनानामासन्नापात्रं जनयन्त देवाः" इत्यादि । तत्र सर्वत्र श्रुतो वैश्वानरो विषय इत्यर्थः । अत एव टीकायां "स वैश्वानर" इति तच्छब्देन सङ्गत्यर्थं पूर्वप्रकृतछान्दोग्यस्थवैश्वानरप्रतीतावपि तदुपलक्षणमिति भावेन वैश्वानर इति सामान्योक्तिः । वैश्वानर इत्युपलक्षणम् । प्राक्पादद्वयेन समन्विता अशेषविद्यागता अशेष-सूक्तस्था अग्न्यादिनानाशब्दा अप्युदाहरणमिति ध्येयम् ।

प्राचीनसर्वनयोक्ताक्षेपसमाधानार्थत्वादस्याधिकरणस्य । अत एवाग्रेऽग्निवैश्वानरादि-शब्दानामित्युक्तिः । "वैश्वानरादयश्शब्दा अपि तद्वाचिन" इत्यनुव्याख्याने । सुधायां "वैश्वानरादय इत्यादिशब्दप्रयोगाद्वैश्वानरशब्दस्योपलक्षणत्वमिति दर्शयती"त्युक्तम् । आत्मशब्दादिसाधकोपेतत्वेन प्राधान्यात्सूत्रादौ तस्यैवोक्तिः ॥ अग्नीति ॥ देवतेत्यर्थः । आदिपदेन भूताग्निः । एतेन टीकायामन्यो वेत्युक्तान्यशब्दार्थो विवृतः । अत्र ब्रह्मेति

चिन्तानन्तरं वैश्वानरश्रुतेरन्यत्रप्रसिद्ध्यनुसारेण समाख्याप्रकरणलिङ्गानि विष्णुप्रापकाण्यग्नौ नेयानि उत तदनुसारेण प्रसिद्धिर्नेयेति चिन्ता तदर्थं समाख्याद्यनुरोधेन प्रसिद्धेर्नयने बाधकमस्त्युत नेति चिन्ता टीकायां पूर्वोत्तरप्रापकयोस्तौल्योक्तेस्तामनुसृत्य नोक्ता। स्वरीत्या तु वक्तव्यैव । रीतिद्वयसाधारण्येन तु श्रुत्यादिकं ब्रह्मणि नेतुं न शक्यमुत शक्यमिति चिन्ता ध्येया। एतदुपयुक्तां प्रसिद्धेर्निरवकाशत्वरूपां चिन्तामाह ॥ तदर्थमिति ॥ मुख्यत्व इति ॥ सिद्धान्तिना लक्षणादेरंनगीकारादेवमुक्तम् । यदि वक्ष्यमाणदिशा न युक्ता तदा निरवकाशलोकप्रसिद्ध्यादिवशादग्न्यादिरेव वैश्वानरादिशब्दार्थः । यदा तु ''साक्षादप्यविरोधं अभिव्यक्ते''रित्यादिवक्ष्यमाणदिशा युक्ता तदा बाधकाभावात् समाख्यादिवशाद्ब्रह्मैवेति सिद्धान्ते फलफलिभावोऽग्रे पूर्वपक्षादिविवरणरीत्या स्पष्ट इति भावः । अत्र टीकायां ''श्रुतेरपि प्रसिद्धितो निरवकाशत्वा''दित्यादिना श्रुतेर्निरवकाशत्वमात्रप्रयुक्तप्राबल्योक्तिप्रतीतावपि ''लिङ्गस्य श्रुतितो दुर्बलत्वा''दिति पूर्ववाक्येन श्रुतित्वप्रयुक्तप्राबल्यमप्यभिमतम् । एवं च वैश्वानरश्रुतेश्श्रुतित्वनिरवकाशत्वरूपोभयप्रयुक्तप्राबल्यात्पाचकत्वादिलिङ्गस्य च निरवकाशत्वनिमित्तप्राबल्यात् एवं प्रबलश्रुतिलिङ्गबलेन समाख्याप्रकरणलिङ्गरूपविष्णुप्रापकाणां बाधादग्निरेव वैश्वानरः । टीकायां पूर्वोत्तरपक्षप्रापकयोर्द्वयोरपि निरवकाशत्वेन तौल्योक्तिस्त्वभ्युपेत्यवादेनेति भावेन ''नायं वैश्वानरो विष्णुः । किं त्वि''त्यादिटीकां विवृण्वन् पूर्वपक्षयति ॥ पूर्वपक्षस्त्विति ॥ टीकायामयमित्युक्त्या पाक्प्रकृतछान्दोग्यस्थस्य परामर्श उपलक्षणमिति भावेन छान्दोग्यबृहदारणयकस्थयोर्वाक्यविशेषयोरुक्तिरात्मानमिति, अयमग्निरिति च । आदिपदेन ''वैश्वानरमृत आजातमग्नि''मित्यस्यामृचीति गृह्यते । ''अत एव न देवताभूतं चे''ति सूत्रव्यावर्त्यमाह ॥ अग्निर्देवतेति ॥ भूतमिति ॥ तेजोरूपं जडमित्यर्थः ।

''न च वाच्यं सर्वगतत्वलिङ्गाद्वैश्वानरो विष्णु''रिति टीकोपलक्षणं सूत्रोक्तसाधकमात्रस्येति भावेन तां व्याचष्टे ॥ न चेति ॥ ''स्मर्यमाण''मिति सूत्रोपात्तात् ''अहं वैश्वानरो भूत्वे''ति स्मृतिसमाख्यानात् ''पुरुषविधमपी''ति सूत्रांशोक्तात् ''शीर्ष्णो द्यौस्समवर्तते''ति पुरुषसूक्तसमाख्यानात् ''असम्भवा''दिति सूत्रखण्डोक्तात् ''को न आत्मे''ति ब्रह्मप्रकरणादित्यर्थः । ''असम्भवात्पुरुषविधमपी''त्यंशोक्तप्रकरणश्रुतिसमाख्याभ्यामुपलक्षणत्वेनोपात्तलिङ्गान्यप्याह ॥ सर्व इति । अभिविमानपदेन ''अभितो विगतं मानं मर्यादा यस्ये''ति टीकोक्तव्युत्पत्त्योक्तं सर्वगतत्वम् । एतेन ''अन्तरधिकरणन्यायेन विष्णावपि श्रुतेर्वृत्तिरस्तीति चे''दिति न्यायविवरणटीकोक्तन्यायो विष्णुप्रापकसत्त्वरूपो विवृतः ।

''लिङ्गस्य श्रुतितो दुर्बलत्वा''दित्यपि टीकावाक्यमुपलक्षणत्वेन वा कैमुत्यलब्धत्वाभिप्रायेण वा व्याचष्टे ।। समाख्येति ।। श्रुतित इति ।। वैश्वानरश्रुतित इत्यर्थः । सर्वापेक्षया श्रुतिप्राबल्यस्य ''शब्दादेव प्रमित'' इत्यत्र सेत्स्यमानत्वादिति भावः । अन्तर्नये तु निरवकाशलिङ्गेन श्रुतिबाधोनात्र तथेति भावः । यद्यपि सिद्धान्ते समाख्यादिकमिव ''अभिविमानमात्मान'' मित्यात्मश्रुतिरप्यस्ति । तथापि तदाच्छादनेन वा वक्ष्यमाणदिशा निरवकाशया परप्राबल्यन्यायेन प्रबलया चरमवैश्वानरश्रुत्या पूर्वस्यात्मशब्दस्य

कथंचिन्नेयत्वादिति वा तस्याप्यग्र्यादिशब्दवद्विष्णौ मुख्यत्वं नेति वाऽभिप्रायेण तदनुक्तिः । तथा च वक्ष्यति ''आत्मश्रुतेश्च न ब्रह्मणि मुख्यते''ति । ''न च लिङ्गस्य निरवकाशत्वेन प्राबल्यात् श्रुतिबाधकत्व''मिति शङ्कोत्तरेऽप्युपलक्षणमिति भावेन स्वयं समाख्यादीनां बहुत्वात्प्राबल्यमिति शङ्कान्तरं हृदि कृत्वा समाधिमाह ।। बहुत्वेति ।। उक्तं हीति ।। विष्णुतत्वनिर्णयोदाहृतब्रह्मतर्कवाक्य इत्यर्थः । सः स्वभावः । उपजीव्यत्वनिरवकाश-त्वश्रुतित्वरूप इत्यर्थः । यद्यपि पूर्वपक्षेऽपि वैश्वानरश्रुतिरिवायमग्निरित्याद्यग्निश्रुतिः ''वैश्वानरे तद्धुतं भवति । हृदयं गार्हपत्यो मनोन्वाहार्यपचन आस्यमाहवनीय इति । येनेदमन्नं पच्यत'' इत्यादिना श्रुतानि होमाधिकरणत्वगार्हपत्याद्यङ्गकत्वपाचकत्वादिलिङ्गानि च सन्तीति प्रापकबाहुल्यमस्ति । तथापि टीकायां श्रुतित इत्युक्त्यनुरोधेन तन्मात्रेणैव बहुत्वकृतप्राबल्यस्य बाध उक्तः ।

## तात्पर्यचन्द्रिका

**न चान्तराद्यधिकरणन्यायेन वैश्वानराग्र्यादिश्रुतिर्ब्रह्मणि मुख्येति सावकाशा । लिङ्गं तु निरवकाशमिति वाच्यम् । तथात्वे श्रुतेरन्यत्रप्रसिद्ध्ययोगात् । न च ''जगद्वाचित्वा''दिति वक्ष्यमाणन्यायेन लोकेऽन्यत्रैव शब्दव्यवहारात्प्रसिद्ध्युप-पत्तिरिति वाच्यम् । ब्रह्मणि मुख्यत्वेऽन्यत्र व्यवहारस्यैवायोगात् । यदि च ''शरीररूपकविन्यस्तगृहीते''रिति वक्ष्यमाणन्यायेन मुख्यार्थभूतब्रह्मसम्बन्धादन्यत्र प्रयोगस्तर्हि गङ्गादिशब्दानां तीरादाविवान्यत्र लक्षणादिः स्यात् । तथा च ब्रह्मणि मुख्यानामिन्द्रादिशब्दानामग्र्यादावग्र्यादिशब्दानां चेंद्रादौ प्रयोगः स्यात् । न हि तीरपुरुषमाणवकचित्रलिखितसिंहादौ गङ्गामंचाग्निसिंह शब्दा एव प्रयुज्यन्ते । न तु**

रूढ्या योगेन वा गङ्गादिवाचिपदान्तराणीति नियमोऽस्ति । अन्यथाऽग्न्यादौ वह्न्यादिशब्दस्याप्यप्रयोगः स्यात् । न च ''समाकर्षा''दिति वक्ष्यमाणन्यायेन वाचकत्वाविशेषेऽपि राज्ञि भृत्ये च जयिशब्दस्येवाग्न्यादिशब्दानां ब्रह्मणि मुख्यत्वमन्यत्रामुख्यत्वं चेति युक्तम् । भृत्यो जयीत्यत्र हि भृत्यशब्दस्य भृत्ये मुख्यत्वात्तदन्वयाय जयिशब्दस्यामुख्यता । ब्रह्मणोऽन्यत्र तु कश्चिदपि शब्दो न मुख्योऽस्ति । यदन्वयाय शब्दान्तरस्यामुख्यता । एतेन हानादिव्यवहारायान्यत्र प्रयोग इति परास्तम् । अग्निव्यवहारस्याग्निशब्देनैव सिद्धेर्वह्न्यादिशब्दाप्रयोगापातात् । अत एव पाचकत्वाद्यग्निलिङ्गानामात्मश्रुतेश्च न ब्रह्मणि मुख्यता । अन्यत्राप्रयोगापातात् । किं चेन्द्राग्न्यादिशब्दानां ब्रह्मण्येव मुख्यत्वे सूक्तव्यवस्था विद्याव्यवस्था च न स्यात् । अमुख्यवृत्त्या तद्व्यवस्थाया निरस्तत्वात् । टीकादौ वैश्वानरश्रुतेः साधारण्योक्तिस्तु श्रुतित्वप्रयुक्ते विशेषे सत्येव श्रुतिलिङ्गयोर्निरवकाशत्वप्रयुक्तसाधारण्यमभिप्रेत्य । टीकायां लिङ्गस्य निरवकाशत्वोक्तिरपि स्वतोऽवकाशाभावाभिप्राया । अन्यथा सर्वगतत्वं च न तस्येति टीकाविरोधात् । ''न तु लिङ्गेन विष्णुपरतानिश्चय'' इति टीकायामपि किन्तु प्रसिद्ध्याग्न्यादिपरत्वनिश्चय इति शेषः । यद्वा टीकादिस्वारस्याय विष्णुपरत्वानध्यवसायेन पूर्वपक्षोऽस्तु । एवं च पक्षद्वयेऽप्यतीतसर्वाधिकरणाक्षेपः । अत एवास्य पादद्वयांत्यतेति ।

**प्रकाशिका** – एवं श्रुतेश्श्रुतित्वप्रयुक्तप्राबल्यमुपपाद्येदानीं निरवकाशत्वेनापि प्राबल्यं वक्तुं ''अन्तरधिकरणन्यायेन विष्णावपि श्रुतेर्वृत्तिरस्तीति चे''दिति न्यायविवरणटीकोक्तमत्रापि ग्राह्यमिति भावेन ''न च लिङ्गस्ये''त्यादिटीकां व्याचष्टे ॥ न चेत्यादिना ॥ अन्तरादीति ॥ अन्तस्तद्धर्मेत्यत्राधिदैवगताशेषनाम्नां निरवकाशलिङ्गेन विष्णौ मुख्यत्वोक्तेः ''चेतोर्पणनिगदा''दित्यत्राशेषनाम्नां विष्णावुपासनार्थत्वोक्तेः ''ज्योतिश्चरणे''त्यत्राशेषसूक्तस्थाग्निज्योतिरादिशब्दानां विष्णौ मुख्यत्वोक्तेरिति भावः । केचित्तु ''अन्तर उपपत्ते''रित्यत्राग्निप्रयुक्ताहंशब्दस्य विष्णौ मुख्यत्वोक्तेस्तन्न्यायेनेत्यर्थ इत्याहुः । तच्चिंत्यम् । शास्त्रदृष्टचेत्यत्रैव मुख्यत्वसिद्ध्याऽत्र भाष्यादौ तस्यैव स्मारणात् । तावताऽग्निशब्दस्य विष्णौ मुख्यत्वासिद्धेश्चेति । अन्तरधिकरणन्यायेनेति क्वचित्पाठः ॥ तथात्व इति ॥ लिङ्गनिरवकाशत्वेन श्रुतेर्ब्रह्मणि मुख्यत्व इत्यर्थः । तथा च निरवकाशया श्रुत्या लिङ्गमेवाग्नौ

सावकाशयितव्यमिति भावः । यद्यपि प्राक्समाख्यादिकमपि प्रकृतम् । तथापि टीकायां ''लिङ्गस्यनिरवकाशत्वेने''ति लिङ्गमात्रोक्तेस्तदनुरोधेन वा लिङ्गनिरवकाशत्वेन निरवकाश-श्रुतिबाधोनेति सिद्धौ तादृशसमाख्यादिना नेति कैमुत्यसिद्धत्वाद्वा पूर्वत्र ''अन्तस्तद्धर्मो-पदेशात्। आकाशस्तल्लिङ्गात् । अत एव प्राण'' इत्यादौ सर्वत्र लिङ्गनिरवकाशत्वमाश्रित्य श्रुतेर्ब्रह्मणि मुख्यत्वोक्तेस्तत्सर्वाक्षेपाय तत्साधारण्योक्त्यर्थत्वाद्वा लिङ्गमात्रोक्तिः । तथा च वक्ष्यति ''अतीतसर्वाधिकरणाक्षेप'' इति । टीकायां लिङ्गमात्रोक्तविदमेव बीजमित्याहुः । ''न हि वैश्वानरश्रुतेरग्र्यादिविषयत्वाभावे व्यवहारस्य गत्यन्तरमस्ती''ति टीकां विवरितुं सम्भावितगत्यन्तरमाशङ्क्य निराह ।। न चेति ।। चतुर्थपादे ''समाकर्षा''दित्यधिकरणे शब्दानां विष्णावेव मुख्यत्वेऽन्यत्रामुख्यत्वापत्त्या माणवकादावग्र्यादिशब्दप्रसिद्ध्यदर्शनेनान्यत्र प्रसिद्ध्ययोगाद्विष्णावेव प्रसिद्ध्यापत्तेश्चेति शङ्कायां लोकस्य जगत्येव शब्दव्यवहारेण तत्रैव तच्छ्रोतॄणां व्युत्पत्तेर्विष्णौ तथा बहुलव्यवहाराभावेन व्युत्पत्त्यभावाच्च जगति प्रसिद्धेः अग्निर्माणवक इति व्यवहारादनवगताग्निशब्दमुख्यार्थस्य माणवकेऽग्निशब्दव्युत्पत्त्या तस्य तत्रैव प्रसिद्धिवदनवगतभगवद्रूपमुख्यार्थस्य भगवदज्ञानमूलत्वेनान्यथोपपत्तेरिति ''जगद्वाचित्वा'' दिति गुणसूत्रेणोक्तन्यायेनेत्यर्थः ।

''साक्षादप्यविरोध''मिति सूत्रव्यावर्त्यमाह ।। ब्रह्मणीति ।। एतेनात्र नयेऽन्यत्र व्यवहारे साक्षादिति सूत्रेणोक्ते सति तस्य गत्युक्तिस्तत्र युज्यते । स एवायमयुक्त इत्याक्षिप्यत इति तेन गतार्थत्वमपि नेति दर्शितम् । तथा चानुवक्ष्यति समाकर्षादित्यत्र टीकायां ''सर्वशब्दानां परमात्मैकवाचित्वेऽन्यत्र व्यवहाराभावापाता''दिति । ''साक्षा''दिति सूत्रव्यावर्त्यमन्यत्र व्यवहारयोगमाशङ्कते ।। यदि चेति ।। ''आनुमानिकमप्येकेषामिति चेन्न शरीररूपके''ति नयेऽव्यक्तादिशब्दवाच्यं विष्णुरन्यद्वेति संशये अव्यक्तादिशब्दानां प्रधानादावेव प्रसिद्धेः परमात्मैकवाचित्वे प्रधानादौ तद्व्यवहाराभावापातात् अवाचकत्वेऽप्यनभिज्ञानादिना व्यवहारे चाव्यवस्थापातादन्यदिति प्राप्ते परमात्मतन्त्रत्वेन शरीरसमे प्रधानादौ तत्तच्छब्दवाच्यस्य परमात्मनो विन्यस्ततया तत्सम्बन्धेन तत्रापि शब्दप्रवृत्त्युपपत्तेः प्रधानादितत्तद्वस्तुविशिष्टस्यैव विष्णोरव्यक्तादिशब्दवाच्यत्वस्वीकारेण तत्तच्छब्दमुख्यार्थेश्वरसम्बन्धस्य तत्र तत्र व्यवस्थित-तयाऽन्यत्र व्यवहाराव्यवस्थानापत्तेर्विष्णुरेवाव्यक्तादिशब्दमुख्यार्थ इति चतुर्थपादे वक्ष्यमाणन्यायेनेत्यर्थः । ''तथा सति लोके लक्षणेतरवृत्त्यभावापत्ते''रिति समाकर्षनयस्थ-टीकावाक्यं हृदि कृत्वाऽह ।। तर्हीति ।। गौणीवृत्तिरादिपदार्थः । टीकोपलक्षणमिति सूचितम् ।

मुख्यार्थसम्बन्धनिमित्तेन शब्दप्रयोगस्य तादृशत्वादिति भावः । अस्तु को दोष इत्यत आह ॥ तथा चेति ॥ यद्यपि लोके शब्दव्यवहाराव्यवस्थानिवर्तकं ''शरीररूपकविन्यस्तगृहीतै'' रित्येतदेव । न ततोऽन्यदस्ति । अत एव टीकायां ''अवाचकैर्व्यवहारेऽव्यवस्थापाता''दिति समाकर्षनये ''अवाचकत्वाविशेषेण घटादिशब्दानां पटादौ व्यवारप्रसङ्गा''दित्यव्यक्तनये चाव्यवस्था ''शरीररूपके''त्यादिसूत्रांश- व्यावर्त्यतयैवोक्ता । प्रागुक्तदिशा व्यवस्थासमर्थनं च सुशकम् । तथापि टीकायां ''अवाचकै''रिति, ''अवाचकत्वाविशेषेणे''ति चाव्यवस्थाया-मवाचकत्वस्य निमित्ततयोपादानात् ''समाकर्षादिति वक्ष्यमाणन्यायस्यात्राभिप्रेतत्वेन लक्षणानाश्रयणात्'' इत्यानुमानिकसूत्रटीकोक्तदिशा शरीररूपकेत्याद्यंशतात्पर्यार्थानभिज्ञानेन यथा तथा सति लोके लक्षणेतरवृत्त्यभावापत्तेरिति समाकर्षसूत्रे पूर्वपक्षिण आपादनं तथा विशेषानभिज्ञस्य तत्तच्छब्दमुख्यार्थभूतेश्वरसम्बन्धस्य सर्वत्र सत्त्वादित्येतावन्मात्रं जानतः पूर्वपक्षिण एतदव्यवस्थापादनमिति ध्येयम् । अत एव टीकादौ शरीररूपकेति सूत्रेन व्यवस्थासमर्थनं स्पष्टमुक्तम् । अस्माभिस्तु पूर्वं विवेकार्थं स्पष्टमुक्तम् । अन्यथा लक्षणादिवृत्त्या-पादनस्यानिष्टत्वं न सिध्येत् । अस्य समाधिस्तु ''कल्पनोपदेशा''दित्यादावन्यत्रापि वाचकत्वोक्त्या भविष्यति । अत एवाग्रे ''वाचकत्वाविशेषेऽपी''ति वक्ष्यत इति । तीरेति सप्रयोजनलक्षणायाः पुरुषेति रूढलक्षणायाः माणवकेति स प्रयोजनोपचारस्य चित्रलिखितसिंहादाविति तु रूढोपचारस्योदाहरणम् । तीराद्यन्यलाक्षणिकादिरादिपदार्थः । एतेन लक्षणादिरित्यादिपदार्थो विवृतः ॥

न त्विति ॥ नद्यां घोषः सुरसरिति घोष इत्यादेरपि दर्शनादिति भावः ॥ अन्यथेति ॥ एकएव शब्दो लक्षणीये प्रयोज्यो न तु तत्पर्याय इत्यङ्गीकार इत्यर्थः ॥ वन्ह्यादीति ॥ तस्यापि विष्णौ मुख्यस्यान्यत्र लक्षणादिनैव वृत्तेरिति भावः । ननु न शब्दानां ब्रह्मणि मुख्यत्वेऽप्यन्यत्र लक्षणादिः । येनाव्यवस्था । किं तु तत्रापि ''कल्पनोपदेशा''दिति न्यायेन मुख्यत्वमेव ॥ न चाक्षादिशब्दवदुभयत्र साम्यापत्तिः । न्यूनाधिकभाववत्त्वादिति भावेन शङ्कते ॥ न चेति ॥ इति न्यायेन ब्रह्मणि मुख्यत्वमित्यन्वयः । तत्र हि मुख्यता किमुभयत्र तुल्या किं वा ब्रह्मण्यधिकाऽन्यत्र हीनेति संशये हीनत्वे मुख्यवृत्तित्वाभावात्तुल्येति प्राप्ते योगरूढ्योरिव मुख्यत्वेऽपि न्यूनाधिकभावसम्भवाद् ब्रह्मणि परममुख्यत्वमन्यत्र त्वपरममुख्यत्वमिति वक्ष्यते । तेन न्यायेनेत्यर्थः ॥ वाचकत्वाविशेषेऽपीति ॥ ''कल्पनोपदेशा''दिति न्यायेन हरौ तदन्यत्र चेति भावः ॥ अमुख्यत्वमिति ॥ किंचिन्मुख्यत्वं न तु लक्षणादिरित्यर्थः ॥ न मुख्योऽस्तीति

॥ सर्वशब्दानां लोके तुल्यवृत्तित्वेन भृत्यजयिशब्दयोरिव भृत्ये वृत्तितारतम्याभाव इत्यर्थः । एतेनेत्युक्तं व्यनक्ति ॥ अग्नीति ॥ एवं श्रुतेर्निरवकाशतयापि प्राबल्योपपादनेन ''न हि वैश्वानरश्रुतेरग्न्यादिविषयत्वाभावे व्यवहारस्य गत्यन्तरमस्ती''ति टीकाविवरणेन साक्षादिति सूत्रव्यावर्त्यमुक्त्वा इदानीं ''शब्दादिभ्योऽतः प्रतिष्ठानान्नेति चे''दिति सूत्रांशोक्त-लिङ्गनिरवकाशत्वमप्यत्र ग्राह्यमिति भावेनाह ॥ अत एवेति ॥ प्राग्विवृतान्यस्माभिर्लिङ्गानि ॥ आत्मश्रुतेश्चेति ॥ एतेन ''शब्दादिभ्य'' इति सूत्रभाष्यटीकायां ''यथा खलु वैश्वानरस्य विष्णुत्वनिश्चायकात्मशब्दादि विद्यत'' इत्यादिना लिङ्गानां विष्णुप्रापकात्मशब्दसमाख्यादिना साम्यमुक्तं तत्त्वभ्युपेत्यवादेन वा साक्षादित्यादावग्रेऽन्यत्र प्रयोगोपपत्तेर्वक्ष्यमाणत्वेनात्म-श्रुत्यादेर्विष्णौ मुख्यत्वस्य निर्बाधादिति भावेन वेति भावः ।

अत एवेत्युक्तं व्यनक्ति ॥ अन्यत्रेति ॥ ''अभिव्यक्ते''रित्यादिसूत्रव्यावर्त्योक्तिपरां ''वैदिकविद्याभेदव्यवहारविरोधाच्चे''ति टीकां विवृणोति ॥ किं चेत्यादिना ॥ इदमग्निसूक्त-मित्यादिसूक्तव्यवस्था तथा इयमात्मविद्या इयं वैश्वानरविद्या इयमक्षिविद्या इयं प्राणविद्येत्यादिविद्याव्यवस्था च न स्यादित्यर्थः ॥ निरस्तत्वादिति ॥ ब्रह्मणि मुख्यानामिन्द्रादिशब्दानामित्यादिना निरस्तप्रायत्वादित्यर्थः । नन्वग्निश्रुत्यादेर्विष्णुप्रापकात्प्रा-बल्योक्तौ सूत्रभाष्यटीकाविरोधइत्याशङ्क्याह ॥ टीकादाविति ॥ जात्या निरवकाशत्वेन श्रुतेः प्राबल्यं स्वयमुक्तम् । टीकादौ तु सौत्रसाधारणशब्दस्वारस्यमनुरुध्य जात्या प्राबल्यमनुपपाद्य श्रुतेर्लिङ्गस्य निरवकाशत्वेन साम्यमुपेत्य साधारण्यमुक्तम् । जात्या बलवत्त्वमस्मदुक्त-रीत्याऽनुमतमेव । अतो न विरोध इति भावः ॥ श्रुतिलिङ्गयोरिति ॥ वैश्वानर-श्रुतिसर्वगतत्वलिङ्गयोरित्यर्थः । ननु टीकोक्तरीत्या लिङ्गस्य निरवकाशत्वे वैश्वानरोऽग्निरेवेति कथं निर्णयेन पूर्वपक्षः । श्रुत्या लिङ्गबाधो वा कथमित्यत आह ॥ टीकायामिति ॥ सिद्धान्तदिशेत्यर्थः । वस्तुतः पूर्वपक्षे सर्वगतत्वलिङ्गमग्नौ सावकाशमिति टीकाशयः । एवं तर्हि विष्णुरेवेति सिद्धांत्यभिमतनिर्णयाक्षेपपरग्रन्थः कथमित्यत आह ॥ न त्वित्यादि ॥ एवं स्वोक्तरीत्या श्रुतित्वनिरवकाशत्वोभयप्रयुक्तप्राबल्यं टीकायामप्यभिमतमित्युपेत्य टीकावाक्यानि तदनुगुणतया व्याख्यायेदानीं पक्षान्तरमाह ॥ यद्वेति ॥ टीकादौ जात्या प्राबल्यं श्रुतेरनुक्त्वा निरवकाशत्वमात्रेण श्रुतिलिङ्गयोस्साम्यमुपेत्य विष्णुरेव वैश्वानर इति विष्णुपरतानिश्चयो न युक्त इत्युक्तम् । तत्स्वारस्यानुरोधेनेत्यर्थः । पूर्वपक्षफलमाह ॥ एवं चेति ॥ स्वाभिमतश्रुतेर्द्वेधा, प्राबल्यपक्षे निरवकाशत्वमात्रप्रयुक्तप्राबल्यपक्षे चेत्यर्थः । यथा नामधेयपादे उद्भिदादि-

चतुरधिकरण्यां वाजपेयनयपूर्वपक्षे तथेति भावः । द्वितीयपक्षेऽपि सर्वत्र सिद्धान्ताभिमतनिर्णयाक्षेपादिति भावः । टीकादौ पूर्वाधिकरणाक्षेपः सङ्गतिप्रदर्शनायेति भावः। उक्तं च तत्वप्रदीपे ''पादद्वयार्थनिगमनाय सर्वनाम्नां सर्वलिङ्गानां च समन्वयद्रढीकरणात्मकोऽयमधिकरणराज आरभ्यत'' इति ॥

**पाण्डुरङ्गि** –ॐ वैश्वानरस्साधारणशब्दविशेषात् ॐ ॥ अन्यथेति ॥ ब्रह्मणि मुख्यानामिन्द्रादिशब्दानामग्र्यादावग्न्यादिशब्दानां चेन्द्रोदौ प्रयोगाभाव इत्यर्थः । अग्निशब्दस्य लक्षणयाऽग्न्यादिपरत्वेनैव व्यवहारोपपत्तौ तत्पर्यायशब्दांतरस्यापि लक्षणया तत्कथने मानाभावादिति भावः । न च समाकर्षादिति वक्ष्यमाणन्यायेनेति । कल्पनोपदेशादिति न्यायेनान्यत्रापि मुख्यामुख्यवृत्तीनामङ्गीकारात् । वाचकत्वाविशेषेपि तदधीनत्वादितिन्यायेन समाकर्षन्यायेन च ब्रह्मणि मुख्यत्वेऽप्यन्यत्राप्यमुख्यप्रयोगस्संभवतीति न च युक्तमित्यर्थः ॥ अत एवेति । शास्त्रदृष्टचेति न्यायेनेत्यर्थः ॥ निरस्तत्वादिति ॥ इन्द्रादिशब्दानामग्न्यादिशब्दानां चेन्द्रादौ प्रयोगापत्तिरूपबाधकोक्त्या निरस्तत्वादित्यर्थः । नन्वेवं वैश्वानरश्रुतेरन्यत्रैव प्रसिद्धत्वे टीकायां साधारण्योक्तिरयुक्तेत्यत आह ॥ टीकादाविति ॥ यद्वा श्रुतेः प्राबल्यमुपपाद्यावधारणेन पूर्वपक्षे टीकाभाष्यसूत्रविरोध इत्यत आह ॥ टीकादाविति ॥

नन्वेवं सर्वगतत्वादिविष्णुलिङ्गानामग्नौ सावकाशत्वे प्रसिद्धिलिङ्गयोरुभयोरपि निरवकाशत्वेनेत्यादिटीकाविरोध इत्यत आह ॥ टीकायामिति । ननु टीकायां लिङ्गनिरवकाशत्वस्योक्तत्वादुभयोर्निरवकाशत्वस्य व्याहतत्वान्न निरवकाशत्वेन साम्यं श्रुतिलिङ्गयोष्टीकादावभिप्रेतमित्यतो वाऽऽह ॥ टीकेति ॥ न तु लक्षणादिनापि कल्प्यावकाशाभावाभिप्रायेत्यर्थः ॥ अन्यथेति ॥ सर्वथा निरवकाशत्वभिप्रायत्व इत्यर्थः । ननु निश्चयेन पूर्वपक्षेन तु लिङ्गेन विष्णुपरतानिश्चय इति टीकाविरोध इत्यत आह ॥ नत्विति ॥ अस्मिन्पक्षे प्रसिद्धाग्न्यादिपरत्व इति शेषपूरणे टीकास्वारस्यं न भवतीत्यतः पक्षांतरमाह ॥ यद्वेति ॥ न च तर्हि टीकोक्तसर्वगतत्वाक्षेपानुपपत्तिः । साधारणश्रुतिसाहचर्येण लिङ्गस्याप्यवकाशकल्पनायाः सम्भवान्न विष्णोरेवेदं सर्वगतत्वमिति निश्चयस्सम्भवतीत्यर्थपरत्वात्तदाक्षेपटीकाया इति भावः । ननु व्यवहारविलोपेन पूर्वपक्षस्य सर्वाधिकरणसाधारणत्वादत्रैव को विशेष इत्यत आह ॥ एवं चेति ॥ एवं चेत्यनेनाक्षेपप्रकारो व्यवहारश्च परामृश्यते । तर्ह्यतीताधिकरणैरेव गतार्थतेत्यत आह ॥ अत एवेति ॥ एतदाक्षेपस्यातीतैरपरिहारादनेनैव परिहारादेवेत्यर्थः । तदपि कुत इत्यत आह

॥ अत एवेति ॥ एतदाक्षेपपरिहारस्यैवात्रैव योग्यत्वादतीताधिकरणेष्वयोग्यत्वादेवेत्यर्थः । यद्वाऽतीतसर्वाधिकरणाक्षेपकत्वादेवेत्यर्थः । पादद्वयशेषस्य मध्ये प्रवेशायोगेनादावन्ते वा निवेशे कार्ये समन्वयात्पूर्वं प्रसक्तेरेवाभावेनांत्य एव निवेशस्यौचित्यादिति यावत् । नन्विदमध्यायस्यांते स्यादित्यतो वाऽऽह ॥ एवं चेति ॥ एतादृश इत्यर्थः । अतीताधिकरणसाधारण एव । न तु भाव्यधिकरणसाधारणः । अत एव एतत्परिहार्याक्षेपस्य भाव्यधिकरणेऽभावादेव । अस्य पादद्वयांत्यतैव । न तु पादचतुष्टयरूपाध्यायांत्यतेत्यर्थः । स्पष्टयिष्टते चैतत् ॥

## तात्पर्यचन्द्रिका

सिद्धांतस्तु ॥

अज्ञास्त्वज्ञानतः शब्दानन्यत्रैव प्रयुंजते ।
ज्ञानिनोऽपि च हानादिव्यवहारप्रसिद्धये ॥ १ ॥

अज्ञानिन इव ज्ञानिनोप्यन्यत्र हानादिव्यवहारस्यापेक्षितत्वात्तस्य च शब्दप्रयोगाधीनत्वात् ब्रह्मण्यमुख्यस्यान्यत्र मुख्यस्य च शब्दस्याभावादनन्यगतिकतयाऽन्यत्रापि प्रयुञ्जते । जातिःशब्दार्थ इति मते जातौ मुख्यानपि शब्दान् हानादिव्यवहाराय व्यक्ताविव । अग्न्यादाविन्द्रादिशब्दप्रयोगे च व्यवहारव्यवस्था न स्यात् । न चाग्न्यादौ वह्न्यादिशब्दानामिवेन्द्रादिशब्दानामपि शक्तिरभिधानादिसिद्धा । अग्निर्दुःखी अग्निर्वै देवानामवम इत्यादौ च तद्गतत्वेन विवक्षितदुःखित्वाद्यनुपपत्तेर्भृत्ये जयिशब्दस्येवाग्निशब्दस्यान्यत्रामुख्यता । अन्यथाऽलौकिकमग्न्यादिस्वरूपमेव न सिद्ध्येदिति कथं तत्र प्रयोगाभावापादनम् । सूक्तादिव्यवस्थायां त्वग्न्यादिसूक्तादिभिर्ब्रह्मोपासनयाऽग्न्यादावेव ब्रह्मणोऽभिव्यक्तिर्वा अग्न्यादिसूक्ताद्युपासकैरग्न्यादावेव ब्रह्मणोऽनुस्मरणीयत्वं वा तदुपासकानामग्न्यादिस्थब्रह्मप्राप्तिर्वा निमित्तम् । यद्यपि ऋग्भाष्ये -

पृथग्रूपाणि विष्णोस्तु देवतांतरगाणिच ।
अग्न्यादिसूक्तवाच्यानि नाम्ना सूक्तभिदा भवेत् ॥

इत्यग्न्यादिशब्दप्रयोगः सूक्तव्यवस्थापक उक्तः । एवं च यथा सामशब्दस्तद्विशेषबृहद्रथंतरादिशब्दाश्च ऋगाश्रितगीतिविशेष एव मुख्यास्तदाश्रयनानाऋक्षु त्वमुख्याः

**तथैव द्वितीय उक्तत्वात् सप्तमे उपपादितत्वान्नवमे स्मारितत्वाच्च । एवमिन्द्राग्न्यादि-शब्दास्तत्तत्सूक्तानि चेन्द्राग्न्यादिगतब्रह्मरूपेष्वेव मुख्यानि । अतीतानागतनेकेन्द्रादिषु त्वमुख्यानीत्येव व्यवस्था सिद्ध्यति । अन्यथा परमतेऽपि सौरसावित्रादेरेक-देवताकत्वादिदं सौरमिदं सावित्रमिति व्यवस्था न स्यात् । तथापीह सूत्र आग्नेयादि-सूक्तोपासकैरग्न्यादिगतत्वेनानुस्मर्तव्यमित्यनुष्ठानविशेषोपयोगिव्यवस्थापकमुक्तम् । उक्तं चानुक्रमणिकायामपि सर्वसूक्तानां परमात्मदेवताकत्वं ''एकैववा महानात्मा देवते''ति । एतेन यागव्यवस्थापि सिद्धा । ''अहं हि सर्वयज्ञानां भोक्ताच प्रभुरेव चे''त्यादिना सर्वयागानां विष्णुदेवताकत्वेपि आग्नेयादियागेष्वग्न्यादिगतस्यैव भगवतोऽग्न्यादिशब्दैरेवोद्देष्टव्यत्वादिना यागव्यवस्थोपपत्तेः । अग्नीषोमीयादीनां द्विदेवताकत्वं चाधिष्ठानद्वित्वेन वाऽधिष्ठितभगवद्रूपद्वित्वेन वेति द्रष्टव्यम् ।**

**प्रकाशिका –** आत्मशब्दश्रुतिस्मृतिसमाख्याप्रकरणाभिविमानत्वादिलिङ्गानां वैश्वानरस्य विष्णुत्वसाधकानां वैश्वानरादिश्रुत्यादेरन्यत्र व्यवहारान्यथानुपपत्त्या सूक्तादिभेदव्यवहारान्य-थानुपपत्त्या च विष्णुत्वासाधकत्वोक्तेः व्यवहारस्य गत्युक्त्यैवात्मशब्दादिबलाद्वैश्वानरो विष्णुरिति भाष्यटीकारीत्या सिध्यतीति भावेन व्यवहारस्य गत्युक्तिपरां ''अनन्ययोगेन ब्रह्मवाचकैरपि तैर्ज्ञानिनो हानादिसिद्ध्यर्थमन्यत्राग्न्यादौ व्यवहरन्ती''त्यादिसाक्षादित्यादि सूत्रभाष्यटीकां विवृण्वंस्तदुक्तं प्रमेयं सङ्गृह्याह ॥ अज्ञास्त्विति ॥ अज्ञानां मुख्यार्था-ज्ञानतोऽन्यत्र प्रयोगेपि ज्ञानिनां कुतस्तत्र प्रयोगः । हानादिव्यवहारस्यान्येनापि सम्भवादित्यत उत्तरार्धं व्यनक्ति ॥ अज्ञानिन इवेति ॥ एतेन पूर्वार्धस्योपयोगो दर्शितः । तमग्रे स्पष्टयिष्यामः । यद्वाऽत्र भाष्यादावनभिज्ञानादन्यत्र व्यवहारोक्तिः ''जगद्वाचित्वा''दिति सूत्रसिद्धस्येह दृष्टान्तत्वेनेति सूचनायाज्ञानिन इवेत्युक्तम् । यद्वाऽन्यत्र व्यवहारो न स्यादित्येतदज्ञानिनो ज्ञानिनो वेति विकल्प्य श्लोके द्वयोर्गत्युक्तिः । नेदं रजतं तस्माज्जहि इदं रजतमुपादत्स्वेत्यादि-व्यवहारस्य शब्दैकसाध्यत्वादित्यर्थः ॥ अन्यत्रापीति ॥ एतेन श्लोके चोऽप्यर्थोऽनुवृत्ते-नान्यत्रेतिपदेनान्वेतीति सूचितम् ॥ मत इति ॥ भट्टमते ॥ प्रागुक्तातिप्रसङ्गं निराह ॥ अग्न्यादाविति ॥ अज्ञानां सर्वशब्दमुख्यार्थेश्वराज्ञानतोऽन्यत्रैव शब्दव्यवहारात् तस्य चासङ्कीर्णत्वाय व्यवस्थयैवशब्दप्रयोगात् प्राज्ञा अपि तत्प्रहाणेन शब्दांतरोपादाने कृत्याभावाद्बहुलाज्ञप्रयोगानुसार्यभिधानादिसिद्धशब्दशक्त्यनुसाराच्च व्यवस्थयैव शब्दान् प्रयुञ्जते ।

तदर्थत्वाच्छब्दप्रयोगस्येत्यर्थः । यदप्यग्न्यादौ वह्न्यादिशब्दस्याप्यप्रयोग इति तत्साम्यापादनं तत्र तद्वैषम्यमाह ॥ न चेति ॥ एतेन जयिशब्दस्य राजभृत्ययोरिव वह्न्यादिशब्दानां कल्पनोपदेशादिति न्यायेन जगद्ब्रह्मवाचकत्वाविशेषेऽपि न्यूनाधिकभावेनोभयत्र शक्तिरेवेति सूचितम् । यदत्रोक्तं जयिशब्दवैषम्यं तत्राह ॥ अग्निर्दुःखीति ॥ दुःखादिस्वामित्वेन दुःखित्वमीशेऽपि युक्तमित्यतस्तद्गतत्वेनेत्युक्तम् । तद्गतनीचत्वापादकत्वेनेत्यर्थः । अन्यथा अमुख्यतोऽपि तत्राप्रयोगे । प्रत्यक्षादिसिद्धां तां निराह ॥ अलौकिकेति ॥ एवं ''साक्षादप्यविरोधं जैमिनि''रिति सूत्राभिप्रेतमन्यत्र व्यवहारसमर्थनमुपपाद्य ''अभिव्यक्ते-रित्याश्मरथ्यः । अनुस्मृतेर्बादरिः । सम्पत्तेरिति जैमिनि''रिति सूत्रोक्तान् सूक्तादिव्यवस्था-हेतूस्तत्तत्सूत्रभाष्यटीकां विवृण्वन्नाह ॥ सूक्तादीति ॥

ननु ऋग्भाष्ये विष्णोरग्न्याद्यंतर्गतान्यग्न्यादिशब्दवाच्यानि कानिचिद्रूपाणि कानिचित्तु तदनन्तर्गतानि पृथग्विद्यमानान्यग्नींद्रादिशब्दवाच्यानि सन्तीति भिन्नभिन्नशब्दवाच्यविष्णुरूप-बोधकत्वाद्विष्णुरूपैकदेवताकत्वेऽपि संज्ञाभेदात्सूक्तादिव्यवस्था युक्तेत्युक्तम् । अत्र पुनरग्न्यावधिष्ठानेऽपरोक्षीभूतत्वादिकं निमित्तमुच्यते । एतच्चायुक्तम् । तथात्व इदं विष्णुसूक्तमिदं वामनसूक्तमिदं पुरुषसूक्तमिति व्यवस्थाभावापत्तेः । तत्राधिष्ठानस्यैवाभावात् । सौरसावित्रादि-सूक्तव्यवस्थाभावापत्तेश्च । तत्राधिष्ठानभेदाभावात् । अतोन्यत्र भाष्यकृदुक्तमेव समाधानं वाच्यमिति तदेव सूत्रकृताऽत्र कुतो नोक्तमिति भावेन तत्रोक्तमाशङ्क्य तत्समर्थनपूर्व-मेतदुक्तेरभिप्रायमाह ॥ यद्यपीति ॥ द्विविधानि विष्णुरूपाणि । देवतांतर्गतानि तदनंतर्गतानिच। सर्वाणि चाग्न्यादिनामवन्ति । तत्राद्ये रूपाणां नाम्नाऽधिष्ठाननाम्ना चाग्न्यादिसूक्तभेदः । अंत्ये रूपनाम्नैवेत्युक्तमित्यर्थः । तत्र नामादीनां भगवति मुख्यत्वमन्यत्र तत्सम्बन्धनिमित्तत्वमित्येतद्दृष्टान्तेन समर्थयते ॥ एवं चेति ॥ द्वितीय इति ॥ द्वितीयेऽध्याय आद्यपादे ''गीतिषु सामाख्ये''ति द्वादशेऽधिकरणे यद्यपि प्रगीते मन्त्रे साम शब्दप्रयोगोऽभि-युक्तानाम् । तथापि मन्त्रनिष्ठा गीतिरेव सामशब्दार्थ इत्येतावन्मात्रमुक्तम् । तत्कथमित्याशङ्कायां सप्तमेध्याये द्वितीयपादे ''साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्ट''मित्यधिकरणे ''कवतीषु रथंतरं गायती''त्यनेन रथंतरशब्देन कवतीषु ऋक्षु किमतिदिश्यत इति परिज्ञानार्थं रथंतरशब्दः किं गीतिविशिष्टानां ''अभित्वाशूरनोनुम''इत्यादीनामृचां वाचक उत गीतिमात्रस्येति सन्देहे अध्येतृप्रसिद्ध्या गीतिविशिष्टऋग्वाचक इति प्राप्ते ''विशेष्यं नाभिधागच्छेत्क्षीणशक्तिर्विशेषण'' इति न्यायेन गीतिमात्रस्य वाचक इत्युपपादितत्वात् नवमे

द्वितीयपादे ''सामानि मन्त्रमेके स्मृत्युपदेशाभ्या''मित्याद्याधिकरणे सप्तमसिद्धस्यैव गीतिवाचित्वस्योत्तरविवक्षया स्मारितत्वादित्यर्थः । उक्तं च शाबरभाष्ये ''तदेव पुनरभिधीयते स्मारणायोत्तराधिकरणं चिन्तयितुम् । गीतिस्सामेति स्थिते इदं चिंत्यते । किं गीतिष्वृचः प्रधानभूता उत गुणभूता इति । सामानि मन्त्रमेक इति पूर्वपक्षोऽपि तत्रत्यसिद्धांत-स्मारणार्थमेवे''त्यादि । अत्र त्रितयोक्तिर्दार्ढ्यायेति ज्ञेयम् । यदत्र केनचिदुक्तं ''विशेष्यं नाभिधागच्छे''दिति न्यायाद्गानविशिष्टऋग्वाचित्वे कवतीषु रथंतरं गायतीत्यतिदेशानुपपत्त्या तत्र तथात्वेऽपि नेह तथात्वमिति तत्तुच्छम् ।

तत्तन्नाम्नोच्यते विष्णुस्सर्वशास्तृत्वहेतुतः ।
नक्वापि किंचिन्नामास्ति तमृते पुरुषोत्तमम् ॥

इत्यादिवचनजातेन ''समाकर्षा''दित्याद्युक्तन्यायेन तत्सिद्धेरिति ॥ अन्यथेति ॥ अग्न्यादिनानाशब्दप्रयोगेन सूक्तादिव्यवस्थाया अभाव इत्यर्थः ॥ तथापीति ॥ नामभेदेन सूक्तव्यवस्थासिद्धावपीत्यर्थः ॥ परमात्मदेवताकत्वमिति ॥ यद्यपि तत्र ''एकैववा महानात्मा देवता सूर्य इत्याचक्षते । सहि सर्वभूतात्मा । तदुक्तमृषिणा सूर्य आत्मा जगतस्तस्थुपश्चे''त्युक्तेः सूर्यदेवताकत्वमेवोक्तं भाति । तथापि स्थावरजङ्गमात्मकजगदात्मकत्वलिङ्गात् ''तद्विभूत-योऽन्या देवतास्तदप्येतदृषिणोक्तं इन्द्रं मित्रं वरुणमग्निमाहु''रिति तदीयोत्तरवाक्याच्च सूर्यशब्देन परमात्मैवाभिप्रेत इति भावः । एतेनेत्यनेनात्रोक्तमृग्भाष्योक्तं च हेतुद्वयं परामृश्यत इति भावेन तद्व्यनक्ति ॥ अहं हीति ॥ अत्रोत्तमाधिकारिरूपकर्तॄणामधमाधिकारिरूपकर्तॄणामग्न्यादिगत-विष्णूद्देशप्रकारः ''गुहाशयायैव न देहमानिने'' नदेहाय न तन्मानपराय च । सदेहमानिहरये प्रणमेत्केवलायवे''त्यादिना कर्मनिर्णयोक्तो ध्येयः । आदिपदेन सङ्कल्पादिः । अग्नीषोमीयेति ॥ सर्वयागानां विष्णुदेवताकत्वेऽपीत्यनुकर्षः ॥

**पाण्डुरङ्गि** – हानादिव्यवहाराय व्यक्ताविवेति ॥ यद्यपि कल्पनोपदेशाच्चेत्यादिनाऽन्यत्रापि वक्ष्यमाणया मुख्यवृत्त्यैव व्यवहारः । तथापि समाकर्षादिति न्यायेन परममुख्यस्वारसिकप्राप्तस्य विष्णोः परित्यागेन किमर्थमन्यव्यवहार इत्यस्याः शङ्काया अतः कविर्नामसु यावदर्थस्स्यादि-त्युक्तरीत्या व्यवहारार्थमित्युत्तरम् । अत्र मुख्यलाक्षणिकयोर्जातिव्यक्त्योरिव मुख्यामुख्यमात्रांशे दृष्टान्त इति ज्ञेयम् । अन्यथा नचेत्युत्तरवाक्यविरोधापत्तेरिति भावः । नन्वेवं ब्रह्मणि मुख्यानामन्यत्र व्यवहारे लक्षणाद्यापत्त्याग्न्यादिशब्दानामिन्द्रादाविन्द्रादिशब्दानामग्न्यादौ प्रयोगः

स्यादित्यत आह ॥ अग्न्यादाविति ॥ नन्वग्न्यादौ वह्न्यादिशब्दप्रयोग इवेन्द्रादिशब्दानामपि प्रयोगे व्यवहारव्यवस्था किं न स्यात् । अन्यथा व्यवहारव्यवस्थानुपपत्त्या वह्न्यादिशब्दानामपि प्रयोगो न स्यादित्यतो वैषम्येण परिहरति ॥ न चाग्न्यादाविति ॥ ननु भृत्यो विजयीत्यत्र भृत्यशब्दस्य भृत्ये मुख्यत्वात्तदन्वयाय जयिशब्दस्य तत्रामुख्यतासम्भवेऽपि प्रकृतेऽपि सर्वेषामपि शब्दानां ब्रह्मणि मुख्यत्वेन ब्रह्मणोऽन्यत्र कस्यापि शब्दस्य मुख्यस्याभावात् । कस्यान्वयाय शब्दांतरस्यामुख्यता स्यादित्यत आह ॥ अग्निर्दुःखीति ॥ अन्यथेति ॥ सर्वथाऽग्न्यादिशब्दानामग्न्यादिपरत्वाभाव इत्यर्थः । अग्न्यादिशब्दानाममुख्यवृत्त्याऽप्यग्न्यादि-परत्वाभावेऽपि प्रत्यक्षेणैवाग्न्यादिसिद्धिरित्यत उक्तम् ॥ अलौकिकमिति ॥ द्वितीय उक्तत्वादिति ॥ द्वितीयाध्याये प्रथमपादे गीतिषु समाख्येत्यस्मिन्नधिकरण उक्तत्वादित्यर्थः । ननु तथाप्येकदेवताकत्वात्कथं भेद इत्यत आह ॥ अन्यथेति ॥

## तात्पर्यचन्द्रिका

**अत्र चाद्यसूत्रे स्वपक्षे श्रुतिरूपस्य साधकस्योक्तिः । द्वितीये समाख्यारूपस्य । अत्रेतिशब्दस्याद्यसूत्रानुषक्तेन विष्णुर्वैश्वानर इत्यनेनान्वयः । तथाच विष्णुर्वैश्वानर इति गीतायां स्मर्यमाणं विष्णोर्वैश्वानरत्वं अत्रापि स एव वैश्वानर इत्यस्यानु-मापकमिति सूत्राक्षरार्थः । तृतीये वैश्वानरशब्दमात्रविषयासाधारणबाधकोद्धारः । तथा चेतोर्पणनिगदादित्यत्र ब्रह्मणि प्रसिद्धशब्दत्यागेन गायत्र्यादिशब्दप्रयोगे प्रयोजनं नेत्याशङ्का निरस्ता । अत्र त्वग्न्यादिशब्दानां पाचकत्वादिलिङ्गानां च ब्रह्मणि निरवकाशत्वाशङ्का निरस्यत इति भेदः । चतुर्थे परमतनिरासः । पञ्चमे प्रस्तुते वैश्वानरशब्दसमन्वये समाप्ते सर्वशब्दविषयसाधारणबाधकोद्धाराय लौकिकस्य वैदिकस्य चान्यत्र व्यवहारस्यागत्युक्तिः । वाच्यार्थधीव्यवहितं लक्षणादिकं विना साक्षान्मुख्यवृत्त्या ब्रह्मणः शब्दार्थत्वेऽपि व्यवहाराविरोध इति चास्याक्षरार्थः । षष्ठादिषु चतुर्षु साधारणबाधकोद्धाराय वैदिक्याः सूक्तादिव्यवस्थाया गत्युक्तिः । यद्यप्यनुस्मृत्यनंतरमभिव्यक्तिरभिव्यक्त्यनंतरं सम्पत्तिः । तथाप्यभिव्यक्त्यनन्तरमपि सम्पत्तेः प्रागनुस्मृतिरपेक्षितेति दर्शयितुमनुस्मृतेर्मध्य उक्तिरिति सूत्रक्रमः ।**

**न च साक्षादित्यादिसूत्रपञ्चकं समन्वयानुपपत्तिसमाधिरूपत्वादध्यायांते स्यादिति शङ्क्यम् । चतुर्थपादे पदवर्णस्वरादिसमन्वयस्यापि वक्ष्यमाणत्वात्तदवस्थायां च सूक्तादिभावस्यैवाभावेन तदनुपपत्तिशङ्कानुदयात् तथाग्न्यादिसूक्तादिस्थपदादिसमन्वय-निष्ठानां पुंसामग्न्यादावेव ब्रह्मणोऽभिव्यक्त्यादेरभावेन परिहारासङ्गतेः । तथोभयत्र प्रसिद्धसमन्वयोक्त्यनन्तरं ब्रह्मणि मुख्यत्वेऽन्यत्र प्रयोगो न स्यादिति शङ्काया अन्यत्र मुख्यत्वे ब्रह्मणि स न स्यादिति प्रतिशङ्काप्रतिरुद्धत्वेनानुदयाच्चात्रैव युक्तत्वादिति ।**

**प्रकाशिका** – आद्येति ॥ ''वैश्वानरस्साधारणशब्दविशेषा''दित्यत्र साधारणस्य श्रुतिलिङ्गयोर्निरवकाशत्वादिनाऽग्राविष्ण्वोस्साधारणस्य वैश्वानरशब्दस्य । ''आत्मानं वैश्वानर''मित्यात्मशब्देन विशेषणादित्यात्मश्रुतिरूपस्येत्यर्थः । द्वितीये स्मर्यमाणमनुमानं स्यादित्यत्र । अहं वैश्वानरो भूत्वे''ति स्मृतिसमाख्यारूपस्य स्वपक्षसाधकस्येत्यर्थः । अत्र परैरितिशब्दो यस्मादित्यर्थो व्याख्यातः । स न युक्तः । करणार्थल्युडंतानुमानशब्देनैव तदर्थलाभेनेतिशब्दाभावेऽप्यन्वयसम्भवादतिशयाभावाच्च, हेत्वर्थकत्वस्य व्यर्थत्वादिति भावेन तस्यार्थमाह ॥ अत्रेति ॥ यद्वा भाष्ये ''इतिशब्दस्समाख्याप्रदर्शक'' इत्युक्तम् । ''अनेन इतिस्मर्यमाणमित्यन्वयस्सूचितो भवती''त्युक्तं टीकायाम् । तावता कथमर्थो लब्ध इत्यतस्तद्व्यनक्ति ॥ अत्रेति ॥ आद्यसूत्रे तत्तुसमन्वयादित्यतोऽनुवृत्तस्य तदित्यस्यार्थानुवादो विष्णुरिति । अहंशब्दस्य विष्ण्ववतारभूतकृष्णार्थकत्वाद्विष्णुर्वैश्वानर इति गीतायामित्युक्तम् ॥ तृतीय इति ॥ ''शब्दादिभ्योंतः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयत'' इत्यत्राग्न्यादिशब्दात् होमाधारत्वगार्हपत्याद्यंगकत्वपाचकत्वादिलिङ्गेभ्यः योऽय-मन्तः पुरुष इत्यन्तः प्रतिष्ठानान्न विष्णुरिति शङ्किते अग्न्यादिनामलिङ्गादिमत्त्वेनोपासनोपदेशेन तेषां सावकाशत्वात् ''को न आत्मा किं ब्रह्मे''त्युक्तात्मत्वादेरन्यत्रासम्भवात् ''शीर्ष्णो द्यौस्समवर्तते''त्यादिना पुरुषसूक्तोक्तपुरुषसदृशस्यैवात्र ''मूर्धैव सुतेजा'' इत्यादिनाऽभिधाना-द्विष्णुरेवेति निरवकाशेन सावकाशस्य बाधोपपत्तेरित्युक्तत्वादिति भावः ॥ बाधकेति ॥ यद्यप्यसम्भवादित्याद्यंशेन साधकोक्तिरप्यस्ति । तथापि तदुक्तेः परपक्षे बाधकोक्त्या बाधकनिरासेऽपि व्यापाराद्बाधकोद्धार इत्युक्तम् । अत एव प्रकरणादित्यनुक्त्वाऽसम्भवादि-त्युक्तम् । ''तथा दृष्ट्युपदेशा''दित्यंशस्य गायत्र्यधिकरणोक्तेनापौनरुक्त्यमाह ॥ तथा चेतोर्पणेति ॥ चतुर्थ इति ॥ ''अत एव न देवताभूतं चे''त्यत्र अत एव

निरवकाशात्मशब्दादिहेतोरेव । देवतादिर्नेत्यर्थः । साधकोक्तिबाधकोद्धारयोरनन्तरं परमतनिरासस्यावसरप्राप्तेरिति भावः ।। पञ्चम इति ।। ''साक्षादप्यविरोधं जैमिनि''रित्यत्र ।। षष्ठादिष्विति ।। ''अभिव्यक्तेरित्याश्मरथ्यः । अनुस्मृतेर्बादरिः । सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति । आमनंति चैनमस्मि''न्नित्येतेषु ।। साधारणेति ।। उक्तवक्ष्यमाणसर्वशब्दसाधारणेत्यर्थः । तत्रापि पौर्वापर्यमाक्षिप्य समाधत्ते ।। यद्यपीति ।। पञ्चमादेरत्रानिवेशमाशङ्क्य द्वेधा समाधिमाह ।। न चेति ।। पदादीति ।। पदवर्णस्वरादिसमन्वयादिनिष्ठानां चतुर्मुखाद्युत्तमाधिकारित्वेन तेषां व्याप्तदर्शित्वादिति भावः । तर्हि तृतीयपादांते निवेशः स्यादित्यत आह ।। तथोभयत्रेति ।। अन्येत्विति ।। ''आत्मानं वैश्वानरमुपास्त'' इत्यत्र वैश्वानरः किं जाठराग्निर्भूताग्निर्वा दिव्यदेवतावा जीवात्मावा परमात्मावेति संशये ''अयमग्निर्वैश्वानरो योऽयमन्तःपुरुष'' इति जाठराग्नौ ''विश्वस्मा अग्निं भुवनाय देवा वैश्वानर''मिति बाह्ये भूताग्नौ ''वैश्वानरस्य सुमतौ स्यामे''ति देवतायां प्रयोगाद्वैश्वानरशब्दस्य त्रितयसाधारण्याज्जाठराग्न्यादिरेव वा आत्मशब्दस्य जीवे रूढत्वात्तद्बलाज्जीव एव वेति प्राप्ते ''एतस्यात्मनो वैश्वानरस्य द्यौर्मूर्धैवे''त्यादिना द्युमूर्धत्वादिश्रवणात् ''कोन आत्मा किं ब्रह्मे''ति ब्रह्म शब्दश्रवणात्तयोश्चान्यत्रायोगाद्वैश्वानरशब्दस्य विश्वश्चासौ नरश्च विश्वनरः सर्वात्मकः पुरुष इत्यर्थः । विश्वनर एव वैश्वानर इति योगवृत्त्या ब्रह्मणि संभवादात्मशब्दस्य जीववद्ब्रह्मण्यपि वृत्तेर्वैश्वानरो ब्रह्मेति सिद्धांत इत्याहुः ।

**पाण्डुरङ्गि** – सूत्राक्षरार्थ इति । इदंशब्दवदितिशब्देन पूर्वसूत्रे प्रकृतवैश्वानरविष्णुपरामर्शात् तस्य स्मर्यमाणत्वोक्त्या स्मृतिश्रुत्योरेकार्थत्वप्रदर्शनेन समाख्याप्रदर्शकत्वं भाष्य इतिशब्दस्योक्तमिति भावः ।

## तात्पर्यचन्द्रिका

**अन्येतु ।। अयमग्निर्वैश्वानर इत्यादिप्रयोगाज्जाठरभूताग्निदेवतारूपत्रयसाधारणस्य वैश्वानरशब्दस्य जीवेश्वरसाधारणस्यात्मशब्दस्य च ''मूर्धैव सुतेजा'' इति द्युमूर्धत्वादिना विशेषणादित्याद्यसूत्रार्थ इत्याहुः । तन्न । ''सोऽयमात्मा चतुष्पात् स्थूलभुग्वैश्वानर'' इत्यात्मन्यपि वैश्वानरशब्ददर्शनेन त्रितयसाधारण्योक्त्ययोगात् । जाठराग्नेरपि भूतजातित्वेन पृथगुक्त्ययोगाच्च । भाष्योक्तश्रुत्यादिभिरात्मशब्दस्य**

ब्रह्मण्येव मुख्यतया जीवसाधारण्याभावाच्च । स्वीकृतं च त्वयापि ''द्युभ्वाद्यायतन''मित्यत्रात्मशब्दस्य ब्रह्मासाधारण्यम् । अन्यथा ''तमेवैकं जानथ आत्मान''मित्यात्मशब्दस्य जीवशब्दत्वेन सूत्रेऽतच्छब्दादिति हेतुना जीवनिरासस्य स्वशब्दादित्यनेनोक्तात्मशब्देन ब्रह्मत्वसाधनस्य चायोगात् ।

केचित्तु । जाठरभूताग्निदेवतेश्वररूपचतुष्टयसाधारणस्य वैश्वानरशब्दस्य मुमुक्षुभिरौपमन्यवप्रभृतिभिर्जिज्ञास्यमानत्वादिभिर्ब्रह्मलिङ्गैर्विशेषणादित्यर्थ इत्याहुः । तन्न । जाठरस्य पृथगुक्त्ययोगस्योक्तत्वात् । ''आत्मानं वैश्वानर''मिति साक्षाद्वैश्वानरविशेषणात्मश्रुतिग्रहणसम्भवे प्राकरणिकलिङ्गरूपविशेषेण ग्रहणायोगाच्च ॥ यच्चोक्तमन्यैः ॥ ''यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशश्श्रोत्र''मित्यादिनेश्वरे स्मर्यमाणं त्रैलोक्यात्मकं रूपं मूलभूतां श्रुतिमनुमापयत्समानविषयां ''मूर्धैव सुतेजा'' इत्यादिवैश्वानरविद्यामनुमापयद्वैश्वानरत्वे लिङ्गमिति द्वितीयसूत्रार्थ इति । तन्न । ''चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्र''मित्यादिश्रुत्यंतरस्याप्युक्तस्मृतिमूलत्वसम्भवेन वैश्वानरविद्यायास्तन्मूलत्वासिद्धेः । ''अहं वैश्वानर'' इति साक्षादीश्वरस्य वैश्वानरत्वबोधकस्मृतौ सत्यां बकबन्धप्रयासायोगाच्च ।

केचित्तु । द्युप्रभृतिपृथिव्यंतं रूपं श्रुतिस्मृतिष्वीश्वरेऽभिज्ञातमिह प्रत्यभिज्ञायमानं वैश्वानरस्येश्वरत्वेऽनुमानं लिङ्गमित्यर्थ इत्याहुः । तन्न । स्मर्यमाणशब्दस्य प्रत्यभिज्ञायमानार्थे स्वारस्यभङ्गात् । ''अहं वैश्वानर'' इत्यादिषूक्तस्येह ''आत्मानं वैश्वानर'' मिति श्रुतिप्रत्यभिज्ञासम्भवे लिङ्गप्रत्यभिज्ञायोगाच्च । यच्चोक्तमन्यैः । ''मनो ब्रह्मेत्युपासीते''त्यादिवज्जाठरे वैश्वानर ईश्वरदृष्ट्युपदेशोवा ''मनोमयः प्राणशरीर'' इत्यादिवद्वैश्वानरोपाधेरीश्वरस्य द्रष्टव्यत्वेनोपदेशोवा तृतीयसूत्रस्थतथादृष्ट्युपदेशशब्दार्थ इति । तत्र न तावदाद्यः । वैश्वानरस्य मनोवत्प्रतीकत्वे मनःशब्दस्येव वैश्वानरशब्दस्यापि ब्रह्मणि समन्वयोक्त्ययोगात् । वैश्वानरज्ञानेन सर्वपाप्मप्रदाहश्रवणायोगाच्च । अत एव न द्वितीयः । न हि सोपाधिकस्योपासनेन ज्ञानेन वा सर्वपाप्मदाहः ।

यच्चोक्तं पुरुषविधशब्देन द्युमूर्धत्वादिकमुच्यत इति । तन्न । त्वन्मते विशेषादित्यत्रापि द्युमूर्धत्वादेरुक्तत्वेन पुनरुक्तेः । यच्चोक्तं विनैव जाठराग्नेः प्रतीकोपाधिकल्पनाभ्यां साक्षात्केवलस्य ब्रह्मण उपासनास्वीकारेऽप्यविरोधः । केवलेऽप्यग्निवैश्वानरशब्दावग्रणीत्वादिगुणयोगेन वर्तेते इति । तन्न । साक्षाच्छब्दस्य कैवल्यार्थतायाः क्लिष्टत्वात् । अतीतानामाकाशादिशब्दानामागामिनामाक्षरादिशब्दानामपि यौगिकत्वापत्त्याऽस्माकं मत इव समन्वयाध्यायस्य तत्तच्छब्दप्रवृत्तिनिमित्तगुणपूर्त्यर्थत्वापाताच्च ।

यच्चोक्तं ब्रह्मपक्षे प्रादेशमात्रश्रुतिरयुक्तेति शङ्कानिरासार्थमभिव्यक्तेरित्यादिसूत्राणीति । तन्न । ''अर्भकौकस्त्वान्नेति चे''दित्यनेन अत्रापि ''तथादृष्ट्युपदेशा'' दित्यनेन चास्याः परिहृतत्वादिति दिक् । अत्रापि परपक्षेऽपि वैश्वानरस्य जीवत्वं निषिध्य ब्रह्मेत्युक्तेस्तद्भेदार्थतैव ॥

केचित्तु । कथमपरिच्छिन्नस्य प्रादेशमात्रत्वमिति शङ्कानिरासकमभिव्यक्तेरिति सूत्रम् । उपासनार्थं प्रादेशमात्रत्वेनाभिव्यक्तेरिति च तस्यार्थः । मूर्धप्रभृत्यवयवैः पुरुषविधत्वोक्तिः किमर्थेति शङ्कानिरासकमनुस्मृतेरिति सूत्रम् । पुरुषविधत्वेनानुस्मृत्यर्थं तदुक्तिरिति च तस्यार्थः । कथमुरःप्रभृतीनां वेद्यादित्वोक्तिरिति शङ्कानिरासकं सम्पत्तेरिति सूत्रम् । प्राणाहुतेरग्निहोत्रत्वसम्पादनायोरःप्रभृतीनां वेद्यादित्वोक्तिरिति च तस्यार्थ इत्याहुः । तत्राभिव्यक्त्यादिसूत्राणां भिन्नविषयत्वादाश्मरथ्यादिपदसूचितविकल्पो न स्यात् । प्रतिसूत्रं साध्याध्याहारश्च स्यात् ॥

टीकाक्षरार्थस्तु ॥ गतिसाधनत्वादरतिः पाद इति ॥ लोके गमनेनारतिदर्शनाद्रतिविरुद्धगतिसाधनत्वात्पादोऽरतिशब्दार्थ इत्यर्थः ॥ प्रागुक्तैवानुपपत्तिरिति ॥ वैदिकस्याग्निसूक्तादिव्यवहारस्याग्न्यादि- प्रतिपादकत्वादिनिमित्तत्वेन मुख्यत्वांगीकारे सर्वनामेत्यादिश्रुतिविरोधादिरूपप्रागुक्तानुपपत्तिरेव व्यवहारस्याभिव्यक्त्यादिनिमित्तकत्वेनोपचरितत्वाङ्गीकारे हेतुरित्यर्थः । भाष्योदाहृतश्रुतावरमित्यस्य सम्यगित्यर्थ इति तत्वप्रदीप एवोक्तमिति ॥ छ ॥ वैश्वानराधिकरणम् ॥ ७ ॥

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना विरचितायां श्रीमद्भाष्यटीकाया विवृतौ तात्पर्यचन्द्रिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥१,२॥

**प्रकाशिका** – तत्र सूत्रार्थनिरासेनैतन्निरस्तमिति भावेन तमनूद्य निराह ।। अयमिति ।। जाठरेति ।। अन्यथा अत एव न देवताभूतं जाठरश्चेति निर्देशः स्यादिति भावः । जीवकोटेरप्यनुत्थानमाह ।। भाष्योक्तेति ।। ''अयमात्मा ब्रह्म अनात्तत्वादनात्मान ऊनत्वाद्गुणराशित'' इत्यादिभिरित्यर्थः । स्वीकृतत्वमेव व्युत्थितं प्रति विपक्षे बाधकोक्त्याऽऽह ।। अन्यथेति ।। केचित्त्विति ।। वैश्वानरः किं परमात्मेति शक्यनिर्णय उत नेति संशये जीवपरसाधारणात्मशब्दसत्त्वेऽप्यात्मशब्दस्य ''वैश्वानरमात्मान'' मिति जीवेऽप्रसिद्धवैश्वानर-शब्दविशेषितत्वेन जीवविषयत्वशङ्कानुदयात् जाठरभूतदेवतासु प्रागुक्तरीत्या प्रयोगदर्शनात् परमात्मनि च ''तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्य''दिति प्रयोगदर्शनाद्वैश्वानरशब्दस्य जाठरादिचतुष्टयसाधारण्यात् उपक्रमगतब्रह्मात्मशब्दयोर्मिथः प्रतिबद्धत्वेनानिर्धारकत्वादन्नादन-रूपफलस्य च सर्वत्रोपपन्नत्वादशक्यनिर्णय इति प्राप्ते ''कोन आत्मा किं ब्रह्मे''ति सर्वेषां जीवानामात्मभूतं ब्रह्म किमिति प्रश्नकरणादुत्तरे च ''आत्मानं वैश्वानर''मिति ब्रह्मशब्दस्थाने सर्वत्र वैश्वानरशब्दप्रयोगाच्चायं वैश्वानरः परमात्मेति निर्णेतुं शक्यत एव । चतुष्टयसाधारणस्यापि वैश्वानरशब्दस्यास्मिन् प्रकरणे मुमुक्षुभिरौपमन्यवादिभिर्जिज्ञास्यत्वसर्वात्मत्वादिभिर्ब्रह्मधर्मैर्वि-शेष्यमाणत्वादित्यर्थ इत्याहुरित्यर्थः ।। आत्मश्रुतीति ।। तस्याब्रह्मासाधारण्योपपादनस्य त्वन्मतेऽपि तुल्यत्वादिति भावः । मतद्वयेऽपि द्वितीयादिसूत्रार्थान् क्रमेणानूद्य निराह ।। यच्चोक्तमन्यैरिति ।। इत्यादिनेति ।।

द्यौर्मूर्धानं यस्य विप्रा वदन्ति खं चैव नाभिं चन्द्रसूर्यौ च नेत्रे ।
दिशश्श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिंत्यात्मा सर्वभूतप्रणेता ।।

इत्यादिरादिपदार्थः ।। मूलभूतामिति ।। स्मृतीनां श्रुतिमूलत्वस्य पूर्वतन्त्रे स्मृतिनये व्यवस्थापनात्तुल्यार्थाया एव मूलत्वादत्र च द्युप्रभृतीनां वैश्वानरस्य मूर्धाद्यवयवत्वेन ''मूर्धैव सुतेजा'' इत्यादिनोच्यमानत्वेन तुल्यार्थत्वादेतद्वाक्यमनुमापयति । स्मृतिश्च ब्रह्मविषयेति मूलभूतश्रुतेरपि तथात्वं गमयिष्यतीत्यर्थः ।। श्रुत्यंतरस्यापीति ।। स्मृतिवचनं हि स्वमूलत्वेन श्रुतिं कल्पयति । न तु वैश्वानरविद्यामेव कल्पयितुं शक्नोति । ''अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथ्वी''त्याथर्वण-

वाक्यमूलत्वेनापि सम्भवेन कल्पकस्यान्यथासिद्धत्वादित्यर्थः । ननु श्रुतावग्निर्मूर्धेति श्रूयते । स्मृतौ च द्यौरिति । यथा च कथं तन्मूलत्वमिति चेन्न । ''असौ वाव लोकोऽग्निर्गौतमे''ति श्रुतेरग्नेर्द्युशब्दपर्यायत्वादिति तात्पर्यात् । न केवलं तेन वैश्वानरविद्याया ब्रह्मविषयत्वासिद्धिः । गतिसम्भवे क्लिष्टकल्पनायोगश्चेत्याह ॥ अहमिति ।

केचित्त्विति ॥ सूत्रे इतिशब्दः प्रकारवचनः । अनुमानशब्दश्श्रुतिलिङ्गवाक्येति श्रुत्यादि-सहपठिता साधारणधर्मरूपलिङ्गपरः । स्मर्यमाणशब्दः प्रत्यभिज्ञापरः । तथाच ''अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ द्यौर्मूर्धानं यस्य विप्रा वदन्ती''त्यादिश्रुतिस्मृतिषु इति इत्थंभूतं द्व्यादिरूपं ईश्वरेऽवगतं इह वैश्वानरविद्यायां ''मूर्धैवसुतेजा'' इत्यादिना स्मर्यमाणं प्रत्यभिज्ञायमानं लिङ्गं स्यात् । श्रुत्यादाववगतं द्युप्रभृत्यात्मकत्वरूपं लक्षणं लिङ्गमिह प्रत्यभिज्ञायत इत्यर्थः । अनुस्मृतेश्चेत्यत्रानुस्मृतिशब्दस्य प्रत्यभिज्ञापरत्वे सूत्रकारैः प्रयुक्तत्वा''दिति श्रुतप्रकाशोक्तेः कथमेवं दूषणमित्यतस्स्वारस्येत्युक्तम् । उक्तरीत्या स्वारस्यसम्भवे त्यागायोगात् । सूत्रकारोक्तिस्त्वनुशब्दबलाद्वा स्वारस्यासम्भवाद्वा प्रत्यभिज्ञार्थत्वाशयेति युक्तमिति भावः ॥ अहमिति ॥ श्रुत्यादाववगतं द्युप्रभृत्यवयवरूपं लिङ्गमिह प्रत्यभिज्ञायत इत्युक्तिवत् ''अहं वैश्वानरो भूत्वे''ति स्मृतौ विष्णाववगतवैश्वानरश्रुतिरिह प्रत्यभिज्ञायत इत्यपि वक्तुं शक्यत्वेन लिङ्गाद्बलवच्छ्रुतिप्रत्यभिज्ञानोक्तिरेव ज्यायसीति तत्त्यागायोगात् । तथाच स्मर्यमाणा श्रुतिरित्येव सूत्रणं स्यात् । लघु चैवं सति सूत्रं स्यादित्यर्थः । किं चानुमानशब्दस्य लिङ्गपरत्वे स्मर्यमाणं लिङ्गमित्येव निर्देशस्स्यात् । लाघवादित्यपि ध्येयम् । शब्दादिभ्य इति सूत्रे शङ्काभागार्थस्याविरोधात् सिद्धांतांशार्थमनूद्य निराह ॥ यच्चेति ॥ अत एवेत्याद्युक्तं व्यनक्ति ॥ नहीति ॥ सर्वपाप्मेति ॥ ''तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयंत'' इत्युक्तब्रह्मज्ञानफलस्य प्रतीकज्ञानादसिद्धेरिति भावः ॥ पुरुषविधशब्देनेति ॥ यद्यपि परभाष्ये पुरुषमपि चैनमिति सूत्रपाठ उक्तः । तथापि स पाठोऽप्रामाणिक इति भावेनायमेव पाठोऽनूदितः । ये पुरुषविधमिति पठंति तेषां मते द्युमूर्धत्वादिपृथिवीप्रतिष्ठितत्वांतं यत्पुरुषविधत्वं तद्ब्रह्मत इत्युक्तेरिति भावः ॥ विशेषादितीति ॥ आद्यसूत्रेऽपीत्यर्थः । अत एवेति सूत्रार्थो नातीवविरुद्ध इत्युपेक्ष्य साक्षादपीति सूत्रार्थं निराह ॥ यच्चोक्तमिति ॥ पूर्वं

जाठराग्निप्रतीको जाठराग्न्युपाधिकोवा परमेश्वर उपास्य इत्युक्तम् । इदानीं विनैव प्रतीकोपाधिकल्पनाभ्यां केवलस्यैवाग्निवैश्वानरशब्दवाच्यत्वमुच्यत इत्युक्तमित्यर्थः ॥ क्लिष्टत्वादिति ॥ अव्यवधानार्थत्वात्तस्येत्यर्थः ॥ गुणपूर्तीति ॥ तथाचैतत् सूत्रं त्वन्मतप्रतिकूलमिति भावः । किंच तथादृष्ट्युपदेशादित्यनेनैव शङ्कायाः परिहृतत्वात् साक्षात्तत्प्रतिपादकत्वोक्तावतिशयाभावात् प्रतिकूलत्वाच्च न वाच्यमेवैतदित्यपि ध्येयम् ॥ यच्चोक्तमिति ॥ यस्त्वेतं प्रादेशमात्रमिति श्रुतप्रादेशमात्रश्रुतिः कथमित्याशङ्कायाम-तिमात्रस्यापीश्वरस्य प्रादेशमात्रपरिमाणहृदयादिस्थानेषूपासकानामभिव्यज्यमानत्वाद्वा हृदया-दावनुस्मर्तव्यत्वाद्वा ''प्रादेशमात्रमिव ह वै देवाः संविदिता अभिसंपन्नास्स्म'' इति श्रुत्या प्रादेशमात्रत्वसम्पत्त्यावा प्रादेशमात्रत्वं युक्तमित्यर्थः ।

हृद्यपेक्षयेत्यग्रेतनेनापि परिहृतत्वं ध्येयमिति भावेनाह ॥ इतिदिगिति ॥ यद्वा केषांचिन्मते शब्दादिभ्य इत्यादिसूत्रार्थदूषणं कुतो न कृतमित्यत आह ॥ इतिदिगिति ॥ तथाहि । तत्सूत्रमग्न्यादिशब्दादिना जाठराग्नेर्वैश्वानरत्वशङ्कानिरासकमित्युक्तमयुक्तम् । जाठरस्य भूतत्वेन पृथक्शङ्कायोगात् । अत एवेति सूत्रे तन्निरासादवश्यवक्तव्यपरसाधकसावकाशत्वोक्त्या बाधकोद्धारपरत्व सम्भवेऽन्यथावर्णनायोगाच्च । पुरुषमपीति पाठस्यासांप्रदायिकत्वात् । अग्निशब्दस्याग्रनयनादिना भगवद्वाचित्वं वक्तुं साक्षादपीति सूत्रमित्यपि न । शब्दमात्रस्य विष्णुवाचित्वेऽन्यत्र व्यवहारविरोधरूपबाधकोद्धारत्वसम्भवेऽन्यथोक्त्ययोगादित्यादि ज्ञेयमिति भावः । अत्रापि एतदधिकरणेऽपीत्यर्थः ॥ अपरिच्छिन्नस्येति ॥ अभिविमानपदोक्तस्येत्यर्थः । अभिव्यक्तेः उपासकाभिव्यक्त्यर्थम् । तद्बुद्धिस्थतयेति यावत् । द्युप्रभृतिप्रदेशसम्बन्धिन्यामात्रया परिच्छिन्नत्वरूपं प्रादेशमात्रत्वमित्याश्मरथ्यो मन्यत इत्यर्थः । अनुस्मृत्यर्थं उपासनार्थम् ॥ विकल्प इति ॥ अस्मन्मतरीत्या सूक्तव्यवस्थारूपैकार्थ एव नानानिमित्तोक्त्या ''लोपश्शाक-ल्यस्ये''त्यादाविव मुनिग्रहणसूचितविकल्पो युज्यते । नान्यथेत्यर्थः ॥ साध्येति ॥ अभिव्यक्तेरित्यत्र प्रादेशमात्रत्वमिति अनुस्मृतेरित्यत्र पुरुषविधत्वमिति संपत्तेरित्यत्रोरःप्रभृतीनां वेदित्वाद्युपदेश इत्यध्याहार इत्यर्थः । यद्यप्यत्र भाष्यदिशाऽभिव्यक्तेर्निमित्तादग्न्यादिसूक्तनियम इत्याश्मरथ्य इत्यर्थप्रतीत्या सिद्धांतेऽप्यध्याहारस्साध्यस्याविशिष्ट इत्यतः प्रतिसूत्रमित्युक्तम् ।

अत एव भाष्ये प्रतिसूत्रमेतदेव साध्यमुक्तम् । तथा चैकत्राध्याहृतमेवानुवर्तिष्यते सर्वत्रेति भावः । यद्वा अभिव्यक्तेस्साक्षादप्यविरोध इत्याश्मरथ्य इत्यादिरूपेण प्रतिसूत्रमन्वयः । साक्षादपि अनन्ययोगेन मुख्यवृत्त्यैव ब्रह्मणस्सर्वसूक्तप्रतिपाद्यत्वेपि । अग्न्यादिसूक्तव्यवस्थाया अविरोध इत्याश्मरथ्यादिर्मन्यते । अभिव्यक्त्यादेर्निमित्तादित्येवंरूपेणार्थोपपत्तेरनुवृत्तस्य पर्यवसितोक्तिर्भाष्ये सूक्तनियम इति । अतोऽस्माकं न क्वाप्यध्याहारः तव तु प्रतिसूत्रमिति भावः । यत्तूक्तरीत्या वैश्वानरशब्दस्य जाठरादिषु चतुर्षु साधारणस्य शिवासाधारण-ब्रह्मात्मादिशब्दैर्विशेषणाच्छिव एव वैश्वानर इति तदप्येतेन निरस्तम् । जाठरस्य पार्थक्यायोगादेरुक्तत्वात् । ब्रह्मात्मादिशब्दस्य विष्ण्वेकनिष्ठताया भाष्यादौ बहुधा प्रतिपादनात् । ''अहं वैश्वानर'' इति स्मृतिविरोधात् । पुरुषसूक्तविरोधाच्च । पुरुषसूक्तवैष्णव-तायाश्च भाष्ये स्पष्टत्वात् । सूत्रार्थनिरासप्रकारस्तु केषांचिन्मत इव ध्येयः । अनतिभिन्नार्थत्वात्सूत्राणामिति । शब्दादिभ्य इति सूत्रे ''मूर्धानं दिवो अरतिं पृथिव्या'' इत्यस्यामृचि गतिसाधनत्वादरतिः पादः पृथिव्याः कारणमिति व्याख्यातम् । तद्व्यनक्ति ॥ गतीति ॥ अरतिशब्देन गतिरुच्यते । पादस्य तत्साधनत्वात् कार्यगमनेन तत्साधनं पादो लक्ष्यते । अरतिशब्दार्थो गतिः कथमित्यतोऽवयवार्थेनेत्याह ॥ लोक इति ॥ नञो विरुद्धार्थत्वाद्रतिविरुद्धाऽरतिरिति गतिरेवोच्यत इति । तत्वप्रदीपे तु न रतिर्येनेति सोऽरतिः पाद इत्यर्थ इत्युक्तम् । सम्पत्तेरिति सूत्रव्याख्यायां ''अत्र व्यवहारस्योपचरितत्वाङ्गीकारे प्रागुक्तैवानुपपत्ति''रित्येतद्दुर्गमत्वाद्व्यनक्ति ॥ वैदिकस्येति ॥ ''विश्वं हरिमारादवरमुपास्त'' इति श्रुतावरमित्यस्यार्थाप्रतीतेराह ॥ भाष्येति ॥ एवेति टीकाकारानुक्तेर्निमित्तमेतदिति सूचितम् । शिष्टमुपन्यासमुखेन विशदीकृतमिति भावः । पेटिकासङ्गतिस्तु प्रागेवोक्तेति ॥ वैश्वानराधिकरणम् ॥ ७ ॥

इति श्रीमत्सर्वतन्त्रस्वतन्त्रसुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृते
चन्द्रिकाप्रकाशे प्रथमाध्यायस्य द्वितीयः पादः ॥

**पाण्डुरङ्गि** – जाठराग्नेरपि भूतजातित्वेनेति ॥ भूतताविशेषाद्ब्रौमदिव्यादिवत् जाठरस्याप्युपादानं कार्यम् । जाठरत्वरूपावांतरोपाधिविवक्षया तस्य पृथगुपादाने

भौमादीनामपि भौमत्वादिधर्मोपाधिना पृथग्ग्रहणापत्त्याऽर्धजरतीयानुपपत्तेरिति भावः ॥ उक्तत्वादिति ॥ जाठराग्नेरपि भूतजातित्वेन पृथगुत्त्ययोगादित्यनेनोक्तत्वादित्यर्थः । वैश्वानरोपाधेरिति बहूव्रीहिः ॥ गतिसाधनत्वादरतिरिति ॥ रतिशब्दस्य रमणे नञश्च विरोधे प्रसिद्धत्वात् क्लृप्तप्रसिद्धिबललब्धलक्षणाऽपि शक्तितुल्येति भावः । अत्र टीकायामासन्नि-त्यस्यास्यतयेत्युक्तिः पद्दन्नित्यादिनाऽऽस्यशब्दस्यासन्नादेशविधानादासन्निति सुपां सुलुगिति विभक्तिलोपविधानाच्चेति ज्ञातव्यम् ॥ प्रागुक्तैवेति ॥ विष्णुसूक्तमित्यादौ सर्वत्र देवतासम्बन्धेनैव सूक्तव्यवहारात् प्रतिपाद्यप्रतिपादकसम्बन्ध एव मुख्यः सूक्तादिव्यवहारप्रयोजक इत्यभिप्रेत्याग्न्यादिसूक्तेषु मुख्यप्रयोजकस्य बाधादुपचारत्वं सूक्तानामुक्तम् । भावबोधे तु षष्ठ्यर्थस्य सम्बन्धस्यैवाग्नेः सूक्तमित्यादौ निमित्तत्वात् । एकशतं षष्ठ्यर्थ इति महाभाष्योक्त-रीत्या सर्वेषामविशेषाद्देवदत्तस्य पुत्रः देवदत्तस्य पौत्रः देवदत्तस्य नप्त्रेत्यादाविव परंपरासम्बन्धस्यापि मुख्यत्वमभिप्रेत्य सूक्तानां मुख्यार्थतोक्तेति ज्ञेयम् ॥ वैश्वानराधिकरणम् ॥ ७ ॥

इति श्रीमत्तात्पर्यचन्द्रिकावाक्यार्थविवृतौ श्रीमद्विद्याधीशतीर्थपूज्यपादानां शिष्येण केशवभट्टारकेण विरचितायां प्रथमाध्यायस्य द्वितीयपादः समाप्तः ॥ २ ॥

# प्रथमाध्यायस्य तृतीयः पादः

## द्युभ्वाद्यधिकरणम्

॥ ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥ अत्र -

माभूदन्यैकगतता ब्रह्मैकगततापि वा ।
किं तूभयगतत्वं स्यादिति शङ्का निरस्यते ॥ १ ॥

पादद्वयापादितोभयप्रसिद्धीनां स्वतःसिद्धोभयप्रसिद्धीनां चोभयपरत्वमेव । न तु ब्रह्मैकपरतेति शङ्काऽत्र निरस्यते । स्पष्टयिष्यते चैतत् ''कम्पना''दित्यत्र । तदुक्त-मनुव्याख्याने -

आहोभयगतत्वं च स्यादतो लिङ्गशब्दयोः ।
इति संशयनुत्त्यर्थमुभयत्र प्रतीतितः ।
शब्दानां वर्तमानानां सलिङ्गानां विशेषतः ।
समन्वयो हरावेव यन्नैवान्यत्र मुख्यतः ॥ इति ।

अत्रानुव्याख्याने -

लिङ्गं साधारणं शब्दौ स्थानं लिङ्गमनुग्रहः ।
पुनःशब्दा लिङ्गशब्दौ विचार्या द्विस्थिता इह ॥

इत्येतत्पादीयाधिकरणार्थः सङ्गृहीतः । अत्र द्युभ्वादीत्यत्र सर्वाधारत्वलिङ्गं भूमा-क्षराधिकरणयोर्भूमाक्षरनामनी ईक्षतीत्यत्र सृष्टिस्थानं दहर इत्यत्र हृत्पद्मस्थत्वलिङ्गं अनुकृतेरित्यत्रानुकूल्येन गृह्यमाणत्वलिङ्गं पुनरपिशब्दात् कम्पनात् ज्योतिः आकाशः इति चतुर्ष्वधिकरणेषु क्रमेणेशानवज्रज्योतिराकाशशब्दाः सुषुप्तीत्यत्र स्वप्नादिद्रष्टृत्व-

लिङ्गं पत्यादीत्यत्र ब्राह्मणशब्दश्च विचार्यत इत्यर्थः । अत्र च लिङ्गवचनविपरिणामेन सर्वविशेषणेन साधारणशब्देन सर्वेषामुभयत्र प्रसिद्धिः । द्विस्थिता इत्यनेन तु पूर्वोत्तरपक्षहेतुमत्तोक्तेति भेदः । देवताधिकरणापशूद्राधिकरणयोस्तु समन्वयाध्याये प्रासङ्गिकत्वात्तदर्थो न सङ्गृहीतः । तदुक्तमनुव्याख्याने ''अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तिता''विति ।

नन्वन्यत्रप्रसिद्धशरीरित्वसाहित्यादन्तर्यामित्वमिव द्युभ्वाद्यायतनत्वमप्यन्यत्र-प्रसिद्धजायमानत्वादिसाहित्यादन्यत्रप्रसिद्धं युक्तम् । न च वाच्यं लिङ्गपादीयन्यायै-र्जायमानत्वलिङ्गस्यापि विष्णौ सम्भवेनान्यत्रप्रसिद्धिर्नेति । तथात्वे तेन पूर्वपक्षोक्त्ययोगादिति चेदुच्यते । अन्यत्र प्रसिद्धसाहचर्येण परतोऽन्यत्रप्रसिद्धत्वव-न्न्यायविवरणोदाहृताभ्यः ''रुद्रो वै लोकायतनम् । लोकाश्च लोकिनश्च विष्णावेवो-ताश्चे''त्यादिसमाख्याश्रुतिभ्य उभयत्र प्रसिद्धसाहचर्यं विना स्वत उभयत्र प्रसिद्धत्वस्यापि सत्त्वात्तेन रूपेण पादसङ्गतिः । अन्यथा रूपद्वयवतः क्वापि विचारो न स्यात् । अथवा अन्यत्रप्रसिद्धेरन्यत्रप्रसिद्धान्यसाहित्यसापेक्षत्वादुभयत्र प्रसिद्धेस्तु तन्निरपेक्षत्वान्निरपेक्षादरात्पादसङ्गतिः ।

**प्रकाशिका** – ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥ अस्य पादस्यैतदध्यायांत-र्भावसङ्गतेस्समन्वयपरत्वादेव सिद्धेः पूर्वपादद्वयेन सङ्गतिं वक्तुं सर्वनामलिङ्गानां पादद्वयेनैव विष्णौ समन्वितत्वान्नामलिङ्गेभ्योऽन्यस्याभावाद्व्यर्थोऽयं पाद इत्यतः पादफलमाह ॥ अत्रेति ॥ अस्य इति शङ्का निरस्यत इति श्लोकगतेनान्वयः । पूर्वं द्विपाद्यां लोकतोऽन्यत्र प्रसिद्धानामशेष-नाम्नामशेषलिङ्गानामन्यैकगतत्वमाशङ्क्य न्यायैर्ब्रह्मगतत्वमुक्तम् । एवं तर्हि लोकप्रसिद्धि-न्याययोरुभयोरनुग्रहायोभयत्र वृत्तिरस्त्विति शङ्का पादद्वयानंतरमेवोदेतीति साऽत्र पादे निरस्यते । तथाच श्रोत्राकांक्षिततैव सङ्गतिरिति भावः । केषामित्याकाङ्क्षां पूरयन्श्लोकं व्याचष्टे ॥ पादद्वयेति ॥ नामलिङ्गात्मकशब्दानामिति शेषः । पादद्वयोक्तन्यायैरापादितोभय-प्रसिद्धिकानामित्यर्थः । यद्यपि प्रागुक्तन्यायैर्ब्रह्मण्येव प्रसिद्धिस्सम्पाद्यते । नत्वन्यत्रापि । अन्यत्र तु सा लोकत एव । तथापि लोकतोऽन्यत्रप्रसिद्धौ सत्यां यत्नेन ब्रह्मणि तस्यामुक्तायामुभयत्रैव साऽऽपादिता भवतीति भावेनोभयेत्युक्तम् ।

एतेन प्रागेवान्यगतत्वनिरासस्य ''नेतरोऽनुपपत्तेः । अनुपपत्तेस्तु न शारीरः । अनवस्थितेरसम्भवाच्च नेतरः । न च स्मार्तमतद्धर्माभिलापा''दित्यादिना कृतत्वान्नैतच्छंकावकाश इति निरस्तम् । नेतर इत्यादिना शब्दानामन्यत्र तात्पर्याभावमात्रोक्तावपि शक्तेरनिरासेनोभयत्र शक्तिस्स्यादिति वा येषामुभयगतत्वेऽनुपपत्त्यादेस्स्फुटप्रतिभासस्तदन्येषां पादद्वयापादितोभयप्रसिद्धिकानामुभयपरत्वमेवेति वा शङ्कोदयादिति तृतीये सुधायामेव व्यक्तत्वादिति भावः । न केवलं त एव पुनरन्येपीत्याह ॥ स्वत इति ॥ श्रुत्यादिसाम्येन वा प्रवृत्तिनिमित्तादिसाम्येन वेत्यर्थः । सर्वत्रेति नयोक्तदिशा पूर्वं शब्दानां ब्रह्मणि तात्पर्यमेवावधारितं न तु शक्तिरपीति पक्षमुपेत्योक्तमुभयपरत्वमेव न तु ब्रह्मैकपरतेति । एतेन ब्रह्मपरत्वस्य पूर्वन्यायेनैव सिद्धेः किमनेन पादेनेति शङ्का प्रत्युक्ता । ब्रह्मपरतामात्रसिद्धावपि ''तत्तुसमन्वया''दित्युक्तावधारणानुपपत्तिशङ्कायां तत्समर्थनार्थत्वादयं पादस्सफल इति तात्पर्यात् । एतेन ''हरौ तदितरत्र च श्रुत्यादिप्रसिद्धनामलिङ्गात्मकशब्दानां विष्ण्वेकवाचित्वं प्रबलहेतुभिः प्रतिपादयत्यस्मिन्पाद'' इति टीकाफलोक्तिमुखेन विवृता । तत्र वाचित्वोक्तावपीह परत्वोक्तिस्तदेकवाचित्वतदेकपरत्वयोर्द्वयोरप्याक्षेपायेत्याहुः । आपादितोभयप्रसिद्धिकाः के शब्दाः कथं च सा तेषां पूर्वोक्तन्यायलोकप्रयोगाभ्यामुभयप्रसिद्धिकत्वे पूर्वत्रापि प्रतिनयमेवं सुवचत्वाद्ब्रह्मलिङ्गादिरूपन्यायस्य लोकप्रसिद्धेश्च प्रत्युदाहरणं भावादित्यत आह ॥ स्पष्टयिष्यतेचेति ॥ भाष्येऽस्फुटत्वादाह ॥ तदुक्तमिति ॥ उभयगतत्वशङ्का निरस्यतेऽत्रेत्येतत्तृतीयाध्यायस्य तृतीयपाद उक्तमित्यर्थः । आहेत्यस्य हरावेवेत्यनन्तरमध्याहृतेनेतिशब्देनेत्याहेति वा ब्रह्मण्येव समन्वयमिति पूर्वश्लोकस्थेन वाऽन्वयः । अत्र श्लोकेतु ''इत्याहैवं च शब्दाना''मित्युपरितनानुव्याख्यानस्थमित्याहेति पदमाकृष्यान्वयो ज्ञेयः । अत इत्यस्यान्यत्रप्रसिद्धानामशेषनामलिङ्गात्मकशब्दानां द्विपाद्या भगवत्परत्वसमर्थनाद्धेतोरित्यर्थः । लोकतोऽन्यत्र प्रसिद्धेश्चोभयान्यथानुपपत्त्योभयगतत्वं स्यादिति संशयनिवृत्त्यर्थमिति सुधोक्तोर्थ उपलक्षणम् । किन्तु श्रुत्यन्तरसाधारण्यप्रवृत्तिनिमित्तादिसाधारण्यादित इत्यप्यतश्शब्दार्थ इति भावः । अन्यथा उक्तेऽर्थे सर्वत्र नायं संवादस्स्यादिति ज्ञेयम् । कथमियं शङ्काऽत्र परिहृतेत्यत उक्तमुभयत्रेति । हरौ तदन्यत्र च प्रतीतितः पूर्वोक्तन्यायलोकप्रसिद्धिभ्यां वा श्रुत्यन्तरादिसाधारण्यबलेन व्रोत्पन्नसाधारण्यप्रतीतितो वर्तमानानां न तु वस्तुत उभयत्र प्रवर्तमानानामित्यर्थः । सलिङ्गानां शब्दानां नाम्नां लिङ्गानां च । हरावेव विशेषतः परममुख्यवृत्त्या

तात्पर्येण च । समन्वय इत्याहेत्यन्वय इति प्रागवोचाम । कुत इत्यत उक्तं यदिति । यद्यस्मात् । वर्तत इति शेषः । ''शब्दालिङ्गानिचे''त्यग्रेतनेनान्वयः । एतेन ''तत्र चान्यत्र चे''त्यादि-भाष्यादौ ''आहोभयगतत्वं चे''त्यादि त्रिपादी संयोज्य व्याख्येयेति सूचितम् ।

एवं पादसङ्गतिमुक्त्वैतत्पादीयाधिकरणोपाधीननुव्याख्यानोक्तानाह ॥ अत्रेति ॥ पाद इत्यर्थः । ''एतच्च न्यायविवरणे स्वयमेवाचार्येण व्याख्यातमिति तत्रैवावगन्तव्य''मिति सुधायामुक्तत्वान्न्यायविवरणरीत्या स्वयं व्याचष्टे ॥ अत्रेत्यादिना ॥ श्लोकोक्ताधिकरणार्थेषु विवेकः प्रदश्र्यत इत्यर्थः ॥ लिङ्गमिति ॥ यद्यप्यत्र लिङ्गानि द्युलोकाद्याधारत्वादीनि बहूनि । ''अत्रोक्तानां लिङ्गाना''मिति न्यायविवरण एवोक्तेः । तथाप्येकवाक्योक्तत्वेनैकवचनमिति तत्र टीकायामेवोक्तमिति भावः । पुनरपीत्यस्य शब्दा इत्यन्वयः । ते कुत्रेत्यत आह ॥ शब्दादिति ॥ ''शब्दादेव प्रमितः । कम्पनात् । ज्योतिर्दर्शनात् । आकाशोऽर्थान्तरत्वादिव्यपदेशा''-दित्यत्रेत्यर्थः ॥ विचार्यन्त इत्यर्थ इति ॥ एतेन प्रागुक्तटीकावाक्यस्थं ''नामलिङ्गात्मक शब्दाना''मित्येतदिदमत्रेति विशिष्य विवृतं ध्येयम् । अनुव्याख्यानोक्तं स्थानं तु लिङ्गं सन्नामेति वा व्याख्यास्यामोऽग्र इति भावः ॥ लिङ्गेति ॥ साधारणासाधारणः इति विपरिणामेनेत्यर्थः । एतेन ''विचार्या'' इत्यपि परिणाम्यत इति सूचितम् । इति भेद इति ॥ ''साधारणमित्यस्य यथान्वयं विपरिणामेन सर्वत्रानुवृत्तिरिति ज्ञापनार्थमेवान्तेऽपि द्विस्थिता इत्याहे''ति न्यायविवरणटीकोपलक्षणमिति भावः । नन्वत्र चतुर्दशाधिकरणानि । उपाधयस्तु द्वादशैवोक्ताः । तत्कथमित्यत आह ॥ देवतेति ॥ तद्धानिः शूद्राणामधिकाराभावः ॥ प्रसङ्गादिति ॥ तत्रैवैतत् स्पष्टयिष्यते । ''इतीमौ विषयावित्यध्याहाराच्चिंतिताविति साध्विति'' सुधायामेवोक्तम् । एतेन ''देवताद्यधिकरणव्यावृत्त्यर्थं प्रायेणेती''त्येतट्टीकावाक्यं विवृतम् । एतदधिकरणस्यैतत्पादाद्यंतर्भावोक्तिपरां ''तत्र रुद्रो वाव लोकाधार'' इत्यादिटीकां विवरितु-माक्षिपति ॥ नन्विति ॥ ''य एषोंतश्चरते बहुधा जायमान'' इत्युक्तेत्यर्थः ॥ तथात्व इति ॥ भाष्यादौ तेनैव पूर्वपक्षित्वात् । सर्वत्रेति नयचन्द्रिकायां ''अंतराद्यधिकरणेषु तैस्तैर्लिङ्गैर्विष्णु-परतैव व्युत्पादिता । न तु तत्र मुख्यते'' त्याद्युक्तदिशा लिङ्गपादन्यायैर्लिङ्गानामशेषाणां विष्णुपरत्वसिद्धावपि मुख्यत्वस्यासिद्धेर्यौगिकजायमानशब्दस्य लिङ्गवाचिनोऽन्यत्रैव मुख्यत्वा-न्मुख्यार्थत्यागहेतोर्विष्णुलिङ्गस्येहाभावाभिमानेन वा भावेपि कथंचिन्नेयत्वाभिमानेन वा

पूर्वपक्षोदयसम्भवादिति भावः । टीकायां ''रुद्रोवावलोकाधार'' इति श्रुतिचतुष्टयोक्त्या लिङ्ग-स्योभयत्रप्रसिद्ध्युक्तेश्चतुर्धा तात्पर्यश्रुत्याकारोक्तिपूर्वं व्यञ्जयन्नुक्तशङ्कां समाधत्ते ।। उच्यत इत्यादिना ।। श्रुतिभ्य इत्यस्य स्वत उभयत्र प्रसिद्धत्वस्येत्यन्वयः । उक्तरीत्याऽन्यत्र-प्रसिद्धत्वसम्भवेऽपि ''श्रुत्यन्तरादिभिस्तुल्ये''त्युक्तदिशोभयत्रप्रसिद्धत्वांशमादाय पादसङ्गति-रित्यर्थः ।। निरपेक्षेति ।। ''यद्योन्यां तदुत्तरयोर्गायती''त्यत्र यथोत्तराशब्दस्योत्तराग्रन्थपठित-ऋगर्थकत्वम् । नतूत्तरदेशपठितऋगर्थकत्वम् । तस्य पूर्वसापेक्षत्वादुत्तराग्रन्थपठितयोरित्यस्य निरपेक्षत्वात् । तद्वदिति भावः ।

**पाण्डुरङ्गि** – ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ।। द्विस्थिता इत्यनेन त्विति ।। द्विस्थिता इत्यस्य साधारण्यानुवृत्तिज्ञापकत्वेन न्यायविवरणटीकायां व्याख्यानं तु सति अंतरङ्गज्ञापके बहिरंगव्याख्यानं किमर्थं गवेषणीयमित्याशयेन । इह तु व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायेनाप्युपपत्तेस्सम्भवाद्व्याख्यानांतरमिति द्रष्टव्यम् । स्वत एवोभयत्र प्रसिद्धानां तुल्यप्रसिद्धि-कत्वात् पूर्वपक्षे सिद्धांतप्रसिद्धिबाधः । सिद्धांतेच पूर्वपक्षप्रसिद्धिबाधः । तथाच कथं निर्णय इत्याशङ्क्य द्विस्थिता इत्युक्तम् । तथाच सिद्धे सत्यारम्भो नियमार्थ इति न्यायेन पूर्वोत्तरपक्षहेतुमन्त इत्युक्तं भवति । एवं चान्यत्रापि पूर्वोत्तरपक्षहेतुमत्ताऽस्ति । अत्रैव कुतो वाच्येत्याशङ्का निरस्ता भवति । अथवेत्यादिपक्षाणामुत्तरोत्तरस्वारस्यं स्पष्टमेव । नन्वस्तूक्तरीत्या पादद्वयसङ्गतिः । तथापि प्रथमातिक्रमे कारणाभावादादावेव तन्निवेशो युक्त इत्यत उभयत्र साहचर्यं विनेत्युक्तस्याभिप्रायमाह ।। अथवेति ।।

## तात्पर्यचन्द्रिका

**अर्भकौकस्त्वादिरूपं सर्वगतत्वादिकं तु ब्रह्मणि पूर्वपक्षे कयापि श्रुत्या नोच्यत इति न तस्य स्वत उभयत्रप्रसिद्धता । यद्वा समाख्याश्रुत्यादितौल्याभावोऽप्यन्यत्र प्रसिद्धलक्षणांतर्गतः । सचेह नास्ति । अन्तर्यामित्वादौ त्वस्ति । ततश्च द्युभ्वाय-तनत्वमुभयत्र प्रसिद्धमेव । यद्वा सर्वगतत्वादीनींद्राकाशादिशब्दवत्स्वरूपेणैवान्यत्र प्रसिद्धानि । नत्वन्यत्र प्रसिद्धतत्तत्साहचर्यात् । येन द्युभ्वाद्यायतनत्वादिकमपि तत्तत्साहचर्यात्तथा स्यात् । तथाहि पूर्णेऽभोक्तरि कर्महीनेच ब्रह्मण्यर्भकौकस्त्वादिरूपं**

**सर्वगतत्वमत्तृत्वं कर्मफलभोक्तृत्वं चायुक्तम् । तथा अनित्यक्रियारूपमन्तरत्वमन्तर्यामित्वं चाक्रिये ब्रह्मणि सदा न युक्तम् । तथा अदृश्यत्वाद्यभावधर्मत्वं भावरूपे ब्रह्मण्ययुक्तम् । ''एवं धर्मान्पृथ''गितिश्रुत्या ब्रह्मणि धर्मधर्मिभेदनिषेधात् । अत एवानुव्याख्याने तत्र सिद्धान्ते क्रियाया नित्यत्वं भावस्याप्यभावात्मकत्वं च साधितम्। एवं च सर्वगतत्वादीनि ब्रह्मण्ययुक्तत्वादेवान्यत्र प्रसिद्धानि । वैश्वानरशब्दस्त्वग्निपर्यायतयाऽन्यत्र प्रसिद्धः । टीकायां सर्वगतत्वादीनामादित्यादिश्रुतिसाहचर्यादन्यत्र प्रसिद्धयुक्तिस्त्वन्यमात्रे प्रसिद्धेः स्वतः सिद्धत्वेऽप्यादित्यादिरूपान्यविशेषाभिप्राया । एवमुत्तरत्रापि यथासम्भवं पादसङ्गतिरूह्या ।**

**प्रकाशिका** – नन्वेवं निरपेक्षादरे सर्वत्र प्रसिद्धेत्यादावुक्तसर्वगतत्वादेरेव सम्भवेनान्यसाहित्येनान्यत्र प्रसिद्धयुक्तिर्न स्यादित्यत आह ॥ अर्भकेति ॥ एवमन्यत्रप्रसिद्धत्वरूपत्वमस्य लिङ्गस्योपेत्य द्वेधा गतिरुक्ता । अधुना तथात्वमेवास्य नास्तीति भावेनोत्तरं समाधानद्वयम् । तत्राद्यं ''श्रुत्यादितो लोकतो वापीतरेषु प्रसिद्धते''ति यदन्यत्र प्रसिद्धिलक्षणमुक्तं तत्र श्रुत्यादितौल्याभावे सतीति विशेषणं देयम् । अतो न दोष इत्याह ॥ यद्वेति ॥ श्रुत्यादित इति पदस्थाने स्वत इति पदं प्रक्षिप्येतरेषु प्रसिद्धत्वं लोकतस्स्वत एव वेत्यन्यत्र प्रसिद्धत्वलक्षणं वाच्यम् । तच्चेह नास्ति । पूर्वत्रास्तीत्याह ॥ यद्वा सर्वगतत्वादीनीति ॥ पूर्वोदाहरणानां स्वतोऽन्यत्र प्रसिद्धतामाह ॥ तथाहीति ॥ कुत इत्यत उक्तमेवंधर्मानिति । टीकाविरोधमाशङ्क्याह ॥ टीकायामिति ॥ उत्तरत्रेति ॥ उत्तराधिकरणेषु । पादसङ्गतिः पादान्तर्भावः । भूमनये प्राणाभेदेन प्रतीतभूमनाम्नः प्राणोनूत्क्रामतीति श्रुतनिरवकाशोत्क्रमणलिङ्गेन अक्षरनये श्रुत्यन्तरसिद्धचन्द्राद्याधारत्वश्रीतत्वलिङ्गेनाक्षरनाम्नः ईक्षतिनये बहुस्यामिति श्रुतविकाररूपलिङ्गेन सदेवेति श्रुतसन्नाम्नः दहरनयादावाकाशश्रुत्यादिना हृत्पद्मस्थत्वादेरन्यत्र प्रसिद्धत्वेत्युक्तदिशा चतुर्धान्तर्भावसङ्गतिरूह्येत्यर्थः । समाख्याश्रुतितौल्यस्य सर्वत्रासम्भवाद्यथासम्भवमित्युक्तम् ।

**पाण्डुरङ्गि** – ननु ब्रह्मणोऽलौकिकस्वरूपसर्वगतत्वप्रतिपादकस्यांतर्हृदयेऽणीयानित्यादिवाक्यस्य सत्त्वेन तस्य न्यायविवरणे पूर्वपक्ष उदाहरणेपि वस्तुत उभयत्र प्रसिद्धता स्यादित्यत

आह ॥ अर्भकेति ॥ नन्वन्यत्र प्रसिद्धेष्वपि सर्वगतत्वादिषु समाख्याश्रुत्यादितौल्यस्यैवोक्तरीत्या सत्त्वेनोभयत्र प्रसिद्धता स्यादित्यत आह ॥ यद्वेति ॥ अस्मिन्पक्षेऽन्यत्रं प्रसिद्धिलक्षणे समाख्याश्रुत्यादितौल्याभावरूपविशेषणप्रक्षेपः कर्तव्य इतीममेवास्वरसं मनसि निधाय पक्षान्तरमाह ॥ यद्वेति ॥

## तात्पर्यचन्द्रिका

**पूर्वपादांत्योत्तरपादाद्ययोश्चाधिकरणयोर्नावांतरसङ्गत्यपेक्षेत्युक्तम् । यद्वा पूर्वत्रेवात्राप्यात्मशब्देन सिद्धान्तादातिदेशिक्यवांतरसङ्गतिः । अत्र ''यस्मिन्द्यौ''रित्यादिनोक्तं द्युभ्वाद्यायतनत्वं किं रुद्रादेः किं वा विष्णोरिति चिन्ता । तदर्थमात्मशब्दादयः किं गौणाः किं वा मुख्या इति । तदर्थं तेषां मुख्यत्वे बाधकमस्त्युत नेति । तदर्थं जायमानत्वं किं विष्णोर्न युक्तमुत युक्तमिति । तदर्थं किं शरीरग्रहणादिकमेव जननं किं वा प्रादुर्भावोपीति ।**

**प्रकाशिका** – एवं पादान्तर्भावसङ्गत्युक्तिपरटीकां समर्थ्यदानीं यातु ''श्रुत्यादिसंगति''मित्यादिकाऽदृश्यत्वनयेनास्य सङ्गत्युक्तिपरभाष्यटीका सा न युक्तैव । तथात्वे तदानन्तर्यप्रसङ्गेन व्यवधानायोगादिति मन्दाशङ्कां व्युदसितुं सा फलोक्तिपरा । सङ्गतिपदं च फलपरम् । आनन्दमयनयोक्तदिशा येनकेनचित्पूर्वेण सङ्गतिरपेक्षिता नत्वव्यवहितेनेत्येतदाशयं वेतिभावेन पादांत्याद्यनययोस्संगतिनियमबुद्धिं शिष्याणां व्युदसितुमुक्तं स्मारयन्नस्ति चेन्न त्याज्येति सङ्गतिं चाह ॥ पूर्वेत्यादिना ॥ एतेन यदुक्तं श्रुतप्रकाशे पूर्वस्मिन्नधिकरणे द्युपृथिव्यादिसम्बन्धिनः परमात्मत्वमुक्तम् । द्युपृथिव्यादिसम्बन्धित्वं परमात्मव्यतिरिक्तस्य दृश्यत इति शङ्कयैतदारम्भ इति सङ्गतिरिति तन्निरस्तम् । पूर्वाधिकरणप्रधानहेतुनैव सङ्गतिसम्भवे सम्बन्धसामान्यमुखेन सङ्गत्युक्त्ययोगादिति । विषयसंशयटीकां व्यनक्ति ॥ अत्रेत्यादिना ॥ इत्यादिनोक्तमित्यनेन ''तद्द्युभ्वाद्यायतनत्वं विषय'' इति टीकास्थतच्छब्दार्थो विवृतः । आथर्वणे ''द्वेविद्ये वेदितव्ये परा चैवापराचे''त्युपक्रम्य श्रूयते ''यस्मिन्द्यौः पृथिवीचांतरिक्षमोतं मनस्सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथ । अमृतस्यैष सेतुः । अरा इव रथनाभौ संहता यत्र नाड्यः । स एषोंऽतश्चरते बहुधा जायमानः ।

ओमित्येव ध्यायत आत्मानं स्वस्तिवः पाराय तमसः परस्तात् । यस्सर्वज्ञस्सर्ववि''दित्यादि । तत्र द्युभ्वंतरिक्षमनःप्राणायतनत्वं विषय इत्यर्थः । सूत्रे यथाश्रुति धर्मिनिर्देशेपि लिङ्गताद्योतनाय यथाटीकं भावान्तनिर्देशः ।

रुद्रादेरिति ॥ रुद्रप्रधानवायुजीवानामन्यतमस्येत्यर्थः । एतेनान्येषामिति टीकास्थान्यशब्दार्थो विवृतः । प्रापकप्राबल्याशयेन रुद्रस्य पूर्वं स्वशब्देन च निर्देशः । टीकायां बहुवचनोक्तावप्येकवचनोक्तिः पूर्वपक्षकोटीनां बहुत्वे कथं लिङ्गस्योभयत्र प्रसिद्धत्वम् । किं तु बहुषु प्रसिद्धत्वमेव स्यादिति शङ्कानिरासाय पूर्वपक्षकोटित्वेन बहूनामेकीकरणादिति भावेनेत्याहुः । अत्र यद्यपि भाष्ये तत्वप्रदीपसन्न्यायरत्नावल्योश्च प्रधानकोटेर्द्युभ्वाद्यायतनत्वप्राप्तिर्वा तन्निरासो वा न भवति । तथापि टीकायां ''स्वशब्दपर्यायात्मशब्दान्न प्रकृतिजीवावभिधीयेते'' इति विष्णुतत्वनिर्णयोक्त्यनुरोधेन प्रधानकोटेरप्युक्तेस्तदनुरोधेनात्राप्यादिपदेन तदुक्तिः । एवं द्युभ्वायतनं नानुमानं प्राणभृच्चेति प्रतिज्ञांशोपयुक्तचिन्तामुक्त्वा स्वशब्दात् मुक्तोपसृप्यव्यपदेशादिति हेत्वंशव्यावर्त्यशङ्कोपयुक्तचिंतामाह ॥ आत्मशब्दादय इति ॥ आदिपदेनामृतसेतुत्वरूपमुक्तोपसृप्यत्वलिङ्गब्रह्मप्रकरणेतमेवैकं जानथ आत्मानमित्यादिवाक्योक्ताहेयत्वोक्तिहेयत्वानुक्त्यन्यहेयत्वोक्तयो वा लिङ्गप्रकरणसमाख्या एव वा ग्राह्याः । अतच्छब्दादिति हेत्वंशव्यावर्त्यशंकोपयुक्तचिंतामाह ॥ तदर्थं बाधकमस्त्युत नेतीत्यादिना ॥ जायमानत्वमिति ॥ अत्र यद्यपि रुद्रोवावलोकाधार इत्यादिसमाख्या विष्णौ न युक्ताऽथ युक्तेति। तदर्थं समाख्यागतरुद्रादिशब्दा निरवकाशा उत विष्णौ सावकाशा इत्यादिचिन्ताप्युपदर्शनीया । तथापि रुद्रसमाख्यायाष्टीकोक्तरीत्या वक्ष्यमाणदिशाच बलवत्त्वेऽपि इतरसमाख्ययोर्विष्णुसमाख्याप्रतिरोधेन जायमानत्वलिङ्गेनैव तयोरुज्जीवनाद्वा प्राकरणिकबाधकोपदर्शनं कार्यमित्याशयाद्वा उपलक्षणत्वाद्वा जायमानत्वकोटिकचिंतैवोक्ता । यदि शरीरग्रहणमेव जननं तस्याशरीरे विष्णावयोगाद्बाधकादात्मशब्दादीनां गौणत्वात्समाख्यादिबलेन रुद्रादिरेवेति पूर्वपक्षे फलम् । यदि विपरीतं तदा विष्णुरिति सिद्धान्ते फलमिति स्पष्टः फलफलिभाव इति भावः । यद्यपि टीकायां जायमानत्वबाधकेनात्मशब्दस्यैवामुख्यत्वमाशङ्कितम् । न तु मुक्तोपसृप्यत्वादेः । प्रत्युत तेनैवात्मशब्दस्य मुख्यत्वमुक्तं मुक्तोपसृप्यसूत्रे । तथापीह श्रुतेर्विष्णौ मुख्याया अपि जीवलिङ्गेनामुख्यत्वशङ्कायां तुल्यन्यायतया लिङ्गस्यापि सा

भवत्येवेत्याशयेन जायमानत्वलिङ्गेनात्मशब्दादयो गौणा इति बहुवचनोक्तिः । टीकायां तु मुक्तोपसृप्यसूत्रे चशब्दाभावात्तत्स्वारस्याय तथोक्तिरिति भावः ।

अत्र यद्यपि च विष्णोरिति चिन्तानंतरं तदर्थमात्मशब्दादिकं रुद्रादिजीवे नेतुं शक्यमुताशक्यमिति चिन्ता तदर्थमत्र प्रकरणे निरवकाशजीवविष्णुप्रापकबलेन तयोरभेद आश्रयितुं शक्य उताशक्य इति चिन्ता तदर्थमन्यमीशमित्यादिभेदाद्युक्तिर्जीवविष्णुनिष्ठाऽथ नेति चिन्ता तदर्थमीशशब्दः किं विष्ण्वन्ययत्किंचित्पर उत प्रकरणबलाद्विष्णुपर एवेति भेदादिसूत्रव्यावर्त्यशङ्कोपयुक्ता चिन्तापरंपराऽपि वाच्या । तथापि स्पष्टत्वाद्वा सूत्रक्रमे वक्ष्यमाणप्रकारेणाभेदशङ्काया रुद्रादिकोटिचतुष्टयसाधारण्याभावाद्वा साऽपि शङ्का जायमानत्वरूप जीवलिङ्गनिरवकाशत्वप्रयुक्तैवेति तन्निरवकाशत्वादिचिन्तोक्त्यैवोक्तप्रायेति वा नोक्ता । यद्वाऽऽत्मशब्दादयः किं गौणा इत्यस्य जीवाभेदेन नेया इत्यप्यर्थः । ''जीवेशाभेदेन ब्रह्मगतलिङ्गस्य जीवे सम्भवा''दिति टीकोक्तेः । तथाच साऽपि चिन्तोक्तैवेति ।

**पाण्डुरङ्गी** - पूर्वपादान्त्यस्योत्तरपादाद्यस्य चाधिकरणस्यावान्तरसंगतेरावश्यकत्वं वदन्तं प्रत्यभ्युच्चयेनाह । यद्वेति ।

## तात्पर्यचन्द्रिका

**पूर्वपक्षस्तु । द्युभ्वाद्यायतनं रुद्रः प्रधानं वायुर्जीवो वा । ''रुद्रोवाव लोकाधारः । प्राणानां ग्रन्थिरसि रुद्रः । भूतं च भवच्च भविष्यच्चेत्याचक्षते । आकाश एव तदोतं च प्रोतं च । वायुना वै गौतमसूत्रेणायंच लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानी''त्यादि समाख्यानात् । जायमानत्वरूपजीवलिङ्गाच्च । न च ''लोकाश्च लोकिनश्च विष्णावेवोताश्च प्रोताश्चे''ति विष्णावपि समाख्यास्तीति वाच्यम् । रुद्रसमाख्यायां ''प्राणानां ग्रन्थिरसि रुद्रः । प्राणेश्वरः कृत्तिवासाः पिनाकी । रुद्रोवाव लोकाधार'' इति बहुरुद्रश्रुतिलिङ्गसद्भावात् । एतदेवाभिप्रेत्योक्तमनुव्याख्याने ''बाहुल्यं लिङ्गशब्दाना''मिति । ''विष्णोर्द्युभ्वाद्यायतनत्वप्रसिद्धावपी''त्यादिटीकायां विष्णुसमाख्याबाधार्थं जायमानत्वलिङ्गोक्तिस्तु विष्णुसमाख्यातो रुद्रसमाख्याया बलवत्त्वेपि वाय्वादिसमाख्यायाः प्राबल्याभावात् ।**

ननु तथापि ''द्वेविद्ये वेदितव्ये'' इति विष्णुप्रकरणेन ''अमृतस्यैषसेतु''रिति मुक्तोपसृप्यत्वविष्णुलिङ्गेन च रुद्रादिसमाख्याया बाधः । मुक्तोपसृप्यत्वादेश्च विष्णुलिङ्गत्वं ''तन्निष्ठस्य मोक्षोपदेशात् । अस्मिन्नस्य च तद्योगं शास्ती''त्यादि-सूत्रसिद्धम् । लिङ्गप्रकरणे च समाख्यातो बलवती । न च समाख्या निरवकाशा । अन्तरधिकरणन्यायेन रुद्रादिशब्दानां शास्त्रदृष्ट्येति न्यायेन पिनाकित्वादिलिङ्गानां च विष्णौ सावकाशत्वात् । न च ''स एषोंतश्चरते बहुधा जायमान'' इति जायमा-नत्वादिलिङ्गविरोधः । ''तमेवैकं जानथ आत्मान''मित्यात्मश्रुत्या तद्बाधात् । आत्मशब्दस्य विष्णवेकनिष्ठत्वं च ''गौणश्चेन्नात्मशब्दात् । साधारणशब्दविशेषा''दिति सूत्रसिद्धम् । जायमानत्वस्य ब्रह्मणि सावकाशत्वं च ''क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनि''रित्यनुव्याख्यान आनन्दमयाधिकरण उक्तत्वात्तत्र, ''कारणत्वेन चाकाशादि''ष्वित्यत्र च सिद्धमिति ।

प्रकाशिका – ''द्युभ्वाद्यायतनत्वं रुद्रप्रधानजीववायूनामिति पूर्वः पक्षः'' इत्यादिटीकां विवृण्वन् समाख्यात्रयेण जायमानत्वरूपजीवलिङ्गेन च कोटिचतुष्टयपूर्वपक्षानाह ॥ द्युभ्वाद्यायतनं रुद्र इत्यादिना ॥ यथासूत्रमयं निर्देशः । बहूपपादनत्वाज्जीवस्यांते निर्देशः । ''रुद्रोवावे''ति वाक्यं रुद्रस्य द्युभ्वाद्यायतनत्वे । ''प्राणाना''मिति वाक्यं रुद्रस्य प्राणाधारत्वे । टीकायां भाष्ये साक्षादुपात्तस्य प्राणानामिति वाक्यस्य पूर्वमादिपदोपात्तस्यान्यत्र साक्षादुक्तस्य तु पश्चादुक्तावपि विषयवाक्ये क्रमोपात्तलिङ्गोपपादनसौकर्याय ''रुद्रोवावे''-त्यस्यैवात्र पूर्वमुक्तिः । तावतैव पूर्तौ द्वितीयवाक्यस्याप्युक्तिर्भाष्योपात्तत्वाद्वा तत्र बहुरुद्रश्रुति-लिङ्गसत्त्वेन विष्णुसमाख्यातः प्राबल्योपपादनाय वेति ज्ञेयम् । तत्र रुद्रेति संबुद्ध्यंतपाठः साधुः । द्वितीये ''तदभिध्यानादेव''त्वित्यत्र टीकायां ''रुद्र त्वं प्राणानामाश्रयोंऽतकश्चासि । सत्वं मामाविशेति व्याख्यानात् । तद्भूतभवदादिकं आकाशशब्दिते प्रधाने ओतमित्यर्थः । तच्छब्दपरामर्शद्योतनाय भूतमित्यादिपूर्ववाक्योक्तिः । आकाशशब्दस्याक्षरनये प्रधानपरत्वं व्युदस्य चित्प्रकृतिपरत्वोक्तावपीह पूर्वपक्षी तत्रत्यपूर्वपक्षन्यायेन प्रधानपरत्वमेव मन्यत इति यथाटीकमत्र प्रधानपरतया भूतमित्यादिवाक्योक्तिर्युक्ता ॥ सूत्रेणेति ॥ स्यूतमस्मिञ्जगदिति व्युत्पत्त्या जगदाधारेण वायुना संदृब्धानि सङ्गतानि । तदाधारतयाऽवस्थितानीत्यर्थः ।

अत्र टीकायां ''विष्णोर्द्युभ्वाद्यायतनत्वप्रसिद्धावपी''त्यादिना विष्णुसमाख्यामाशङ्क्य बहुधाजन्मबाध उक्तः । तत्रान्यत्रोक्तश्रुतिलिङ्गबाहुल्येन प्रबलरुद्रसमाख्याबाधोऽपि वाच्य इति भावेन शङ्कोत्तरे वक्ति ॥ न च लोकाश्च लोकिनश्चेति ॥ ''सर्वेवा ते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्चालोकाश्चालोकिनश्च विष्णावेवोताश्च प्रोताश्चे''ति विष्णु-समाख्याऽस्तीत्यर्थः । तथाच तद्बलाद्विष्णुविषयत्वमपीति भावः । प्राणा इन्द्रियाणि । प्राणिनो देहिनः । दिविभवानि दिव्यानि कल्पतरुप्रभृतीनि वस्तूनि । लोका भूरादयः । तदभिमानिनो लोकिनः । अलोका वैकुण्ठादयः । अलोकिनस्तद्गता मुक्ता इत्यर्थः ॥ उक्तमिति ॥ एतत्पादीयाधिकरणपूर्वपक्षन्यायसङ्ग्रह उक्तमित्यर्थः । टीकावाक्यविरोधमाशङ्क्याह ॥ विष्णाविति ॥ जायमानत्वेति ॥ एतेन टीकायां बहुधा जन्मेत्युक्तावपि जन्मरूपलिङ्ग एव तात्पर्यम् । अनेकजडाद्यात्मना बहुजननस्येक्षतिनये निरस्यत्वाज्जन्मलिङ्गेनैव विवक्षितसिद्धेश्च बहुधेत्युक्तेरभ्युच्चयत्वेनोपपत्तेरिति भावः । एतेन रुद्रसमाख्यायाः प्राबल्येन विष्णुसमाख्यया प्रतिहत्यभाववद्वाय्वादिसमाख्याया जायमानत्वादिलिङ्गबलेनाप्रतिहतत्वं टीकारीत्योपपाद्य-मित्युक्तं भवति । वक्ष्यति चैवं पूर्वपक्षांतरमपीत्यादि । लिङ्गनिरवकाशत्वं चाग्रे व्यक्तम् । नन्वेवं टीकायां ''विष्णोर्द्युभ्वाद्यायतनत्वप्रसिद्धावपी''त्यादिना समाख्याबलेन विष्णोर्द्युभ्वाद्याय-तनत्वमाशङ्क्य जायमानत्वलिङ्गेन तद्बाधो न वाच्यः । अपि तूक्तदिशा प्रबलया रुद्रसमाख्यया विष्णुसमाख्यायां दूरीकृतायामप्रतिहतया वाय्वादिसमाख्यया वाय्वादिप्राप्तिरित्येव समाधानं वाच्यम् । न च विष्णुसमाख्येव वाय्वादिसमाख्यापि बलवद्रुद्रसमाख्यया व्युदस्ता सती नात्र वाय्वादिप्रापिकेति वाच्यम् । तथात्वे जन्मलिङ्गेन विष्णुसमाख्याबाधपक्षेऽपि तेनाप्रति-हतबलवत्या रुद्रसमाख्यया वाय्वादिसमाख्याबाधेन तयोरत्राप्राप्तेः । तस्माद्रुद्रसमाख्याया अपि सावकाशत्वोपपादनेन रुद्रादिसमाख्यात्रयस्यापि विष्णुसमाख्यया समाख्यात्वेन तुल्यबलत्वात् रुद्रादिसमाख्यास्वन्यतमयाऽपि विष्णुसमाख्यानिरासायोगात् जन्मरूपलिङ्गेन विष्णौ निरवकाशेन बाधितया विष्णुसमाख्ययाऽत्र विष्णोर्द्युभ्वाद्यायतनत्वाप्राप्तौ रुद्रादौ योग्येन जन्मलिङ्गेन बाधादविशेषितबलाबलेन समाख्यात्रयेण तुल्यबलेन रुद्रादिकोटित्रयस्य जन्मलिङ्गेन जीवमात्रासाधारणेन जीवकोटेश्च द्युभ्वाद्यायतनत्वप्राप्तिरिति वक्तव्यम् । एवं च टीकायां जन्मलिङ्गेन विष्णुसमाख्याबाधोक्तिः स्वरसा भवतीति चेन्मैवम् । अन्तकत्वादिलिङ्गेन रुद्रसमाख्याया निरवकाशत्वोक्तिपरपूर्वतनटीकावाक्यविरोधात् । ''समाख्याऽपि निरवकाशे''-

त्यग्रे वक्ष्यमाणदिशा सावकाशत्वासम्भवाच्च । कथं तर्हि प्रकृतिवाय्वोः प्राप्तिः । रुद्रसमाख्याऽज्ञानिन इत्यस्तु । नह्येक एवात्र पूर्वपक्षीति नियामकमस्ति । द्वितीयाद्यस्मृत्यधिकरणादाविवानेकेषां पूर्ववादित्वोपपत्तेरिति । नन्वेवमपि रुद्रसमाख्यया विष्णुसमाख्याबाधेपि प्राकरणिकविष्णुप्रापकबहुबाधायोगात् सावकाशत्वाच्च तस्या इति समाख्यया पूर्वपक्षमाक्षिपति ।। नन्विति ।।

विष्णुप्रकरणेनेति ।। यद्यपि टीकायां ''परविद्याविषयत्वलिङ्गाद्विष्णुरिति चे''दित्युक्तम् । तथापि लिङ्गस्योपक्रमे श्रुतत्वात्तत्र श्रुतलिङ्गस्य च ''श्रुतिलिङ्गवाक्यानामुपक्रमोपसंहारयोः श्रुतत्वे तन्निश्चायकतया लिङ्गत्व''मिति ''शब्दादेवे''ति सूत्रटीकोक्तरीत्या प्रकरणनिश्चायकत्वेन तल्लिङ्गोपेतोपक्रमवतस्तत्प्रकरणत्वेन ''प्रकरणा''दिति सूत्रानुसारात् प्रकरणेनेत्युक्तम् । अत एव ''प्रकरणा''दित्यत्र टीका ''द्वेविद्ये वेदितव्ये'' इति परविद्याविषयवस्तुनोऽत्रारभ्याधीतत्वेनास्य विष्णुप्रकरणत्वा''दिति ।। बाध इति ।। यथाचतुर्थे ''आत्माप्रकरणा''दित्यत्र प्रकरणेन समाख्याया बाधस्तद्वत् । तत्रहि ''य आत्माऽपहतपाप्मे''-त्यादिप्रकरणेन ''स तेजसि सूर्ये सम्पन्न'' इति समाख्याया बाधेन ''परं ज्योतिरुपसम्पद्ये''ति श्रुतज्योतिषो विष्णुत्वमुच्यते । यथा वा दहरनये लिङ्गेन समाख्याया बाधस्तद्वत् । तत्र ह्यपहतपाप्मत्वादिलिङ्गेन ''तस्यांते सुषिरं सूक्ष्म''मित्यादिसमाख्याया बाधेन सर्वाधारतया हृत्पद्मस्थत्वं विष्णोरेव । नत्वाकाशादेरित्युच्यते । आदेश्चेत्यादिपदेन प्रकरणम् । लिङ्गत्वं नाम ज्ञापकत्वम् । यद्वा परविद्याविषयत्वमादिपदार्थः । इत्यादीत्यादिपदेन ''अदृश्यत्वादिगुणकोधर्मोक्ते''रिति सूत्रं गृह्यते ।। बलवती इति ।। शब्दादेवेत्यत्र तद्बीजोक्त्या व्युत्पादयिष्यमाणत्वादिति भावः । ननु ''आनर्थक्यप्रतिहतानां विपरीतं बलाबल''मिति न्यायेन समाख्यया बाधः किं नस्यादिति भावेनाशङ्क्यानर्थक्यं नेत्याह ।। न चेति ।। अन्तरिति ।। अयं न्यायः प्राक्तत्र तत्र विवृतः । शास्त्रदृष्ट्येति न्यायोपि ।। जायमानत्वादीति ।। मनःप्राणाधारत्वमादिपदार्थः । लिङ्गं निरवकाशमित्यत आह ।। जायमानत्वस्येति ।। तत्रेति ।। आनन्दमयाधिकरण इत्यर्थः ।। कारणत्वेन चेति ।। चतुर्थपादे ''आत्मन आकाशस्संभूतः । आकाशाद्वायुः । वायोरग्नि''रित्युदाहृत्यात्मन आकाशादिषु जनेर्वक्ष्यमाणत्वादिति भावः । यथोक्तं तत्र न्यायविवरणे ''व्यक्त्यपेक्षाया कार्यत्व''मिति । अत्र परैरेतच्छंकानिरासाय

''यस्मिन्द्यौ''रित्यादिकं ब्रह्मप्रकरणे नास्तीति कृत्वाचिन्तयेदमारब्धमित्युक्तम् । कैश्चित्तु ''द्वेविद्ये वेदितव्ये'' इत्यादेर्ब्रह्मप्रकरणत्वेपि ''यस्मिन्नि''त्यादिकं जीवलिङ्गाज्जीवप्रकरणमिति प्रकरणभेदमाश्रित्य समाहितम् ।

## तात्पर्यचन्द्रिका

**उच्यते । अनुव्याख्यान उक्तिरत्रत्यसिद्धांतसिद्धजन्यत्वाभिप्राया । नत्वेतत्पूर्वपक्षदशायां जायमानत्वस्य सावकाशता । ''कारणत्वेने''त्यत्रत्वेकस्यैव कार्यकारणभावविरोधशङ्कायाः परिहारः । नत्वत्रैवाजन्यस्य जन्मविरोधशङ्कायाः । अत एव तत्र टीका ''स्वस्यैव कार्यकारणभावो विरुद्ध'' इति । अनुव्याख्यानं च ''विरोधः कार्यतद्वतो''रिति । जननमरणयोश्च सामानाधिकरण्यप्रसिद्धेर्देहत्यागलक्षणमरणस्य चेतन एव सम्भवात् । ''यतोवा इमानि भूतानि जायन्ते । येन जातानि जीवन्ती''ति जीवनादियोगिनि चेतने जननश्रवणाच्च । अनादेरपि जी(वमात्रादेः)वादेः शरीरग्रहणादिरूपं वा पराधीनविशेषावाप्तिरूपं वा जननमस्ति । ब्रह्मणस्तु तदपि नेति द्वितीयाध्याये वक्ष्यते । अजायमानो बहुधा विजायत इति वाक्यं तु जीवविषयम् । स्वरूपेणाजननात् । देहद्वारा च जननात् । तस्मान्निरवकाशेन भाष्योक्तेन जायमानत्वलिङ्गेन द्युभ्वाद्यायतनं रुद्रादिरेव । अनुव्याख्यानन्यायविवरणयोरुक्ता समाख्यापि निरवकाशैव । तत्र विष्णुलिङ्गानामश्रवणेन रुद्रादिशब्दानामन्तरधिकरणादिन्यायाविषयत्वात् । एवं पूर्वपक्षान्तरमपि टीकोक्तरीत्योपपाद्यम् । आत्मशब्दादिकं तु निरवकाशजायमानत्वलिङ्गानुसारेण जीवादौ कथंचिन्नेयमिति ।**

**प्रकाशिका –** तदुभयं वक्ष्यमाणदिशा न युक्तमिति भावेन निरवकाशलिङ्गेन प्रकरणादेः सर्वस्योपमर्देन सर्वमेव प्रकरणं विष्ण्वन्यपरमिति भाष्यटीकाभिमतं पूर्वपक्षं समर्थयितुमारभते ।। उच्यत इति ।। यदुक्तं लिङ्गप्रकरणे समाख्यातो बलवती इति । तत्सत्यम् । तथापि निरवकाशजीवलिङ्गेन ब्रह्मलिङ्गप्रकरणयोर्नेयत्वात् । न च तदपि सावकाशमित्युक्तमिति वाच्यम् । तत्राह ।। अनुव्याख्यान इति ।। प्रकारान्तरेण जायमानत्वं जीव एवेति

प्रादुर्भावरूपमेव जननं जायमानशब्दार्थोऽस्त्वित्यतो वाह ॥ जननेति ॥ सम्भवाच्छ्रवणाच्चेति हेत्वोर्न जायमानत्वस्य सावकाशतेति पूर्वेणान्वयः । तस्यैवात्रानुषङ्गोवा ॥ जीवनादिति ॥ सर्वपालके पाल्यमानत्वादिरूपजीवनायोगादिति भावः ॥ द्वितीयेति ॥ वियत्पादे ''ज्ञोत एवे''त्यत्र जीवस्यास्तीत्युच्यते । ''असम्भवस्तु सतोऽनुपपत्ते''रित्यत्र ब्रह्मणोनेति वक्ष्यत इत्यर्थः । प्रादुर्भावो न जननशब्दार्थ इति भावः । ननु जननं भगवत्यपि श्रुतमित्यत आह ॥ अजायमान इति ॥ एतेन ''जननमरणयोश्चे''त्यादिना ग्रन्थेन ''स एषोंऽतश्चरते बहुधा जायमान इति द्युभ्वाद्यायतने जीवलिङ्गश्रवणाज्जीवस्य तद्युक्त''मित्युक्तयुक्ततोपपादिता । तस्मात् भगवति जननाभावात् ॥ निरवकाशेनेति ॥ ''ज्योतिर्दर्शना''दित्यत्र ''स वा अयं पुरुषो जायमानश्शरीरमभिसम्पद्यमान'' इति श्रुतजायमानत्वादेर्विष्ण्वसाधारणज्योतिश्श्रुत्या उपक्रमोपसंहाराभ्यामवगतब्रह्मपरैकवाक्यमध्यस्थतयांऽतर्णीतणिच्त्वेन ब्रह्मणि नयनमिति वक्ष्यते। नत्विह तथेति भावः । ननु जीवमात्रप्रापकलिङ्गेन कथं रुद्रादिरेवेत्युक्तिः । प्रापकसमाख्यायाश्च लिङ्गप्रकरणाभ्यां बाधोक्तेरित्यत आह ॥ अनुव्याख्यानेति ॥ एवमिति ॥ रुद्रजीवपूर्वपक्षवत् प्रधानवायुपूर्वपक्ष इत्यर्थः । प्रधानस्य सर्वोपादानत्वात् सर्वाधारत्वं युक्तम् । कापिलस्मृतिसिद्धं च । न च तस्याप्रामाण्यम् । दृष्टफलतद्वाक्यदृष्टान्तेन सर्वाश्रयत्वबोधिन्या अपि प्रामाण्यानुमानात् । वायोश्च प्राणाद्याधारत्वं प्रसिद्धमेवेत्यादिरूपेणोपपाद्यमित्यर्थः । तर्हि श्रुतिलिङ्गप्रकरणानां का गतिरित्यत आह ॥ आत्मेति ॥ कथंचिदिति ॥ जीवेशाभेदादिनेति भावः ।

**पाण्डुरङ्गी** – जीवमात्रादेश्चेति । यद्यप्यत्र वायोरपि निरासः । तथापि प्रकृतिरुद्रजीववत् स्वशब्देन सूत्रेऽनुपादानाच्चानुकृष्टस्य वायोः साक्षान्निरासाभावाद्वा जीववद्बहुग्रंथेनानिरासाद्वा अन्यसाहित्येन निरासेऽपि भूमाधिकरणवत् केवलस्यानिरासाद्वा मात्रपदेनतद्व्यवच्छेद इति ज्ञेयम्। आदिपदेन वायुनीचो गरुडो ग्राह्यः ।

## तात्पर्यचन्द्रिका

**सिद्धान्तस्तु । -**

**अचेतनजनेरन्या चेतनस्य जनिर्यथा ।**
**तथोभयजनेरन्या ब्रह्मणोऽपि जनिर्मता ॥ १ ॥**

''अजायमानो बहुधाविजायत'' इति ब्रह्मणोऽपि जनेः प्रमितत्वात् प्रसिद्धाच्चेतनाचेतनजननादन्यैव प्रादुर्भावरूपा ब्रह्मणो जनिरस्तु ।

किंतु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुम् ।
प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ।। इत्यादिस्मृतेः ।

''अजायमान'' इत्यादिवाक्यं च ब्रह्मपरमेव । ''तमेवं विद्वानमृत इह भवती''-त्यादितल्लिङ्गात्पुरुषसूक्तस्थत्वाच्च । एवं चात्मश्रुत्याद्यनुसाराज्जायमानत्वलिङ्गमेव गौणं नेयम् । न तु विपरीतम् । समाख्यापि सावकाशा । भाष्योक्तश्रुतिस्मृतिभी रुद्रादिशब्दानां विष्णावेव मुख्यत्वात् । मुक्तोपसृप्यत्वादिकं तु निरवकाशमिति भाष्य एवोक्तम् । अत्र चाद्ये सूत्रे विषयवाक्येनातिसन्निहितश्रुतिरूपस्वपक्षसाधकोक्तिः । स्वशब्दादित्येतच्च स्वेति शब्दः स्वशब्द इति विग्रहाश्रयणेन विषयवाक्ये स्वशब्दा-भावात्तत्पर्यायात्मशब्दपरम् । यथा ''सभाराजामनुष्यपूर्वे''त्यत्र राजशब्दस्तत्पर्याये-श्वरादिशब्दपरः । एतदेवाभिप्रेत्य विष्णुतत्वनिर्णये भगवत्पादैरत्रापि टीकाकारैः ''स्वशब्दपर्यायात्मशब्दा''दित्युक्तम् ।

**प्रकाशिका** – अत्र निरवकाशजन्मरूपजीवलिङ्गादिना ''स्वशब्दा''दिसिद्धांतहेतूनामन्य-थानयनात्तत्सावकाशत्वोक्त्यैव स्वशब्दादेस्साधकत्वं नान्यथेति भावेन ''अतच्छब्दा''दिति सूत्रखण्डसूचितं ''अजायमानो बहुधा विजायत इति तस्यैव बहुधाजन्मोक्ते''रिति भाष्याद्युक्तं जीवलिङ्गसावकाशत्वं तावद्व्यनक्ति ।। अचेतनेति ।। परिणामरूपजनेरन्या देहयोगरूपेत्यर्थः । ''ज्ञोत एवे''त्यत्राग्रे स्पष्टेति भावः । चेतनाचेतनजनेः प्रमितत्वात् साऽन्याऽन्यास्तु । न चैवं ब्रह्मणीत्यतः प्रमाणं वदन्नन्येत्युक्तजनिस्वरूपं चाह ।। अजायमान इति ।। देहादिना जननहीनस्सन् बहुधा नाना मत्स्यकूर्मवराहाद्यात्मना प्रादुर्भवतीत्यर्थः ।। प्रादुर्भावरूपेति ।। कुत इत्यत आह ।। किं त्विति ।।

स्त्रीपुंमलाभियोगात्मा देहो विष्णुर्न जायते ।
किंतु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुम् ।।

प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ।
तथाप्यसुरमोहाय परेषां च क्वचित् क्वचित् ।।
दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः ।

इत्यादिविष्णुतत्वनिर्णयोदाहृतब्रह्माण्डपुराणवचनादित्यर्थः । ''प्रत्यक्षत्वं हरेर्जन्मे''त्यादिरादिपदार्थः । ननूक्तं जीवविषयं तद्वाक्यमिति तत्राह ।। अजायमान इति ।। मुक्तिहेतुज्ञानविषयत्वरूपाल्लिङ्गादित्यर्थः । प्रकरणवशाच्च ब्रह्मपरमेतद्वाक्यमित्याह ।। पुरुषसूक्तस्थत्वाच्चेति ।। पुरुषसूक्तं च विष्णुपरमिति पूर्वाधिकरणे छन्दोधिकरणे च भाष्यादौ समर्थितमिति भावः । अस्त्वेवं जीवलिङ्गं सावकाशम् । ततःकिमित्यत आह ।। एवं चेति ।। सावकाशत्वे सतीत्यर्थः ।। लिङ्गमेवेति ।। श्रुत्यादितो लिङ्गमात्रस्य दुर्बलत्वादिति भावः ।। गौणमिति ।। परिणामरूपजनेरेव मुख्यत्वादिति भावः ।। नत्विति ।। श्रुत्यादिबहुबाधायोगादिति भावः । लिङ्गस्य सावकाशत्वमुक्त्वा समाख्याया अपि ''अतच्छब्दा''दिति सूत्रांशाभिमतमेव तदाह ।। समाख्यापीति ।। ''सोंऽतकस्सरुद्रस्स प्राणभृत् सप्राणनायकस्स ईशो यो हरि''रित्यादिश्रुत्या ''रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दन'' इत्यादिब्रह्माण्डस्मृतिभिर्विष्णावेव मुख्यवृत्त्युक्तेरिति भावः । यद्यपि समाख्याश्रुतौ निरवकाशविष्णुलिङ्गाभावेन ''अन्तस्तद्धर्मोपदेशादि''त्युक्तन्यायाविषयत्वं भाति । तथापि श्रुत्यर्थनिर्णयार्थत्वात् स्मृतेस्तत्र निरूपितोऽर्थो ग्राह्यो वेदवाक्ये । तदयोगे तु लौकिक इति ''कम्पना''दिति सूत्राभिमतवक्ष्यमाणन्यायेन ''इतिहासपुराणाभ्यां वेदं समुपबृंहये''दिति स्मृत्या श्रुत्युपबृंहकेषु ''रुजं द्रावयत'' इत्यादिस्मृतिवाक्येष्वन्वर्थसंज्ञाकरणस्य श्रुत्यर्थनिर्णयार्थत्वात् अन्यथा तस्य वैयर्थ्येन निरवकाशतया स्मार्तयोगस्याज्ञरूढितो बलवत्त्वात् ''रुजं द्रावयत'' इत्यादिस्मृतौ योगमुक्त्वा ''वेदेषु सपुराणेषु गीयत'' इति प्रयोगबाहुल्यरूपरूढिकथनाच्चाज्ञरूढितो विद्वद्रूढेर्बलवत्ताया यववराहाद्यधिकरणोक्तन्यायैर्निपुणतरं जन्मादिनये प्रतिपादितत्वादिति भावेनोक्तं मुख्यत्वादिति । तथाच ''मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय'' इति न्यायेन मुख्यार्थस्य ''विदेहि रुद्रो रुद्रियं महित्वम् । कुमारश्चित्पितरं वन्दमानं प्रति नानामरुद्रः । नमिनंति रुद्रः । रुद्रस्य शिर उत्पिपेषे''त्यादावयोगेपि ''रुद्रोवाव लोकाधार''इत्यादिश्रुतिषु रुद्रादिशब्दैर्मुख्यार्थस्य विष्णोरेव गृहीतेस्समाख्यानरुद्रादेर्द्युभ्वाद्यायतनत्वप्रापिकेति भावः । एतेन ''नन्वत्र रुद्रादिज्ञापकाभावेपि प्राणानां ग्रन्धिरसीत्यादिटीकाया निष्कृष्टार्थ उक्तो भवति ।

विष्णुप्रापकस्यापि सावकाशत्वे निर्णयो दुश्शक इत्यत आह ॥ मुक्तेति ॥ उक्तमित्यनन्तरं तथाचात्मश्रुत्यादिबलाद्विष्णुरेव द्युभ्वाद्यायतनमिति वाक्यशेषः । नन्वेवं सूत्रेष्वादौ परसाधकानां सावकाशत्वोक्तिपरमतच्छब्दादित्येतदुक्त्वा स्वशब्दादित्यादिहेतूपन्यासः कार्य इत्यतो वादकथारूपेण ग्रन्थस्य प्रवृत्तत्वात्तत्र च कथालक्षणतट्टीकाद्युक्तदिशा स्वपक्षसाधकस्यादौ वाच्यत्वाद्युक्तस्सूत्रक्रम इति भावेनाह ॥ अत्र चाद्य इति ॥ श्रुतिरूपेति ॥ आत्मश्रुति-रूपेत्यर्थः । तत्र टीकादौ स्वशब्दादिति सौत्रपदस्य स्वशब्दपर्यायेति कस्मादुक्तम् । कथं चोपपद्यतामित्यत आह ॥ स्वशब्दादित्येतच्चेति ॥ स्वेतिशब्दस्स्वशब्द इति ॥ स्वश्चासौ शब्दश्चेति ''विशेषणं विषेष्येण बहुल''मिति कर्मधारयः । स्वेतीति विग्रहप्रदर्शनम् ॥ यथेति ॥ व्याकरणे द्वितीयाध्यायस्य चतुर्थपादे ''सभाराजाऽमनुष्यपूर्वे''ति सूत्रम् । तस्यार्थः । राजशब्दपूर्वकोऽमनुष्यशब्दोपात्तरक्षःपिशाचशब्दपूर्वकश्च सभाशब्दः ''स नपुंसक''मिति प्रकृतनपुंसकं भवतितत्पुरुष इति । तत्र राजशब्दस्तत्पर्यायपरो न तु राजशब्दपरः । इनसभम् । ईश्वरसभम् । राजपूर्वकत्वे तु राजसभेत्येव । न तु राजसभमिति । वृत्तौ ''पर्यायवचन-स्यैवेष्यते'' इत्युक्तेः । स्वं रूपं शब्दस्याशब्दसंज्ञेत्यत्राद्याध्यायस्याद्यपादे ''जित्पर्याय वचनस्यैव राजाद्यर्थमिति भाष्यवार्तिकयोरुक्तत्वात् । तस्य चायमर्थः । सभाराजेति सूत्रे सभाराजाजमनुष्यपूर्वेति राजशब्दात्परं जकारव्यंजनमुच्चार्य राजशब्दो जित्त्वेन जकारेत्संज्ञकत्वेन निर्देष्टव्यः । तदनन्तरं स्वं रूपं शब्दस्येति सूत्रे जित्पर्यायवचनस्यैवेति पठनीयम् । इनसभमित्यादिरूपसिद्ध्यर्थमिति । अत्र यद्यपि स्वरूपं शब्दस्येति सूत्रे कैयटे सभाराजेत्यत्र ''अराजेति पर्युदास आश्रीयते । तेन राजशब्दसदृशानां तत्पर्यायाणामेव ग्रहणं सिध्यती''त्युक्तत्वात् सभाराजेति सूत्र एव च मंजर्यां ''द्वावत्र नञौ । अराजपूर्वा अमनुष्यपूर्वेति । तत्र नञिवयुक्तन्यायेन राजशब्दसदृशशब्दाः पर्याया एव गृह्यन्त'' इत्युक्तेस्त-त्राराजेति पदच्छेदेन पर्यायग्रहणं युक्तम् । प्रकृते तु नैवम् । तथापि भाष्यवार्तिकयोर्मते राजशब्दे पर्युदासानाश्रयणात्तन्मतावष्टंभेन वा न्यायतो वा वचनतोवा यथाकथंचिदुपात्तपर्यायस्य ग्रहणमित्यत्राविवादाद्वा राजशब्दस्तत्पर्यायपर इत्युक्तम् । यद्वा तत्र पर्युदासेन नञ्युक्तमिव युक्तमन्यस्मिन् सदृशाधिकरणे प्रतिपत्तिं गमयतीति न्यायेन पर्यायपरत्वस्य सिद्धत्ववदिहापि विषयवाक्ये स्वशब्दाभावेन तदन्यथानुपपत्तिरूपन्यायसिद्धत्वमेव पर्यायपरत्वस्येति भावेनायं दृष्टान्त उक्तः । अत एव प्राग्विषयवाक्ये स्वशब्दाभावादित्यन्यथानुपपत्तिरूपन्याय उपात्तः ।

केचित्तु कैयटाद्युक्तमेवायुक्तम् । अराजेत्युक्तावपि स्वं रूपं शब्दस्यैव ग्रहणापत्त्या नञिवयुक्त-न्यायाप्रवृत्तेरिति भावेनैवमुक्तमित्याहुः । केयमेवं सूत्रकारस्य वक्रा रीतिः ॥

**पाण्डुरङ्गि** – अतिसन्निहितेति ॥ द्वितीयसूत्रोक्तामृतसेतुत्वापेक्षयातिसन्निहितेत्यर्थः ॥ यथा सभाराजेत्यादि ॥

वृक्षादौ तद्विशेषाणां स्वेपर्यायविशेषयोः ।
पर्यायस्यैव राजादौ मत्स्यादौ तद्विशेषयोः ॥

इति वचनार्थः । पर्यायवचनस्यैव न स्वरूपस्य नापि विशेषाणां चन्द्रादीनामित्यर्थः । कथं पुनरेतल्लभ्यते । द्वावत्रनञौ । अराजपूर्वाऽमनुष्यपूर्वाचेति । तत्राराजपूर्वेति न प्रसज्यनिषेधार्थस्य ग्रहणम् । असामर्थ्येन समासानुपपत्तेः । किं तु पर्युदासार्थस्यैव । तथाच नञिवयुक्तन्यायेन राजशब्दसदृशाः पर्याया एव गृह्यंत इति ध्येयम् ।

## तात्पर्यचन्द्रिका

**आत्मशब्दादित्युक्तौ तु यद्यप्यार्जवं प्रतिपत्तिलाघवं च शब्दलाघवाद्वरम् । तथापि तस्य विष्णावसाधारण्यं न ज्ञापितं स्यात् । तस्य शब्दस्तच्छब्द इति विग्रहं विवक्षित्वा तच्छब्दादित्युक्तौ तु शब्दविशेषो नोपात्तः स्यात् । अत उभयार्थं स्वशब्दादित्युक्तम् । एवमुक्ते ह्युक्तिवक्त्रत्वावैयर्थ्याय स्वस्य विष्णोरेव शब्दः स्वशब्द इत्यपि विग्रहस्य विवक्षणीयत्वादसाधारण्यं ज्ञापितं भवति । एतदेवाभिप्रेत्योक्तं तत्वप्रदीपे ''विष्णोः स्वरूपस्यैव साक्षाद्वाचको ह्यात्मशब्द'' इति । षष्ठीसमासमात्रविवक्षा चेत् ''तद्धर्मोपदेशात् । तल्लिङ्गा''दित्यादाविवात्रापि तच्छब्दः प्रयुज्येत । अथवा यथा लोकेऽन्यत्रप्रसिद्धोऽपि स्वशब्दो विष्णोः सकाशात् सम्भूते चतुर्मुखे स्वभूरिति प्रयोगादिवशाद्विष्णौ मुख्यः तथा लोकेऽन्यत्रप्रसिद्धोऽप्यात्मशब्दश्चतुर्मुखे आत्मभूरिति प्रयोगात् -**

आत्मेति मुख्यतो विष्णुस्तदन्ये तूपचारतः ।
तथैव स्व इति प्रोक्तस्तस्माद्ब्रह्माऽऽत्मभूः स्वभूः ॥

इति वचनाच्च विष्णौ मुख्य इत्यभिप्रेत्य स्वशब्दादित्युक्तम् । द्वितीये विषयवाक्यात्किञ्चिद्व्यवहितलिङ्गरूपसाधकोक्तिः । अत्र च टीकोक्तरीत्या जायमानत्वलिङ्गेनात्मश्रुतेर्गौणत्वमस्त्विति शङ्कानिरासात्ततः प्राक् स्वातन्त्र्येण हेत्वंतरपरत्वाभावाच्चशब्दाभावः । इहोपसृप्यत्वं श्रौतसेतुशब्दात् प्राप्यांतररहितत्वे सति प्राप्यत्वम् । न त्वर्चिरादिवत्प्राप्यत्वमात्रम् । अत एव भाष्ये ''अमृतस्यैषसेतु''रिति वाक्यमेवोदाहृतम् । न तु ''परात्परं पुरुषमुपैती''ति वाक्यमिति न कश्चिद्दोषः ।

**प्रकाशिका** – आत्मशब्दादित्येव कुतो नासूत्रयदिति भावेनाक्षिप्य समाधत्ते ॥ आत्मशब्दादिति ॥ आर्जवमिति ॥ स्वेति शब्द इति विग्रहाश्रयणे विषयवाक्ये तदभावालोचनेन तत्पर्यायग्रहणस्य दुर्बोधत्वेन वक्रत्वादेव मुक्तौ तदभावादार्जवमित्यर्थः । त्वत्पक्षेऽपि शब्दगौरवमित्यत आह॥ प्रतिपत्तीति ॥ तर्हि तल्लिङ्गादित्यादाविव तच्छब्दादित्युक्तिस्स्यादित्यत आह ॥ तस्येति ॥ अत इति ॥ अन्यथा न्यासे विवक्षितासिद्धेरसाधारण्यज्ञापनशब्दविशेषोपादानप्रयोजनरूपोभयार्थमित्यर्थः । एवमुक्तौ कथमुभयस्य लाभ इत्यत आह ॥ एवमिति ॥ न केवलं स्वेतिशब्द इति विग्रह इत्यपेरर्थः । एवं विग्रहद्वयमाश्रित्यैकं समाधिमुक्त्वाऽधुना स्वेति शब्द इत्येव विग्रहः । पूर्वोक्तदिशा स्वशब्दपर्यायात्मशब्दादित्येवार्थः । तर्ह्यात्मशब्दादित्येव कुतो नोक्तमित्याशंक्य स्वशब्दादित्युक्तौ यथा स्वशब्दो विष्णौ मुख्यस्तथाऽऽत्मशब्दोपीत्यभिप्रायसूचनमेवमुक्तेस्सूत्रकारस्य प्रयोजनम् । अत एव छान्दोग्यभाष्ये षष्ठे स्वशब्दतुल्यस्यात्मशब्दस्य विष्णौ मुख्यत्वमाचार्यैस्समर्थितमिति भावेन पक्षांतरमाह ॥ अथवेति ॥ स्वयमेव भवतीति स्वभूरिति भ्रमनिरासाय विष्णोस्सकाशात् सम्भूत इत्युक्तम् । उक्तं च छान्दोग्यभाष्ये ''स्वयंभूरिति विष्णुजत्वाद्विरिंच उच्यते । न हि विरिंचादेव विरिंचो जातः । यो ब्रह्माणं विदधातीति श्रुतेः । आत्मा भगवान् । ततो भूतत्वादात्मभू''रित्यादि । आदिपदेन ''स्वातन्त्र्यात्स्व इति प्रोक्त'' इत्यादिवचनं गृह्यते ।

द्वितीय इति ॥ ''मुक्तोपसृप्यव्यपदेशा''दित्यत्र ''अमृतस्यैष सेतु''रित्यमृतशब्दितमुक्तवर्गाश्रयत्वरूपलिङ्गोक्तिरित्यर्थः । मुक्तोपसृप्येति भावप्रधानः । ''द्व्येकयोर्द्विवचनैकवचने'' इत्यत्र पाणिनीये द्व्येकयोरित्यत्रेव । लिङ्गोक्तिपरत्वे स्वशब्दादिति हेतुसमुच्चायकचशब्दस्स्यादित्यत आह ॥ अत्र चेति ॥ ततः प्राक् गौणत्वशङ्कानिरासात्प्राक् । नन्वयं योगश्शक्योऽवक्तुम् । ''तन्निष्ठस्य मोक्षोपदेशात् । हेयत्वावचनाच्चे''त्यत्रैव ''तमेवैकं जानथात्मान''मित्युक्तात्मशब्दस्य विष्णौ मुख्यतायास्तात्पर्यस्य च सिद्धेः । तथैव तत्र टीकादौ भानात् । न च तत्र ''जानथात्मानमन्या वाचो विमुंचथे''ति हेयत्वावचनाहेयत्ववचनान्यहेयत्ववचनैरेव वैष्णवत्वमात्मशब्दस्योक्तम् । अत्र तु मुक्तोपसृप्यत्वलिङ्गेनेति वाच्यम् । तत्रापि भाष्ये ''अमृतस्यैष सेतु''रित्यंतस्योदाहरणात् । टीकायां ''आत्मशब्दो मोक्षदातृत्वाहेयत्वाभ्यां निर्गुणलिङ्गाभ्यामपह्नियत'' इत्युक्तेस्तन्निष्ठसूत्रविषयत्वसम्भवाच्च । मैवम् । तत्रात्मशब्दस्य जीवे मुख्यत्वमाशङ्क्य तन्निष्ठस्य मोक्षोपदेशादिना तन्निरासः । अत्र तु विष्णौ मुख्योप्यात्मशब्दोऽत्र प्रकरणे जायमानत्वरूपनिरवकाशजीवलिङ्गादमुख्यार्थः किं न स्यादिति शङ्कायां मुक्तोपसृप्यत्वलिङ्गेन तदुद्धारः । हेयत्वावचनादेरप्युपलक्षणमेतत् । ननु चैवं यैर्लिङ्गैः पूर्वमात्मशब्दस्य वैष्णवत्वं साधितं तेषु जाग्रत्स्वेव निरवकाशजीवलिङ्गेनामुख्यवृत्त्याऽवैष्णवत्वे शङ्किते कथं तैरेव शङ्कानिरास इति चेत्सत्यम् । तस्याग्रे ''अतच्छब्दात् । प्राणभृच्चे''त्यत्र सावकाशयिष्यमाणत्वं मुक्तोपसृप्यत्वादेस्तु निरवकाशत्वमिति भावेन ''मुक्तोपसृप्यव्यपदेशा''दित्युक्तिरिति न कोपि दोषः । मुक्तप्राप्यत्वस्यार्चिरादिना गच्छतां तदा प्राप्यस्थाने व्यभिचारमाशङ्क्याह ॥ इहेति ॥ सेतुत्वस्य प्राप्यांतररहितत्वे सति प्राप्यत्वरूपत्वादित्यर्थः । तादृशं च ब्रह्मण्येव ''विश्वात्मानं परायणं, मुक्तानां परमागतिः, साकाष्ठासा- परागति''रित्यादेरिति भावः । अत एवेति ॥ चरमप्राप्यत्वस्य सेतुपदेनेवोपैतिपदेनालाभादेवेत्यर्थः ॥

**पाण्डुरङ्गि** – आत्मशब्दादित्युक्तौ त्विति ॥ शब्दगौरवेपि प्रतिपत्तिलाघवात् स्वशब्दादित्युक्तौ च लाघवेपि प्रतिपत्तिगौरवेण प्रतिपत्तिगौरवापेक्षया प्रतिपत्तिलाघवस्यैव ज्यायस्त्वादात्मशब्दादित्येव वक्तव्यमित्यर्थः ॥ एवमुक्ते ह्युक्तिवक्रत्वावैयर्थ्यायेति ॥ आत्मशब्दादिति वक्तव्ये स्वशब्दादित्युक्तिवक्रत्वावैयर्थ्यायेत्यर्थः । ननु च तच्छब्दादित्युक्तावपि

विषयवाक्य आत्मशब्दातिरिक्तशब्दांतराभावेन विषयवाक्यस्थात्मशब्दरूपशब्दविशेषलाभेन स्वशब्दादिति किमर्थमुक्तम् । अन्यथा आकाशस्तल्लिङ्गादित्यपि न वक्तव्यं स्यात् । तथोक्तौ तु लिङ्गविशेषाप्रतीतेरित्यरुचेराह ॥ अथवेति ॥ ननु न मुक्तप्राप्यत्वं विष्णुत्वनिश्चायकम् । तस्यार्चिरादिसाधारणत्वादित्यत आह ॥ श्रौतेति ॥ अमृतस्यैष सेतुरिति श्रुतिस्थसेतुशब्दादित्यर्थः । जायमानादिशब्दानामिति वक्ष्यमाणरीत्या भेदव्यपदेशस्य जीवविषयत्वात् प्राणभृच्चेति योगविभागमात्रस्योत्तरार्थकरणेपि तत्सूत्रेऽप्यत्रत्यसाध्यहेत्वनुकर्षादत्रैव तत्सूत्रार्थोऽभिप्रेत इत्याशयेनात्र व्याख्यातमिति द्रष्टव्यम् ।

## तात्पर्यचन्द्रिका

तृतीये तु परपक्षे साधकाभावोक्तिः । तत्र चानुमीयत इत्यनुमानमित्यनुमानशब्देन वा अनुमानशब्दाच्छैषिकेऽणि कृत आनुमानशब्देन वा अनुमानप्रधानपाशुपतसांख्याद्यागमसिद्धं रुद्रप्रधानाद्युच्यते । अनेन च परपक्षे साधकाभावं वदता जायमानादिशब्दानामपि जीवशब्दत्वं नास्ति । ब्रह्मण्यपि सम्भवादिति सूचनात् स्वपक्षे बाधकमप्युद्धृतम् । एवं रुद्रसमाख्यास्थानां रुद्रपिनाक्यादिशब्दानामपि रुद्रादिशब्दत्वं नास्ति मुख्यतः । तथा विष्णुसमाख्यास्थानां विष्ण्वादिशब्दानामपि रुद्रादिशब्दत्वं नास्ति । ''न तु नारायणादीनां नाम्नामन्यत्र सम्भवः । अन्यनाम्नां गतिर्विष्णु''रित्यादिभाष्योदाहृतस्मृतेः । तथाच रुद्रादिसमाख्या सावकाशा । विष्णुसमाख्यातु निरवकाशेत्यपि सूचितम् । एवं चानुव्याख्याने ''बाहुल्यं लिङ्गशब्दाना''मित्यादिना ''पूर्वपक्षेषु युक्तय'' इत्यन्तेन पूर्वपक्षयुक्तिमुक्त्वा ''ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः । सिद्धान्तयुक्तयो ज्ञेया'' इति यः सिद्धान्तन्याय उक्तः सोऽपि सूत्रारूढः । अत्र च प्रसज्यप्रतिषेधार्थस्य नञः क्रियासापेक्षत्वेनासामर्थ्येऽपि ''असूर्यं पश्या राजदाराः । अश्राद्धभोजी ब्राह्मण'' इत्यादौ समासोऽस्तीति ''अकर्तरि च कारके संज्ञाया''मित्यत्र ज्ञापितत्वाद्वा निर्मक्षिकमित्यादाविव ''अर्थाभावेऽव्ययीभाव'' इत्यव्ययीभावसमासाश्रयणाद्वा

**अतच्छब्दादिति पदं भाष्ये ''तच्छब्दाभावा''दिति व्याख्यातम् । अव्ययीभावत्वेऽप्ययं न भवति । ''अपंचम्या''इत्युक्तेः । एवं ''अतद्धर्माभिलापा''दित्यादावपि द्रष्टव्यम् । चतुर्थे अद्वैतिना जीवस्येव सांख्यादिना प्रधानादेर्ब्रह्माभेदानंगीकारात् ''अन्यमीश''-मित्यादिभेदव्यपदेशस्य प्रधानादिविषयत्वाभावाच्च ''भेदव्यपदेशा''दित्युत्तरहेतोर्जीव-पक्षमात्रनिरासकत्वाद्योगविभाग उत्तरार्थः ।**

**प्रकाशिका** – तृतीय इति ।। नानुमानमतच्छब्दादित्यत्र ।। अनुमीयत इतीति ।। यद्यपि ल्युड्भावेकरणाधिकरणयोश्च विहितः । न तु कर्मणि । तथापि ''कृत्यल्युटोबहुल''मिति बहुलग्रहणात्कर्मणि ल्युटि कृते ''युवोरनाका''वित्यनादेशे रूपम् । ''आनुमानं अनुमानात्मकागमपरिकल्पितरुद्राख्यं ब्रह्मात्र नवाच्य''मिति तत्वप्रदीपोक्त्यनुसारादाह ।। अनुमानशब्दादिति ।। शैषिके ''शेषे'' इत्यनेनापत्याद्यन्यार्थे विहितेऽण्प्रत्यये आदिवृद्ध्यादौ सति रूपम् । अनुमानप्रधानको यः पाशुपतसांख्यहैरण्यगर्भसौरस्कान्दशाक्तेयाद्यागमः तत्सिद्धं रुद्रप्रधानहिरण्यगर्भसूर्यशक्तिप्रभृतीत्यर्थः । यद्यपि टीकायां रुद्रप्रधाने द्वे एवानुमानमित्यस्यार्थ उक्तः । तथापि पूर्वपक्षटीकायां दृष्टफलविधायकवाक्यदृष्टांतेन सर्वाश्रयत्वप्रतिपादकवाक्य-प्रामाण्यानुमानेन रुद्रस्य प्रधानस्य च सर्वाश्रयत्वसिद्धेरुक्तत्वेनास्य पूर्वपक्षन्यायस्य दुरागममात्रसाधारण्यात् । अतच्छब्दादित्युक्तसिद्धांतन्यायस्य च दुरागममात्रप्रसिद्धरुद्र-प्रधानादेस्सर्वस्यापि द्युभ्वाद्यायतनत्वनिरासेऽपि साम्यात् भाष्ये रुद्रोक्तेस्तत्वनिर्णये प्रधानोक्तेष्टीकायामुभयोक्तेश्चोपलक्षणत्वादिति भावेनादिपदप्रयोगः । एतेनानुमानशब्दस्य व्युत्पत्तिद्वयेऽपि रुद्रार्थत्वे विशेष्यनिघ्नतया पुल्लिङ्गता स्यात् । ''नवेति विभाषे''तिसूत्रे महाभाष्ये ''अयमितिकरणः परः प्रयुज्यत'' इति ल्युडंतस्यापि पुल्लिङ्गप्रयोगात् । कैयटे ''क्रियत इति करणः । इतिश्चासौ करणश्चे''ति व्याख्यानादिति निरस्तम् । रुद्रप्रधानादीति सामान्यस्य विशेष्यस्योपादानात् । तत्प्रधानत्वात्ताच्छब्द्यमित्यागम एवानुमानशब्देन गृह्यत इत्यर्थः । ननु

शैवाद्यागमसंप्राप्तदृष्टगेन फलेन तु ।
तद्वाक्योपमयान्यच्च प्रमाणत्वेऽनुमीयते ।।

ईशवाक्यत्वत इति चेत्तद्व्यभिचारिणा ।
अप्रामाण्यानुमाच स्यात् ........... ॥

इति शास्त्रयोनिनयानुव्याख्यान एवात्रानुमानपदसूचितपूर्वपक्षबीजस्य टीकोक्तस्य निरस्तत्वेन कथं पुनरत्रागमबलेन तत्सिद्धं रुद्रप्रधानाद्याशङ्क्य निरस्यत इति चेदत्राहुः । श्रुतिलिङ्गबाहुल्येन प्रबलसमाख्यारूपहेत्वंतरेण निरवकाशजायमानत्वलिङ्गेन च पूर्वपक्षे सति पाशुपताद्यागमसिद्धत्वमभ्युच्चयत्वेनोच्यते । तथैव सुधायामुक्तेरिति । यद्वा ''रुद्रोवाव-लोकाधार'' इत्यादिश्रुत्या रुद्रादेस्सर्वाधारत्वप्राप्तौ तत्साहाय्येन तस्य द्युभ्वाद्यायतनत्वप्रति-पादकागमस्यापि प्रामाण्येन ''तद्व्यभिचारिणा । अप्रामाण्यानुमाचस्या''दित्युक्ता-प्रामाण्यानुमानस्य बाधितत्वात् ''दृष्टगेन फलेन तु'' इत्यनुमानस्य च समूलत्वात्तेन तत्प्रामाण्योपपत्तेरागमावष्टंभेन पुनश्शङ्कायां रुद्रादिसमाख्याया वैष्णवत्वोक्त्यैवाप्रामाण्यानुमानं निर्बाधमिति समाधानमित्यभिप्राय इति । ''सोंतकस्सरुद्र'' इत्यादिभाष्यं सर्वं सूत्रारूढमिति भावेनाह ॥ अनेनचेति ॥ सूत्रेणेत्यर्थः ॥ विष्ण्वादिशब्दानामपि रुद्रादिशब्दत्वं नास्तीति ॥ तथात्वे तच्छब्दाभावादिति सूत्रकारो न ब्रूयादिति भावः । अनुव्याख्यानोक्तमपि सूत्रांशाभिमतमित्याह ॥ एवं चेति ॥ समाख्यादिस्थरुद्रपिनाक्यादिशब्दानां विष्णौ मुख्यत्वे सतीत्यर्थः ।

बाहुल्यं लिङ्गशब्दानामनुक्तिश्च विरुद्धता ।
अदृष्टिरन्वयाभावो विपरीतश्रुतिभ्रमः ॥
लिङ्गावकाशराहित्यभ्रमस्तादृग्द्वयं तथा ।
बहुतादृक्त्वमुक्तस्य विरोधोऽर्थात्तथागतिः ॥
समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः ।
ता एव बलवत्यस्तु गत्यंतरविवर्जिताः ॥
सिद्धान्तयुक्तयो ज्ञेया दृश्यंते ताश्च सर्वशः ।

इत्यनुव्याख्यान इत्यर्थः । अतच्छब्दादिति सर्वशब्दानामन्यत्राभावं वदता गत्यन्तर-विवर्जितत्वमुक्तमिति भावः । नन्वतच्छब्दादित्यस्य तच्छब्दाभावादिति व्याख्यानमयुक्तम् ।

असामर्थ्येन समासानुपपत्तेः । अतः पररीत्या पर्युदासमाश्रित्य तच्छब्दविरुद्धशब्दादित्येव व्याख्येयमित्यत आह ।। अत्र चेति ।। प्रसज्येति ।।

प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ।
पर्युदासस्सविज्ञेयो यत्रोत्तरपदेन नञ् ।। इत्युक्तेः ।

सूर्यं न पश्यंतीत्यसूर्यंपश्याः । ''असूर्यललाटयोर्दृशितपो''रिति खशिकृते ''खित्यनव्ययस्य । अरुर्द्विषदजंतस्य मुम् ''इति मुमागमे ''पाघ्राध्मास्थाम्नादाण्दृशी''त्यादिना दृशेः पश्यादेशे रूपम् । श्राद्धं न भुङ्क्ते इत्यश्राद्धभोजी । ''व्रज'' इति सूत्रेण शास्त्रीयनियमरूपे व्रते गम्यमाने सुबन्त उपपदे धातोर्णिनि रूपम् । अत्र नञः क्रियासापेक्षत्वेन सूर्यादिपदेनाकांक्षाभावेऽपि समासस्स्वीकृतो ज्ञापकेन । ज्ञापकमाह ।। अकर्तरीति ।। तृतीयाध्यायस्य तृतीयपादे कर्तृवर्जितेऽन्यस्मिन्कारके संज्ञायां विषये धातोर्घञ् प्रत्ययो भवति । चकारादसंज्ञायां च । प्रास्यंति तमिति प्रास इत्यादिसिद्ध्यर्थम् । तत्र सूत्रेऽकर्तरीति किं पर्युदासः किं वा प्रसज्यप्रतिषेध इति विचारे पर्युदासपक्षे नञिवयुक्तन्यायेन कर्तृभिन्नस्य कर्तृसदृशस्य कारकस्यैव ग्रहणसम्भवात् कारकपदं व्यर्थम् । तत्क्रियते । तेन ज्ञायतेऽकर्तरीति न पुर्यदासः । किं तु प्रसज्यप्रतिषेध इति । तथाच प्रसज्यप्रतिषेधेऽपि समासोऽस्तीति ज्ञापनाय कारकपदमिति । अत एव ''आदेच उपदेशेऽशिती''ति सौत्रनिर्देशो युक्तः । उपदेश एच आत्वं भवति । शिति तु शकारेत्संज्ञकप्रत्यये परतो न भवतीति प्रसज्यप्रतिषेधार्थत्वस्य तत्राभिमतत्वात् । पर्युदासत्वे तु शितोऽन्यत्राच्प्रभृतिप्रत्यये परत एच आत्वं भवतीत्यर्थप्राप्त्या सुग्लः सुम्ल इत्यादौ ''आतश्चोपसर्गे'' इति कप्रत्ययो न स्यात् । व्यक्तमेतत्सर्वं वृत्त्यादौ ।। अव्ययीभावेति ।। तस्य शब्दस्तच्छब्दः तच्छब्दस्याभावोऽतच्छब्दम् । ''अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यांतवचने''ष्विति सूत्रेऽर्थाभावे वर्तमानं यदव्ययं तदुत्तरपदेन समस्यते स समासोऽव्ययीभाव इति विधानादिहाभावार्थकस्य नञ उत्तरपदेन समासः । यथा मक्षिकाणामभावो निर्मक्षिकम् । विवादस्याभावोऽविवादमित्यादौ तथेत्यर्थः ''विष्णावेवात्मशब्दस्य रूढत्वान्न शिवादिकान् । श्रुतिर्वक्ती''त्येतत्पादीयानुव्याख्याने । तथा -

आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत् ।
स्वशब्दात्प्राणभृच्चैव नोक्त इत्येव वेदराट् ।।

इति चतुर्थाध्यायाद्यपादीयानुव्याख्यानेच ''स्वशब्दपर्यायात्मशब्दाच्च न प्रकृतिजीवावभिधीयेते'' इति विष्णुतत्वनिर्णये च ''तेभ्यश्शिवादिभ्योऽन्यदतद्ब्रह्म । तस्य शब्दोऽतच्छब्द'' इत्येतत्पादीयसुधोक्तदिशाऽर्थान्तरस्योक्तत्वात्तत्र च शब्ददोषाभाव इति भावेन भाष्य इत्युक्तम् । अर्थान्तरपक्षे ''अतद्धर्माभिलापा''दित्यत्र परमतेऽभिहितरीत्या स्वशब्दादित्यनेन पौनरुक्त्यदोषस्तु अन्यत्र सिद्धान्तसाधकस्यैव पूर्वपक्षनिरासेऽपि हेतुत्वं द्रष्टव्यं तेन न न्यूनतादोष इत्येतत्प्रदर्शयितुं ''सिद्धांतसाधकस्यैव पूर्वपक्षनिरासेपि व्यापारं दर्शयितुमिदं सूत्र''मिति सुधोक्तदिशा प्रयोजनविशेषवत्त्वान्निराकर्तव्य इति भावः । नन्वव्ययीभावत्वे ''अव्ययीभावश्चे''ति सूत्रेणाव्ययत्वे ''अव्ययादाप्सुप'' इति समासादुत्पन्नसुपो लुकिप्राप्ते ''नाव्ययीभावादतोम्त्वपञ्चम्या'' इति सूत्रेणामादेशविधानादतच्छब्दमिति वाच्यं नत्वतच्छब्दादिति । तत्राह ।। अव्ययीभावत्वेऽपीति ।। अदंतादव्ययीभावात्परतः सुपो लुक् न भवति । किं त्वमादेश एव । पञ्चम्यास्त्वमादेशोपि नेति पञ्चम्या अमादेशस्य निषेधादित्यर्थः । एतेन ''अकर्तरिच कारक इति ज्ञापकादसामर्थ्येपि क्वचित्समासो भवतीति वा अर्थाभावे यदव्ययमित्यव्ययीभावो वेति समाधानमवधातव्य''मिति सुधावाक्यं विवृतं ध्येयम् । ''छन्दोवत्सूत्राणि भवन्तीति वे''ति सुधोक्तं समाधानांतरं स्फुटत्वान्न विवृतम् ।। एवमिति ।। ''न च स्मार्तमतद्धर्माभिलापा''दित्यत्राप्युक्तसमाधिद्वयं ध्येयमित्यर्थः । जीववायुनिरासाय सूत्रं ''प्राणभृच्चे''ति । तत्र चशब्द आत्मशब्दमुक्तोपसृप्यत्वातच्छब्दादिहेतूनां नञश्चानुकर्षणार्थ इति टीका नयुक्तेव । तथात्वे नानुमानप्राणभृतावतच्छब्दादित्येकयोगेन निर्देष्टव्ये विभागायोगादित्यत आह ।। चतुर्थ इति ।। योगविभाग उत्तरार्थ इत्यनेनान्वयः । भेदव्यपदेशादित्यत्रानुवृत्त्यर्थः । सहनिर्देशे त्वानुमानिकस्याप्यनुवृत्तिस्स्यात् । अस्तु कोदोष इत्यत आह ।। अद्वैतिनेति ।। आदिपदेन शैवादिर्ग्राह्यः । यथा व्याकरणेऽङ्गाधिकारे ''दंशसंजस्वंजांशपि । रंजेश्च । घञिचभावकरणयो''रित्यत्र रंजेश्चेत्यस्य पूर्वसूत्र एव स्वंजरंजामिति निर्देष्टव्ये घञिचेत्युत्तरसूत्रेऽनुवृत्त्यर्थो योगविभागः । अन्यथा सर्वस्याप्यनुवृत्तिस्स्यात् । तथेहापीति भावः । एतच्च परभाष्यादावपि व्यक्तम् । तेन ''प्राणभृच्चेति सूत्रपृथक्त्वकल्पनमयुक्त''मिति श्रुतप्रकाशोक्तं निरस्तं भवति ।

**पाण्डुरङ्गि** – ।। अकर्तरि चेति ।। अत्र च संज्ञायां विषये धातोर्घञ् विहितः प्राप्त आहार इत्यादिसिद्ध्यर्थम् । स च कर्तरि निषिध्यते । अकर्तरीति कर्तरि न भवतीत्यर्थः । किं कारणम् । मिषत्यसौ मेष इत्यादौ घञ्मा भूदित्येवमर्थम् । तथा सति मैष इति प्रसङ्गात् । न च अकर्तरीति प्रसज्यप्रतिषेध इव कर्तृभिन्ने कर्तृसदृशे कारके भवतीति पर्युदासाश्रयणेऽपि मेष इत्यत्र तदभावः सिद्ध्यत्येवेति किं प्रसज्यप्रतिषेधाश्रयणेनेति वाच्यम् । तथा सति कारक - ग्रहणमनर्थकमेव स्यात् । अकर्तरीति पर्युदासे हि नञिवयुक्तन्यायेन कर्तुरन्यस्मिन्कर्तृसदृशे कारक एवेति प्रतीतिर्भवति । यथाऽब्राह्मण इति क्षत्रियादौ । तस्मात्कारकग्रहणं व्यर्थम् । प्रसज्यप्रतिषेधे तु वाक्यभेदेन संज्ञायां घञ् भवति । कर्तरि च न भवतीत्येषोऽर्थः संपद्यते । ततः संज्ञायां घञ् भवतीति प्रथमवाक्येऽर्थनिर्देशाभावात् अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थ एव घञ् स्यात् । अतः प्रसज्यप्रतिषेधे कर्तव्यमेव कारकग्रहणम् । पर्युदासे तूक्तरीत्या न कर्तव्यम् । तच्च कियमाणं प्रसज्यनिषेधेनासामर्थ्येऽपि समासो भवतीति ज्ञापयति । तदनेन प्रकारेणासामर्थ्येऽपि समासस्याकर्तरि च कारके संज्ञायामित्यत्र कारकग्रहणेन ज्ञापितत्वात् । अतच्छब्दादित्यत्रासामर्थ्येऽपि समासो युज्यत एवेति भावः । ननु चाव्ययादाप्सुप इति सुपो लोपं विधायादंतादव्ययीभावात्परस्य सुपो नाव्ययीभावादतोमित्यम्भावविधानादतच्छब्दमिति स्यात्तत्राह ।। अव्ययीभावत्वेऽपीति ।। अपंचम्या इत्युक्तेः तत्रैव सूत्रे पंचमीं विना मादेशविधानादिति भावः । नानुमानमतच्छब्दादित्यनेन प्रधानरुद्रयोरिव वायुजीवयोरपि निरासस्य कर्तुं शक्यत्वेन प्राणभृच्चेति पृथग्वाक्यविभागानुपपत्तिरित्यत आह ।। चतुर्थ इति ।। रुद्रवाय्वोरपि शैवादिभिर्विष्णुभेदस्यैवाङ्गीकारादित्यादिशब्दार्थः । उत्तरार्थः प्रकरणादि-त्युत्तरसूत्रार्थ इत्यर्थः ।

## तात्पर्यचन्द्रिका

**तत्र चशब्दो न केवलं टीकोक्तरीत्या पूर्वोक्तहेतूनां नञश्चानुकर्षणार्थः । किं तु वायुसमुच्चयार्थोपीति द्रष्टव्यम् । पञ्चमे जीवब्रह्माभेदेनोभयाबाधसम्भवेनैकस्यापि बाधो युक्त इति शङ्किते तन्निरासाच्चशब्दाभावः स्वपक्षसाधकस्वशब्दादिहेतुविप्रकर्षश्च । अत्र चान्यमीशमित्युक्तेनान्यत्वेन पश्यतीति प्रकृतो जीवः पदिन्यायेन (यदिन्यायेन)**

प्रतियोगित्वेन सम्बध्यत इत्यभिप्रेत्येयं श्रुतिर्जीवेशभेदे प्रमाणीकृता । ''विशेषण-भेदव्यपदेशाभ्या''मित्यत्र त्वयमन्यो मार्ग इत्युक्ते प्रसिद्धमार्गादन्यत्ववदन्यमीश-मित्युक्ते प्रसिद्धेशाद्रुद्रादन्यत्वप्रतीतेरियं श्रुतिर्व्याख्यानांतरमभिप्रेत्य रुद्रादन्यत्वे प्रमाणीकृतेत्यविरोधः । एवं षष्ठेपि भेदव्यपदेशस्यान्यविषयत्वशङ्कानिरासाच्च-शब्दाभावः ।

सप्तमेतु न केवलं व्यपदेशात् श्रुतेर्भेदः किं तु लिङ्गादपीति कथनाच्चशब्दः । श्रुतावदनस्य प्राथम्येपि स्थितेरीश्वरसम्बन्धित्वेनाभ्यर्हितत्वादल्पाच्तरत्वाच्च सूत्रे तस्याः प्राथम्यम् । न च वाच्यं द्वासुपर्णेति मन्त्रोक्ते स्थित्यदने बुद्धिजीवगते । न तु जीवेशगते । ''तावेतौ सत्वक्षेत्रज्ञा''विति पैंगिरहस्यब्राह्मणेनास्य मन्त्रस्य सत्व-क्षेत्रज्ञशब्दार्थत्वेन बुद्धिजीवविषयत्वेन व्याख्यातत्वादिति । ब्राह्मणे सत्वशब्दस्य ''ऊनं न सत्वेष्वधिको बबाधे'' इति प्रयोगात् ''सत्वमस्त्रीतुजन्तु''ष्विति नामानु-शासनात् ''सत्वं जीव इति प्रोक्त'' इतिस्मृतेश्च जीवपरत्वात् । क्षेत्रज्ञशब्दस्य च –

प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंयुतम् ॥

इति मोक्षधर्मादिवचनैर्ब्रह्मपरत्वात् । अन्यथा द्वासुपर्णेत्यस्मादुत्तरं ''समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान'' इत्यादिकमयुक्तं न हि बुद्धौ पुरुषशब्दो मुह्यमानत्ववीतशोकत्वादिकं च युक्तम् ।

**प्रकाशिका** – सूत्रे वायुनिरासाप्रतीतेराह ॥ तत्रेति ॥ पञ्चम इति ॥ भेदव्यपदेशादिति सूत्रे । ''अन्यमीशमिति जीवेशभेदव्यपदेशादित्यर्थ'' इति टीका नयुक्तेव । श्रुतौ जीवादन्य-मित्यप्रतीतेः । विरुद्धा चादृश्यत्वाधिकरणभाष्येणेत्यत आह ॥ अत्र चेति ॥ पदिन्यायेनेति ॥ चतुर्थस्याद्यपादे ''पदकर्माप्रयोजकं नयनस्य परार्थत्वा''दिति दशमाधिकरणे चिन्तितम् । ज्योतिष्टोमे ''एकहायन्या क्रीणाती''त्येकहायन्या गवा सोमक्रयणं प्रकृत्य ''षट्पदान्यनु-निष्क्रामति । सप्तमं पदमध्वर्युरंजलिना गृह्णाती''ति षट्पदनयनानंतरं साज्यसप्तमपदपांसुग्रहणं

विधाय ''यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपांज्या''दिति हविर्धाने शकटप्रवर्तनकाले तदक्षांजनं तेन पदपांसुना साज्येन कर्तव्यमाम्नायते । तत्र सोमक्रयणवत्पदपांसुसाध्यमक्षांजनमप्येकहायनीनयनस्य प्रयोजकमनुष्ठापकमिति यावत् । उत नेति संशये उभयोरप्येकहायनीनयनसाध्यत्वादुभयं प्रयोजकमिति प्राप्ते एकहायन्या क्रीणातीत्येकहायन्याः क्रयणार्थत्वेन विधानात् यदर्थं द्रव्यं तदर्थस्तत्संस्कार इत्येकहायन्या सोमक्रयणदेशं प्रति नयनरूपस्य संस्कारस्यापि क्रयणार्थत्वात्क्रयणमेव प्रयोजकमन्यदनुनिष्पादीति सिद्धांत इति । अत्र सप्तमं पदमित्यत्र पदशब्दस्य सन्निधानादेकहायनीपदविषयकत्वं सिद्धंकृत्वा विचारः प्रवृत्त इति पदिन्यायेनेत्युक्तमित्याहुः । पदयुक्तन्यायः पदिन्यायः ॥ एवमिति ॥ पञ्चम इव प्रकरणादित्यत्रापीत्यर्थः । जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते न तु परमात्मनः । अतो न तयोर्भेद इति शङ्कायां ''द्वेविद्येवेदितव्ये'' इति परविद्याविषयस्य वस्तुनः परमात्मन एव प्रक्रम्याधीतत्वेन तस्य तत्प्रकरणत्वेनेशशब्देन तस्यैव ग्रहणोपपत्तेरित्यर्थोक्तेरिति भावः ।

चशब्दाभाव इति ॥ पूर्वानंतर्यं चेत्यपि ज्ञेयम् । नन्वेवमयं योगश्शक्यो वक्तुम् । कथमिष्टसिद्धिः । यथाऽतच्छब्दादित्युक्त्या समाख्यास्थरुद्रादिशब्दानां विषयवाक्यस्थजायमानशब्दस्य चान्यार्थत्वनिरासेन विष्णवर्थत्वसिद्धिः तथेशशब्दस्यापि विष्णवर्थत्वसिद्धेः । न च तत्र ''जायमान'' इत्यादिश्रुतिस्मृतिबलात्तथात्वसिद्धिः । इहापि ''स ईशो योहरि''रिति ''ईशानादेव चेशान'' इति ''एवं नानाविधैश्शब्दैरेक एव त्रिविक्रम'' इति ''अन्यनाम्नां गतिर्विष्णु''रिति श्रुतिस्मृतिभावात् । मैवम् । अन्तरङ्गज्ञापके सति त्यागायोगान्निरवकाशजीवलिङ्गादिना प्रकरणमन्यपरमित्याक्षेपे सति तत्सावकाशत्वस्यातच्छब्दादित्यनेनोक्तौ प्रकरणमपि साधकमेव । एवमेतदन्यत्राप्यनुसन्धेयमित्यर्थस्य ज्ञापनार्थत्वात्प्रागुक्तश्रुतिलिङ्गोपोद्बलनार्थत्वाच्चास्य योगस्योक्तिः । एतेन कथं प्रकरणेन श्रुतिबाध इति प्रत्युक्तम् । श्रुतेस्सावकाशत्वात्प्रकरणस्यानवकाशत्वादिति ॥ सप्तम इति ॥ स्थित्यदनाभ्यां चेत्यत्र ॥ श्रुतेरिति ॥ अन्यशब्दरूपश्रुतेरिति व्यपदेशपदार्थोक्तिः । द्वासुपर्णेत्युपक्रम्य तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीतीति जीवेशयोः कर्मफलोपजीवनतद्रहितावस्थानरूपलिङ्गादपीत्यर्थः ॥ चशब्द इति ॥ पूर्वानन्तर्यं चेत्यपि ग्राह्यम् । अत्र श्रुतिक्रमोल्लङ्घनमीश्वरस्य प्राधान्यज्ञापनार्थम् । ''स्थितिपदस्याल्पाक्षरत्वाच्चे''ति टीकार्थं व्यक्तमाह ॥ श्रुताविति ॥

''अल्पाच्तरं पूर्व''मिति पाणिनिस्मरणादिति भावः । गुहानयेऽनश्नन्नित्यस्याऽशुभाशन-निषेधार्थत्वोक्तावपीह जीवनार्थं कर्मफलाशनं नेत्यर्थकतया व्याख्यानमभिमतम् ।

सुपर्णावेतौ सयुजौ सखायौ यदृच्छया कृतनीडौ च वृक्षे ।
एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ।।

इत्यादिभागवतोक्तेः ।

साशनानशनत्वेन नरदेवौ यथोदितौ ।
अत्तिं विनाप्यदौर्बल्यात्तथाऽनत्तिर्हरेर्भुजः ।। इति स्मृतेश्चेति भावः ।

श्रुतेर्जीवेशविषयत्वं साधयति ।। न चेत्यादिना ।। तावेताविति ।। ''तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वम् । अनश्नन्नन्योऽभिचाकशीतीति । अनश्नन्नन्योभिपश्यतीति ज्ञः । उभावेतौ सत्वक्षेत्रज्ञौ । तदेतत्सत्वं येन स्वप्नं पश्यति । अथ योयं शारीर उपद्रष्टा सक्षेत्रज्ञ'' इत्यनेन व्याख्यातत्वादित्यर्थः । ''ऊनं न सत्वेष्वधिको बबाधे तस्मिन्वनं गोप्तरि गाहमाने'' इति रघुवंशे । ''द्रव्यासुव्यवसायेषु सत्वमस्त्रीतुजंतुषु'' इतिनानार्थवर्गे । जंतुश्च ''प्राणीतुचेतनोजन्मी जंत्वि''त्यमरोक्तेजीर्व इति भावः ।। इतिस्मृतेरिति ।। त्रयोदशे गीतातात्पर्योक्तस्मृतेरित्यर्थः ।। मोक्षधर्मादीति ।। आदिपदेन –

क्षेत्रज्ञ एता मनसोविभूतीर्जीवस्य मायारचिता अनित्याः ।
आविर्हिताश्चैव तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तुः ।
क्षेत्रज्ञ आत्मा पुरुषः पुराणस्साक्षात्स्वयं ज्योतिरजः परेशः ।
नारायणो भगवान्वासुदेवः स्वमाययात्मन्व्यवधीयमानः ।।
इति भागवतवचनं, ''क्षेत्रज्ञं चापिमांविद्धी''ति गीतावचनं ,
स्वेच्छयैवावृतो विष्णुर्जीवे तिष्ठति नित्यदा ।
योऽसौ नियमयन् जीवं क्षेत्रज्ञ इति शब्दितः ।।

इति हरिवंशादिवचनं गृह्यते ।। पुरुषशब्द इति ।। युक्त इति विपरिणामः । अत्र विस्तरस्तु गुरुपादकृतश्रुतितात्पर्यकौमुद्यां ज्ञेयः ।।

**पाण्डुरङ्गि –** तत्र चशब्द इति ।। अत्र भाष्ये पूर्वानुक्तवायुसमुच्चायकत्वस्य स्पष्टप्रतीतेः टीकायामुक्तसाध्यहेत्वनुकर्षमात्रार्थत्वमित्यव्याख्यातत्वाद्वायुसमुच्चयश्चशब्दार्थो नेति न मंतव्यमिति भावः । जीवप्राणधारण इति धातोर्जीव एव प्राणभृच्छब्दार्थोऽभिप्रेतो नतु वायुः । तथात्वे रुद्रस्यापि ग्रहणोपपत्तेः । टीकायां पूर्वपक्षे वायोः प्राणाधारत्वप्रसिद्धयुक्तिमात्रेण तस्य ग्रहणे प्राणानां ग्रन्थिरसीत्यादौ रुद्रस्यापि तदविशेषात् । अत एव भाष्ये न जीवो वायुश्चेति योगविभागः । अन्यथा न प्रकृतिजीवावभिधीयेते इत्यन्यत्रेवात्रापि न जीववायू इति स्यादितिभावेनेदं व्याख्यानम् । भावबोधेतु " द्रवतां हीन्द्रियाणां तु नियंता प्राण एकराट् "इत्यादौ श्रुतौ च प्राणसंवादादिना रुद्राद्यपेक्षयाप्यतिशयेन प्राणधारकत्वाद्वायोरपि सौत्रप्राणभृच्छब्दार्थत्वम् । योगविभागस्तु तत्रैकवचनोपपत्तये कृतः । भाष्ये चशब्दस्तु वायुपूर्वपक्षेन हेतूनां चानुकर्षार्थ इत्याशयेन सौत्रशब्दस्य मुख्यवायुसमुच्चयज्ञापकत्वमनुक्त्वा वायोः प्राणभृच्छब्दार्थत्वमेवोक्तमिति ज्ञेयम् । ननु जुष्टं यदा पश्यतीति श्रुतेः पूर्वं परमात्मनो रुद्राद्भेदे प्रमाणत्वेनोदाहृतत्वात् जीवेश्वरभेदे प्रमाणत्वेनोदाहरणे पूर्वोत्तरविरोध इत्यत आह ।। अत्र चेति ।। यदिन्यायेनेति ।। अन्यत्वावधित्वेन प्रतीतो जीवो यद्यवधिर्नस्यात्ततः किं स्यादन्यथावधिन एवाभावात् । यदि चान्यदेवावधिभूतं स्यात्तर्ह्यवधिमदन्यन्नास्तीति वदन्नास्तिको हत इत्यर्थः । पदिन्यायेनेति पाठे पदे जुहोतीति होमाधिकरणं पदं किमिति प्राप्ते अध्वर्युः सप्तमं पदमंजलिना गृह्णातीति प्रकृतैकहायन्या य एव वस्तुतः पदप्रतियोगित्ववदत्रापि प्रकृतजीवस्यैवान्यत्वप्रतियोगित्वेन सम्बन्धो ज्ञेय इत्यर्थः । अन्यथा प्रकृतत्वाविशेषात्तत्रापि न स्यादिति भावः । अभ्यर्हितत्वादिति ।। अभ्यर्हितं पूर्वमिति पूर्वनिपात इति भावः । अन्यथेति ।। द्वासुपर्णेति मन्त्रस्य सत्वक्षेत्रज्ञशब्दार्थत्वेन प्रसिद्धबुद्धिजीवविषयत्वाभ्युपगम इत्यर्थः ।

## तात्पर्यचन्द्रिका

**अन्येतु । "अमृतस्यैषसेतु"रिति द्युभ्वाद्यायतनममृतसम्बन्धित्वेन सेतुत्वेन च श्रूयते। न च ब्रह्मणोऽन्यदमृतमस्ति। येन ब्रह्म तत्सम्बन्धि स्यात्। सेतुश्च पारवान्। ब्रह्मतु अपारम्। तस्मान्न द्युभ्वाद्यायतनं ब्रह्म। किं तु रुद्रवायुप्रधानजीवादिरेवेति प्राप्ते प्रधानादेरपि जलविधारकत्वादेरभावेन न रूढं सेतुत्वम् । यौगिकं तु**

भावप्रधानामृतशब्दार्थमोक्षधारकत्वाद् ब्रह्मणोऽप्यस्ति । यद्वा श्रुतावेतच्छब्दो न ब्रह्मपरः । किन्तु ''तमेवैकं जानथे''ति विधेयत्वेन शब्दतः प्रधानतया प्रस्तुतज्ञानपरः । तस्यामृतत्वसाधनत्वाद्गौणं तत्सेतुत्वमिति सिद्धान्त इत्याहुः । तन्न । ब्रह्मण्यत्यंतायुक्तेन जायमानत्वलिङ्गेनैव पूर्वपक्षौचित्यात् । ब्रह्मणोऽन्यदमृतं नेति पूर्वपक्षेपि जीवादावमृतसेतुत्वस्य दुर्वचत्वाच्च । सिद्धान्ते जायमानत्वलिङ्गस्य गत्यनुक्तेश्च । सत्यस्य मोक्षस्याद्वैतिमते ब्रह्ममात्रत्वेन ब्रह्मणस्तद्धारकत्वायोगाच्च । मुक्तिः पञ्चमप्रकारेति मतेऽप्यविद्या जीवाश्रितेति पक्षे तद्ध्वंसस्यापि तदाश्रितत्वात् । चिन्मात्राश्रितेति पक्षेऽपि मोक्षस्य बन्धाश्रयजीवाश्रितत्वात् । बन्धस्यापि चिन्मात्राश्रितत्वेच श्यामत्वादिवत्संसारस्य प्रतिबिम्बनिष्ठत्वोक्त्ययोगात् ।

यच्चोक्तं श्रुतावेतच्छब्दो ज्ञानपर इत्यादि । तन्न । ''एषसेतुर्विधृति''रिति श्रुत्यंतरे सेतुत्वेन प्रसिद्धब्रह्मण एवेह प्रत्यभिज्ञानात् । अस्यामेव श्रुतौ ''स एषोंऽतश्चरत'' इति ''दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठित'' इत्युत्तरवाक्यस्थस्यैतच्छब्दस्य ब्रह्मपरत्वदर्शनाच्च । सिद्धरूपाभिधायिनः पुँल्लिङ्गस्यैतच्छब्दस्य पुँल्लिङ्गेन तच्छब्देनात्मशब्देन चाव्यवधानेन प्रकृतसिद्धरूपात्मपरत्वसम्भवेऽपि तद्विपरीतज्ञानपरत्वायोगाच्च । किं चाद्यसूत्रे द्युभ्वाद्यायतनत्वं नाम परमते निर्विशेषस्य तद्भ्रमाधिष्ठानत्वम् । तथाच श्रुतावोतशब्दः सूत्रे चायतनशब्दश्चायुक्तः । न हि शुक्तौ रूप्यमोतमित्युच्यते ।

यच्चोक्तं स्वशब्दादित्यनेनात्मशब्दादित्युच्यते । सहि ब्रह्मणः शब्द इति । तन्न । आत्मशब्दवाच्यत्वस्य निर्विशेषे अभावात् । तल्लक्ष्यत्वस्य च प्रधानादावपि संभवात् । सविशेषस्य चैतत्पादाप्रतिपाद्यत्वात् । यच्चोक्तं रागद्वेषादिमुक्तैर्ज्ञेयत्वव्यपदेशादिति वा ''तथाविद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैती''ति मुक्तैः प्राप्यत्वव्यपदेशादिति वा द्वितीयसूत्रार्थ इति । तन्न । निरुपपदस्य मुक्तशब्दस्य संसारान्मुक्ते प्रसिद्धत्वेन तत्त्यागायोगात् । उपपूर्वस्य सृपेः समीपप्राप्त्यर्थत्वेन ज्ञानार्थत्वायोगाच्च । त्वन्मते ब्रह्मणो मुक्ताभेदेन तत्प्राप्यत्वाभावाच्च । सगुणमोक्षोक्तौ च पादासङ्गतिः ।

सौत्रमुक्तशब्दस्य श्रौतस्य नामरूपाद्विमुक्त इत्यस्यास्वारस्यं च । तृतीयसूत्रे अतच्छब्दोनाम तद्वाचकशब्दाभावश्चेन्निर्विशेषेऽपि समः । तल्लक्षकशब्दाभावस्तु प्रधानादावप्यसिद्ध इत्युक्तम् । चतुर्थे ''यःसर्वज्ञः'' इत्यतच्छब्दाद्यदि जीवनिषेधस्तर्हि निर्विशेषब्रह्मनिषेधोऽपि स्यात् । सार्वज्ञस्य सविशेषनिष्ठत्वात् । पञ्चमे भेदव्यपदेशोनाम ''तमेवैकं जानथे''ति कर्मकर्तृव्यपदेश इत्यप्ययुक्तम् । अन्यमीशमिति साक्षाद्भेदव्यपदेशे सति भेदकव्यपदेशग्रहणायोगात् । एवं सूत्रांतरेऽप्यनुपपत्तिरूह्या । अत्रापि परमतेऽपि ''भेदव्यपदेशा''दित्यनेन जीवब्रह्मभेदोक्तेः ''मुक्तोपसृप्यव्यपदेशा''दित्यनेन मुक्तावपि भेदोक्तेश्चाभेदप्रतिकूलता व्यक्ता ।

प्रकाशिका – अन्येत्विति ॥

पारवत्त्वेन सेतुत्वाद्भेदे षष्ठ्याः प्रयोगतः ।
द्युभ्वाद्यायतनं युक्तं नामृतं ब्रह्म कर्हिचित् ॥ इति भामत्युक्तमनुवदति ॥

अमृतस्यैष सेतुरिति ॥ भाष्योक्तकोटीराह ॥ रुद्रेति ॥ आदिपदेन हिरण्यगर्भः ।

धारणादमृतत्वस्य साधनाद्वाऽस्य हेतुता ।
पूर्वपक्षेऽपि मुख्यार्थस्सेतुशब्दो हि नेष्यते ॥

इति भामतीं हृदि कृत्वा सिद्धांतमनुवदति ॥ प्रधानादेरपीति ॥ जीवादाविति ॥ अमृतपदोक्तब्रह्मप्रतिसेतुत्वस्य जीवादावपि दुर्वचत्वादित्यर्थः । निरवकाशविरोधिलिङ्गस्य जागरूकत्वान्न सिद्धांतोदय इति भावेनाह ॥ सिद्धांत इति ॥ यदप्यमृतत्वाधारत्वादमृतसेतुत्वं ब्रह्मणि युक्तमिति तत्र किमिदममृतत्वम् । ''अविद्यास्तमयो मोक्षस्सा संसार उदाहृत'' इत्युक्तेरविद्यानिवृत्तिरिति चेत्सा किं सत्याऽथ ''न सन्नासन्नसदसन्नानिर्वाच्यश्च तत्क्षय'' इत्युक्तेः पञ्चमप्रकारा । आद्ये दोषमाह ॥ सत्यस्येति ॥ द्वितीयेप्यविद्या किं भामतीरीत्या जीवाश्रिताऽथ विवरणरीत्या चिन्मात्राश्रितेति । आद्ये दोषो मुक्तिरिति । द्वितीयेपि किं बन्धो जीवाश्रितश्चिन्मात्राश्रितो वा । आद्ये दोषश्चिन्मात्राश्रितेति । अन्यथा बन्धमोक्षयोस्सामानाधिकरण्यं न स्यादिति भावः । द्वितीये दोषो बन्धस्यापीति ॥ श्यामत्वेति ॥ प्रतिमुखादाविति

शेषः । यच्च यद्वेत्यादिनोक्तं तन्निराह ।। यच्चेति ।। श्रुत्यन्तर इति ।। वाजसनेये ''य एषोंतर्हृदय आकाशस्तस्मिन् शेते । सर्वस्य वशी''त्युक्त्वा ''एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाये''ति वाक्ये एष इत्येतच्छब्दस्य प्रकृतब्रह्मपरत्वं स्पष्टमेवेति भावेन प्रसिद्धेत्युक्तम् । तत्र यद्यपि विधरण इत्येव पाठस्तथापि दहरनये ''धृतेश्च महिम्न'' इति सूत्रे भाष्योक्तश्रुत्यन्तरोक्तिरियमिति ध्येयम् । अस्यामेव आथर्वण एव । तच्छब्देनेति ।। तमेवैकमित्यत्र तमित्यनेनेत्यर्थः । ननु तमित्यस्य जानथेति ज्ञानवाचिना व्यवहितत्वाज्ज्ञानमेव परामृश्यत इत्यत आह ।। आत्मशब्देन चेति ।। सूत्रार्थानपि निराह ।। किञ्चेति ।। अस्य पादस्य निर्विशेषपरत्वाभ्युपगमेन तत्र द्युभ्वाद्यायतनत्वस्यारोपाधिष्ठानत्वादन्यस्याभावादिति भावः । प्रतिज्ञाभागं निरस्य हेत्वंशं निराह ।। यच्चेति । एतेनात्मश्रुतितात्पर्यविषयत्वमात्रं हेतुरिति प्रत्युक्तम् । शब्दवृत्तिविषयत्वपूर्वकत्वात्तस्य । प्रधानादावपि सम्भवाच्च । ननु सविशेषस्यात्मपदवाच्यत्वं द्युभ्वाद्यायतनत्वं चास्तीत्यत आह ।। सविशेषस्येति ।। रागद्वेषादिमुक्तैर्ज्ञेयत्वेति ।।

भिद्यते हृदयग्रन्थिश्छिद्यंते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।।

इत्यादिनेत्यर्थः । ''हृदयग्रन्थिश्चाविद्यारागद्वेषभयमोहाः । दर्शनं दृष्टं तस्मिन् । तदर्थमिति यावत् । यथा चर्मणि द्वीपिनं हंति चर्मार्थमिति गम्यत'' इति भामत्यां व्याख्यानात् । अस्यार्थस्य तत्र वाक्ये स्पष्टमप्रतीतेस्तदनुपादानेन रागद्वेषादिमुक्तैरित्येवोक्तम् ।। वाग्विमोकेति ।। सूत्रे मुक्तेतिशब्दस्य भावार्थनिष्ठांतत्वेन मोचनार्थतया वाग्विमोकपूर्वमित्यर्थलाभादिति भावः । आद्यद्वितीययोर्दोषद्वयमाह ।। निरुपपदस्येत्यादि ।। तृतीये दोषमाह ।। त्वन्मत इति मुक्तेति ।। तस्य मुख्यमुक्त एव स्वारस्यादिति भावः । यदपि नानुमानमित्यस्य अनुमीयत इत्यनुमानं प्रधानं न द्युभ्वाद्यायतनम् । तच्छब्दाभावादित्यर्थ इति । तत्र हेत्वर्थं निराह ।। तृतीयेति ।। उक्तं आद्यसूत्रार्थदूषणप्रस्तावे । यदपि ''प्राणभृच्चे''त्यत्रातच्छब्दादिति हेतुमनुकृष्य ''यस्सर्वज्ञस्सर्ववि''दिति तद्विपरीतशब्दान्न जीवो द्युभ्वाद्यायतनमिति । तत्राह ।। चतुर्थ इति ।। साक्षादिति ।। भेदोक्तिद्वारमन्तरेणैवेत्यर्थः ।। एवमिति ।। ''प्रकरणा''दित्यस्य त्वन्मते प्रधानहेतुत्वात्तत्र चशब्दश्रवणं स्यात् । ''स्थित्यदनाभ्या''मित्यत्रापि भेदकस्यैवोत्त्या भेदसूत्रेण पौनरुक्त्यमित्यादिरूपेणोह्येत्यर्थः ।। इत्यनेनेति ।। प्राप्तृप्राप्यभावस्य भेदव्याप्तत्वादिति भावः ।

**पाण्डुरङ्गि** – शब्दत इति ॥ वेधस्याप्राधान्येनार्थतः प्राधान्याभावेपि शब्दतः प्राधान्यमस्तीत्यर्थः ॥ सिद्धान्त इति ॥ प्रकृत्यधिकरणन्यायेन सावकाशं चेदविद्यायाः प्रतिबिम्बपक्षपातादिति वक्ष्यमाणरीत्या ज्ञेयम् । ननु निर्विशेषस्यात्मशब्दवाच्यत्वाभावेपि सविशेषस्य तच्छब्दवाच्यत्वेन तस्यैवात्र प्रतिपाद्यत्वमस्त्वित्यत आह ॥ सविशेषस्येति ॥ तथाच सविशेषप्रतिपादने पादासङ्गतिरिति भावः ।

## तात्पर्यचन्द्रिका

केचित्तु । ''गौणश्चेन्नात्मशब्दादित्यत्रात्मशब्दस्याचिद्व्यावर्तकतया उक्तत्वादात्मशब्दोक्ते द्युभ्वाद्यायतने प्रधानत्वशङ्कानुदयाज्जीवत्वेनैव पूर्वपक्ष'' इत्याहुः । तन्न । रुद्रादिव्यावर्तकताया अनुक्तत्वेन जीवत्वेनैवेत्यवधारणायोगात् । ''नानुमान''मिति सूत्रे प्रधाननिरासायोगाच्च । ''अस्मिन्नस्य च तद्योगं शास्ती''त्यादौ मुक्तोपसृप्यत्वस्यापि जीवव्यावर्तकताया उक्तत्वेन मुक्तोपसृप्यत्वेनोक्ते तस्मिञ्जीवत्वशङ्काया अप्यनुदयाच्च । जायमानत्वादिनिरवकाशलिङ्गैर्मुक्तोपसृप्यत्वस्य गौणत्वे तैरेवात्मशब्दोऽपि ''प्रकाशात्मा प्रदीप'' इत्यादाविवान्यार्थोऽस्तु । प्रत्युतास्मदादिजीवेऽनुभवविरुद्धं द्युभ्वाद्यायतनत्वम् । प्रधाने तु सर्वोपादाने तद्युक्तम् । किं चाद्यसूत्रे स्वशब्दादित्यस्य ब्रह्मासाधारणशब्दादित्यर्थ इति त्वयोक्तत्वात् स्वशब्दादित्यनेनैव ''अमृतस्यैष सेतुः'' ''यः सर्वज्ञ'' इत्यादेरिव मुक्तोपसृप्यत्वादिशब्दस्यापि ग्रहणसम्भवान्मुक्तोपसृप्यादिसूत्रवैयर्थ्यम् ।

नन्वदृश्यत्वादीत्यत्र ''यत्तदद्रेश्य''मित्यादेर्ब्रह्मपरताया उक्तत्वात्तत्प्रकरणस्थस्य ''यस्मिन्द्यौ''रित्यादेरपि सासिद्धेतीदमधिकरणमनारभ्यमिति चेत् । अत्र परैरुक्तम् । यस्मिन्नित्यादिकं यत्तदद्रेश्यमित्येतत्प्रकरणेनास्तीति कृत्वाचिन्तयेदमारब्धम् । न च तथात्वे ''प्रकरणा''दिति सूत्रायोगः । तस्य कृत्वाचिन्तात्वोद्घाटनार्थत्वादिति । तन्न । कृत्वाचिन्तात्वस्यागतिकगतित्वात् । जायमानत्वादिलिङ्गैः प्रकरणस्याब्रह्मपरत्वेनैव वा प्रकरणादुत्कर्षेण वा पूर्वपक्षसम्भवाच्च । केचित्तु । लिङ्गैः

प्रकरणविच्छेदाशङ्कायां तन्निरासायेदमित्याहुः । तन्न । भाष्यटीकोक्तरीत्या यत्तदद्रेश्य-मित्यादेरपि जीवविषयत्वमित्येकवाक्यत्वेनैव पूर्वपक्षसम्भवे प्रकरणविच्छेदायोगात् । न हि जीवस्य द्युभ्वाद्यायतनत्वं शङ्कमानेनादृश्यत्वादिकं शङ्कितुमशक्यम् । त्वयाऽपि हि ''सर्वत्र प्रसिद्धोपदेशा''दित्यत्रैकवाक्यत्वाय ''मनोमयः'' इत्यादिवत् ''सर्वं खल्विदं ब्रह्मे''त्याद्यपि जीवविषयमित्येव पूर्वपक्षितमिति ।

टीकाक्षरार्थस्तु । आरभ्याधीतत्वादित्यनेनान्यप्रकरणाधीतत्वं न विवक्षितम् । येनान्यप्रकरणाधीतस्याप्रकरणित्वनियमाद्विरुद्धो हेतुः स्यात् । किं तु स्वस्यैवोपक्रम्य पठितत्वम् । इतरत् स्पष्टम् ॥ अतो न मिथ्याभेदपरत्वमिति ॥ नानुमानमिति सूत्रस्यानुमानं भेदमिथ्यात्वे न मानम् । भेदस्य सत्यत्वप्रतिपादकशब्दात् । अनुमानमूलभूतस्य भेदमिथ्यात्वप्रतिपादकशब्दस्याभावाच्चेति वर्णकांतरं सूचितमिति द्रष्टव्यम् ॥ छ ॥ द्युभ्वाद्यधिकरणम् ॥ १ ॥

**प्रकाशिका** – ॥ केचित्त्विति ॥ द्युभ्वाद्यायतनं जीवः परमात्मा वेति संशये मनःप्रभृतींद्रियाधारत्वनाडीसम्बन्धजायमानत्वादिलिङ्गानां श्रवणात्तद्बलेन द्युपृथिव्याद्यायत-नत्वादेर्जीवे स्वरूपेण वा कर्मद्वारावा मुक्तावस्थायां विकसितेन ज्ञानेन वा कथंचिन्नेयत्वाज्जीव एव द्युभ्वाद्यायतनमिति प्राप्ते, ''तमेवैकं जानथात्मानम् । अमृतस्यैष सेतुः । यस्सर्वज्ञ'' इत्यादिपरमात्मासाधारणशब्दात् ''नामरूपाद्विमुक्तः परात्परं पुरुषमुपैती''ति नामरूपात्मक-बन्धान्मुक्तस्य प्राप्यतया व्यपदेशात् मनःप्रभृतीन्द्रियाधारत्वस्य सर्वाधारे परे परमात्मनि ''संततँ सिराभिस्तुलंबत्याकोश सन्निभ''मित्यादिश्रुत्या नाड्याधारत्वस्य हृदयाधारद्वारा ''अजायमानो बहुधाविजायत'' इति श्रुत्या चाकर्मकृतः स्वेच्छोपात्तदिव्यविग्रहयोगेन जायमानत्वस्यापि परमात्मनि सम्भवात्स एव द्युभ्वाद्यायतनमिति सिद्धान्त इत्याहुरित्यर्थः । ननु नानुमानमिति सूत्रे प्रधाननिरासप्रतीतेर्जीव एवेति कथं पूर्वपक्ष इत्यतश्श्रुतप्रकाशोक्तमनुवदति ॥ गौणश्चेदिति ॥ तत्र हि तदैक्षतेतीक्षणं प्रधाने गौणमिति शङ्किते ''अनेन जीवेनात्मने''त्यात्मपदप्रयोगात्तस्य जडेऽयोगादित्युक्तेरिति भावः । नानुमानमिति प्रधाननिरासो दृष्टान्तत्वेनोपयुज्यते । यथाप्रधानं न भवति तथा प्राणभृज्जीवोऽपि नेतीति भावः ॥ रुद्रादीति ॥ रुद्रवाय्वादेरपीशशब्द-

मारव्याभ्यां प्राप्तिभावादिति भावः । नानुमानमिति सूत्र इति दृष्टान्तत्वकल्पनं त्वयुक्तम् । ल्पकाभावादतिशयाभावाच्चेति भावः ॥ अस्मिन्निति ॥ ''रसशब्दनिर्दिष्टेऽस्मिन्नानंदमयेऽस्य वस्य तल्लाभादानन्दयोगं शास्ति ''रसोवैसः । रसꣳह्येवायं लब्ध्वाऽऽनंदीभवती''ति त्रम्। अतो न जीव'' इत्यर्थोक्तेरिति भावः ॥ प्रकाशेति ॥ तत्र यथास्वरूपार्थत्वमात्म- दस्य तथाजीव (दीप) वज्जडेऽपि प्रधाने ममात्माभद्रसेन इतिवदात्मीये प्रधान आत्मशब्द- ा इति तन्निष्ठसूत्रव्यावर्त्यशङ्कायां त्वदुक्तरीत्या कथंचिदर्थोस्त्वित्यर्थः । एवं पूर्वपक्षं निरस्य र्थमपि निराह ॥ किञ्चेति ॥ आदिपदेन स्थित्यदनप्रतिपादकशब्दग्रहः । उभाभ्यामुक्तं धं निरस्य भाष्याद्युक्तं स्थापयितुं गतार्थत्वमाशङ्कते ॥ नन्विति ॥ कृत्वाचिन्तयेति ॥ वार्थ''मिति भाष्यस्य ''तन्मध्यापठितमिति कृत्वाचिन्तयेदमधिकरणं प्रवृत्तमित्यर्थ'' इति क्तेरिति भावः । कल्पतरूक्तमाह ॥ न चेति ॥ गत्यंतराभावादेवमाश्रीयत इति अत आह ायमानत्वेति ॥ अनुकृतेरित्यधिकरणे ''असम्भवानुकारसामर्थ्यलक्षणेन लिङ्गेन ाधया तेजोधातुरेव गम्यत'' इति भामत्युक्तदिशा तत्र लिङ्गात्प्रकरणबाधेन यथा नथेति भावः ॥ उत्कर्षेण वेति ॥ पूषानुमन्त्रणमन्त्रस्येवास्मन्मतेऽत्तेत्यधिकरण- कदिशेति भावः ॥ केचित्त्विति ॥ यत्तदद्रेश्यमित्यादिकमस्तूक्तरीत्या ब्रह्मप्रकरणम् । रित्यादिकं तु जीवस्यैव प्रकरणम् । इन्द्रियाधारत्वनाडीसम्बद्धत्वजायमानत्वादि- रिति ब्रह्मप्रकरणविच्छेदाशङ्कायामित्यर्थः । ननु यत्तदद्रेश्यमित्यादिनोक्तमदृश्य- ुभवविषयतया दृश्ये जीवे कथं शङ्कितुं शक्यमित्यत आह ॥ न हीति ॥ ानत्वं जीवेऽनुभवविरुद्धमपि शङ्कमानेन तस्यापि शङ्कितुं शक्यत्वादित्यर्थः ॥ ॥ तत्रैवास्माभिर्विवृतमेतत् ।

दाह द्युभ्वाद्यायतनं वायुप्रधानजीवानामन्यतम उत शिव इति संशये दर्शनेन तेषामन्यतम इति प्राप्ते आत्मशब्दान्मुक्तोप सृप्यत्वलिङ्गात् अथ परा यया प्रकरणाच्च शिव एवेति सिद्धान्त इति तदपेशलम् । ''लोकाश्च लोकिनश्च श्च प्रोताश्चे''ति विष्णुप्रापकस्यापि सत्त्वात् । आत्मश्रुत्यादेर्भाष्योक्तवचनजातेन वात् । रुद्रश्रुतिलिङ्गानां विष्ण्वेकनिष्ठताया भाष्य एव प्रमाणगणेन समर्थनाच्च । सर्वशब्दप्रतिपाद्यत्वस्य सर्वशब्दवाच्यत्वस्य सर्वोत्तमत्वेन तस्यैव ज्ञेयत्वस्य

प्रमाणनिचयोदाहरणेन तत्रैव समर्थितत्वात् । विस्तरभयान्नात्र तानि लिख्यन्ते । प्रकरणस्य वैष्णवतायाः प्रागेव समर्थितत्वाच्चेति । ''प्रकरणा''दिति सूत्रे टीकायां ''द्वेविद्ये वेदितव्ये इति परविद्याविषयस्य वस्तुनोऽत्रारभ्याधीतत्वेनास्य विष्णुप्रकरणत्वा''दिति वाक्ये विरुद्धप्रतीतिं निरस्यन्नर्थमाह ।। आरभ्येति ।। स्पष्टमिति ।। उपन्यासमुखेन विवृतमिति भावः । सूत्रोक्तभेदस्य मिथ्यात्वशङ्कां निरस्यांते ''अतो न मिथ्याभेदपरत्वं श्रुते''रित्युक्तम् । तस्य सूत्रारूढतामाह ।। अतोन मिथ्येति ।। सूत्रेऽतच्छब्देन मिथ्यात्वविरोधिसत्यत्वं गृह्यत इत्युक्तं भवति । तच्छब्देनानुमानं परामृश्यार्थांतरमाह ।। अनुमानेति ।। छ ।। द्युभ्वाद्यधिकरणम् ।। १ ।।

**पाण्डुरङ्गि** – ननु शुद्धस्य मुक्ताभेदेन तत्प्राप्यत्वासम्भवेऽपि सगुणस्य ब्रह्मणो मुक्ताभेदाभावेन तस्य मुक्तप्राप्यत्वमुपपन्नमित्यत आह ।। सगुणेति ।। एवं सूत्रान्तरेति ।। यत्र साक्षाद्भेदव्यपदेशः सम्भवति तत्र भेदकव्यपदेशग्रहणानुपपत्तिरूह्येत्यर्थः । अन्यार्थः स्वरूपार्थः ।। छ ।। द्युभ्वाद्यधिकरणम् ।। १ ।।

## भूमाधिकरणम्

**ॐ भूमासम्प्रसादादध्युपदेशात् ॐ ।। अत्र यद्यपि भूमशब्दो बहुशब्दात् ''बहोर्लोपो भू च बहो''रिति भावे निष्पन्नः । बहुत्वसंख्या च लोकतोऽन्यत्र प्रसिद्धा। तथापि बहुशब्दस्य ''बहुषु बहुवचन''मित्यादौ संख्यायामिव बह्वन्नमित्यादौ वैपुल्येऽपि प्रयोगात् । अत्रैव च श्रुतौ ''यो वै भूमा तदमृतं यदल्पं तन्मर्त्य''मिति बहुत्वसंख्यायुक्तस्याल्पस्य भूमप्रतियोगित्वेनोपादानात् नामादिभ्योऽधिकसंख्याहीने च वागादौ ''वाग्वाव नाम्नो भूयसी । आकाशो वाव तेजसो भूया''नित्यादौ बहुशब्दान्निष्पन्नभूयःशब्दप्रयोगात् प्राणो भूमेति पूर्वपक्षेऽपि संख्यार्थत्वाभावाच्च वैपुल्यार्थत्वात् । गुणादिना च वैपुल्यस्य ब्रह्मण्यपि सम्भवात् इहैव च श्रुतौ भूमशब्दस्य ''यो वै भूमा तदमृतम् । यो वै भूमा तत्सुखम् । स एवाधस्तात्स उपरिष्टा''दित्यादौ धर्मिणि प्रयोगात् पूर्वपक्षेऽपि च धर्मिपरत्वात् टीकानुव्याख्यानयोश्च नामत्वोक्त्या धर्मिणि रूढेरभिप्रेतत्वात् व्याकरणस्य च**

साधुत्वान्वाख्यानपरत्वात् भूमशब्दस्य विपुलरूपधर्मिपरतैव । न त्वनेकपरता । न वा बहुत्वानेकत्ववैपुल्यरूपधर्मपरतेति न स्वतोऽन्यत्रप्रसिद्धता । नाप्यन्यत्रप्रसिद्धप्राण-श्रुतिसाहित्यादन्यत्रप्रसिद्धत्वम् । तस्य ''अत एव प्राण'' इत्यत्रोक्तब्रह्मपरतामुपेत्योत्क्रमणादिलिङ्गादेवेह पूर्वपक्षकरणात् । उत्क्रमणादिलिङ्गसाहित्यादन्यत्रप्रसिद्धता तु पूर्ववन्निरसनीया । उभयत्र प्रसिद्धत्वं तु ''प्राणो वा आशाया भूयान् विष्णुर्वै देवेभ्यो भूयांस्तस्माद्भूयान्नामेत्यादेर्भूमशब्दोऽज्ञानां साधारण'' इति न्यायविवरण एवोक्तम् ॥ ननु ''प्राणो वा'' इत्युपक्रमात् ''विष्णुर्वा'' इति समाख्याया दुर्बलत्वात्कथं ततः साधारण्यमिति चेन्न । समाख्यायाः साभ्यासत्वात्सोपपत्तिकत्वाच्चादौर्बल्यात् । अत एव न्यायविवरणे समाख्यायामभ्यासोपपत्ती उक्ते । यद्वा उपक्रमसमाख्ययोर्बला-बलाज्ञानदशायां साधारण्यम् । अत एव न्यायविवरणे ''अज्ञाना''मित्युक्तम् ।

**प्रकाशिका** – ॐ भूमासम्प्रसादादध्युपदेशात् ॐ ॥ अत्र टीकायां ''प्राणो वा आशाया भूयानित्युपक्रमेण विष्णुर्वै देवेभ्यो भूयांस्तस्माद्भूयान्नामेति श्रुत्या च वायुविष्णुसाधारणस्य भूमनाम्न'' इत्याद्युक्तम् । तच्च न्यायविवरणटीकायां ''ननु भूमशब्दो भाववाची । तत्कथं धर्मिणोऽशङ्क्यते । कथं च भूयानित्यनेन समानार्थः । कथं च नामात्मकः । मैवम् । यो वै भूमा तत्सुखमित्युत्तरवाक्यपर्यालोचनया भावभवित्रोरभेदाभिप्रायेण भवितृविषयतावगमा''दिति ग्रन्थेनाक्षिप्य समाहितम् । तद्विवरीतुकामस्तदाक्षेपसमाधानयोरन्यत्र प्रसिद्धत्वशङ्काव्युदासोऽपि फलमिति भावेनाक्षेपमनूद्य समाधिं च प्रपञ्चयति ॥ अत्र यद्यपीत्यादिना स्वतोऽन्यत्र प्रसिद्धतेत्यन्तेन ॥ बहुशब्दात् ''पृथ्वादिभ्य इमनिज्वा'' इति सूत्रेण भावे इमनिच्प्रत्यये सति बहोरिति सूत्रेण बहोः परस्येमनिच्प्रत्ययस्यादेरिकारस्य लोपो बहुशब्दस्य भू इत्यादेशश्चेति विधानाद्भूमेति रूपमिति भावः । अन्यत्र सेनावनादौ । गुहानयन्यायेन भगवत्यप्यस्ति प्रसिद्धिरित्यतो लोकत इत्युक्तम् । यथा प्राचीनवैश्वानरनाम्नो लोकतोऽन्यत्रप्रसिद्धिस्तथेति भावः ।

भूमशब्दस्य पूर्णपर्यायस्य धर्मिपरस्यैवात्र ग्रहणं न पुनर्भावार्थकस्य संख्यावाचिन इति भावेन तत्र प्रयोगोपपत्ती दर्शयति ॥ तथापीत्यादिना ॥ भूमशब्दस्य विपुलरूपधर्मिपरतैवेत्यन्वयः । तत्र हेतुर्बहुशब्दस्य वैपुल्यार्थत्वादिति । धर्मिणि

प्रयोगादित्यादिश्च । वैपुल्यार्थत्वे हेतुर्वैपुल्येऽपि प्रयोगादित्यादि । इत्यादावित्यादिपदेन ''बहवः पुरुषा ब्रह्मन्नुताहो एक एव'' त्वित्यादिग्रहः ॥ वैपुल्येऽपीति ॥ उक्तं च ''बहुगणवतुडति संख्ये''त्यत्र वृत्त्यादौ ''बहु ओदनं इति वैपुल्यार्थकोऽप्यस्ती''ति । उपपत्तिमाह ॥ अत्रैव चेति ॥ उपपत्त्यंतरमाह ॥ नामादिभ्य इति ॥ पूर्वपक्षेऽपीत्युभयसाधारण्यकथनाय । एवमग्रेऽपि । वैपुल्यार्थत्वं भूमशब्दस्य समर्थ्य वैपुल्ययुक्तधर्मिपरत्वं साधयति ॥ इहैव चेति ॥ टीकानुव्याख्यानयोश्चेति ॥ टीकायां स्पष्टम् । अनुव्याख्याने तु ''लिङ्गं साधारणं शब्दा''विति शब्दपदेन नामत्वोक्तिरिति भावः ॥ रूढेरिति ॥ तथा चाव्युत्पन्न एवायमखण्डश्शब्द इत्युक्तं भवति । पाणिनीयव्युत्पादनस्य तर्हि का गतिरित्यत आह ॥ व्याकरणस्य चेति ॥

यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते ।
स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिः ॥

इत्युक्तेः स्वरसंस्कारमात्रार्थत्वाच्चेत्यपि ध्येयम् । अत एव ''स एषोऽणिमा धातुःप्रसादान्महिमानमीश''मित्यादिश्रुतिषु ''स चाहभूमा परमेष्ठिनं प्रभुर्बद्धांजलिं सस्मितपूर्वया गिरे''त्यादिस्मृतिषु च प्रयोगो धर्मिणि बहुलमुपलभ्यते । क्वचित्तु ''तत्सिद्धिजातिसारूप्यप्रशंसाभूमे''ति जैमिनीये ''अध्यात्मसम्बन्धभूमे''त्यत्र च धर्मेऽपि प्रयोगात्तदर्थत्वाच्च व्याकरणस्येत्यपि ध्येयम् । स्वत इति ॥ श्रुतिलिङ्गसाहित्यं विनेत्यर्थः । प्रकारान्तरेण जातामन्यत्रप्रसिद्धत्वशङ्कां ''प्राणो वा आशाया भूया''नित्युक्तप्राणशब्दस्य ''अत एव प्राण'' इत्युक्तरीत्या विष्णुपरत्वा''दित्यादिटीका सूचितपरिहारेण निराह ॥ नापीति ॥ यथादित्यश्रुतिसाहित्यात्सर्वगतत्वस्यान्यत्रप्रसिद्धत्वं तथेह न शङ्क्यम् । तत्रादित्यश्रुतेरंतर्नये साक्षादश्रवणेन लोकतोऽन्यत्रप्रसिद्ध्याश्रयेण वा संवत्सरसारत्वादिलिङ्गवशेनादित्यश्रुतेरन्यत्रप्रसिद्धत्वेन वा तत्साहित्येनान्यत्रप्रसिद्धेस्सर्वगतत्वस्योक्तावपि नेह तथेति भावेनोक्तं ब्रह्मपरतामुपेत्येति ।

पूर्ववदिति ॥ समाख्याश्रुतितौल्याभावस्यान्यत्र प्रसिद्धलक्षणानुप्रवेशादत्र च तत्तौल्यस्यैव वक्ष्यमाणदिशा सत्त्वेन वा स्वत एवान्यत्रप्रसिद्धत्वस्यान्यत्रप्रसिद्धलक्षणत्वादिह च तदभावस्योक्तत्वान्न लिङ्गसाहित्येनांतर्यामित्वमिवान्यत्रप्रसिद्धत्वं शङ्कनीयमिति निरसनीयमित्यर्थः ।

''प्राणो वा आशाया भूया''नित्यादिटीकोक्तेर्विशेषविवक्षया मूलमाह ॥ उभयत्रेति । न्याय-विवरणेऽत्र टीकायां च ''तस्माद्भूयान्नामे''त्यंशोक्तेरुपयोगं ''आसन्नस्योपक्रमस्यानासन्नायाः समाख्यायाश्च कथं साधारण्यप्रतीतिहेतुत्वमिति चे''दिति न्यायविवरणटीकास्थशङ्कातात्पर्या-भिव्यक्तिपूर्वकमाह ॥ नन्वित्यादिना ॥ साभ्यासत्वादिति ॥ भूयानित्यस्य द्विःश्रवणात्त-स्माद्देवेभ्यो भूयस्त्वादित्युपपत्त्युक्तेरिति भावः । अस्मिन्पक्षेऽज्ञानामित्येतन्नापेक्ष्यमेवेति वा पूर्वोत्तरपक्षनिर्णायिकानभिज्ञानामित्यर्थकं वा नेयम् । अत एव टीकायामज्ञानामित्यस्यानुक्तिरिति भावः । इदानीं ''अज्ञानामित्युक्तत्वा''दिति न्यायविवरणटीकां विवृण्वन्नज्ञानामित्यनुरोधेन समाध्यंतरमाह ॥ यद्वोपक्रमेति ॥

**पाण्डुरङ्गि –** ॥ ॐ भूमासम्प्रसादादध्युपदेशात् ॐ ॥ बहोर्लोप इति ॥ बहोर्भाव इति विग्रहे पृथ्वादिभ्य इमनज्वेतीमनिच्प्रत्यये बहुशब्दोपरिकृते बहोर्लोपो भू च बहोरिति सूत्रेण बहोरुत्तरेषामिमनिजादीनामिकारलोपे बहोः स्थाने भू आदेशे च भूमेति रूपसिद्धिरिति भावः । नन्वन्यत्र प्रसिद्धशरीरित्वसाहित्यादन्तर्यामित्वमिव भूमशब्दस्याप्यन्यत्रप्रसिद्धप्राणश्रुतिसा-हित्यादन्यत्रप्रसिद्धत्वात्तस्योभयत्रप्रसिद्धसमन्वयप्रतिपादके पादेऽसङ्गतिरित्यत आह ॥ नापीति ॥ पूर्ववदिति ॥ अन्यत्रप्रसिद्धजायमानत्वलिङ्गेन द्युभ्वाद्यायतनत्वस्यान्यत्रप्रसिद्धत्वे शङ्किते तस्य येन प्रकारेणान्यत्रप्रसिद्धत्वं निराकृतं तेनैव प्रकारेणेत्यर्थः । स चेत्थम् । अन्यत्रप्रसिद्धसाहचर्येण परतोऽन्यत्रप्रसिद्धत्ववन्न्यायविवरणोदाहृताभ्यः प्राणो वा आशाया भूयान्विष्णुर्वै देवेभ्यो भूयानित्यादिश्रुतिभ्य उभयत्रप्रसिद्धसाहचर्यं विना स्वतः उभयत्र प्रसिद्धत्वस्य सत्वादिति वा अन्यत्रप्रसिद्धेत्यत्र प्रसिद्धान्यसाहित्यसापेक्षत्वादुभयत्रप्रसिद्धेश्च तन्निरपेक्षत्वान्निरपेक्षादराद्धा समाख्याश्रुत्यादितौल्याभावस्याप्यन्यत्रप्रसिद्धलक्षणान्तर्गतत्वात्तस्य च प्रकृतेऽसत्वेनांतर्यामित्वे सत्त्वात्तस्यान्यत्रप्रसिद्धतेति वा सर्वगतत्वादीनां ब्रह्मण्ययुक्तत्वादेवान्यत्रप्रसिद्धतेति वा पूर्ववदित्यर्थः । ननु तथापि नोभयत्र प्रसिद्धता । अभ्यासोपपत्तिसहितसमाख्यायास्स-काशादुपक्रममात्रस्य दुर्बलत्वादित्यरुच्या पक्षांतरमाह ॥ यद्वेति ॥

## तात्पर्यचन्द्रिका

यद्वा विष्णौ प्राणशब्दसमन्वयस्योक्तत्वेनोपक्रमस्य सम्भावितावकाशत्वात् समाख्यास्थविष्णुशब्दस्य च प्राणे तदनुक्तेस्तयोस्तुल्यबलत्वम् । अज्ञानामित्युक्तिस्तु सिद्धान्तन्यायाननुसन्धानाभिप्राया । यद्यपि विष्णुपक्ष इव प्राणपक्षेऽपि ''प्राणो वाव सर्वेभ्यो भूया''निति समाख्याऽस्ति । तथापि तस्या उपासकेषु प्राणस्य भूयस्त्वपरत्वेन सर्वेभ्यो भूयस्त्वपरत्वाभावात् प्राणप्रापक उपक्रमे सति समाख्याया अनादरणीयत्वाच्च न तया साधारण्यमुक्तम् । द्युभ्वाद्यधिकरणे तु रुद्रादिप्रापकोपक्रमाभावात्समाख्यया तदुक्तिः । यद्यपि ''सर्वत्रप्रसिद्धे''त्यादावपि ''तस्यैतस्यासावादित्यो रस'' इत्युपक्रम आदित्यश्रुतिरस्ति । तथापि ब्रह्मणस्सर्वभूतगतत्वरूपाल्पौकस्त्वस्य पूर्वपक्षिणा काप्यनङ्गीकारेण ब्रह्मणि समाख्याया अभावात्तस्यान्यत्र प्रसिद्धता । इह तु समाख्याश्रुतौ विष्णोर्भूयस्त्वेऽपि न विषयवाक्ये स भूमेति पूर्वःपक्षः । अत एवात्र टीकायां ''न च विष्णोरपि भूमत्वस्य श्रुत्यन्तरे प्रसिद्धत्वादत्र वाच्यत्वमिति वाच्यम् । उपक्रमात्समाख्याया दुर्बलत्वा''दिति ग्रन्थे समाख्या विष्णुपरेत्यङ्गीकृत्य पूर्वपक्षितम् । टीकायां ''वायोरेव भूमत्वा''दित्यवधारणं तु विषयवाक्ये वायोरेव भूमत्वाभिप्रायम् । अत्र प्राणश्रुतिर्विष्णुपरा चेत्तत्रापि विष्णुश्रुतिः प्राणपरा स्यादित्यभिप्रायं वा । टीकोक्त आनन्दमयाक्षेपस्तु समाख्याश्रुतौ विष्णोर्भूयस्त्वेऽपि पूर्णानन्दत्वस्य ''यो वै भूमा तत्सुखं भूमैव सुखं नाल्पे सुखमस्ती''ति भूमरूपवायोरन्यत्र निषेधादानन्दमयश्रुतेश्च वायुपरत्वे तदयोगाद्युक्तः । तस्माद्भूमशब्दस्य साधारण्यात् युक्ता पादसङ्गतिः ।

अवान्तरसङ्गतिस्तु ''स एवाधस्तात्स उपरिष्टादेवं विजानन्नात्मरतिरात्मक्रीडः । यो वै भूमा तदमृत''मित्यादिना भूम्नयुक्तस्य सर्वगतत्वादेः ''ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतम् । आत्मक्रीड आत्मरति''रित्यादिना द्युभ्वाद्यायतने श्रवणात् भूम्नोऽन्यत्वे द्युभ्वाद्यायतनमप्यन्यत्स्यादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानादाक्षेपिकी । टीकायां तु समन्वेतव्यभूमशब्दसन्निहितत्वात्पूर्णानन्दत्वस्य तदाक्षिप्तम् ।

अत्र ''यो वै भूमा तत्सुख''मित्युक्तो भूमा किं मुख्यवायुरुत विष्णुरिति चिन्ता। तदर्थं तत्सुखमित्युक्तं पूर्णसुखत्वं किं वायोरुत विष्णोरिति । तदर्थं भूम्नो ब्रह्मत्वे प्राणाद्भूयस्त्वानुक्तिरयुक्तोत युक्तेति । तदर्थं ''प्राणो वा आशाया-भूया''नित्युक्तः प्राणः किं मुख्यवायुरुत ब्रह्मेति । प्राणस्य मुख्यवायुत्वे हि वायुतो ब्रह्मणो भूयस्त्वं वक्तव्यमिति तदनुक्तिरयुक्ता । ब्रह्मत्वे तु स्वस्मात्स्वस्य भूयस्त्व-स्यावक्तव्यत्वेन तदनुक्तिर्युक्ता । तदर्थं ''उत्क्रान्तप्राणा''निति प्राणे श्रुतमुत्क्रमणं किं ब्रह्मणि न युक्तमुत युक्तमिति ।

**प्रकाशिका** – ''प्राणशब्दस्यात एव प्राण इत्युक्तरीत्या विष्णुपरत्वा''दिति टीकासूचितं समाध्यंतरमाह ।। यद्वा विष्णाविति ।। ननु पूर्वत्रैवात्रापि समाख्याश्रुतिद्वयेनैवो-भयत्रप्रसिद्धिसम्भवे श्रुत्युपक्रमयोः क्लेशेन तौल्यमुपपाद्य कुतस्साधारणत्वमुपपाद्यते । न च वायुसमाख्यातो विष्णुसमाख्यायाः प्रागुक्तरीत्या बलवत्त्वात्तत्राप्यज्ञानामित्युपपादनीयमिति वाच्यम् । ''प्राणो वाव सर्वेभ्यो भूयान्न प्राणाद्भूयान्प्राणो ह्येव भूयांस्तस्माद्भूयान्नामे''ति श्रुतेरपि साभ्यासोपपत्तिकत्वादिति भावेनाक्षिप्य समाधत्ते ।। यद्यपीति ।। उपासकेष्विति ।। ''इयदामनना''दित्यत्र भाष्ये तदर्थ एवोदाहृतत्वादिति भावः । ननु श्रुतावुपासकाद्भूयस्त्वस्या-प्रतीतेश्श्रुत्यन्तरात्तथा कल्पनस्य विलम्बितत्वादापाततः साधारण्यमस्तीत्यनुशयादाह ।। प्राणप्रापक इति ।। प्रागप्येवं स्यात् वैरूप्यं कुत इत्यत आह ।। द्युभ्वादीति ।। उक्तसाधारण्यस्यातिप्रसङ्गमाशङ्क्याह ।। यद्यपीति ।। ''अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित'' इत्यादौ सर्वगतत्वं प्रसिद्धम् । तथाप्यत्राभिप्रेतस्यार्भकौकस्त्वस्य क्वाप्यसंमतेरित्यर्थः । प्रकृते तु नैवमिति सोपष्टंभमाह ।। इह त्विति ।। भूमशब्दस्य रूढत्वोक्तेर्भावप्रत्ययांतत्वासंमतेर्भूमत्वस्येति साधु । तर्ह्यवधारणायोग इत्यत आह ।। वायोरेवेति ।। न तु सर्वत्रेत्यर्थः । पूर्वपक्षे प्राणश्रुतेर्निरवकाशत्वयुक्तिसूचनार्थं वा तदित्याह ।। अत्रेति ।। नन्वेवं विषयवाक्ये वायोरेव भूमत्वमित्याशयवर्णनेऽन्यत्रानन्दमयस्य विष्णुत्वेऽप्यदोषात्त-दाक्षेपायोग इत्यत आह ।। टीकेति ।। इयता ग्रन्थेनोक्तस्य फलमाह ।। तस्मादिति ।।

एवं ''अस्ति शास्त्रादिसङ्गति''रिति टीकामुपपाद्यांशोपपादनेन विवृत्य ''श्रुत्यादिसङ्गति'' रित्यादिटीकया तुल्यन्यायतया सूचितामव्यवहितपूर्वाधिकरणसङ्गतिं स्वयमाह ।। अवान्तरेति ।।

सर्वगतत्वात्मक्रीडत्वामृतत्वादिधर्माणामुभयत्र श्रवणाद्भूम्नोऽन्यत्वे प्राक्तनस्यापि तथात्वं स्यादित्याक्षेपेण पूर्वपक्षोत्थानादाक्षेपिकीत्यर्थः । न च निर्णीतब्रह्मप्रकरणगतसर्वगतत्वादिबलेन भूम्न एव विष्णुत्वं स्यादिति वाच्यम् । उत्क्रमणलिङ्गस्य हरावयोगेन निरवकाशतया तदनुरोधेन भूम्नोऽन्यत्वे सर्वगतत्वादेरप्यन्यधर्मतावश्यंभावात् द्युभ्वाद्यायतनत्वादेर्वायावप्युपपत्तेः जायमान-त्वलिङ्गस्याप्यक्लेशेनोपपत्तेः । भूम्नो विष्णुत्वनिर्णयं विना तस्य ब्रह्मप्रकरणत्वानिर्णयाच्चेति भावः । यद्यपि सर्वगतत्वामृतत्वे एव भूमवाक्ये श्रुते । आत्मक्रीड इत्यादिकं तु ''अथात आत्मादेश'' इत्यत्रोपरितनवाक्ये श्रुतम् । तथापि भूमात्मनोरभेदाभिप्रायेणैवमुक्तम् । यद्यप्यात्मक्रीडत्वादिकमुपासकधर्मः । यदाहुः ''आत्मरतिर्भगवद्रति''रिति । ''तेनैव क्रीडते नित्यं स्त्रीरूपो मिथुनो भवे''दिति च । तथाप्युपासकक्रीडादिहेतुत्वं तद्धर्म इत्याशयेनैतदुक्तिः । एतेन ''आत्मशब्दाद्द्युभ्वाद्यायतनं ब्रह्मेत्युक्तम् । तत्रात्मशब्दः प्राणेऽनैकान्तिकः । तरति शोकमात्मविदित्यत्राब्रह्मणि प्राणे प्रयोगादित्याक्षेपिकी''ति कल्पतरूक्तं निरस्तम् । आत्मविदित्यस्याध्यायादौ श्रुतत्वेन भूम्नि साक्षादश्रुततया तदाक्षेपायोगात् । प्राणादेरब्रह्मत्वेऽपि ''अथात आत्मादेश'' इत्यथशब्देन प्राक्तनप्राणप्रकरणविच्छेदेनोक्तात्माभिप्रायेणात्म-विदित्यस्योपपत्तेः । भूमगतत्वेन भूमवाक्य एव श्रुतामृतत्वादिमुखेनाक्षेपस्यैवोचितत्वाच्च । यत्तु श्रुतप्रकाशे ''यथा प्रकरणाविच्छेदेन परमात्मपरत्वं साधितं तथाजीवप्रकरणाविच्छेदेन जीवपरत्वमिति शङ्कोत्थानात्सङ्गति''रित्यादि तदपि तेनैव निरस्तम् । अमृतत्वादेरनाक्षेपे पूर्वनिर्णीतब्रह्मधर्मैर्भूमा ब्रह्मेत्यपि वक्तुं शक्यत्वेन पूर्वपक्षानुदयप्रसङ्गात् । पूर्वं प्रकरणविच्छेदशङ्काया एवायुक्तत्वादित्युक्तत्वाच्चेति । आनन्दमयाक्षेपटीका तु प्रयोजनपरेति भावः । ननूक्तरीत्या सन्निहितपूर्वाक्षेपे सङ्गतिफलयोर्द्वयोरपि सम्भवात्किं व्यवहिताक्षेपेणेत्यत आह ॥ टीकायां त्विति ॥ विषयसंशयटीकां व्यनक्ति ॥ अत्रेति ॥ छान्दोग्ये सप्तमेऽध्याये नारदकृतप्रश्नं प्रति सनत्कुमारोक्तोत्तरत्वेन नामवाङ्मनस्संकल्पचित्तध्यानविज्ञानबलान्नाप्तेज-आकाशस्मराशाप्राणशब्दवाच्यान् उषास्वाहापर्जन्यमित्राग्निवरुण चन्द्रभूतवाय्वनिरुद्धप्राण-पुरन्दरोमाशिवसरस्वतीमुख्यप्राणानुत्तरोत्तरातिशयितत्वेनोक्त्वा अनन्तरं नारदप्रश्नमन्तरेणैव ''एष तु वा अतिवदति यस्सत्येनातिवदती''त्युपक्रम्य सत्यविज्ञानमतिश्रद्धानिष्ठाकृति-सुखपर्यंतानुक्त्वा वक्ति सनत्कुमारः ''यो वै भूमा तत्सुखं नाल्पे सुखमस्ति । भूमैव सुखं भूमात्वेव विजिज्ञासितव्य इति । भूमानं भगवो विजिज्ञास इति । यत्र नान्यत्पश्यति

नान्यच्छृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् । यो वै भूमा तदमृतम् । अथ यदल्पं तन्मर्त्यम् । स भगवः कस्मिन्प्रतिष्ठित इति । स्वेमहिम्नि यदि वा न महिम्नीति । गो अश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमीति होवाचान्योन्यस्मिन्प्रतिष्ठित इति । स एवाधस्तात्स एवोपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतस्स उत्तरतस्स एवेदं सर्व''मित्यादि । स भूमाविषय इत्यर्थः ।

मुख्यवायुरिति ।। जडत्वकोटेरग्रे निरसिष्यमाणत्वादिति भावः ।। पूर्णसुखत्वमिति ।। अत्र सुखशब्दस्य तादृशसुखवाचित्वं सिद्धांते स्पष्टयिष्यते ।। भूयस्त्वेति ।। ''अस्ति वाव प्राणाद्भूय'' इत्यादिप्रश्नप्रतिवचनरूपेण भूयस्त्वानुक्तिरित्यर्थः । अस्पष्टांशे फलफलिभावमाह ।। प्राणस्येति ।। द्वाविह पूर्वपक्षौ । प्राणभूम्नोर्भेद इत्येको भेद इत्यन्यः । तत्राद्यो न्यायविवरणानुसारी । द्वितीयो भाष्यानुसारी । तत्राद्ये भूयस्त्वानुक्तिः पूर्वपक्षयुक्तिः । अन्त्ये चोत्क्रमणलिङ्गमिति व्यवस्थेति ज्ञापनाय प्राणस्य ब्रह्मत्वपक्षे भूयस्त्वानुक्तिघटनाय मध्ये फलफलिभावं प्रदर्श्य लिङ्गविषयां चिन्तां पश्चादाह ।। तदर्थमुत्क्रान्तेति ।। उत्क्रान्तः प्राणो येषां तानुत्क्रांतप्राणान् । शूलेन समासं व्यतिषंदहेत् । नैवैनं ब्रूयुः पितृहासीति मातृहासीति प्राणप्रकरणे प्राणस्यान्वयव्यतिरेकाभ्यां जीवनदत्वमुपपादयितुं श्रुतमुत्क्रमणमित्यर्थः । नन्वेवमुत युक्तेत्यंतचिन्तात्रयं प्रदर्श्य पश्चाद्भूमा मुख्यवायुरुत विष्णुरिति चिन्ता । तदर्थं प्रक्रमे श्रुतः प्राणः किं मुख्यवायुरुत ब्रह्मेति । तदर्थमुत्क्रान्तेत्यादिचिन्तेत्यपि चिन्तात्रयं प्रदर्शनीयमिति चेन्मैवम् । यदि प्राणभूम्नोर्भेदाभेदपक्षौ व्यवतिष्ठेयातां तदैवं भवेत् । न चैवम् । तयोरग्रे टीकारीत्या समुच्चयोक्तेः । अत एकप्रकारेणैव चिन्तापरंपरोपदर्शिता । तथा चायमर्थः । यदि प्राणे श्रुतमुत्क्रमणलिङ्गं वक्ष्यमाणदिशा सर्वगते ब्रह्मणि न युक्तं तदोपक्रमे श्रुतस्य प्राणस्य वायुत्वात्ततोऽपि ब्रह्मणः श्रेष्ठत्वेन सिद्धान्तिनोपगतत्वात्प्रश्नप्रतिवचनाभ्यां प्राणाद्भूयस्त्वस्य वाच्यत्वेन तदनुक्तेरयुक्तत्वात्तस्यैव पूर्णसुखत्वं भूमत्वं चेति पूर्वपक्षे फलम् । यदा तु रूपविशेषादिना युक्तं तदा प्राणस्य ब्रह्मत्वात्स्वस्मात्स्वस्य भूयस्त्वायोगेन तदनुक्तेर्युक्तत्वात्पूर्णसुखत्वं भूमत्वं च विष्णोरेवेति सिद्धान्ते फलमिति । नन्वेवं ''व्यतिहारो विंशिंषंति हीतरव''दित्येतदवक्तव्यं प्राप्नोति । मैवम् ।। भेदपक्ष एव तस्य प्रवृत्तेः । अभेदपक्षेऽपि

प्राणान्तर्यामितयैवात्र प्राणपदेन ब्रह्मणः स्वीकारेण प्राणशब्दस्य मुख्यप्राणार्थकत्वस्यापि भावेन भूम्नः केवलब्रह्ममात्रत्वसिद्ध्ये प्राणासाङ्कर्याय व्यतिहारस्यावश्यं वाच्यत्वाच्चेति ।

नन्वेवं प्राण एव संशयधर्मी क्रियताम् । सूत्रे च प्राणपदमेव निवेश्यताम् । उभयत्रप्रसिद्धिश्च प्राणपदस्य ''आकाशोऽर्थान्तरत्वादी''त्यादावाकाशादिशब्दस्येव पूर्वोक्त्यन्यत्रप्रसिद्धिभ्यां भविष्यति । नायं प्राणो ब्रह्म उत्क्रमणलिङ्गादिति पूर्वपक्षश्च ऋजुः । भूमा न विष्णुः तदभिन्नप्राणे श्रुतोत्क्रमणविरोधादित्युक्तिर्वक्रा । प्राणस्य विष्णुत्वात्तत्प्रकरणस्थभूम्नः पूर्णसुखस्य च विष्णुत्वादानन्दमयोऽपि न विष्णुरिति पूर्वाक्षेपश्च भविष्यति । यथा छन्दोनये गायत्र्या अविष्णुत्वात्तदभिन्नस्य ''परो दिवो ज्योतिर्दीप्यत'' इति ज्योतिषस्तथात्वेन ''ज्योतिर्हृदय आहितं य''दित्युक्तज्योतिषोऽप्यविष्णुत्वमिति तद्वदिति चेन्मैवम् । भूम्न उक्तौ प्रागसमन्वितशब्दसमन्वयलाभात् पूर्वाक्षेपस्य साक्षादेव सम्भवात् चन्द्रिकोक्तदिशा पूर्वाधिकरणसङ्गतिसौकर्यात् सम्प्रसादाध्युपदेशधर्मोपपत्तीनां सिद्धांतहेतूनां भूमवाक्य एव श्रवणात् सिद्धान्तेऽपि प्राणशब्दस्य मुख्यवायुपरत्वात्याजनाच्चान्तरनयेऽक्षिस्थ इव भूमैव प्राधान्येन चिन्तितो न प्राण इति ।

**पाण्डुरङ्गि** – ननु समाख्यावाक्ये विष्णोर्भूमत्वमुपेत्य विषयवाक्येऽन्यस्य भूमत्वमिति टीकाभिप्रेतमित्युक्तम् । तदयुक्तम् । तथा सत्यतो वायोरेव भूमत्वादिति पूर्वपक्षोपसंहार-टीकाविरोधापातादित्यत आह ।। टीकायामिति ।। विषयवाक्ये वायोरेव भूमत्वमित्य-भिप्रायकल्पने सङ्कुचितत्वं सम्भवतीत्यस्वरसादाह ।। अत्रेति ।। नन्वेवं समाख्यावाक्ये विष्णोरेव भूमत्वमित्यभ्युपगम्य विषयवाक्येऽन्यस्यैव तदिति पूर्वपक्षकरणे पूर्णानन्दत्वस्य वाक्यान्तरे ब्रह्मनिष्ठत्वेन विष्णोरेवानन्दमयत्वेऽपि विषयवाक्येऽन्यस्य भूमत्वमिति पूर्वपक्षसम्भवाट्टीका-यामानन्दमयोऽपीत्याक्षेपोऽनुपपन्न इत्यत आह ।। टीकोक्त इति ।। अवान्तरसङ्गतिस्त्विति ।। उपलक्षणमेतत् । तस्याक्षेपेण समाधानाद्वा सर्वगतस्योत्क्रमणरूपमरणासम्भवात्पूर्वोक्त स एषोंऽतश्चरते बहुधा जायमान इति बहुधाजननं तत्सहपठितमन्तस्संचरणं चाक्षिप्य समाधानाद्वाऽऽक्षेपिकीसङ्गतिः । पूर्वत्र जनिस्समर्थिता अत्र तूत्क्रान्तिरूपमृतिमिति देहयोगवियोगरूपोपजीव्योपजीवकभावरूपाऽवान्तरसङ्गतिरित्याद्यूह्यम् ।

## तात्पर्यचन्द्रिका

पूर्वपक्षस्तु । भूमा मुख्यवायुरेव । ''प्राणो वा आशायाभूया''निति प्राणशब्दे-नोपक्रमात् । भूम्नो ब्रह्मत्वं हि द्वेधा भवेत् । प्राणो वायुरेव भूमा तु ब्रह्मेति प्राणभूम्नोर्भेदेन वा प्राणो भूमा च ब्रह्मैवेति तयोरभेदेन वा । नाद्यः । प्राणादुत्त-ममनुक्त्वा भूम्न आम्नानात् यदि हि नामादिभ्यो वागादिवत्प्राणाद्भूमाऽन्यः स्यात्तदा ''अस्ति भगवो नाम्नो भूय'' इत्यादिप्रश्नवत् ''वाग्वाव नाम्नो भूयसी''त्यादि-प्रतिवचनवच्च अस्ति भगवः प्राणाद्भूय इति प्रश्नः. भूमा वाव प्राणाद्भूयानिति प्रतिवचनं च स्यात् । भूम्नः सर्वोत्तमत्वार्थमेव नामवागादितारतम्यस्य प्रक्रान्तत्वात् । न च यदर्थमन्यत्प्रक्रान्तं तदनुक्तिर्युक्ता । अत एव टीकायां ''तारतम्यमाशाव-सानमुक्त्वे'' त्युक्तम् । तदुक्तं न्यायविवरणे ''प्राणो वा आशायाभूयानित्युक्त्वा प्राणाद्भूयसोऽनुक्ति''रिति । विष्णुसमाख्या तु प्राणोपक्रमाद्दुर्बला ।

न द्वितीयः । ''अत एव प्राण'' इत्युक्तरीत्या प्राणशब्दस्य ब्रह्मपरत्वसम्भवेऽपीह ''उत्क्रान्तप्राणा''निति प्राण उत्क्रमणश्रवणात्तस्य च पूर्णे ब्रह्मण्ययोगात् । तदुक्तं भाष्ये ''उत्क्रांतप्राणानित्यादितल्लिङ्गा''दिति । वायोर्भूमत्वे तु तद्युक्तम् । न हि देशतः पूर्णत्वं भूमत्वम् । ''वाग्वाव नाम्नो भूयसी । वाग्वाव ऋग्वेदं विज्ञापयति यजुर्वेदं स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते'' इत्यादिषु वाङ्मनःसङ्कल्पादिवाक्येषु पूर्वत्र सर्वत्र भूयस्त्वस्य गुणज्यैष्ठ्यरूपतया भूमेत्यत्रापि तस्यैव वक्तव्यत्वात् । अत एव टीकायां ''प्राणस्योत्तमत्व''मित्युत्तमशब्दः । आनन्दमय- उक्तमानन्दस्य पूर्णत्वं च न देशतः,किंतु नीलतमत्वविद्वत्तमत्वादिवत्सर्वस्मात्सजातीयादुत्कृष्टत्वम् । अन्यथा ''ते ये शतं मानुषा आनन्दाः, स एको मनुष्यगन्धर्वाणामानन्द'' इत्याद्ययोगात् । न हि मानुषाद्यानन्देभ्यो मनुष्यगन्धर्वाद्यानन्दा देशतः शतगुणिताः । एवंविधपूर्णानन्दत्वं चाणोरपि वायोर्युक्तमिति युक्तष्टीकोक्त आनन्दमयाक्षेपः ।

न च भूम्नः "स एवाधस्तात्स उपरिष्टात्स पश्चा"दिति वाक्यशेषस्थसर्वगतत्व-विरोधेनोत्क्रमणं गौणमिति युक्तम् । श्रौतोत्क्रमणविरोधेन अधस्तादुपरिष्टादित्याद्य-नेकपदसमभिव्याहाररूपवाक्यगम्यसर्वगतत्वस्यैव गौणत्वात् । ब्रह्मणस्तु सर्वगतत्वं श्रुत्यन्तरादिसिद्धम् । एवं च पूर्णानन्दत्वादिरूपं सिद्धान्ते हेतूकृतं सम्प्रसादादिकं पूर्वपक्षिणा वायौ शङ्क्यत इति न भूम्नो ब्रह्मता ।

न च वाच्यं "अन्यभावव्यावृत्ते"रित्यत्र ब्रह्मणो महत्त्वेऽप्यणुत्वं वक्ष्यते । अणुत्वमेव च क्रियावत्त्वे तंत्रम् । न तु महत्त्वाभावविशिष्टम् । न वा महत्त्वाभावः । गौरवादिति । महत्त्वमेवाक्रियत्वे तन्त्रम् । न त्वणुत्वाभावविशिष्टम् । न वाऽणुत्वाभाव इत्यपि सम्भवात् । सर्वत्रप्रसिद्धेत्यत्र तु सर्वगतस्यापि व्योमदृष्टान्तेनैकदेशगतत्वमुक्तम् । न तु सक्रियत्वम् । "ज्योतिर्दर्शना"दित्यत्र तु "स समानः सन्नुभौ लोकावनुसंचरती"त्युक्तं यत्कर्मवशेनोभयलोकसंचरणं तत्कर्मातीतस्य ब्रह्मणो न युक्तमिति शङ्का । नेदं संचरणं कर्मवशात् । किं तु स्वेच्छयेति परिहारश्च । न तु पूर्णस्य क्रियानुपपत्त्या शङ्कातत्परिहारौ । अत एव तत्र पूर्वपक्षे टीका "जीवस्य हि कर्मवशादुभयलोकसंचरणं युक्त"मिति । सिद्धान्त-न्यायविवरणं च "लोकसंचरणं तु जीवमादाय तस्यैवादुःखेन स्वातन्त्र्या"दिति । न च "शास्त्रदृष्ट्ये"ति न्यायेनान्तर्यामिगता क्रिया । "एष म आत्मांऽतर्हृदये ज्याया-न्पृथिव्या" इत्यादिश्रुत्या तस्यापि सर्वगतत्वात् । यदि च सर्वगतस्यापि क्रिया तदा "उत्क्रान्तिगत्यागतीना"मित्यत्र जीवस्य सक्रियत्वेनाणुत्वोक्तिरयुक्ता स्यादिति ।

**प्रकाशिका** – प्राणभूम्नोर्भेदपक्षेऽभेदपक्षे चानुक्तिरुत्क्रमणलिङ्गं च क्रमेण पूर्वपक्षप्रापके इति भावेन "मुख्यप्राणोऽयं भूमेति पूर्वपक्ष" इत्यादिटीकां विवृण्वन्पूर्वपक्षयति ॥ पूर्वपक्षस्त्विति ॥ नामेत्यारभ्याभिधायेत्यंतटीकायास्तात्पर्योक्तिराशाया भूयानिति । "प्राणशब्देनोपक्रमा"दिति टीकायामेवमनुक्त्वाऽन्यथोक्तेरुपयोगोऽग्रे स्पष्टः । "तदुक्तममनुक्त्वा भूम्न आम्नातत्वा"दिति टीका प्राणभूम्नोर्भेदपक्ष एव योज्येति भावेन विकल्पयति ॥ भूम्न इति ॥ "तदुक्तम" मित्यादिटीकां योजयति ॥ नाद्य इत्यादिना ॥ ननु प्राणाद्भूयसोऽनुक्तिर्न प्राणस्य

भूमत्वसाधिका । विद्यमानस्यापि प्राणादुत्तमस्यानुक्तिसम्भवात् । अतोऽप्रयोजको हेतुरित्यत आह ।। भूम्न इति ।। एवं भूयसोऽनुक्तेर्निरवकाशत्वमुपपाद्य टीकारूढं करोति ।। अत एवेति ।। भूम्नस्सर्वोत्तमत्वार्थं तारतम्यस्य प्रक्रान्तत्वादेवावश्यवक्तव्यत्वस्फोरणाय तथोक्तमित्यर्थः । भाष्येऽप्रतीतावपि टीकायामेवमुक्तेर्मूलमाह ।। तदुक्तमिति ।। ''न च विष्णोरपि भूमत्वस्ये''त्यादिटीकार्थमाह ।। विष्णुसमाख्या त्विति ।। ननु समाख्यापि साभ्यासत्वादिना प्रबलेति चेन्न । निरवकाशानुक्तिसाहित्येन प्राणोपक्रमस्य ततोऽपि प्राबल्यमित्याशयात् ।

ननु ''प्राणो वा आशाया भूयानित्युक्तप्राणस्य अत एव प्राण इत्युक्तरीत्या विष्णुपरत्वा''दित्यादिटीकां व्याचष्टे ।। न द्वितीय इत्यादिना ।। इहेति ।। विषयवाक्ये ।। उत्क्रमणश्रवणादिति ।। तथा च तत्रैवात्र निरवकाशविष्णुलिङ्गाभावात्प्रत्युत विपरीतलिङ्गभावान्न तन्न्यायविषयत्वमस्येति भावः । पूर्णे देशादितो व्याप्ते देहादुत्क्रमणायोगादित्यर्थः । भाष्यं तद्व्याख्यानं चोक्तदिशा द्वितीयपक्षनिरासपरमिति भावेनाह ।। तदुक्तमिति ।। ननु ''उत्क्रान्तिगत्यागतीना''मित्यादौ वक्ष्यमाणदिशा वायोरप्यणुत्वात्कथं तस्य भूमत्वं पूर्णसुखत्वं वा स्यादित्यतः ''तस्य च वायावेव सम्भवा''दिति टीकां विवृण्वन्नाह ।। वायोरिति ।। ''वाग्वाव ऋग्वेद''मित्यादि गुणकथनम् । ''स यदा मनसे''ति मनःप्रकरणगतवाक्यम् । नन्वत्र भूम्नस्स एवाधस्तादित्यादिना सर्वगतत्वेन श्रुतस्य वायुत्वे वायोरपि सर्वगतत्वापत्त्या ब्रह्मणीव वायावप्युत्क्रमणमयुक्तम् । तत्रोपचरितं चेद्ब्रह्मण्यपि तथोपेत्य भूमत्वमुच्यतामिति भावेनाशङ्क्य निराह ।। न च भूम्न इति ।। गौणमिति ।। मनोगतमेवात्र भातीत्यर्थः ।। श्रौतेति ।। उत्क्रान्तेति पदश्रुत्या प्रतीतेत्यर्थः । ब्रह्मणोऽप्यत्रोक्तं सर्वगतत्वं सङ्कुचितमुपेत्योत्क्रमणं च मुख्यमङ्गीकृत्य भूमत्वमुच्यतामित्यत आह ।। ब्रह्मणस्त्विति ।। ''सर्वगतं सुसूक्ष्मं अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित'' इत्यादिश्रुत्यन्तर इत्यर्थः । एतेन ''सर्वगते हरावसम्भवा''दिति टीका विवृता । नन्वथापि तत्सुखमित्युक्तपूर्णसुखत्वाद्युपदेशादिना भूमा विष्णुः किं न स्यादित्यत आह ।। एवं चेति ।। अधिकरणान्तरन्यायैरेवोत्क्रमणस्यापि भगवति सिद्धेर्न तेनेह पूर्वपक्षोदय इति भावेनाशङ्क्य निराह ।। न चेत्यादिना ।। इत्यत्रेति ।। उत्तराधिकरणगुणसूत्र इत्यर्थः । न त्विति ।। येन ब्रह्मणि महत्त्वस्यापि भावात्क्रियावत्त्वं न स्यादिति वाक्यशेषः ।। गौरवादितीति ।। न च वाच्यमिति पूर्वेणान्वयः । अभावघटितत्वादिति भावः ।। इत्यपि सम्भवादिति ।। तथा

च ब्रह्मणि सत्यप्यणुत्वेन तेनोत्क्रमणादिक्रियावत्त्वसिद्धिः । महत्त्वस्याक्रियत्व प्रयोजकस्याकाशादाविव भावादिति भावः ॥ उक्तमिति ॥ ''अर्भकौकस्त्वा''दित्यादिगुणसूत्रेणेत्यर्थः ॥ ज्योतिरिति ॥ अत्र सिद्धक्रियावत्त्वमुपेत्यैव विशेषशङ्कया तत्प्रवृत्तमित्यर्थः । पूर्णस्य देशतो व्याप्तस्य ॥ अन्तर्यामिगता क्रियेति ॥ प्राणसंवादादिलिङ्गवदिति भावः ॥

तस्यापि सर्वगतत्वादिति ॥ ''तत्प्राण उत्क्रान्तेऽपद्यते''त्यादिप्राणोत्क्रमणादि त्वत्रत्यन्यायेनांतर्यामिगतत्वेन तत्राभिमतम् । न तु तत्रैव तत्सिद्धमिति भावः । एतेन ''सर्वगते हरावसम्भवा''दिति टीकावाक्यं अणुत्ववत्यपि हरौ सर्वगतेऽसम्भवादिति व्योमवदेकदेशगतेऽपि हरौ सर्वगतेऽसम्भवादिति अन्तर्यामिण्यपि सर्वगते हरावसम्भवादित्यादि रूपेण व्याख्यातं भवति ॥ उत्क्रान्तीति ॥ द्वितीयस्य तृतीयपादे ''उत्क्रान्तिगत्यागतीना''मित्यत्र जीवः किं व्याप्तोऽणुर्वेति सन्देहे ''व्याप्ता ह्यात्मान'' इति श्रुतेर्व्याप्त इति प्राप्ते ''सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छत्यमुष्मादिमं लोकमागच्छती''त्युत्क्रमणगमनागमनरूपक्रियादर्शनाद्व्याप्तस्य तदयोगादणुरेव । व्याप्तत्वश्रुतेः परमात्मविषयत्वमिति वक्ष्यमाणत्वात्तद्विरोधस्स्यादित्यर्थः ।

**पाण्डुरङ्गि** – उपक्रमानुक्तयोरेकत्राऽसम्भवात्पक्षभेदेन व्यवस्थापनायाह ॥ भूम्नो ब्रह्मत्वं हि द्वेधा भवेदित्यादिना ॥ प्राणभूम्नोरभेदपक्ष इत्यादिनैतद्विवेकं स्वयमेव करिष्यति । ननु सर्वगतत्वेन ब्रह्मण उत्क्रमणम् । तस्य भूमत्वानङ्गीकारे वायोरेव सर्वगतत्वापत्त्योत्क्रमणानुपपत्तिरित्यत आह ॥ वायोरिति ॥ ननु वायोरणुत्वेन तस्यैवानन्दमयत्वमिति टीकोक्ताक्षेपानुपपत्तिः । आनन्दमय उक्तस्य देशतः पूर्णत्वस्याणौ वायावसम्भवादित्यत आह ॥ आनन्दमय इति ॥

## तात्पर्यचन्द्रिका

**सिद्धान्तस्तु । ''यो वै भूमा तत्सुख''मिति भूम्नः पूर्णसुखतोक्ता । सा च ''विश्वशम्भुव''मित्यादिभाष्योक्तश्रुत्यादिभिर्विष्णवेकनिष्ठा । न हि द्वयोः सर्वोत्कृष्टानन्दत्वम् । विरोधात् । तत्सुखमित्यत्रामुख्यभूतापूर्णसुखोक्तौ तु मुख्यामुख्यन्यायबाधः । नाल्पे सुखमिति निषेधायोगश्च । जडे सुखस्याप्रसक्तेः । चेतने च**

**सुखमात्रनिषेधे बाधात् । पूर्णसुखनिषेधस्तु चेतनेन बाधितः । किं चायं चरमकक्ष्यापन्नो भूमा सर्वोत्तमः । प्राणभूम्नोरभेदपक्षे "वाग्वाव नाम्नो भूयसी"त्यादाविव प्रतियोगिविशेषानुपादानात् । भेदपक्षे प्राणादप्युत्तमत्वात् । "नाल्पे सुख"मिति निरुपपदाल्पस्य प्रतियोगित्वेनोपादानाच्च । असर्वोत्तमस्य कस्माच्चिदल्पत्वेन निरुपपदाल्पस्य तत्प्रतियोगित्वायोगात् । तच्च "विश्वतः परमा"मित्यादिभाष्योक्तश्रुत्यादिभिर्विष्ण्वेकनिष्ठम् । न च द्वयोः सर्वोत्तमत्वम् । विरोधात् । तस्माद्भूमा विष्णुः ।**

**प्रकाशिका** – पराभिमतहेत्वोरनुत्त्युत्क्रमणयोस्सावकाशतामग्रे विवक्षुस्सूत्रोपात्तसम्प्रसादादिहेतुना भूमा विष्णुरित्युक्तिपरां "विष्णुरेवायं भूमे"त्यादिटीकां विवृण्वन् सिद्धान्तयति ॥ सिद्धान्तस्त्विति ॥ "पूर्णसुखरूपत्वाभिधानान्नामादीनां सर्वेषामुपरि तदुत्तमत्वेन व्यपदेशाच्चे"ति टीकोक्तहेत्वोः "पूर्णसुखत्वादिकं च कुतो विष्णुत्वनिश्चायक"मित्यादिटीकोक्तनिरवकाशतां क्रमेण विवरिष्यन्नाद्यस्य तां तावदाह ॥ यो वै भूमेत्यादिना ॥ विश्वशम्भुवं पूर्णसुखाश्रयमित्यर्थः ।

लक्षणं परमानन्दो विष्णोरेव न संशयः ।
अव्यक्तादितृणांतास्तु विप्रुडानन्दभागिनः ॥ इति
सुखं लब्ध्वा हि कुरुते लोकचेष्टां जनार्दनः ।
अल्पात्सुखादल्पकर्मा पूर्णानन्दाद्धि सर्वकृत् ॥

इत्यादिस्मृतयस्सर्वकर्तृत्वादियुक्तयश्चादिपदार्थाः । वायोरप्यस्त्वित्यत आह ॥ न हीति ॥ एतेन "नापि पूर्णानन्दत्व"मिति टीकायां विरोधादिति पदमत्राप्यनुवर्त्य योज्यमिति सूचितम् । सर्वशब्दस्यासङ्कुचितत्वेनान्योन्यनिरूपितोत्कर्षस्य द्वयोरयोगादित्यर्थः । ननु "पूर्णसुखतोक्ते"त्युक्तम् । अश्रवणात् । सुखशब्दस्यापूर्णसुखार्थत्वेऽप्युपपत्तेरित्यतः "पूर्णसुखत्वाभिधाना"-दिति हेतोरसिद्धिं परिहर्तुं प्रवृत्तां "निरूपपदसुखशब्दमात्रस्यापि पूर्णसुखार्थत्वा"दिति टीकां विपक्षे बाधकोक्त्या व्यनक्ति ॥ तत्सुखमिति ॥ "मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय" इति न्यायबाध इत्यर्थः । इह सुखशब्दः पूर्णसुखवाचीत्यत्र "करोति नासुखी भूमा सुखं नाल्पे सुखं

भवे''दित्यानन्दमयनयानुव्याख्याने ''पूर्णमेवात्र सुखं विवक्षितम् । नाल्पे सुखमस्तीत्युक्तत्वा'' दितीह तत्वप्रदीपे चोक्तदिशाऽर्थापत्तिं चाह ॥ नाल्प इति ॥ ''यो वै भूमा तत्सुख''मित्युक्त्वा ''नाल्पे सुख''मिति निषिध्यते । तत्राल्पशब्देन जडं चेतनं वा वाच्यम् । आद्ये जडे सुखस्याप्रसक्तेरप्रसक्तनिषेधापातात् । न च ''नांतरिक्षे न दिवी''तिवन्नित्यानुवादः । व्यर्थत्वात् । नान्तरिक्ष इत्यादेस्तूपयोगोंऽतर्यामिनये व्यक्तः । अतश्चेतन एव निषेध इति वाच्यम् । तत्र चाहं सुखीत्यादिप्रत्यक्षादिना सुखस्य प्रमितत्वेन सुखमात्रनिषेधे बाधापत्तेः । अतः ''अपशवो वा अन्ये गो अश्वेभ्य'' इत्यत्र प्रशस्तपशुत्वनिषेधवत्पूर्णसुखमेव निषिध्यत इत्युपेयम् । तादृशस्य जीवेऽभावेन बाधाप्रसक्तेः । अतस्तत्र सुखनिषेधान्यथानुपपत्त्या च पूर्णसुखमेव सुखशब्दार्थ इत्यर्थः ।

एवं सौत्रसम्प्रसादशब्दितं पूर्णसुखत्वरूपं टीकाद्युक्तमाद्यहेतुं समर्थ्य अध्युपदेशशब्दितस्य ''सर्वेषामुपरि तदुत्तमत्वेन व्यपदेशाच्चे''ति द्वितीयहेतोरपि भूम्न्यसिद्धिं परिहरन्विष्ण्वेक-निष्ठतामाह ॥ किं चेति ॥ प्रतियोगीति ॥ एतस्माद्भूयानित्यवधिविशेषानिर्देशादित्यर्थः । ननु प्राणभूम्नोरभेदे ''प्राणो वा आशाया भूया''नित्याशारूपप्रतियोगिविशेषोपादानमस्ति । न च तत्प्राणस्यैव न तु भूम्न इति युक्तम् । द्वयोरेकत्वादिति चेन्न । प्राणशब्दस्य वायुपरत्वमुपेत्यैव तदन्तर्यामितया विष्णोः प्राणशब्दितत्वोपगमेनाशोत्तमत्वस्य प्राणगतत्वात् । ''महतः परमव्यक्त''मित्यादावन्यगतोच्चत्वनीचत्वनियामकत्वेन तच्छब्दार्थतया तत्र स्थितत्वस्यानु-मानिकनये वक्ष्यमाणदिशा प्राणगताशोत्तमत्वादिनियंतृतया तत्र हरेः प्राणपदेन ग्रहणाद्भूम-गतोत्तमत्वं प्रत्याशायाः प्रतियोगित्वाभावात् । अन्यथा वायोरुत्तमतानुक्तिप्रसङ्गात् । एवं च तस्यावधिविशेषमनुपादायैव सर्वान्ते पाठात्सर्वोत्तमत्वसिद्धिरिति भावः । एतेन ''विशेषानुक्तेर-खिलेशत्वमेवोक्तं भवति । न चेदमसिद्धम् । नामवागादीनां पूर्वपूर्वाधिपत्यस्योक्तत्वा''दिति सुधावाक्यं विवृतं ध्येयम् ॥ प्राणादपीति ॥ सर्वोत्तमादपि प्राणादित्यर्थः । अल्पस्य भूमप्रतियोगित्वेनोपादानेऽपि कथं सर्वोत्तमत्वलाभ इत्यत आह ॥ असर्वेति ॥ एवं टीकाद्युक्तमध्युपदेशहेतुं सुधारीत्या सर्वोत्तमत्वरूपं भूम्न्युपपाद्य वैष्णवत्वं तस्याह ॥ तच्चेति ॥ सर्वोत्तमत्वं ''विश्वतःपरमां सर्वतः परममकारवाच्यमित्यर्थः''इति टीकायां व्यक्तम् । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । न त्वत्समोस्त्यभ्यधिकः कुतोऽन्य'' इत्यादिरादिपदार्थः ।

''न च सर्वोत्तमत्वं वायोरपि । विरोधादेवेति टीकार्थमाह ।। न चेति ।। सर्वशब्दस्या-संकुचितत्वेनान्योन्यनिरूपितोत्तमत्वस्य द्वयोर्विरुद्धत्वादित्यर्थः । सूत्राद्युक्तहेतुद्वयसमर्थ-नमुपसंहरन् साध्यमाह ।। तस्मादिति ।। सम्प्रसादादिनिरवकाशहेतुद्वयादित्यर्थः ।

**पाण्डुरङ्गि** – विरोधादिति ।। सर्वशब्दस्य स्वेतरसर्वपरत्वेन एकस्य सर्वोत्तमत्वे अन्यस्य तद्धीनत्वापत्तौ पुनस्तस्य सर्वोत्तमत्वे विरोधात् । अन्यस्य वाऽधमत्वप्राप्त्या विरोधादित्यर्थः । एकप्रतियोगिकोत्कर्षापकर्षयोरेकत्र व्याहतत्वादित्याशयः ।। प्रतियोगिविशेषेति ।। निर्विशेषणभूमशब्दस्य निरूपचरितसर्वोत्तमत्वाप्रतियोगिविशेषोक्तिरूपापवादकाभावाच्चरम-कक्ष्यापन्नत्वेन सर्वोत्तमत्वमित्यर्थः ।। असर्वोत्तमस्येति ।। तथा सति नाल्प इत्यनेन भूम्न्यपि सुखनिषेधापत्त्या भूमैव सुखमित्यनेन विरोधापत्तेरिति भावः ।।

## तात्पर्यचन्द्रिका

न च भेदपक्षे प्राणाद्भूयसोऽनुक्तिर्बाधिका । पूर्वपक्षेऽपि प्राणस्य विष्णुतो भूयस्त्वानुक्तेर्बाधकत्वात् । विष्णोरधमत्वे हि नामादिदेवेभ्य इव प्राणस्य विष्णुतोऽपि भूयस्त्वं प्रश्नोत्तराभ्यामुच्येत । तदुक्तं न्यायविवरणे ''प्राणस्य विष्णोः सकाशाद्भूय-स्त्वानुक्ति''रिति । न चैवमनुक्त्योः साम्यम् । ''एवं विजानन्नतिवादी''ति प्राणज्ञानिनोऽतिवादित्वमुक्त्वा ''एष तु वा अतिवदति यः सत्येनातिवदती''ति सत्याख्यभूमज्ञानिनस्तुशब्देन विशेषोक्त्या भूम्नः प्राणादप्यतिशयस्योक्ततया अस्ति भगवः प्राणाद्भूय इति प्रश्नादेरध्याहार्यत्वेनानुक्तेरन्यथाप्युपपत्तेः । अत एव ''गत्यन्तरविवर्जिताः'' इत्यनुव्याख्याने सिद्धान्तीयानुक्तेर्निरवकाशत्वमुक्तम् । एतच्च ''व्यतिहारो विशिंषंती''त्यत्र सूत्रकृदेव वक्ष्यति ।। न चैवमिह पूर्वपक्षानुदयः । व्यतिहार इत्यत्रोक्तोऽध्याहारो न युक्तः । तुशब्दस्य ''विज्ञानं त्वेव विजिज्ञा-सितव्य''मिति सत्यानन्तरमुक्तेषु विज्ञानादिष्विवाभेदेऽप्युपपत्तेः । विज्ञानादीनां च सत्याभेदः ''सैव हि सत्यादय'' इत्यधिकरणसिद्ध इति प्राप्ते श्रुत्यन्तरे प्राणादेकस्यै-वाधिकस्योक्तेरेष त्वित्यत्र तुशब्दोऽध्याहारकल्पकः । विज्ञानं त्वित्यादौ तु

**सत्याख्यब्रह्मण्येव धर्मान्तराभिप्रायत्वान्न तत्कल्पक इति सिद्धान्तस्येहाभिप्रेतत्वात् । अत एव प्राणाद्भूम्नो भूयस्त्वोक्तिरूपासिद्धान्तयुक्तिरधिकरणान्तरव्युत्पाद्यत्वादिहानुव्याख्याने ''अनुक्तिश्चे''ति चशब्देनोक्ता । प्राणस्य विष्णुतो भूयस्त्वानुक्तिस्तु ''अनुक्ति''रिति स्वशब्देनोक्ता । तदुक्तं न्यायविवरणे ''प्राणस्य विष्णोस्सकाशाद्भूयस्त्वानुक्तिः । चशब्देनैष तु वा अतिवदति यः सत्येनातिवदतीति प्राणाद्विष्णोर्भूयस्त्वोक्तिश्चे''ति । प्राणस्य विष्णोः सकाशाद्भूयस्त्वानुक्तिस्त्वनन्यथासिद्धा । प्रश्नाद्यध्याहारकल्पकाभावात् ।**

**प्रकाशिका** – एवं साधकोक्त्या भूमा विष्णुरित्युक्त्वा पूर्ववाद्युक्ते भूयस्त्वानुक्त्युत्क्रमणरूपे बाधके निराचिकीर्षुरनुक्तिं तावदनूद्य न्यायविवरणोक्तदिशा साम्येन तावदापादयति ।। न चेत्यादिना ।। विष्णुतो भूयस्त्वानुक्तेर्निरवकाशतामाह ।। विष्णोरिति ।। उच्येतेति ।। त्वन्मते तस्य सर्वोत्तमत्वार्थमेव नामवागादितारतम्यस्य प्रक्रान्तत्वात् । तथा च प्राणस्यैव सर्वोत्तमत्वे विष्णुतो भूयस्त्वमाशानंतरं विष्णुर्वावाशाया भूयानित्युक्त्वा पश्चादस्ति भगवो विष्णोर्भूयानिति प्रश्नः प्राणो वाव विष्णोर्भूयानिति प्रतिवचनं च स्यात् । प्रश्नादिनाऽवश्यवक्तव्यस्य भूयस्त्वस्यानुक्तौ हेत्वंतराभावात्तदन्यथानुपपत्त्या न प्राणस्य सर्वोत्तमत्वं शङ्क्यम् । किन्तु भूम्न एव तथात्वं वाच्यमिति भावः । प्राणस्य विष्णुतो भूयस्त्वानुक्तिरूपयुक्तेष्टीकाकारैरत्र न्यायविवरणे सुधायां चाव्याख्यातत्वादत्र तां स्वयं व्याख्याय मूलारूढां करोति ।। तदुक्तमिति ।। न्यायविवरणपाठो मुख्यप्राणस्येति । नन्वेवं भूम्नोऽपि प्राणाद्भूयस्त्वानुक्त्यन्यथानुपपत्त्या न सर्वोत्तमत्वमिति सुवचम् । तथा च कथं निर्णय इति भावेनाशङ्क्य निराह ।। न चेति ।। ''एष तु वातिवदती''त्यादिटीकोक्तं समाधिं व्यनक्ति ।। एवमिति ।। प्राणपकरणे ''स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति । तं चेद्ब्रूयुरतिवाद्यसीति । अतिवाद्यस्मीति ब्रूयान्नापह्नुवीते''त्युक्त्वा एष तु वेत्याद्याम्नायते । ननु सत्यस्यातिशयितत्वे भूम्नः किमायातमित्यत उक्तं सत्याख्येति । तयोरभेदश्च ''सै व हि सत्यादय'' इत्यत्र वक्ष्यत इति भावः ।। प्रश्नादेरिति ।। भूमा वाव प्राणाद्भूयानितिपरिहारस्य चेत्यादिपदार्थः । ननु यथा पूर्ववादिना सिद्धान्तिनं प्रत्युक्ता प्राणाद्भूयस्त्वानुक्तिर्गत्यन्तरयुक्ता तथा सिद्धान्तिना पूर्ववादिनं प्रत्युक्ता प्राणस्य विष्णुतो भूयस्त्वानुक्तिरपि तथा स्यात् । एवं च पुनर्निर्णयो न स्यादित्यतो

नैवमिति भावेनाह ॥ अत एवेति ॥ पूर्ववाद्युक्तानुक्तेस्सावकाशत्वादेव साम्यनिरासाय सिद्धान्तिनोक्तानुक्तेर्निरवकाशत्वं –

बाहुल्यं लिङ्गशब्दानामनुक्तिश्च विरुद्धता ।
अनुक्तिरन्वयाभावो विपरीतश्रुतिभ्रमः ।
लिङ्गावकाशराहित्यभ्रमस्तादृग्द्वयं तथा ।
बहुतादृक्त्वमुक्तस्य विरोधोऽर्थात्तथा गतिः ॥
समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः ।
ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः ॥

''सिद्धान्तयुक्तयोज्ञेया'' इत्यनुव्याख्यान उक्तमित्यर्थः । विवरिष्यते चैतदग्रे । नन्वेवं निरवकाशानुक्तेरेव सिद्धान्तन्यायत्वोक्तेः पूर्वपक्षानुक्तेरन्यथोपपत्तिरूपन्यासस्य टीकायां कुतो व्युत्पादनं कृतम् । तथा सति न्यायभेदेनाधिकरणभेदस्स्यात् । सै व हीत्यस्य व्यर्थतापत्तेश्चेत्यतस्तत्रोक्तस्यैवात्र शिष्यहितायोक्तिरिति भावेनाह ॥ एतच्चेति ॥ पूर्वपक्षीयानुक्तेरुक्तरीत्या सावकाशत्वमित्यर्थः । तृतीयस्य तृतीयपादे द्वाविंशाधिकरणे विष्णुः प्राणादुत्तमो न वेति संशये छान्दोग्ये प्राणस्यैव सर्वोत्तमत्वेनोक्तत्वात्प्राणाद्भूयसोऽन्यस्य प्रश्नप्रतिवचनाभ्यामनुक्तेः प्राण एव सर्वोत्तम इति प्राप्ते प्रकरणान्तर इव प्रश्नप्रतिवचनयोर्व्यतिहारोऽध्याहारः कार्यः । एष तु वा अतिवदतीति तुशब्देन विशेषणाद्विष्णुरेव सत्यशब्देनोत्तमतयोच्यत इति वक्ष्यतीत्यर्थः । तेन गतार्थत्वमाशङ्क्य तदाक्षेपेणास्य प्रवृत्तिरित्याह ॥ न चैवमित्यादिना ॥ सैव हीति तदुत्तराधिकरणे प्राणात्सत्यशब्दितो विष्णुरेक एवोत्तम उत बहव इति संशये सत्यादुपरि विज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाहंकारात्मनामुक्तत्वाद्बहव इति प्राप्ते सत्यं भगवो विजिज्ञास इति सत्यनामकभगवद्गुणजिज्ञासायां विज्ञानाद्युक्तेर्दाक्षायणयज्ञाद्युक्तेरिव प्रकृतस्यैव गुणकथनपरत्वेनैवोपपत्तेः सैव परदेवता सत्यादय इति वक्ष्यमाणत्वादिति भावः । श्रुत्यन्तरे तैत्तिरीयादौ । अत एवेत्युक्तं व्यनक्ति ॥ अधिकरणान्तरव्युत्पाद्यत्वादिति ॥ अनुव्याख्याने न्यायसंग्रहानुव्याख्याने । इदानीं ''गत्यन्तरविवर्जिता'' इत्युक्तसिद्धान्तीयानुक्तेर्निरवकाशत्वं व्यनक्ति ॥ प्राणस्येति ॥

**पाण्डुरङ्गि** – अनुक्तेरन्यथाप्युपपत्तेरिति ॥ गम्यमानत्वादप्रयोग इति तु शब्दकार्य-प्रश्नप्रतिवचनानुक्तेः अन्यथा विष्णोः प्राणोत्तमत्वाभावं विनापि उपपत्तेरिति भावः ॥ व्यतिहार इत्यत्रोक्त इति ॥ एष्यदधिकरणपूर्वपक्षप्रवृत्तेरेतदधिकरणपूर्वपक्षदशायामेतदधिकरण-सिद्धान्तानुन्मेषेण तेनास्य गतार्थतायाः वक्तुमशक्यत्वादिति न्यायस्य विपक्षे बाधकोक्त्या पूर्वमेवानेकश उपपादितत्वादभ्युपगमवादेन वाऽत्रैवमुक्तिरिति ज्ञातव्यम् ।

## तात्पर्यचन्द्रिका

**नन्वत्र "प्राणो वा आशाया" इत्यत्र प्राणो विष्णुरित्युपेत्य भाष्ये सिद्धान्तितम्। न्यायविवरणे तु मुख्यवायुरित्युपेत्य । तद्विरुद्धम् । न चार्थद्वयस्य वैकल्पिकत्वादेवाविरोधः । प्राणस्य विष्णुत्वपक्षे "एष तु वा अतिवदती"ति तुशब्दायोगात् । आशाशब्दोक्तसरस्वतीतो मुख्यवायोरुत्तमत्वमनुक्त्वा विष्णोरेव तदुक्त्ययोगाच्च । न च प्राणस्य मुख्यवायुत्वेऽपि श्रीतत्त्वस्य तत उत्तमत्वमनुक्त्वा विष्णोस्तदुक्तिरयुक्तेति वाच्यम् ।**

**नामादयस्तु बद्धत्वान्मोचकत्वात्परोऽपि च ।**
**उभयोरप्यभावेन यथाऽव्यक्तं न तूदितम् ॥**

**इति वचनेनैव तदनुक्तेर्गत्युक्तेः । "इयदामनना"दित्याद्यधिकरणैश्छान्दोग्य-भाष्येण च विरोधाच्च । तत्र नित्यवद्वायुपरताया उक्तत्वादिति चेन्न । वायुपरत्वेऽपि "आत्मन आकाशः सम्भूत" इत्यादावाकाशादिशब्दानामिवान्तर्यामिपरत्वस्यापि सम्भवेन भाष्ये तदुक्तेः । तदुक्तिश्च पूर्वपक्षवन्न केवलं वायुपरत्वमिति स्वरूपकीर्तनार्थं वा प्राणान्तर्यामित्वेनैव प्राणाद्भूयस्त्वं लब्धमिति परिहारान्तरोक्त्यर्थं वा सम्भूत इत्यत्र च भवनवदिहोत्क्रमणस्यापि वक्तव्यत्वेन प्रसङ्गादुत्क्रमणलिङ्गसमन्वयार्थं वेति द्रष्टव्यम् । अत एव टीकायां "प्राणशब्देनापि विष्णोरुक्तत्वात् । अस्तु वाऽयं प्राणो वायु"रिति ग्रन्थाभ्यां भाष्यन्यायविवरणोक्तपक्षौ विरोधमुद्भाव्य निरसितुमापाततो**

**वैकल्पिकत्वेनोक्त्वा ''न चैतदर्थद्वयं विरुद्ध''मित्यनेन ग्रन्थेन तयोः समुच्चयेनाविरोध एव स्थापितः ।**

**प्रकाशिका** – अत्र टीकायां भाष्योक्तं प्राणभूम्नोरुभयोरपि विष्णुत्वमुत्क्रमणलिङ्गं च समर्थ्याभेदपक्षमेव प्रतिष्ठाय ''अस्तु वायं प्राणो वायुरेवे''ति भेदपक्षमपि भाष्यानुक्तमुक्त्वोपपाद्याभेदभेदपक्षा योरविरोधश्चोक्तः । अत्र भेदपक्षोक्तिस्समुच्चयेनाविरोधोक्तिश्च किं मूला किन्निमित्ता चेत्यतस्तदाशयं विवरितुमभेदपक्षमाक्षिपति ।। नन्विति ।। प्राणो विष्णुरित्युपेत्येति ।। उत्क्रमणलिङ्गस्य हरौ समर्थनादेतदवगम्यत इति भावः । ननु ऋगादीनां परापरार्थद्वयवदिहापि विवक्षाभेदेन कदाचिदयं कदाचित्सोऽप्यर्थोऽस्तु को दोषः । अत एवान्यमीशमित्यस्यादृश्यत्वनयेऽन्योऽर्थो द्युभ्वादिनयेऽन्योर्थ उक्त इत्यत आह ।। न चेति ।। प्राणभूम्नोर्भेदपक्षेऽपि दोषमाशङ्क्य निराह ।। न चेति ।। वचनेनेति ।। तृतीये ''कामादितरत्र तत्र चायतनादिभ्य'' इत्यत्र भाष्योक्तब्रह्मतर्कवचनेनेत्यर्थः । तत्र यथेत्यस्य ''श्रुतौ तथा जीवपरावुच्येते किं च नेतर''दित्युत्तरार्धेनान्वयः । वैकल्पिकार्थद्वयपक्षे बाधकान्तरमाह ।। इयदिति ।। आदिपदेन ''व्यतिहारः सैव ही''त्यनयोर्ग्रहः । इयदामननादित्युपासनापादीयैकविंशाधिकरणे ह्युपासनाधिकारिणो नाम वागादयः प्राणावसाना न वेति संशये नामादीनां सोत्तरत्वदर्शनात्प्राणादप्युत्तमाधिकारिसाधनसौलभ्यान्नामादयोऽधिकारिणो न प्राणावसाना इति प्राप्ते ''प्राणो वाव सर्वेभ्यो भूया''निति श्रुतेरधिकारिणां इयत् छान्दोग्योक्तं प्राणावसायित्वमेवेति वक्ष्यमाणत्वादिति भावः ।

तस्याः श्रेष्ठो मुख्यवायुः प्रकृष्टानां च नायकः ।
प्राणनामान इत्येव ह्यानन्दस्समुदीरितः ।
आणा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः ।
प्राण इत्युच्यते वायुस्सर्वे त्वेते दशोत्तरा ।।

इत्यादिछान्दोग्यभाष्येणेत्यर्थः । नित्यवदिति स्वार्थे वतिः । यद्वा व्यवस्थितैकार्थकेवाक्ये वा इमानि भूतानि जायन्त'' इत्यादौ यथोक्तिस्तथेत्यर्थः । इतरथा वायुर्वेति ोति भावः । अभेदपक्षोक्तेः फलमाह ।। तदुक्तिश्चेति ।। उक्तं सर्वं टीकायास्तात्पर्य ावेन तदारूढं करोति ।। अत एवेति ।।

**पाण्डुरङ्गि** – नित्यवदिति स्वार्थिको वतिः । नित्यमेवेत्यर्थः । ननु भाष्ये प्राणशब्दस्य विष्णुवाचकत्वं कुत उक्तमित्यत आह ॥ तदुक्तिश्चेति ॥ ननु स्वरूपकीर्तनार्थत्वं वैयर्थ्यापरपर्याय एवेत्यत आह ॥ प्राणांतर्यामित्वेन वेति ॥ ननु प्राणशब्दस्य विष्णुपरत्वाभावेऽपि प्रकरणविच्छेदकतुशब्दमहिम्ना प्राणाद्विष्णोर्भूयस्त्वोक्तिर्लभ्यत एवेति किमर्थं प्राणस्य विष्णुत्ववचनमित्यत आह ॥ सम्भूत इत्यत्रेति ॥ प्राणस्य विष्णुत्वानुक्तौ नोत्क्रमणादिलिङ्गसमन्वयः । उत्क्रमणादेः प्राणनिष्ठत्वश्रवणेऽपि भूमनिष्ठत्वेनाश्रवणादिति भावः ।

## तात्पर्यचन्द्रिका

तत्वप्रदीपे तु ''अभ्युपगम्यवादत्वा''दित्यादिनाऽयं प्राणो विष्णुरित्यभ्युपेत्यवादेन भाष्यं प्रवृत्तमित्युक्तम् । तत्र भाष्यन्यायविवरणयोः पक्षभेदेन व्यवस्थितत्वाद्भाष्ये पूर्वपक्ष उत्क्रमणलिङ्गोक्तिः सिद्धान्ते ब्रह्मण्युत्क्रमणसमर्थनं च स्वरसम् । युक्तं च ब्रह्मण्युत्क्रमणम् ।

जात्यादेः सर्वगस्यापि प्रतिव्यक्तिसमाप्तिवत् ।
सर्वगस्यापीश्वरस्य क्रियाया अपि सम्भवात् ॥ १ ॥

यथा सर्वगतांतरेऽदृष्टमपि जातिरूपसर्वगत एकैकत्र समाप्तिः । एकैकव्यक्तिदर्शनेऽपि जातिप्रतीतेः । यथा चासम्भावितमपि सर्वगतेषु गगनादिषु सर्वगतदिगाद्यसम्बद्धत्वमजसंयोगाभावपक्षे । तथा सर्वगतान्तरेऽदृष्टमपि क्रियावत्त्वं ब्रह्मण्यस्तु । ''तमुत्क्रामन्तं प्राणोनूत्क्रामति'' ''स्वाभाविकी ज्ञानबलक्रिया च'' ''ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मन'' इत्यादिश्रुतेः । क्रियाया औपाधिकत्वं तु ''सर्वत्र प्रसिद्धे''त्यत्रोक्तेनाणुत्वस्योपाधिकत्वनिरासकन्यायेन निरसनीयम् । किञ्च क्रियावत्त्वेऽणुत्वमेव तन्त्रम् । न तु महत्त्वाभावादि । गौरवात् । गुणजात्यादौ क्रियापाताच्च । अत एव न महत्त्वमक्रियत्वे तन्त्रम् । गुणादौ महत्त्वाभावेऽप्यक्रियत्वदर्शनात् । भावरूपायां क्रियायां पूर्वं धीस्थायां पूर्वं धीस्थं यदणुत्वरूपं

**प्रयोजकं तदभावादेवाक्रियत्वोपपत्तौ तत्प्रयोजकान्तरस्यानन्वेषणीयत्वाच्च । यदि च विभुद्रव्ये पूर्वदेशादिरूपफलाभावेन क्रिया न स्यात्तर्हि सुखदुःखेच्छा संस्कारादिरूप-फलाभावेनेश्वरे ज्ञानमपि न स्यात् । ज्ञानं नित्यत्वाल्लोकविलक्षणं चेत्क्रियापि तथास्तु ।**

**प्रकाशिका** – परिहारान्तरमाह ।। तत्वप्रदीपे त्विति ।। भाष्यादौ हरावुत्क्रमणस्य श्रुतिसिद्धत्वमेवोक्तम् । न तूपपत्तिसिद्धत्वम् । स्वयं तदाह ।। युक्तं चेति ।। आदिपदार्थं वदन् श्लोकं व्याचष्टे ।। यथेति ।। ननु तत्र प्रतीतिबलादन्यतरकर्मादिकरणाभावादिवशात्तथात्वेऽपीह किं मानमित्यत आह ।। तमिति विष्णुमित्यर्थः । श्रुतेरौपाधिकक्रियाविषयत्वमस्त्वित्यत आह ।। क्रियाया इति ।। यथा सर्षपादेरणीयस्त्वे ततोऽप्यधिकपरिमाणहृदयादेरनुपाधित्वं तथाऽत्यंताणुतररूपगतक्रियायामपि न ततोऽपि स्थूलस्योपाधित्वं उत्क्रान्तप्राणानित्यादौ क्रियोपाधेरनुक्तेश्च श्रौतोत्क्रमणानुरोधेनेश्वरस्य क्रियावत्त्वं तत्प्रयोजकमणुत्वं च स्वाभाविकम् । अक्रियत्वं तत्प्रयोजकमहत्त्वं त्वौपाधिकमित्यपि सुवचम् । अतिमहापरिमाणादेः कथं ततो न्यूनपरिमाणोपाधिकृतत्वमिति चेत्सर्षपादितोऽप्यणुपरिमाणादेः कथं ततोऽधिकपरिमाण-हृदयाद्युपाधिहेतुकत्वमिति सममित्यादिरूपेण निरसनीयमित्यर्थः । अत एव "स्वाभाविकी"ति श्रुत्युक्तिः । ननु न हरौ क्रियावत्त्वं युक्तम् । प्रयोजकधर्माभावात् । अन्यथोत्क्रमणादिना जीवाणुत्वादिसिद्धिर्न स्यात् । व्याप्ते हरौ पूर्वदेशविभागादिफलाभावाच्च । अतस्तन्निवृत्तौ क्रियाया अपि निवृत्तिः । श्रुत्यादि तु गौणं व्याख्येयमित्यतः प्रयोजकं तावदाह ।। किंचेति ।। आदिपदेन महत्त्वाभावविशिष्टमणुत्वं गृह्यते । महत्त्वाभावस्य तंत्रत्वे दोषान्तरमाह ।। गुणेति ।। पररीत्यैतत् । "गुणाद्वा लोकव"दित्यत्र गुणेऽपि क्रियावत्त्वोक्तेः । प्रागुक्तप्रतिबन्दीं निराह ।। अत एवेति ।। एतमेव हेतुं व्यनक्ति ।। गुणादाविति ।। किं तर्ह्यक्रियत्वे तन्त्रं यदभावाद्धारावक्रियत्वं वार्यत इत्यतस्सयुक्तिकं तदाह ।। भावेति ।। यदपि फलाभावादक्रियत्वमिति तदप्रयोजकमित्याह ।। यदि चेति ।। तथास्त्विति ।। अनित्यक्रियाया विभागादिफलजनकत्वेऽपीश्वरक्रियाया नित्यत्वेन लोकक्रियाविलक्षणत्वात्तादृशफलाभावेऽपि क्रियावत्त्वं सम्भवतीत्यर्थः ।

**पाण्डुरङ्गि** – यदुक्तमुत्क्रांतप्राणानिति प्राणोत्क्रमणश्रवणात्तस्य च पूर्णे ब्रह्मण्ययोगाच्च न प्राणस्य विष्णुत्वमिति तन्निराकरोति ॥ युक्तं चेति ॥ प्रसङ्गात्क्रियाया अनित्यत्वं पराचष्टे ॥ क्रियाया इति ॥ न्यायेनेति ॥ उपाध्यनुक्तिन्यायेनेत्यर्थः । यदि च विभुद्रव्य इति ॥ यावत्कर्मसत्त्वं संयोगविभागोत्पादिनियमात्कार्याभावेन कारणाभावानुमानादित्यर्थः । पूर्वदेशाद्विभागादीत्यत्रादिशब्देनोत्तरदेशसंयोगोत्पत्तिसङ्ग्रहः ।

## तात्पर्यचन्द्रिका

**यद्वा पूर्वदेशसंयोगानभिव्यक्तिरुत्तरदेशसंयोगाभिव्यक्तिश्च क्रियाभिव्यक्तिफलमस्तु। अथवा अणुत्वमहत्त्वयोः सदासत्त्वेऽपि यदा महत्त्वस्य व्यक्त्यात्मकताऽणुत्वस्य तु शक्त्यात्मकता तदा क्रियाया अपि शक्त्यात्मनैवावस्थानाद्ब्रह्मणः स्वतस्सिद्धः सर्वैः सह संयोग एव । न कस्मादपि विभागः । यदा तु महत्त्वस्य शक्त्यात्मकताऽणुत्वस्य व्यक्त्यात्मकता तदा क्रियाया अपि व्यक्त्यात्मकत्वात्पूर्वदेशविभागादिकमस्तु । एकस्मिन् रूपेऽणुत्वव्यक्तावपि रूपान्तरे महत्त्वव्यक्तिरविरुद्धा। रूपाणामभेदेऽपि सविशेषणत्वात् । अचिंत्यशक्तित्वाच्चेशस्येति दिक् । जीवस्याणुत्वे तु सर्वथा पूर्वदेशविभागादिहेतुभूता क्रियाहेतुः न क्रियामात्रमिति वक्ष्यते । अत्र सूत्रे सम्यक्प्रसीदत्यनेनेति व्युत्पत्त्या सम्प्रसादः पूर्णसुखम् । सुखे प्रसादशब्दस्तु ईश्वरस्य सुखं चेद्दुःखमपि स्यादिति न शङ्क्यम् । पूर्णानन्दकार्येण सम्यक्प्रसादेन दुःखाभावनिश्चयात् । ज्ञानवत्सुखस्यापि दुःखाविनाभावाभावाच्चेति दर्शयितुं प्रयुक्तः । अत्र विषयवाक्यक्रमात्सूत्रक्रमः ।**

**प्रकाशिका** – ननूत्क्रान्तप्राणानिति भूतकालनिर्देशान्न क्रियाया नित्यत्वमिति चेत्तर्हि तदैक्षतेति निर्देशाज्ज्ञाननित्यत्वाभावोऽपि स्यात् । यदि वेदस्यानादिनित्यत्वादद्य इव श्वःप्रभृतिष्वप्यनन्तकालेष्वेवमेवोक्त्या ज्ञानस्यानाद्यनन्तकालतासिद्ध्या वा लकारस्य कालत्रयान्यतमवाचित्वेन कालत्रयवाचिनः कस्यचिल्लकारस्याभावाद्येनकेनचिल्लङादिना निर्देशोऽपि तन्नित्यत्व एव श्रुत्यन्तरसिद्धे तात्पर्याद्वा ज्ञाननित्यत्वसिद्धिः तर्हि क्रियाया अपि तथात्वमस्तु ।

अत एव पूर्वं ''ज्ञानं नित्यं क्रिया नित्ये''त्युदाहृतम् । ननु यदीश्वरक्रिया नित्या सर्वदोपलभ्येतेति चेन्न । अयोग्यत्वेन प्रत्यक्षेणोपलम्भस्य तु क्रिया नित्येति सत्त्वात् । अभिव्यक्तेः कादाचित्कत्वेन कदाचिदुपलम्भस्यापि सम्भवाच्च । उक्तं च सुधायामत्तेतिनये ''कदाचिदभिव्यक्तेः कदाचिदेवोपलभ्यत इत्यङ्गीकारे न बाधकं पश्याम'' इति । एतेन भगवति नित्यमुत्क्रमणवत्त्वे जीवस्य सर्वदा मरणमेव स्यादिति निरस्तम् । शक्त्यात्मनोत्क्रमणस्य नित्यत्वेऽपि कदाचिदेव व्यज्यमानत्वेन दोषाभावात् । ननु यदि क्रियाविभागादिकार्यं न कुर्यात्तर्हि क्रियात्वं व्याहन्येत । संयोगविभागासमवायिकारणत्वात्क्रियायाः । यदि सा तौ कुर्यात्तर्हि तस्यास्संयोगविभागौ प्रत्यनपेक्षकारणत्वात्तदुत्पत्तिसातत्यप्रसङ्ग इति चेत् ज्ञानेऽप्यस्य तुल्यत्वात् । अस्तु वा संयोगादिजनकत्वम् । तच्च द्वेधा । तदभिव्यक्तिजनकत्वेनोपचाराद्वा मुख्यत एव वेति भावेनाद्यं तावदाह ॥ यद्वेति ॥ क्रियायाश्शक्त्यात्मकत्वं व्यक्त्यात्मकत्वं चेति द्वैरूप्यम् । तत्र शक्त्यात्मना नित्यापि सा यदा व्यज्यते तदा पूर्वदेशसंयोगानभिव्यक्तिरुत्तर-देशसंयोगाभिव्यक्तिश्च जायते । देशान्तरसयोगानभिव्यक्तिमात्रेण विभागव्यवहार इति भावः ।

ननु केयं क्रियाभिव्यक्तिर्नाम । न तावत्प्रतीतिः । ईश्वरापेक्षया नित्यसिद्धत्वेन सर्वदा संयोगव्यक्त्यापत्तेः । परापेक्षया कदाप्यभावेन नित्यमनभिव्यक्त्यापत्तेः । परप्रीतिरूप-क्रियाभिव्यक्तिभावे वा संयोगव्यक्त्यादिकार्योत्पादस्य तदनपेक्षत्वात् । अत एव नावरणनिवृत्ति-र्व्यक्तिरिति । मैवम् । ''व्यक्तिशब्देनावस्थानविशेषस्य विवक्षितत्वा''दित्यत्तेति नये सुधायामे-वोक्तेरिति तात्पर्यात् । संयोगविशेषस्वरूपोत्पादकत्वमप्यस्तीत्याह ॥ अथवेति ॥ ननूक्तं तथात्वे तदुत्पत्तिसातत्यप्रसङ्ग इति । तन्न । क्रियाव्यक्तिदशायामेव देशान्तरसंयोग विभागविशेषोत्पादा-भ्युपगमात् । क्रियाव्यक्तिश्च तत्प्रयोजकाणुत्वव्यक्तिदशायामेवेति न कोऽपि दोष इति ।

ननु क्रिया स्वसत्तोत्तरक्षणे संयोगादिकं करोत्युत विरम्य वा । नाद्यः । स्वसत्ताया इदं प्रथमताभावेन संयोगादिविशेषस्य विवक्षितक्षणादपि पूर्वमुत्पत्तिप्रसङ्गात् । न द्वितीयः । पूर्वोत्तरावस्थयोरविशिष्टस्य विरम्य व्यापारायोगात् । उत्तरसंयोगस्य कर्मविनाशकत्वेन कृतसंयोगस्य कर्मणोऽवस्थानानुपपत्तेश्च । तथा व्यक्तिश्च किं क्रियातो भिन्ना न वेत्यादिचोद्य-निराकरणमत्ताधिकरणानुव्याख्यानसुधादौ द्रष्टव्यमिति भावेनाह ॥ दिगिति ॥ तथा हि ॥ व्यक्त्या विशिष्टस्य कर्मणः कार्योत्पादकत्वेन शक्त्यात्मकस्य विरम्यैव तत्करणोपपत्तेः ।

कृतसंयोगस्य कर्मणोऽवस्थानं नेत्यस्यानित्यक्रियाविषयत्वेनोपपत्तेश्च । उक्तं च बृहदारण्यकभाष्ये -

व्यक्तिभावं गता या तु करोतीति स्वरूपिणी ।
शक्तिरूपस्थिता सैव क्रियाशक्तिरितीर्यते ।
सा च व्यक्तिस्तु जनिवत्क्रियाया रूपमेव तु ।
तथापि तु विशेषेण स्वरूपेण विशेषणम् ।
जनेर्जनिवदेवासौ ज्ञातव्या व्यतिरेकतः ॥ इति ।

एतेन ''रूपान्तरविवक्षयोत्क्रमणस्य श्रुतिसिद्धत्वा''दिति टीकोपपादिता भवति । यदप्यवादि पूर्ववादिना यदि च सर्वगतस्यापि क्रिया तदोत्क्रान्तिगत्यागतीनामित्यादि तत्राह ॥ जीवस्येति ॥ सूत्रे सम्प्रसादादित्यस्य भाष्ये पूर्णसुखरूपत्वादिति व्याख्यानं कृतम् । तदयुक्तमिव । तथात्वे पूर्णसुखादित्येव सूत्रणापत्तिः । कथं च सम्प्रसादपदेन तल्लाभ इत्यतस्तत्वप्रदीपसुधयोरुक्तयोगप्रदर्शनेन पूर्णसुखलाभप्रकारं वदन् संप्रसादपदप्रयोगप्रयोजनं चाह ॥ अत्र सूत्र इति ॥ सम्यक्प्रसीदत्यनेनेतीति ॥ सम्प्रेत्युपसर्गद्वयपूर्वकात् ''षद्लृ विशरणगत्यवसादने''ष्विति धातोः ''अकर्तरि च कारके संज्ञाया''मिति करणे घञ्प्रत्यये रूपमिति भावः ॥ सम्यक्प्रसादेनेति ॥ स चेश्वरे श्रुतिस्मृत्यादिगम्य इति भावः ॥ दुःखाविनाभावेति ॥ मुक्तेषु सत्यपि सुखे दुःखाभावादिति भावः ॥ विषयवाक्येति ॥ यो वै भूमा तत्सुखमिति वाक्यमाद्यस्य विषयः । स एवाधस्तादित्याद्युत्तरवाक्यं तु ''धर्मोपपत्तेश्चे''त्यस्य विषय इति तत्क्रमात्क्रम इत्यर्थः । तत्र सर्वगतत्वादिधर्माणां प्रागाक्षिप्तानामपि सूत्रे हेतूकरणं च तदाक्षेपकस्यानुत्क्रमणरूपबाधकस्य परिहृतत्वाद्युक्तमिति भावः ।

**पाण्डुरङ्गि** – ननु सर्वगतस्यापि ब्रह्मणो यदि क्रियावत्त्वमभ्युपगम्यते तर्ह्युत्क्रान्तिगत्यागतीनामित्यत्र सक्रियत्वेन जीवस्याणुत्वोक्तिरयुक्तेत्यत आह ॥ जीवस्याणुत्वे त्विति ।

## तात्पर्यचन्द्रिका

अन्ये तु । जडरूपः पञ्चवृत्तिर्वायुरेव भूमेति प्राप्ते निर्विशेषब्रह्मैव भूमेति सिद्धान्त इत्याहुः । तन्न । पञ्चवृत्तौ ''तरति शोकमात्मवि''दित्युपक्रमस्थात्मशब्दादेः ''भूमैव सुख''मित्युक्तसुखत्वस्य चायोगेन पूर्वपक्षस्याතितुच्छत्वात् । प्राणशब्दश्च ''ते ह प्राणा अहं श्रेयसि व्यूदिरे । अहं श्रेयानस्म्यहं श्रेयानस्मीति । तान्वरिष्ठः प्राण उवाचे''त्यादौ तदभिमानिदेवतायामेव प्रसिद्धः । सिद्धान्तोऽप्ययुक्तः । उक्तरीत्योपक्रमानुगुणस्य गुणज्यैष्ठ्यरूपस्योत्तमत्वस्य निर्गुणेऽयोगात् । कल्पितज्यैषठ्यस्य च ''भूमात्वेव विजिज्ञासितव्यः । भूमानं भगवो विजिज्ञासे'' इत्युक्तं चरमकक्ष्यात्वेन मुमुक्षुजिज्ञास्यत्वमयुक्तम् । किञ्च ''सर्वेषु लोकेषु कामचारो भवती''ति यद्भूमज्ञानफलं श्रुतं तदप्ययुक्तम् । निर्विशेषज्ञानस्य हि सर्वलोकानां कामस्य च निवृत्तिः फलम् । न तु तत्र कामचारः ।

**प्रकाशिका** – अन्ये त्विति ॥ ''भूमात्वेव विजिज्ञासितव्यः । भूमानं भगवो विजिज्ञास'' इत्यादौ श्रुतभूमा जडवायुरुत ब्रह्मेति संशये ''अस्ति भगवो नाम्न'' इत्यारभ्याऽऽप्राणात्प्रवृत्तस्य भूयो विषयप्रश्नप्रतिवचनप्रवाहस्य प्राणोपरिसमाप्त्या प्राणानंतरं प्रश्नप्रतिवचनाभ्यां विनाभूम्न आम्नानाद्भूमा प्राणशब्दितो वायुरेव । किञ्च भूमेति भावप्रत्ययांतत्वाद्भावस्य भवितृसापेक्षत्वात्प्राणस्यैव चानंतर्येण बुद्धौ सन्निधानात्तस्यैव भवितृत्वेनान्वयः । न तु तरति शोकमात्मविदित्युक्तः परमात्मा । विप्रकृष्टत्वात् । न च ''तरति शोकमात्मवि''दित्यादिनाऽऽत्मनः प्रकरणादात्मैव बुद्धिस्थइत्यात्मप्रकरणेन सन्निधिबाधात्स एव भूमेति युक्तम् ।

नामवागादिप्रतीकोपदेशरूपाब्रह्मविषयोत्तरानुसारेणोपक्रमस्याप्यब्रह्मविषयत्वेन ब्रह्मप्रकरणस्यानुत्थानात् । किं च प्राणतत्वमुपदिश्य प्राणोपासकस्यातिवादित्वनामकोत्कर्षमभिधाय प्राणप्रकरणविच्छेदशंकानिवृत्तये तदेवातिवादित्वमनुवर्त्य भूमानमुपदिशत्प्राणभूम्नोरभेदं गमयति । यस्मात्प्राणो भूमा । सुखत्वामृतत्वादिकं च कथंचिन्नेयमिति प्राप्ते ''एष तु

वा अतिवदति यस्सत्येनातिवदती''त्यत्रातिवादित्वहेतुप्राणोपासनं तुशब्देन व्यावर्त्य मुख्यातिवादित्वहेतोर्ब्रह्मणस्सत्यशब्देन परमार्थसत्त्ववाचिना पृथगुपदेशात् तथा परमोपक्रमे ''तरति शोकमात्मवि''दिति वेद्यतया परमात्मन उच्यमानत्वान्निर्विशेषब्रह्मज्ञानोपयोगितया नामाद्यब्रह्मोपदेशोपपत्तेः आत्मप्रकरणेन च सन्निधानबाधात् तथा ''यत्र नान्यत्पश्यती''ति द्वैतनिषेधेन भूम्नो लक्षणाभिधानेनाद्वैतः परमात्मैव भूमेति सिद्धांत इत्याहुरित्यर्थः ।। जडेति ।। ''पञ्चवृत्तेः प्राणस्ये''ति तदीयभाष्योक्तेरिति भावः ।। आत्मशब्दादेरिति ।। आत्मशब्दस्य मुक्तिहेतुवेदनविषयत्वादेश्चाचिद्व्यावर्तकत्वेन पूर्वाधिकरणईक्षत्यधिकरणादौ चोक्तत्वात् । सुखस्य चेतनमात्रलिङ्गत्वादिति भावः । ननूक्तमत्र भामत्यां नामादिप्रतीकोपदेशरूपेणोत्तरेण ब्रह्मविषयेण तरति शोकमात्मविदिति प्रश्नस्याप्यब्रह्मविषयत्वं वाच्यम् । अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यापत्तेः । अतो न ब्रह्मप्रकरणोत्थानमिति चेत् निर्विशेषब्रह्मज्ञानोपयोगितया नामाद्यब्रह्मोपदेशोपपत्त्या सावकाशेन नामाद्यब्रह्मोपदेशरूपोत्तरेण प्रश्नस्थात्मश्रुतेर्मुक्तिहेतुविति विषयत्वस्य च बाधायोगात् अन्यस्य च प्रबलजडप्रापकस्याभावात्सन्निहितसुखत्वस्य सर्वथा जडेऽनुपपत्तेश्चेति ।

ननु जडे प्राणश्रुतिप्रसिद्ध्यनुरोधेन सुखत्वं दुःखराहित्याद्याशयेन नेयमित्यत आह ।। प्राणशब्दश्चेति ।। प्राणाः इन्द्रियाभिमानिनः । व्यूदिरे विवादमकुर्वन् । प्राणः मुख्यप्राणः । एषा छन्दोगश्रुतिः । ''तान्वरिष्ठः प्राण उवाच । मामोहमापद्यथ । अहमेवैतत्पंचधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्यविधारयामी''ति षट्प्रश्ने । आदिपदेन ''तेहेमेप्राणा अहं श्रेयसि विवदमाना ब्रह्मजग्मुः । तद्धोचुः कोनो वरिष्ठ'' इति वाजसनेयश्रुतिर्ग्राह्या । एव शब्देनाभिमान्यधिकरणन्यायेन तत्र मुख्यत्वं सूचितम् । श्रुतीनां जडपरत्वे वचनादेरयोग इति भावः । एतेन नामवाक्चित्तसंकल्पादि जडप्रायपाठात्प्राणो जड इति निरस्तम् । श्रौतप्रसिद्ध्या प्रायपाठबाधात् । त्वन्मत आनन्दमयनये ''असन्नेव सभवती''त्यानन्दमय पुच्छविषय श्रुत्या पुच्छस्य ब्रह्मत्वबोधिन्याऽन्नमयाद्य ब्रह्मपुच्छप्रायपाठबाधवत् । नामादि शब्दानामभिमानिनयन्यायेन ''नामाभिमानिनीचोषे''त्यादि वक्ष्यमाणस्मृत्याच चेतनार्थत्वेन जडप्रायपाठाभावाच्चेति । भूमत्वं च किं वास्तवमुत कल्पितम् । न द्वयमपीत्याह ।। उक्तरीत्येति ।। ''न हि देशतः पूर्णत्वं भूमत्व''मित्यादिना पूर्वोक्तरीत्येत्यर्थः । उत्तमत्वस्य भूमत्वस्य ।। इति

यद्भूमज्ञानफलमिति ।। यद्यपि भूमवाक्यादुपरि ''अथात आत्मादेश'' इत्युक्तात्मवाक्ये ''स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानंदस्सस्वराट् भवति । तस्य सर्वेषु लोकेषु कामचारो भवती''त्यात्मज्ञानस्यैव फलं श्रुतम् । तथापि भूमात्मनोरभेदादेवमुक्तम् ।

**पाण्डुरङ्गि** – नन्वेतत्तदास्याद्यदिगुणज्यैष्ठ्यरूपमुत्तमत्वं स्यात् । न चैवम् । देशतः पूर्णत्वस्यैव भूमत्वपदार्थत्वात् । तस्य च निर्गुणेऽपि सम्भवादित्यत आह ।। उक्तरीत्येति ।। देशतः पूर्णत्वं न भूमत्वम् । वाग्वाव नाम्नो भूयसीत्यादि वाक्येषु पूर्वत्र सर्वत्र भूयस्त्वस्य देशतः पूर्णत्वस्यासम्भवेन तत्र तस्यैव वक्तव्यत्वादित्युक्तरीत्येत्यर्थः ।

## तात्पर्यचन्द्रिका

**यच्चोक्तं सम्यक्प्रसीदत्यस्मिन्निति व्युत्पत्त्या सुषुप्त्यवस्थावाचिना सम्प्रसादशब्देन तत्र जाग्रत्प्राणो लक्ष्यते । तथा च प्राणादूर्ध्वमुपदेशादित्याद्यसूत्रार्थ इति । तन्न । अस्मद्रीत्या सुखे सम्प्रसादशब्दस्य योगसम्भवे प्राणे योगमुखलक्षणाया अयोगात् । सम्प्रसादादित्यस्य च ''धर्मोपपत्तेश्चे''त्युत्तरसूत्रस्थचशब्दानुषङ्गेण पूर्णसुखत्वरूप-हेत्वंतरपरत्वसम्भवे अध्युपदेशादित्यनेनोक्तनिरवधिकोत्तमत्वं प्रत्यवधित्वेन सङ्कोचक-त्वायोगाच्च । किं च न तावदयं भूम्नः प्राणत्वाभावे हेतुः । तत्वज्ञानार्थं वादप्रक्रियया प्रवृत्तेषु सूत्रेषु प्रथमाकाङ्क्षितस्याध्याहारनिरपेक्षस्य च स्वपक्षहेतुत्वस्य सम्भवे तद्विपरीतस्य पूर्वपक्षनिरासहेतुत्वस्यायोगात् । स्वपक्षसाधनहेतुत्वं हि परपक्षनिरास-हेतुत्ववन्नाध्याहारापेक्षम् । समन्वयसूत्रस्थस्य तच्छब्दस्याध्यायपरिसमाप्त्यनुषङ्गेण भूमा तत् ब्रह्मेत्यन्वयात् । अत एव ''आनन्दमय'' इत्यादिषु स्वपक्षसाधकसूत्रेषु पक्षहेत्वोरेवोक्तिः । ''नेतरोऽनुपपत्ते''रित्यादिपरपक्षनिराससूत्रेषु तु साध्यस्यापि । नापि भूम्नो ब्रह्मत्वे हेतुः । प्राणादूर्ध्वमुपदेशस्यानन्दमयप्रकरणे मनोमयादिषु सत्त्वात् । भूमप्रकरणे च प्राणोपदेशादूर्ध्वं ''सत्यं विजिज्ञासितव्य''मिति सत्यशब्दार्थस्य ब्रह्मण इव ''विज्ञानं त्वेव विजिज्ञासितव्यं मतिस्त्वेव विजिज्ञासितव्या श्रद्धा त्वेव**

**विजिज्ञासितव्ये''त्यादेरुक्तत्वेन विज्ञानमतिश्रद्धाकृतिनिष्ठादिष्वपि सत्त्वात् । त्वन्मते मनोमयादीनां विज्ञानादीनां चाब्रह्मत्वात् । यच्चोक्तं ''यत्र नान्यत्पश्यती''त्यादिनोक्त व्यवहाराभावरूपनिर्विशेषब्रह्मधर्माद्भूमा ब्रह्मैवेति द्वितीयसूत्रार्थ इति । तन्न । तत्र ''एवं पश्यन्नेवं विजानन् सर्वेषु लोकेषु कामचारो भवती''ति दर्शनादि-व्यवहारस्याप्युक्तेः । नान्यत्पश्यतीत्यन्यदर्शनरूपविशेषनिषेधेन भूमद्रष्टृत्वस्याभ्यनु-ज्ञानाच्च । अन्यदर्शनादेरेव निषेधेनान्यस्यानुमतत्वाच्च । अत्रापि ''धर्मोपपत्ते''-रित्युक्तेर्निर्धर्मकत्वमतप्रतिकूलता व्यक्तैव ।**

**प्रकाशिका** – अधिकरणशरीरं निरस्य सूत्रार्थमप्यनूद्य निराह ।। यच्चेति ।। अत्र संप्रसादशब्दोऽधिकरणव्युत्पत्त्या, बृहदारण्यके ''स एष एतस्मिन्संप्रसादे स्वप्नांते बुद्धांत'' इति स्वप्नजागरितस्थानाभ्यां सह पाठाच्च सुप्तिपरः । तस्यां च प्राणो जागर्तीति तेन प्राणो लक्ष्यते । तथा चार्थमाह ।। तथा चेति ।। ''प्रसिद्धप्राणादिपदपरित्यागेनाप्रसिद्ध सम्प्रसादपदोपादाने कारणाभावा''दिति सुधोक्तमुपलक्षणमिति भावेनाह ।। योगमुखेति ।। तस्यातिविलम्बितत्वा-दिति भावः । अगत्यैवमाश्रीयत इति तत्राह ।। सम्प्रसादादित्यस्येति ।। अस्तु वाऽयमेक एव हेतुः । तथापि स किं पूर्वपक्षनिरासकोऽथ भूम्नो ब्रह्मत्वसाधकः । आद्यं प्रत्याचष्टे ।। किं च न तावदिति ।। ''परमात्मैवेह भूमा न प्राण'' इति परभाष्योक्तेर्द्वेधाऽपि संभवाद्विकल्पः ।। तद्विपरीतस्येति ।। प्रथममनाकांक्षितत्वान्न प्राण इत्यध्याहर्तव्यत्वाच्चेत्यर्थः । अध्यहारस्स्व-पक्षहेतुत्त्वेऽपि तुल्यः । साध्यपदाश्रवणादित्यत आह ।। स्वपक्षेति ।। अत एवेति ।। ''तत्तु समन्वया''दित्यतस्साध्यनिर्देशस्यानुवर्तनादेवेत्यर्थः ।

ननु तत्त्विति तुशब्दस्यावधारणार्थत्वाद्भूमा तदेव ब्रह्मैवेत्युक्तावर्थान्न प्राण इत्यस्य लाभात्तत्र हेत्वन्वय इति चेन्न । साक्षादुपात्तसाध्यान्वयत्यागेनार्थिकान्वयायोगात् । अत एव तादृशस्थले साध्यस्याप्युक्तिरित्युक्तमिति ज्ञेयम् । द्वितीयं निराचष्टे ।। नापीति ।। ''तस्माद्वा एतस्मात्प्राणमयात् । अन्योऽतर आत्मा मनोमय'' इति तस्माच्च विज्ञानमयानन्द-मययोरुक्तेरित्यर्थः । ननु तत्र प्राणमयादूर्ध्वम् । न तु प्राणादिति चेन्न । अस्य विशेषस्या-प्रयोजकत्वात् । त्वन्मते तत्र मयटो विकारार्थत्वेन प्राणविकारस्यापि प्राणत्वात् । अन्यथा तं प्रत्युदाहृतः ''प्राणं देवा अनुप्राणंती''ति श्लोकोऽनन्वितस्स्यात् । भृगुवल्ल्यां प्राणादेव च

मनःप्रभृतीनामूर्ध्वमुपदेशाच्चेति भावः । अविवादस्थलं चाह ॥ भूमप्रकरणे चेति ॥ अस्तु को दोष इत्यत आह ॥ त्वन्मत इति ॥ तथा च हेतोर्व्यभिचार इति भावः । धर्मोपपत्तेश्चेत्यस्य परभाष्योक्तमर्थमनूद्य निराह ॥ यच्चेति ॥ विशेषेति ॥ विशेषनिषेधस्य शेषाभ्यनुज्ञान-गमकत्वादिति भावः ॥ अन्यदर्शनादेरिति ॥ तथा च भूमा स द्वितीय एव । न तु निर्विशेषोऽद्वैत इति भावः ॥

**पाण्डुरङ्गि** – ननु तात्त्विकस्य गुणज्यैष्ठ्यरूपभूमत्वस्य निर्गुणेऽसम्भवेऽपि कल्पितस्य गुणज्यैष्ठ्यस्य तत्र सत्त्वेन सिद्धान्तो युक्त एवेत्यत आह ॥ कल्पितेति । जाग्रदिति शक्यसम्बन्धोक्तिः । अस्मद्रीत्येति ॥ सम्यक् प्रसीदत्यनेनेति सम्प्रसादः पूर्णसुखमित्यस्मद्री-त्येत्यर्थः ॥ अत एवेति ॥ स्वपक्षसाधनहेतुत्वस्याध्याहारनिरपेक्षत्वादेवेत्यर्थः । ननु प्राणादुत्तरं श्रुतस्य मनोमयादेरानन्दमयाधिकरणे ब्रह्मत्वसमर्थनेन ब्रह्मत्वात् । भूमप्रकरणे च प्राणोपदे-शादूर्ध्वं श्रुतस्य विज्ञानादेरपि ''सैव हि सत्यादय'' इत्यधिकरणोक्तन्यायेन ब्रह्मत्वेन साध्यस्यापि तत्र सत्त्वान्न व्यभिचार इत्यतो भवत्येवास्मत्सिद्धान्तो न त्वत्सिद्धांत इत्याह ॥ त्वन्मत इति ॥ अनेनान्यतरानैकान्तिकमित्युक्तं भवति ।

## तात्पर्यचन्द्रिका

केचित्तु । भूमा प्राण इत्येव पूर्वः पक्षः । प्राणशब्दस्तु प्राणसहचारिणि जीवे लाक्षणिकः । ''प्राणोह पिते''त्यादिना प्राणे पितृत्वादिव्यपदेशात् । ''पितृहा वै त्वमसी''त्यादिना सप्राणस्य शरीरस्य हिंस्यत्वव्यपदेशाच्च । न हि केवलजडस्य पितृत्वादिकं हिंस्यत्वं च युक्तमित्याहुः । तन्न । प्राणशब्दस्य प्रसिद्ध्यनुसारेण प्राणाभिमानिदेवतावाचित्वेऽपि ''अथ यद्यप्येनानुत्क्रान्तप्राणा''नित्यादिनोपपादि-तस्य पितृत्वादेः सम्भवेन लक्षणायोगात् । ''अथ यद्यप्येनानुत्क्रान्तप्राणा''निति प्रकृतानामाचार्यादिजीवानां उत्क्रान्तप्राणत्वस्योक्तत्वेन प्राणस्य जीवमात्रत्वा-योगाच्च। न हि स्वयं स्वस्मादुत्क्रान्तो भवति । अत एव ''एष सम्प्रसादोऽस्मा-च्छरीरात्समुत्थाये''ति श्रुतेः सम्प्रसादो जीवः । तस्मादध्युपदेशादिति केषांचित्सूत्रा-

क्षरार्थोऽपि निरस्तः । तथात्वे श्रुतौ प्राणशब्दस्य जीवे लक्षणापत्तेः । जीवसामान्यादध्युपदेशमात्रेण ब्रह्मत्वासिद्धेश्च । त्वद्रीत्या श्रद्धादिषु व्यभिचाराच्च । सम्प्रसादोऽस्मादिति श्रुतौ शरीरात्समुत्थानलिङ्गेन सम्प्रसादशब्दस्याल्पसुखयुक्तजीवे कथंचिद्यौगिकत्वेऽपि सूत्रेऽल्पसुखयुक्तजीवपरत्वे हेत्वभावाच्च । ''नामाभिमानिनी चोषा ''इत्यादिस्मृत्या नामादीनामपि जीवविशेषत्वाच्चेति । टीकाक्षरार्थस्तु स्पष्टः । यद्यपि श्रुतौ विश्वतः परममिति द्राविडपाठः । तथापि विश्वतः परमामित्यांध्रपाठो भाष्य उदाहृतः ॥ छ भूमाधिकरणम् ॥ २ ॥

**प्रकाशिका** – केचित्त्विति ॥ ''यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे''त्यादावुक्तो भूमा किं प्रत्यागात्मरूपो जीवोऽथ परमात्मेति संशये नामादिषु प्रश्नोत्तरत्वेन प्रवृत्तस्य भूयस्त्ववचनस्य प्राणे पर्यवसानात् प्राणादूर्ध्वं तदनुक्तेः प्राणभूम्नोरभेदात् प्राणशब्दस्य ''तरति शोकमात्मवि''दित्यात्मजिज्ञासया प्रक्रांते प्रकरणे प्राणपर्यंतोपास्योपदेशहेतुना प्राणसाहचर्यनिमित्तेन लक्षणया जीवपरत्वात् प्रसिद्धजडवायुपरत्वे प्रक्रान्तात्मशब्दायोगात् ''प्राणो वै पिता प्राणो वै माता प्राणो भ्राता प्राणस्स्वसा प्राण आचार्यः प्राणो ब्राह्मण'' इत्युक्तपितृत्वादेरयोगात् तथा ''पितृहा वै त्वमसी''ति ''मातृहा त्वमसी''त्यादिना तथा ''उत्क्रान्तप्राणा''नित्यारभ्य प्रवृत्तेन ''न पितृहासी''ति ''न मातृहासी''त्यादिना चात्र प्रकरणे स प्राणेषु हिंसके पुरुषे हिंसानिमित्तोपक्रोश वचनस्याप्राणेषु हिंसके हिंसानिमित्तोपक्रोश भावस्य च दर्शनेन केवलजडे हिंस्यत्वनिमित्तोपक्रोशादेश्चायोगात् लोके च सजीवनिर्जीवयोरुपमर्दकारिषूपक्रोशतदभावोपलंभात्प्राणशब्दितो जीव एव भूमेति प्राप्ते भूयो विषयप्रश्नप्रत्युक्त्योः प्राणपर्यंतत्वेऽपि प्राणवादिनोऽतिवादित्वोक्त्यनन्तरं ''एष तु वा अतिवदति यः सत्येनातिवदती''ति तुशब्देनोपासकभेदं प्रतिपाद्य सत्योपासकस्य पूर्वस्मात्प्राणोपासकादाधिक्यकथनादतिवादित्वस्य स्वोपास्याधिक्यवादित्वरूपत्वात्सत्यशब्दावसेयं ब्रह्मैव भूमा सम्प्रसादात्प्राणशब्दिताज्जीवादूर्ध्वमुपदेशात् । अमृतत्वस्वमहिमप्रतिष्ठितत्वसर्वात्मत्वादिधर्माणामुपपत्तेश्च ब्रह्मैव भूमेति सिद्धान्त इत्याहुरित्यर्थः ।

तर्हि को विशेष इत्यत आह ॥ प्राणशब्दस्त्विति ॥ जीवग्रहे हेतुद्वयमाह ॥ प्राणो हेति ॥ सिद्धान्तस्य स्फुटत्वात्पूर्वपक्षस्यैवोपन्यासः । यदुक्तं प्राणशब्दश्चेतनपर इति तद्युक्तम् ।

लाक्षणिकत्वं त्वयुक्तमित्याह ।। प्राणशब्दस्येति ।। प्रसिद्धीति ।। प्रागुक्तश्रुतिप्रसिद्ध्यनु-सारेणेत्यर्थः । तदीयसूत्रार्थोऽप्ययुक्त इत्याह ।। अत एवेति ।। अतश्शब्दार्थं व्यनक्ति ।। तथात्व इति ।। त्वया तथोक्तत्वादिति भावः ।। महतः परमव्यक्तमित्यादौ त्वन्मते जीवादधिकत्वेन निर्दिष्टे शरीरे ब्रह्मत्वाभावादप्रयोजकोऽयं हेतुरित्याह ।। जीवेति ।। त्वद्रीत्येति ।। त्वन्मते तेषामब्रह्मत्वात्सत्यवाक्य इव श्रद्धात्वेवेत्याधिक्यद्योतकतुशब्दस्य श्रद्धादौ भावादिति भावः । तथा हि तद्भाष्यं ब्रह्मोपासनं सत्यं त्वेव विजिज्ञासितव्यमुपदिश्य तदुपायभूतं ब्रह्ममननं मतिस्त्वेव विजिज्ञासितव्येत्युपदिश्य श्रवणप्रतिष्ठार्थत्वान्मननस्य मननोपदेशेन श्रवणमप्य-र्थात्सिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धां श्रद्धात्वेव विजिज्ञासितव्येत्युपदिश्ये''त्यादि । ननु सम्प्रसादोऽस्मादिति श्रुतौ जीवे प्रसक्तेन जीववाचिना सौत्रसम्प्रसादशब्देन जीवस्योक्तेस्तदनुरोधात् श्रुतौ लक्षणाऽऽश्रीयत इत्यत आह ।। सम्प्रसाद इति ।। सम्प्रसादशब्दस्य जीवेऽभिधानाद्यभावेन रूढ्यभावात्स्वयोग्यकिंचित्पूर्णसुखवति तस्मिन् सम्बद्धं प्रसादशब्दितं सुखं यस्येति व्युत्पत्त्या सुखसम्बद्धो जीवः सम्प्रसादशब्देन ग्राह्यः । न चात्र मुख्यार्थस्य तत्सुखमित्युक्तस्य सन्निहितपूर्णसुखस्य त्यागेन जीवग्रहणे हेतुरस्ति । येन श्रुतौ तद्बलाल्लक्षणाऽश्रीयेतेत्यर्थः । किं च जीवादाधिक्येनोपदेशस्य वागादावपि सत्त्वात्तत्रापि व्यभिचार इति भावेनाह ।। नामेति ।। ''नामाभिमानिनी चोषा तस्याब्रह्मपरं स्मरे''दित्यादि-छान्दोग्यभाष्योदाहृतस्मृत्येत्यर्थः । ''धर्मोपपत्तेश्चे''ति सूत्रार्थो न विरुद्ध इति न दूषितः । ''प्रतिसूत्रं प्रकाश्येते घटनाघटने मये''त्युक्तेः प्रायिकत्वाभिप्रायत्वादद्वैतमत एतत्सूत्रार्थस्यापि दूषणाच्च न प्रतिज्ञाविरोधः ।

एतेन रामानुजरीतिमनुसृत्य पूर्वोत्तरपक्षौ कुर्वतः कस्यचिच्छैवस्य मतं प्रत्युक्तं ध्येयम् । यदत्र सौत्रहेतोश्चन्द्रिकोक्तव्यभिचारनिरासाय सम्प्रसादाज्जीवादधिकात्मत्वेनोपदेशादित्यर्थ इत्युक्तं तन्न । सूत्रे अध्यात्मोपदेशादिति निर्देशाभावात् । यदत्रोक्तं शिवार्कमणिदीपिकायां ''निरतिशयसुखवर्णनपरस्य भूमोपदेशस्यात्मविषयत्वं स्पष्टमिति हेतावपेक्षितमप्यात्मत्वविशेषणं सूत्रेन कृत''मिति तन्न । अधिकत्वस्यापि स्पष्टत्वेनावाच्यत्वापातात् । भूमोपदेश-स्यात्मविषयत्वाय निरतिशयसुखत्वस्य हेतुत्वेनावश्यकत्वेऽस्मन्मतरीत्या सम्प्रसादादित्यस्यैव तदर्थत्वस्य न्याय्यत्वेन तेनात्मत्वं प्रसाध्याधिकात्मत्वेनोपदेशादित्याद्युक्तेः क्लिष्टत्वात् । ''भूमा

नारायणाख्यस्स्यात्स एवाहं कृतिस्स्मृत'' इत्यादिस्मृतिविरोधान्न शिव इति सिद्धान्तस्यानुत्थानाच्चेति ॥ स्पष्ट इति ॥ उपन्यासमुखेन विवृत इत्यर्थः ॥ छ ॥ भूमाधिकरणम् ॥

**पाण्डुरङ्गि** – नन्वेवं प्रसादशब्दस्य सुखपरत्वे सम्प्रसादोऽस्माच्छरीरादिति श्रुतावपि सुखपरत्वं स्यात् । यदि च तत्र जीवपरत्वं तर्हि सम्प्रसादादिति सूत्रस्थप्रसादशब्दस्यापि जीवपरत्वमिति समानमित्यत आह ॥ सम्प्रसाद इति ॥ अल्पत्वं सुखविषयं तच्च तत्सुखं च तद्युक्तो जीव इति वदता दुःखबाहुल्यवज्जीवपरत्वं सम्प्रसादशब्दस्य न सम्भवति । न हि गङ्गायां घोष इत्यत्र गङ्गाशब्दस्तीरपर इत्येतावता गङ्गायां मत्स्य इत्यत्रापि तत्परो भवति । तदिह सम्प्रसादोऽस्माच्छरीरादित्यत्र बाधकसद्भावेन सम्प्रसादशब्दस्य जीवपरत्वेऽप्यन्यत्र न तत्परत्वम् । अन्यथाऽतिप्रसङ्गः स्यादिति भावः ॥ भूमाधिकरणम् ॥ २ ॥

## अक्षराधिकरणम्

**॥ ॐ अक्षरमंबरांतधृतेः ॐ ॥ यद्यप्यक्षरशब्दो वर्णेषु लोकतः प्रसिद्धः । तथापि न तस्यान्यत्रप्रसिद्धता । न हि सा ब्रह्मणोऽन्यत्र यत्र क्वचन प्रसिद्धता । किं तु पूर्वपक्ष्यभिप्रेतेऽन्यत्र । उभयत्र प्रसिद्धत्वं तु ''विष्णोश्चेतनप्रकृतेश्चाविनाशित्वसाम्यादक्षरशब्दः साधारण'' इति न्यायविवरण एवोक्तम् । प्रयोगसाधारण्येनोभयत्र प्रसिद्धता तु नोक्ता । पूर्वपक्षिणं प्रति सम्प्रतिपन्नप्रयोगाभावात् । वर्णादिसाधारणेन तेन ब्रह्मचित्प्रकृतिरूपार्थद्वयमात्रासाधारण्यासिद्धेश्च । प्रवृत्तिनिमित्तोपजीविस्थलांतरस्थप्रयोगानुसंधाननिरपेक्षे समन्वेतव्यशब्दप्रवृत्तिनिमित्तसाधारण्यप्रयुक्त उभयत्र प्रसिद्धत्वे सम्भवति तत्सापेक्षस्य तस्यानादरणीयत्वाच्च । अत्र चाक्षरशब्दो योगमात्रस्यातिप्रसक्तत्वात्पङ्कजादिवद्योगरूढः । तत्र रूढ्यंशसाधारण्यस्य ''अक्षरत्रयमीरित''मित्यदृश्यत्वाधिकरणभाष्योदाहृतस्मृत्यैव सिद्धेर्योगांश साधारण्यमात्रं ''अविनाशित्वसाम्या''दिति न्यायविवरण उक्तम् । अत एव टीकायां ''द्रष्टृत्वादिश्रवणाज्जडप्रकृतेरोंकारस्य च न सन्देहनिविष्टत्व''मित्युक्तम् । अन्यथा हि नित्यमात्रस्य न सन्देहनिविष्टत्वमित्यवक्ष्यत् । जडप्रकृत्यादिसाधारण्येनाक्षर-**

**शब्दस्योभयत्र प्रसिद्धत्वाभावस्तु टीकायां न शङ्कितः । अन्यसाधारण्येऽपि संशयकोटिसाधारण्यमात्रेण तत्सिद्धेः ।**

**प्रकाशिका** – ।। ॐ अक्षरमम्बरान्तधृतेः ॐ ।। ''अत्राविनाशित्वसाम्याच्चित्प्रकृतौ हरौ च साधारणस्याक्षरनाम्न'' इत्यादिपादादिसङ्गत्युक्तिपरा टीका न युक्तेव । अविनाशित्व-साम्येऽक्षरनाम्नस्साधारण्ये बीजाभावात् । यद्यपि ''अविनाशित्वस्याक्षरशब्दप्रवृत्ति-निमित्तत्वादित्यत्रोपस्कर्तव्य''मिति न्यायविवरणटीकोक्त्या सबीजत्वम् । तथाप्यक्षरशब्दस्य विष्णुचित्प्रकृत्योर्यौगिकत्वेन लिङ्गतापत्त्या नाम्न इत्युक्त्ययुक्तेश्चेत्यतो मूलोक्तितद्व्याख्यानादि-टीकां विवरिष्यन्नन्यत्र प्रसिद्धत्वं तावदाशंक्य निराह ।। यद्यपीत्यादिना ।। क्वचनेति निपातसमुदायः ।। किं त्विति ।। इह च वर्णे द्रष्टृत्वादेरयोगान्न पूर्वपक्ष्यभिप्रेत इति भावः । का तर्हि पूर्वपक्षकोटिः । कथं चोभयसाधारण्यम् । वर्णव्यावृत्तस्य तद्बीजस्याभावादित्यत आह ।। उभयत्रेति ।। अविनाशित्वं तु वर्णादिव्यावृत्तकोटिद्वयमात्रसाधारणमित्यग्रे विवरिष्याम इति भावः । एतेन टीकैतन्मूलेति सूचितम् ।

ननु वक्ष्यमाणदिशा रूढेरप्यावश्यकत्वात्तस्याश्च प्रयोगबाहुल्यादिरूपत्वात्प्रयोगवशादेव साधारण्यं कुतो नोक्तम् । किं रूढितोऽप्यमुख्ययोगाश्रयणेनेत्यत आह ।। प्रयोगेति । ''यया तदक्षरमधिगम्यत'' इत्यादिप्रयोगात्कथमेतदित्यत उक्तं सम्प्रतिपन्नेति ।। तत्रासंमतेरिति भावः । नन्वस्ति ''परतः परमक्षरम् । हरिमेवे''ति स्मार्तप्रयोग इत्यनुशयादाह ।। वर्णादीति ।। वर्णे लोकतः । जडप्रकृतौ च स्मार्तः ।। अर्थद्वयेति ।। तन्मात्रसाधारण्यस्यैव वक्तव्यत्वेनाग्रे साधनादिति भावः । ननु द्रष्टृत्वादिना वर्णजडप्रकृत्योर्निरासे द्वयमात्रवृत्तित्वं स्यादित्यतो हेत्वंतरमाह ।। प्रवृत्तीति ।। श्रीतत्त्वादौ स्थलांतरप्रयोगस्यावयववृत्त्यैवोपपत्तौ रूढेरकल्पनादिति भावः । नन्वेवं प्रवृत्तिनिमित्तस्याकाशादावपि सत्त्वेन कथं द्वयमात्रवृत्तित्वमक्षरशब्दस्येत्याशङ्कां हृदि कृत्वा ''उपलक्षणं चैतत् । अक्षरशब्दस्य तत्र प्रसिद्धत्वादिति द्रष्टव्य''मिति न्यायविवरणटीकायां ''अविनाशित्वसाम्या''दित्यस्योपलक्षणत्वोक्तेर्बीजं वदंस्तदनुरोधेनात्रापि टीकायामविनाशित्वसाम्यादित्यनन्तरं तत्र प्रसिद्धत्वाच्चेत्यपि द्रष्टव्यमिति भावेन योगस्य साधारण्यमुपेत्य रूढिबलाच्चोभयमात्रवृत्तित्वं द्रष्टव्यमित्येकं पक्षं तावदाह ।। अत्र चेति ।। अत

एवेति ।। योगरूढिभ्यां साधारण्यस्याभिमतत्वादेवेत्यर्थः । ''अक्षरत्रयमीरित''मिति जड-प्रकृतौ, ''यस्त्वेतं त्रिमात्रेणोंऽकारेणैवाक्षरेण परमपुरुषमभिध्यायीते''त्योंकारे च प्रयोगात्त-योरपि रूढेरविनाशित्वयोगस्य च सत्त्वाद्वयोरेव व्यवच्छेद्यतयोक्तिः । योगमात्रस्याभिमतत्वे तस्य नित्यमात्रेऽपि सत्त्वेन तन्मात्रमेव व्यवच्छेद्यतयोपादीयेतेत्यर्थः । ननु वर्णमात्रेऽपि योगरूढिभावोऽस्तीति चेत्सत्यम् । वर्णमात्रोपलक्षणमेतट्टीकायाम् । अत एव न्यायविवरण-टीकायां ''नन्वचेतन प्रकृतौ वर्णेषु च कुतो न शङ्के''त्युक्तमिति ध्येयम् । ननु योगरूढ्योर्जड प्रकृत्यादावपि भावे सति पूर्वोत्तरकोटिद्वयमात्रसाधारण्याभावाद्द्रष्टृत्वादिना संशयादिकोटित्व-शङ्कानिरासवदुभयत्र प्रसिद्धत्वाभावमाशङ्क्य कुतो न तन्निरासः कृत इत्यत आह ।। जडेति ।। यद्येवं तर्हि न्यायविवरणोक्तस्योपलक्षणत्वमुपेत्य रूढिरपि नोपादेया । योगस्यान्यसाधारण्येऽपि संशयकोटिद्वयसाधारण्यमात्रेण तदुपपत्तेरित्यतो योगस्यानतिप्रसक्तत्वसम्भवात्कोटिद्वयमात्र-वृत्तित्वमक्षरशब्दस्य । अत एवात्र टीकायां ''अविनाशित्वसाम्या''दित्येवोक्तिः । न तु रूढ्या चेति रूढ्यंशस्यापि । अत एव च योगस्यान्यसाधारण्याभावशंकायामन्यसाधारण्येनोभयत्र प्रसिद्धत्वाभावशंकाभावः ।

**पाण्डुरङ्गि –** ।। ॐ अक्षरमम्बरांतधृतेः ॐ ।। नन्वक्षरशब्दस्योभयत्र प्रसिद्धशब्दसमन्वय-प्रतिपादकपादे समन्वयप्रतिपादने पादासङ्गतिः । तस्य वर्णादौ रूढत्वेनान्यत्र प्रसिद्धत्वादित्यत आह ।। यद्यपीत्यादिना ।। सा अन्यत्र प्रसिद्धता । ननु चाविनाशित्वरूपप्रवृत्ति-निमित्तसाधारण्येनाक्षरशब्दस्योभयत्रप्रसिद्धत्वं किमर्थमुच्यते । प्रयोगसाधारण्येनाप्युभयत्र प्रसिद्धत्वोपपत्तेरित्यत आह ।। प्रयोगेति ।। पूर्वपक्षिणं प्रतीति ।। ब्रह्मणि चित्प्रकृतौ चेति शेषः । किं च प्रयोगसाधारण्येनाक्षरशब्दस्य चित्प्रकृतिब्रह्मरूपोभयप्रसिद्धता न सम्भवति । तस्य चित्प्रकृतिब्रह्मणोरिव वर्णादावपि सत्त्वादित्यत आह ।। वर्णादीति ।।

ननु च न प्रयोगमात्रमुभयत्रप्रसिद्धिसाधकत्वेनोच्यते । येनातिप्रसङ्गः स्यात् । किं नाम प्रवृत्तिनिमित्ताविनाशित्वोपजीविप्रयोगसाधारण्यमेव । न चैवं ब्रह्मणि प्रयोगो नास्तीति न तस्योभयत्रप्रसिद्धत्वमिति वाच्यम् । विषयवाक्ये प्रवृत्तिनिमित्तोपजीविप्रयोगाभावेऽपि स्थलांतरे तत्संभवादित्यत आह ।। प्रवृत्तिनिमित्तेति ।। ननु यदि प्रयोगसाधारण्यस्य वर्णादिसाधारणत्वेन

तेन ब्रह्मचित्प्रकृतिरूपार्थद्वयमात्रसाधारण्यासिद्धया तस्योभयत्र प्रसिद्धिसाधकत्वं नाङ्गीक्रियते तर्ह्यविनाशित्वरूपप्रवृत्तिनिमित्तसाधारण्येनाप्युभयत्र प्रसिद्धत्वं न स्यात् । प्रवृत्तिनिमित्त-साधारण्यस्यापि वर्णादिसाधारणत्वेन ब्रह्मचित्प्रकृति रूपार्थद्वयमात्रसाधारण्यासिद्ध्या-पातादित्यतः स्यादेतदेवं यदि प्रवृत्तिनिमित्तसाधारण्यमात्रेणैवोभयत्र प्रसिद्धतोच्येत । किं नाम रूढिसहितयोगसाधारण्यमेव । अक्षरादिशब्दानां योगरूढत्वादिति भावेनाह ॥ अत्र चेति ॥ अत एवेति ॥ रूढियोगसाधारण्यस्योभयत्रप्रसिद्धिसाधकत्वेनाभिमतत्वादेवेत्यर्थः ॥ अन्यथेति ॥ अविनाशित्वरूपप्रवृत्तिनिमित्तसाधारण्यमात्रस्यैवोभयत्रप्रसिद्धिसाधनत्वेऽभिमत इत्यर्थः । ननु रूढियोगसाधारण्यस्यापि प्रकृतिवर्णसाधारणत्वेन तेनापि तत्र ब्रह्मचित्प्रकृतिरूपार्थद्वय-मात्रसाधारण्यसिद्धिः कथं स्यादित्यत आह ॥ जडप्रकृत्यादीति ॥ आदिपदेन वर्णसङ्ग्रहः । विष्णुचित्प्रकृतिवर्णसाधारणत्वाद्द्वयमात्रसाधारण्याभावादुभयत्रप्रसिद्धत्वं कथमिति शङ्काभावो वक्ष्यमाणहेतोरिति भावः । सन्देहकोट्योरेव साधारण्यस्य विवक्षितत्वादिति भावः ।

## तात्पर्यचन्द्रिका

अथवा स्वरूपध्वंस इव शरीरवियोगेऽपि नाशशब्दप्रयोगात्

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

इति स्मृतौ च जीवस्य क्षरत्वमुक्त्वा चित्प्रकृतेरक्षरशब्दवाच्यत्वोक्तेः ''लक्ष्मी-रक्षरदेहत्वादक्षरे''त्यादिश्रुतौ शरीराक्षरणस्य निमित्तत्वोक्तेश्चाव्यभिचरिते शरीरक्षर-णाभावरूपाक्षरणविशेषे केवलयौगिकोऽक्षरशब्दः । प्राभाकरमतेऽचिरनिर्मथनत्वरूप-निर्मथनविशेषे निर्मंथ्यशब्द इव । न चैवं पङ्कजादेरपि केवलयौगिकत्वापातः । तत्र पद्मत्वजातेरपि प्रतीतेः । पङ्कजननविशेषस्य निमित्तत्वे मानाभावाच्च । कुमुदादि-व्यावृत्तस्य पद्मे पङ्कजननविशेषस्याभावाच्च । अत्र त्वनेकाक्षरानुगतजातिभेदस्या-प्रतीतेः । अक्षरणविशेषस्य निमित्तत्वे स्मृतेरुक्तत्वाच्च । इतरव्यावृत्तस्य क्षरणरहित-शरीरयोगरूपस्य विशेषस्य सत्त्वाच्च । वर्णादौ तु रूढः । वर्णादिजातिभेदप्रतीतेः । इह

**च द्रष्टृत्वादिना रूढार्थबाधाद्यौगिकोऽक्षरशब्दो द्वयमात्रसाधारणः । इदमेव च ब्रह्म-चित्प्रकृतिरूपार्थद्वयमात्रसाधारणशरीराक्षरणं न्यायविवरणेऽविनाशित्वपदेन विवक्षितम् । वक्तव्यं हि द्वयमात्रसाधारण्यम् । न्यायविवरणे पूर्वत्र द्युभ्वाद्यायतनत्वादौ संशयकोटिमात्रसाधारण्योक्तेः । तथोत्तरत्र सच्छब्दस्य स्वतः सर्वसाधारणस्यापि कारणत्वमुखेन द्वयमात्रसाधारण्योक्तेः । तथा ''आहोभयगतत्वं च स्यादतो लिङ्गशब्दयो''रित्यनुव्याख्याने सिद्धान्ते निरसनीयत्वेन यत्साधारण्यं प्रसक्तं तस्यैवोभयत्र प्रसिद्धत्वेनोक्तत्वाच्च । इन्द्रादिशब्देषु तु रूढ्यादिनैव पूर्वपक्षितत्वान्नैश्वर्यादिप्रवृत्तिनिमित्तसाधारण्यमिति नातिप्रसङ्गः ।**

**प्रकाशिका** –जडप्रकृतेरोंकारस्य चेति विशिष्य द्वयोरेव निषेधस्तु तत्र न योगसम्भवाभिप्रायः । अपि तु रूढ्याऽक्षरशब्दार्थत्वं तयोरप्यस्तीत्यभिप्राय इति भावेन योगस्यानतिप्रसक्तत्वं तावत्साधयति ॥ अथवेति ॥ इह न क्षरतीत्यक्षरमिति शरीरवियोगराहित्यरूपमविनाशित्वमभिमतम् । तच्च चित्प्रकृतीश्वरयोरेव । नान्यत्रेति वक्तुं देह वियोगस्य नाशशब्दार्थत्वं तावदाह ॥ स्वरूपेति ॥ प्रयोगादिति ॥ शरीरक्षरणाभावेत्यादिनान्वयः । ''तन्नोन्नशद्यः पितरं न वेदे''त्यादिश्रुतौ ''नाशिता पृथिवी सर्वा धार्तराष्ट्रैस्तु दुर्नयैरि''त्यादि स्मृत्यादौ च प्रयोगादित्यर्थः । अस्त्वेवम् । तद्राहित्यं चित्प्रकृतौ हरौ च कुतः । येन तयोरक्षरशब्दो यौगिकः स्यादित्यत आह ॥ द्वाविति ॥ स्मृतौ चेति ॥ गीतायां ॥ जीवस्य क्षरत्वमुक्त्वेत्यादि ॥ तथा च चितत्प्रकृतौ देहवियोगराहित्यं ज्ञायत इति वाक्यशेषः । स्वरूपध्वंसाभावस्योभयत्राविशिष्टत्वाद्देहवियोगस्याप्यविशिष्टत्वे तद्योग्यजीवस्य क्षरत्वमुक्त्वा चित्प्रकृतेरक्षरत्वोक्तिर्न स्यादिति भावः । विष्णोर्देहवियोगराहित्यं तु ''नित्यो नित्याना''-मित्यादिश्रुत्यादिना प्रमितमिति भावः । तावता तस्याक्षरपदप्रवृत्तिनिमित्तत्वं कुतः । येनाक्षरशब्दस्तयोरेव स्यादित्यत आह ॥ लक्ष्मीरिति ॥

ब्रह्मा शिवस्सुरेशाद्याश्शरीरक्षरणात्क्षराः ।
लक्ष्मीरक्षरदेहत्वादक्षरा तत्परोहरिः ॥

इति तत्वनिर्णयोक्तश्रुतावितित्यर्थः ॥ प्राभाकरेति ॥ प्रथमस्य चतुर्थे नामधेयपादे ''तथा निर्मंथ्ये'' इति दशमेऽधिकरणे ''निर्मंथ्येनेष्टकाः पचन्ती''त्यत्र श्रुतोऽग्निवाचको निर्मंथ्य-शब्दोऽरणिमथनसंस्कारनिमित्तकोऽथाग्नित्वजातिनिमित्तक इति संशये मथनकर्मत्वस्य निष्पन्नेऽग्नावभावात् ''निर्मंथ्येन पश्याम'' इति लौकिकेऽपि प्रयोगान्न संस्कारनिमित्तक इति प्राप्ते अचिरनिर्मथनविशिष्टेऽग्नौ निर्मथनविशेषस्य सत्त्वेन तत्र यौगिक इत्युक्तम् । आधानकाले निर्मथ्य गार्हपत्ये नित्यं धृतोऽग्निश्चिरनिर्मथितः । सद्य एव लौकिकमथनेन जातोऽग्नि-रचिरनिर्मथितः । तेनेष्टकाःपच्यन्ते । यथा पुरातननूतनयोर्घृतयोर्नवनीतजन्यत्वे समानेऽपि नूतनमेवनावनीतमिति व्यवह्रियते तद्वन्निर्मंथ्यशब्दस्य मथनकर्ममात्रे पाणिनिस्मरणेऽप्य-चिरनिर्मथिते चिरनिर्मथितव्यावृत्ताचिरनिर्मथनविशेषविशिष्टे यौगिक एव । न तु तद्व्यावृत्त्यर्थं रूढिरप्याश्रयणीयेति यथोच्यते तथाऽत्राप्यन्यव्यावृत्ताविनाशविशेषनिमित्तयौगिक एव । न त्वन्यव्यावृत्त्यर्थं रूढिरप्याश्रयणीयेत्यर्थः । नन्वेवं निबन्धनमते ''क्लृप्तशक्तिकावयवयोगादेव पङ्कजादिशब्दः । अन्यथा समुदायशक्तिकल्पनागौरवापत्ते''रिति नयविवेकवरदराजीययोरुक्त्या तदप्यनुमतमिति भ्रमनिरासाय तदाशङ्क्य निराह ॥ न चैवमिति ॥ जातिप्रतीतावपि क्लृप्तावयवशक्त्यैव प्रयोग इति निबन्धनमतं निराह ॥ पङ्कजननेति ॥ ननु नेदमक्षरपद-प्रवृत्तिनिमित्तमव्याप्तेरित्यत आह ॥ वर्णादौ त्विति ॥ तत्र यौगिकत्वाभावान्नाव्याप्तिर्दोषायेति भावः । कथं तर्हि द्वयमात्रसाधारण्यमक्षरपदस्येत्यत आह ॥ इह चेति ॥ यथा हि परमते ''अजामेका''मिति वाक्यस्थाजाशब्दश्छाग्यां रूढोऽपि न तत्पर इति वक्ष्यते चतुर्थपादे तथेति भावः ॥ उत्तरत्रेति ॥ ईक्षत्यधिकरणे ॥ इत्यनुव्याख्यान इति ॥ प्रागुदाहृतमेतत् । व्याख्यातं चास्माभिः । एवं न्यायविवरणटीकारीत्या योगरूढिभ्यां वा भाष्यटीकारीत्याऽनति-प्रसक्तयोगमात्रेण वा द्वयसाधारण्यं न्यायविवरणेऽभिप्रेतमित्युक्तम् ।

**पाण्डुरङ्गि** – नन्वन्यसाधारण्ये संशयकोटिसाधारण्यमात्रेणोभयत्रप्रसिद्धतेत्ययुक्तम् । द्वयमात्रसाधारण्यस्यैवोभयत्र प्रसिद्धिसाधकत्वात् । न्यायविवरणे पूर्वाधिकरणे द्युभ्वाद्या-यतनत्वादौ संशयकोटिमात्रसाधारण्योक्तेः । तथा चोत्तरत्रसच्छब्दस्य स्वतः सर्वसाधारणस्यापि कारणत्वमुखेन द्वयमात्रसाधारण्योक्तेः । तथा ''आहोभयगतत्वं चे''त्यनुव्याख्याने सिद्धान्ते नीयत्वेन यत्साधारण्यं प्रसक्तं तस्यैवोभयत्रप्रसिद्धत्वेनोक्तत्वाच्च । अन्यथा

प्रवृत्तिनिमित्तमात्रसाधारण्यस्य वा प्रयोगसाधारण्यस्य वा वर्णादि साधारण्यस्यापि संशयकोटिसाधारण्यमात्रेणैवोभयत्र प्रसिद्धत्वोपपत्तौ योगरूढ्यङ्गीकारवैयर्थ्यापत्तेरित्यस्वरसान्न्यायविवरणानुव्याख्यानस्वारस्यानुरोधात्पक्षांतरमाह ॥ अथवेति ॥ तर्हि पङ्कजशब्दस्यापि पङ्कजननविशेषनिमित्तकेवलयौगिकत्वोपपत्तौ योगरूढत्वं न स्यादित्याशङ्कते ॥ न चेति ॥ केवलयौगिकत्वं स्यादित्यतस्तेषामसिद्धिमाह ॥ अत्र त्विति ॥ ननु योगस्य वर्णादिसाधारणत्वेन कथं तेनोभयत्रप्रसिद्धतेत्यत आह ॥ वर्णादाविति ॥ नन्वस्त्वक्षरशब्दस्य वर्णे रूढिः । तथापि प्रकृतेरूढार्थो वर्णोऽप्यक्षरशब्दार्थ इति कथमक्षरशब्दस्य ब्रह्मप्रकृतिरूपार्थद्वयमात्रसाधारण्यमित्यत आह ॥ इह चेति ॥ रूढार्थबाधादिति ॥ अनेनोदाहृतटीकावाक्यं योजितं भवति । ननु शरीराक्षरणरूपप्रवृत्तिनिमित्तस्योभयसाधारण्य प्रयोजकत्वे न्यायविवरणविरोधः । तत्राविनाशित्वस्यैव तत्प्रयोजकत्वेनोक्तत्वादित्यत आह ॥ इदमेव चेति ॥ नन्वक्षरशब्दप्रवृत्तिनिमित्तस्य शरीराक्षरणस्य ब्रह्मचित्प्रकृतिसाधारण्येनाक्षरशब्दस्योभयत्रप्रसिद्धत्वे इन्द्रादिशब्दप्रवृत्तिनिमित्तस्य परमैश्वर्यस्यापीन्द्रब्रह्मरूपार्थद्वयसाधारण्येनोभयत्रप्रसिद्धत्वापत्त्याऽन्यत्र प्रसिद्धसमन्वयप्रतिपादकपादासङ्गतिरित्यत आह ॥ इन्द्रादिशब्देष्विति ॥

## तात्पर्यचन्द्रिका

**केचित्तु न्यायविवरणेऽविनाशित्वं प्रवृत्तिनिमित्तमिति नाभिप्रेतम् । किन्तु सर्वाधाराक्षरत्वमनित्यदेहस्य न युक्तमिति नित्यदेहस्यैव तद्वाच्यम् । तच्च ब्रह्मचित्प्रकृतिमात्रसाधारणम् । एवं च यथोत्तराधिकरणे स्वरूपेण सर्वसाधारणोऽपि सच्छब्दः कारणत्वमुखेन ब्रह्मजडप्रकृतिमात्रसाधारणः एवमक्षरशब्दः स्वरूपेण वर्णादिसाधारणोऽपि नित्यदेहत्वमुखेन ब्रह्मचित्प्रकृतिमात्रसाधारण इत्यभिप्रेतमित्याहुः । टीकायां नामत्वोक्तिस्तु मध्यमाक्षरादौ यौगिकत्वपक्षे वर्णेषु रूढत्वात् । योगरूढत्वपक्षे तु योगरूढानां नामलिङ्गात्मकत्वपक्षे मध्यमाक्षरादावपि नामत्वस्यापि सत्त्वात् । केवलनामत्वपक्षे तु नामत्वस्यैव सत्त्वात् । एवं च न्यायविवरणे ''अविनाशित्वसाम्या''दिति यौगिकत्वोक्त्या लिङ्गत्वस्याभिप्रेतत्वादनुव्याख्याने च ''लिङ्गं साधारणं शब्दा''विति शब्दपदेन नामत्वोक्तेस्तयोर्विरोध इति निरस्तम् ।**

अत्र चाद्येऽधिकरणे जडप्रकृतेर्जीवमात्रादेश्च द्युभ्वाद्यायतनत्वनिरासः । द्वितीये सर्वजीवश्रेष्ठस्य मुख्यप्राणस्य भूमत्वनिरासः । इह तु ततोऽपि श्रेष्ठस्य श्रीतत्त्वस्याक्षरत्वनिरास इति वा, आद्य उभयत्रप्रसिद्धिबहिरङ्गसमाख्याभ्याम् । द्वितीये बहिरङ्गसमाख्या विषयवाक्यस्थांतरङ्गोपक्रमाभ्याम् । इह तु ततोऽप्यंतरङ्ग समन्वेतव्यशब्दप्रवृत्तिनिमित्तसाधारण्यादिति वा आद्ये भिन्नप्रकरणस्थ जायमानत्वाजननयोर्विरोधपरिहारः । द्वितीय एकप्रकरणस्थोत्क्रमणसर्वगतत्वयोर्विरोधपरिहारः । इह त्वेकवाक्यस्थास्थूलानण्वादिशब्दार्थमहत्त्वाणुत्वयोर्विरोधपरिहार इति वा इहाणुत्वमहत्त्वयोर्भावयोरत्तृत्वानशनयोर्भावाभावयोः स्थौल्याद्यभावानामणुत्वाद्यभावानां चेत्यनेकविरोधपरिहारः । न तु पूर्वत्रैवैकैकविरोधपरिहार इति वाऽवांतरसङ्गतिः ।

**प्रकाशिका** – पक्षांतरं चाह ।। केचित्त्विति ।। ''अविनाशित्वस्याक्षरशब्दप्रवृत्तिनिमित्तत्वा''दिति न्यायविवरणटीकाविरोधाद्वा ''तत्तेजोऽसृजते''त्यत्र कारणत्वस्येवेह नित्यत्वस्य साक्षादश्रवणेन सर्वाधारत्वान्यथानुपपत्तिकल्प्यत्वाद्वा केचित्त्वित्युक्तिरित्याहुः । अस्मिन्पक्षे प्रवृत्तिनिमित्तं तु अश्नुते व्याप्नोतीत्यक्षरमित्यादिरूपेण बोध्यमिति भावः । अक्षरशब्दस्य केवलयौगिकत्वं योगरूढत्वं चेति स्वोक्तपक्षद्वयेऽपि नामत्वं व्यनक्ति ।। टीकायामिति ।। रूढत्वादिति ।। यान्यापाततो रूढान्येव तानि नामानि तद्विपरीतानि लिङ्गानीत्युक्तत्वात्संशयकोट्योर्यौगिकत्वेऽप्यक्षरशब्दस्य वर्णेषु रूढत्वान्नामत्वं युक्तम् । यथाऽऽनंदमयादेः पूर्वोत्तरपक्षयोर्यौगिकत्वेऽपि कोशेषु रूढत्वान्नामत्वं तद्वदिति भावः । यान्यापाततो रूढानि तानि नामानि । यान्यापाततो यौगिकानि तानि लिङ्गानीति तैर्लक्षणांतरस्याप्युक्तत्वादक्षरशब्दो योगरूढ इति पूर्वोक्ताद्यपक्षेऽपि नामत्वं युक्तमित्यर्थः ।। केवलेति ।। यान्यापाततो रूढिरहितानि तानि लिङ्गानि । यानि तु तद्विपरीतान्यापाततो रूढानि योगरूढियुक्तानि वा तानि नामानीति लक्षणपक्ष इत्यर्थः ।। एवं चेति ।। प्रागुक्तलक्षणत्रयेऽप्यक्षरशब्दस्य नामत्वस्य लिङ्गत्वस्य च विवक्षाभेदेन सम्भवे सतीत्यर्थः । एवं पादसङ्गतिमुक्त्वाऽनन्तरसङ्गतिं श्लिष्टतरत्वद्योतनायादितश्चतुर्धा दर्शयति ।। अत्र चेति ।। भिन्नप्रकरणेति ।। जायमानत्वं विषयवाक्यगतम् । अजायमानत्वं पुरुषसूक्तादिगतम् ।

एकप्रकरणेति ।। ''उत्क्रांतप्राणा''निति प्राणवाक्ये ''स एवाधस्ता''दिति भूमवाक्ये श्रवणेऽपि प्राणस्य विष्णुत्वाङ्गीकारेण वा पूर्वपक्षरीत्या वा तयोरेकप्रकरणत्वमिति भावः ।। एकवाक्य-स्थेति ।। अग्रे स्पष्टमेतत् । प्रागुक्तोत्क्रमणमयुक्तम् । तत्प्रयोजकस्याणुत्वस्य सर्वगते विरुद्धत्वादित्याशङ्कानिरासोऽत्र क्रियत इति सङ्गतिस्स्फुटत्वान्नोक्ता । ''अदृश्यत्वादिगुणा'' इत्यादिभाष्यं तु फलपरं वक्ष्यमाणादिशा पूर्वपक्षेऽक्षरश्रुतेर्निरवकाशत्वोक्तिपरं वेति भावः । इति वाऽवांतरेति ।। एतेन ''प्राणसार्वात्म्यं न गौणम् । रूढ्या अक्षरशब्दितप्रणवसार्वात्म्यवदिति प्रत्यवस्थाननिरासात्सङ्गति''रिति कल्पतरूक्तं निरस्तम् । तद्द्रष्टृत्वादिना प्रणवकोटेरेवात्रानु-त्थानादिति भावः ।

**पाण्डुरङ्गि** – आहुरित्यस्वरसोद्भावनम् । तद्बीजं तु अस्मद्रीत्या साक्षात्प्रवृत्तिनिमित्त-तयैवोभयसाधारण्यसम्भवे सर्वाधाराकाशाधारत्वलब्धनित्यदेहत्वमुखेनोभयत्रप्रसिद्धत्वकल्पनस्य गौरवग्रस्तत्वादिति । ननु टीकायामक्षरनाम्न इत्यक्षरशब्दस्य नामात्मकत्वस्योक्तत्वाद्यौगिकत्वे तद्विरोध इत्यत आह ।। टीकायामिति ।। टीकोक्तनामतासमर्थनेनानुव्याख्यानन्याय-विवरणयोर्विरोधोऽपि परिहृत इत्याह ।। एवं चेति ।। इदानीमस्याधिकरणस्य पूर्वाधिकरणेन सङ्गतिं विवक्षुः प्रसङ्गादधिकरणत्रयस्याप्यवांतरसङ्गतिमाह ।। अत्र चाद्य इति । महत्त्वाणुत्वयो-र्विरोधपरिहार इति वेति ।। उपलक्षणमेतत् । सर्वगतस्याणुभावात्तत्प्रयोज्योत्क्रान्तिः पूर्वोक्ता नेत्याक्षेपेण समाधानादाक्षेपिकी । प्रयोज्योत्क्रन्तिमुक्त्वा तत्प्रयोजकाणुत्वसाधनादुपजीव्यो-पजीवकभावो वा । उदुत्क्रांत्या देह- वियोगवतो देहावियोगरूपाक्षरत्वस्य द्युभ्वाद्यायतनत्वस्य वाऽऽक्षेपेण समाधानाद्वा यद्युत्क्रान्तिप्रयोजकमणुत्वमङ्गीक्रियते तर्हि तद्विरुद्धसर्वगतत्वेन श्रुतो भूमा विष्णुर्न स्यात् । यदि च भूमा विष्णुः स्यात्तर्हि सर्वगतत्वप्रयोजकाणुत्वाभावादुत्क्रान्तिर्न स्यादित्याक्षिप्य समाधानाद्वाऽऽक्षेपिकी सङ्गतिरित्याद्यूह्यम् । पूर्वत्र चात्र पाठक्रमेण टीकाव्याख्यानात्प्रथमतोऽनन्तरसङ्गत्यनुक्तिः । एवमन्यत्रापि द्रष्टव्यम् ।

## तात्पर्यचन्द्रिका

**अत्र ''स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंत्यस्थूल'' मित्यादिनोक्तमक्षरं किं चित्प्रकृतिः किं वा ब्रह्मेति चिन्ता । तदर्थं ''एतस्मिन्खल्वक्षरे**

**गार्ग्याकाश ओतश्चे''ति वाक्योक्तांबरांतधृतिः किं चित्प्रकृतेर्युक्तोत न युक्तेति । तदर्थमत्राकाशशब्दःकिं मध्यमाक्षरेतरपरः किं वा मध्यमाक्षरपर इति । तदर्थं ''न तदश्नाति किंचने''त्युक्तमनशनं किं ब्रह्मणो न युक्तमुत युक्तमिति । यद्याद्यः तदा ब्रह्मपक्षेऽनशनस्यैव बाधकत्वेनाकाशशब्दस्येतरपरत्वादितरधृतेश्च मध्यमाक्षरेऽपि सम्भवाद्ब्रह्मत्वसाधकाभावान्मध्यमाक्षरमेवेहाक्षरम् । यदि तु द्वितीयः तदा बाधकाभावेनाकाशो मध्यमाक्षरमेवेति तदाश्रयत्वस्यैव ब्रह्मत्वसाधकत्वादक्षरं ब्रह्मैव ।**

**प्रकाशिका** – नन्वत्र भाष्ये टीकायां च ''अदृष्टं द्रष्टृ''त्याद्युपसंहारवाक्यमुदाहृत्य तदक्षरं विषय इत्युक्तम् । तदयुक्तमिव तथात्वे तत्रांबरान्तधृत्यादिरूपसूत्रोपात्तहेतूनां सर्वेषामभावादित्यतः पूर्वसङ्गत्यर्थं द्रष्टृत्वादिना जडप्रकृत्यादिकं नात्र शङ्कार्हमिति सूचयितुं अम्बरे सर्वाधारत्वस्य तत्राप्रतीतावप्यंबरधृतिरूपप्रधानहेतुरस्तीति दर्शयितुं च अन्त्यवाक्योक्तावपि तदुपलक्षणमिति भावेन वा भाष्यटीकयोरुक्तं ''तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ''त्यादिचरमवाक्यस्थतदेतच्छब्दपरामर्शविषयं दर्शयितुं वा पूर्ववाक्योक्त्या विषयसंशयटीकां व्यनक्ति ।। अत्र स होवाचेत्यादिना ।। बृहदारण्यके पञ्चमेऽध्यायेऽष्टमब्राह्मणे गार्गियाज्ञवल्क्यसंवादे श्रूयते ''सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति । सहोवाच यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति। कस्मिन्नुखल्वाकाश ओतश्च प्रोतश्चेति । सहो वाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनंतरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन । एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः । एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः । एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सरा इति विधृतास्तिष्ठन्ति । एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्यानद्यस्स्यंदंते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योन्याः यां यां दिशमनु । एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसंति यजमानं देवा दर्वी

पितरोऽन्वायत्ताः । यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यंतवदेवास्य तद्भवति । यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः । अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः । तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ । नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मंतृ नान्यदतोऽस्ति विज्ञातृ । एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे''त्यत्र सर्वाधारत्वेन श्रुतमक्षरं विषय इत्यर्थः ।। चित्प्रकृतिरिति ।। कोट्यंतरस्याग्रे निरस्यत्वादिति भावः ।। इति वाक्योक्ताम्बरान्तधृतिरिति ।। यद्यपि तद्वाक्येंऽबरधृतिरेवाक्षरे भाति । तथापि पूर्ववाक्येंऽबरस्य भूतभवदादिसर्वाधारत्वमुक्त्वा तादृशस्यांबरस्य ''कस्मिन्नु खलत्वाकाश ओतश्च प्रोतश्चे'' त्याधारे पृष्टे ''स होवाचे''त्यादिनाऽक्षरस्य महिमानमुक्त्वाऽनन्तरं ''एतस्मिन्खल्वक्षरे गार्ग्याकाश'' इत्युक्तत्वात्सर्वाधारांबराधारत्वरूपांबरांतधृतिस्तत्र लब्धेति भावेनैव- मुक्तिः ।। मध्यमेति ।। चित्प्रकृतीतरपर इत्यर्थः । वक्ष्यमाणपूर्वपक्षरीत्या फलफलिभावस्यास्फुटत्वादाह ।। यदीति ।। अत्र हि द्वेधा पूर्वपक्षः । एको भाष्ये ''मध्यमाक्षरस्योक्ता'' इति मध्यमाक्षरपदप्रयोगसूचिताक्षरश्रुतिनिरवकाशत्वमूलः । अन्यस्तु न्यायविवरणोक्तानशनविरोध-मूलकः । तत्र द्वितीयपूर्वपक्षानुगुणेयं चिन्तापरंपरा प्रधानत्वात्कण्ठोक्ता । आद्यपूर्वपक्षानुगुणा तु ब्रह्मेति चिन्ता, नंतरं तदर्थमक्षरश्रुतिप्रसिद्ध्यनुसारेणांबरांतधृत्यादिरूपलिङ्गं नेयमुत विपरीतमिति चिन्ता । तदर्थं श्रुतिर्निरवकाशा लिङ्गं तु सावकाशमुत विपरीतमिति चिन्ता स्फुटत्वादूह्येति नोक्ता ।

**पाण्डुरङ्गि** – पूर्वपक्षसिद्धान्तयोः पलफलिभावमाह ।। यद्याद्य इत्यादि ।

## तात्पर्यचन्द्रिका

**पूर्वपक्षस्तु । इदमक्षरं श्रीतत्त्वमेव । विष्णोरप्यविनाशित्वेनाक्षरत्वसम्भवेऽपि लोकप्रयोगस्य च श्रीतत्त्वेऽप्यभावेऽपि ''ये त्वक्षरमनिर्देश्य''मित्यादौ श्रीतत्वेऽक्षर-शब्दवत्क्षराक्षरातीतत्वेन प्रसिद्धे विष्णौ तदभावात् । ''यया तदक्षरमधिगम्यत''**

इत्यादेरपि पूर्वपक्षे चित्प्रकृतिपरत्वात् । अत एवैतस्यादृश्यत्वादिगुणकस्याक्षरस्यान्यत्वे पूर्वोक्तमप्यदृश्यत्वादिगुणकमक्षरमप्यन्यत्स्यादित्यदृश्यत्वाधिकरणमाक्षिप्तं भाष्यादौ । अन्यथा ''एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत'' इति द्यावापृथिव्याश्रयत्वेन श्रुतस्याक्षरस्यान्यत्वे द्युभ्वाद्यायतनमप्यन्यत्स्यादिति सन्निहितं द्युभ्वाद्यधिकरणमाक्षिप्येत । प्रवृत्तिनिमित्तसाधारण्यप्रयुक्ता चोभयत्रप्रसिद्धिर्न पूर्वपक्षदशायां ब्रह्मणि प्रयोगमपेक्षते । अत एव भाष्ये श्रीतत्त्वस्येति वक्तव्ये पूर्वपक्षे हेतुं दर्शयितुमक्षरस्येत्युक्तम् । अस्तु वा ''अक्षरत्रयमीरित'' मिति वचनादन्यत्राक्षरशब्दो ब्रह्मणि । अत एवोत्तमाक्षरेऽक्षरशब्दमङ्गीकृत्य तद्व्यावृत्त्यर्थं भाष्ये मध्यमशब्दः ।

तथापीहाक्षरं न ब्रह्म । ''सूर्याचन्द्रमसौ विधृतौ तिष्ठत'' इति ''एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत'' इति चाक्षरे श्रुतस्य चन्द्रसूर्याद्याधारत्वस्य ''अहं सोममाहनसं बिभर्मी''त्यादिना श्रीतत्व इव द्युभ्वाद्यधिकरणन्यायेन ब्रह्मण्यपि सम्भवेऽपि ''अदृष्टं द्रष्ट्रश्रुतं श्रो''त्रित्यक्षरे श्रुतस्यादृश्यत्वादेश्च ''ये त्वक्षरमनिर्देश्य''मित्यादिना श्रीतत्व इवादृश्यत्वाद्यधिकरणन्यायेन ब्रह्मण्यपि सम्भवेऽपि ''न तदश्नाति किंचने''त्यक्षरे श्रुतस्यानत्तृत्वस्य ''अत्ता चराचरे''त्यत्र सर्वात्तृत्वेनोक्ते ब्रह्मण्यसम्भवात् । न चैतदशुभानशनपरम् । किंचनेत्युक्तम् । मध्यमाक्षरस्य तु ''आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचनमिष''दिति श्रुतौ स्वतंत्रोन्मेषाभावेनानुन्मेषोक्तिवत्स्वतंत्राशनाभावेन वा ब्रह्मवत्संहर्तृत्वाभावेन वा अत्तेत्यत्र संहाररूपतयोक्तस्याशनस्याभावो युक्तः । तदुक्तं न्यायविवरणे ''अत्तेत्युक्त्वा न तदश्नाति किंचनेति विरुद्ध्यते''ति । अत एवादृश्यत्वचन्द्राद्याधारत्वादिलिङ्गानां ब्रह्मणि सम्भवमुपेत्य पूर्वपक्षस्य प्रवृत्तत्वादेव भाष्ये ''तस्यापि सम्भवा''दित्यपिशब्दः । अदृश्यत्वादिलिङ्गानां मध्यमाक्षरेऽपि सम्भवा''दिति टीका च । अस्मिन्पक्षेऽदृश्यत्वाद्यधिकरणाक्षेपस्तु विष्णोरेवादृश्यत्वादीत्यवधारणस्याक्षेपादिति ज्ञेयम् । अत एव चात्र टीकायामदृश्यत्वादिकं चान्यस्य प्रसज्यत इत्युक्तम् । न त्वन्यस्यैवेति । अत एवाम्बरान्तधृतिप्रशासनादिकमपि मध्यमाक्षरस्यैवेति ।

**प्रकाशिका** – ननु नेह पूर्वपक्षोदयः । अक्षरश्रुतेर्योगेन ब्रह्मण्युपपत्तेः । लौकिकप्रयोग-बाहुल्यरूपरूढेरुभयत्राप्यभावात् । ''अदृष्टं द्रष्टृ''त्यादिना दृश्यत्वश्रवणाच्च । तस्य चादृश्यत्वनये वैष्णवत्वस्य समर्थनात् । द्यावापृथिव्याद्याधारत्वश्रवणाच्च । तस्य च द्युभ्वादिनये विष्णुधर्मताया निर्णीतत्वादित्याशङ्क्य द्वेधा पूर्वपक्षटीकां विवृणोति ॥ पूर्वपक्षस्त्वित्यादिना ॥ ''तत्राक्षरशब्दस्य प्रसिद्धे''रिति टीकोक्तहेतुं समर्थयते ॥ विष्णोरित्यादिनाऽक्षरस्येत्युक्त-मित्यंतेन ॥ इत्यादाविति ॥ टीकोदाहृतगीतारूपस्मृतावित्यर्थः । एतेन प्रसिद्धेरित्यस्य वैदिकप्रसिद्धेरित्यर्थ उक्तो भवति ॥ प्रसिद्ध इति ॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।

क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्य'' इति गीतायां ''अक्षरात्परो हरि''रिति प्रागुदाहृतस्मृतौ च प्रसिद्ध इत्यर्थः । ब्रह्मण्यप्यस्त्वक्षरत्व-प्रसिद्धिरित्यतो नेत्याह ॥ ययेति ॥ अत एवेति ॥ पूर्वपक्षे तत्र ब्रह्मपरत्वासंमतेरेवेत्यर्थः । यद्वा अक्षरश्रुतेर्निरवकाशत्वसम्पत्त्यर्थत्वादेवेत्यर्थः । प्रयोजनार्थं तदाक्षेप उपपन्न इत्यत आह ॥ अन्यथेति ॥ फलमात्रार्थत्व इत्यर्थः ।

ननु यथा पादांत्यप्राणाधिकरणे पूर्वपक्षे ''तद्वै त्वं प्राणो अभव'' इत्यत्र प्राणशब्दस्य विष्णुत्वाक्षेपादुभयत्र प्रसिद्ध्यभावस्तथाऽत्रापि स्यात् । ब्रह्मणि क्वाप्यक्षरपदप्रयोगासंमतेरित्यत आह ॥ प्रवृत्तीति ॥ यथा ज्योतिर्दर्शनादित्यत्र ज्योतिश्शब्दस्य जीवेशरूपोभयत्रप्रसिद्धिस्तथेति भावः । हेतूक्तिपरटीकाया उद्धाष्यत्वभ्रमं निराह ॥ अत एवेति ॥ एवं भाष्येऽनेक-ज्ञापकोपलम्भबलेन ''तत्राक्षरशब्दस्य प्रसिद्धे''रिति टीकां श्रुतिनिरवकाशत्वाभिप्रायतया व्याख्यायेदानीं टीकायां तत्रैवेत्यनुक्त्वा तत्राक्षरशब्दस्य प्रसिद्धेरित्येवोक्तत्वात् । तथा ''एतस्य वा अक्षरस्ये''त्यादिना चन्द्राद्याधारत्वस्य श्रीतत्वलिङ्गतयोपपाद्य ''अदृष्टं द्रष्टृ''त्यादिनाऽत्र श्रुतादृश्यत्वादिकं च ''ये त्वक्षरमनिर्देश्य''मित्यादिना श्रीतत्वे प्रतिपाद्यान्ते ''अक्षरश्रुतेर-दृश्यत्वादिलिङ्गानां च मध्यमोत्तमयोस्साम्येऽत्र मध्यममेवोच्यत इति निर्बन्धे को हेतु''रित्या-दिनाऽक्षरश्रुतिलिङ्गानां सावकाशत्वमुपेत्य ''न तदश्नाती''त्युक्तानशनलिङ्गेन पूर्वपक्षोज्जीवनस्य

कृतत्वात्तत्र कथं श्रुतिलिङ्गानां विष्णावपि क्षराक्षरातीतत्वेनोक्ते वृत्तिः । कथं चानशनेनो-ज्जीवनमित्यतश्श्रुत्यादेस्सावकाशत्वमुपेत्याशेषटीकां व्यनक्ति ॥ अस्तु वेति ॥ अन्यत्र वाक्यांतरे। श्रुतेस्सावकाशत्वेन टीकाप्रवृत्तौ भाष्य ज्ञापकमाह ॥ अत एवेति ॥ इहेति ॥ विषयवाक्ये ॥ ''आहनसं यज्ञेष्वभिषूयमाणम् । लताभिमानित्वेनेयमुक्ति''रिति टीका । तत्वप्रदीपे तु ''आहनसं आसमन्ताद्धंतारं संहर्तार''मित्यर्थ उक्तः । एतच्चांभृणीशब्दित-लक्ष्मीवाक्यम् । ननु ''गुहां प्रविष्टावात्माना''वित्यत्रानशनश्रुतेर्गतिरुक्तेत्यतो वैषम्यमाह ॥ न वेति ॥ तत्रानश्नन्नित्येव प्रतीत्या तथा गतिसम्भवेऽपीह किंचनेत्युक्त्या सामान्यनिषेधस्यैव प्रतीतेरित्यर्थः । ''न च मध्यमाक्षरस्यानशनाङ्गीकारे विरोधोऽस्ती''ति वाक्यं टीकायाम-युक्तम्। श्रीतत्वस्यापि नित्यमुक्ततया सुखाशनस्येश्वररमणनिमित्तसुखभोगस्य भावाच्चेत्यतो व्यनक्ति ॥ मध्यमाक्षरस्य त्विति ॥ टीकायामनशनलिङ्गेन पूर्वपक्षोज्जीवनं मूलारूढं दर्शयति ॥ तदुक्तमिति ॥ एवं तर्हि कथं पूर्वाक्षेपः । प्रागुक्तस्य ब्रह्मण्यभ्युपेतत्वादित्यत आह ॥ अस्मिन्निति ॥ ननु सर्वाधारत्वादिलिङ्गाद्विष्णुः किं न स्यादित्यत आह ॥ अत एवेति ॥

**पाण्डुरङ्गि** – आद्यं तावट्टीकोक्तहेतुमुपपादयति ॥ इदमक्षरमित्यादिना ॥ यया तदक्षरमधिगम्यत इत्यादेःपूर्वपक्षे चित्प्रकृतिपरत्वे ज्ञापकमाह ॥ अत एवेति ॥ यया तदक्षरमधिगम्यत इत्यादिवाक्योक्तपरविद्याविषयत्वादेः पूर्वपक्षे चित्प्रकृतिपरत्वस्याभिप्रेतत्वा-देवेत्यर्थः ॥ अन्यथेति ॥ यया तदक्षरमित्यादेः प्रकृतिपरत्वस्यानभिप्रेतत्व इत्यर्थः । ननु ये त्वक्षरमनिर्देश्यमित्यादौ श्रीतत्वेऽक्षरशब्दवत् क्षराक्षरातीतत्वेन प्रसिद्धे विष्णावक्षरशब्दा-भावाच्छ्रीतत्वस्यैवाक्षरत्वमिति पूर्वपक्षकरणेऽक्षरशब्दस्योभयत्रप्रसिद्धता न स्यादित्यत आह ॥ प्रवृत्तिनिमित्तेति ॥ अत एवेति ॥ श्रीतत्ववद्विष्णावक्षरशब्दाप्रयोगादेवेत्यर्थः । नन्वेवमक्षर-शब्दस्य सर्वथापि विष्णुपरत्वाभावे भाव्येऽक्षरस्येत्येव वक्तव्ये मध्यमाक्षरस्येति मध्यमशब्दो व्यर्थ इत्यरुच्या पक्षांतरमाह ॥ अस्तु वेति ॥ अथवा टीकोक्तं द्वितीयहेतुमुपपादयति ॥ अस्तु वेति ॥ नन्वत्तृत्वेनोक्ते ब्रह्मण्यनत्तृत्वरूपानशनस्यायोगान्मध्यमाक्षरेऽपि तदसम्भवात्कथं तस्याक्षरत्वमित्याशङ्कापरिहारार्थं न च मध्यमाक्षरस्यानशनाङ्गीकारे विरोधोऽस्तीति टीका विरोधाभावो नोपपादितः । अतस्तमुपपादयितुमाह ॥ मध्यमाक्षरस्य त्विति ॥ विवरणमदृश्यत्वस्येत्यादि । नन्वदृश्यत्वादेर्ब्रह्मणि संभवमुपेत्य यदि यत्वाक्षेपानुपपत्तिरित्यत आह ॥ अदृश्यत्वेति ॥

## तात्पर्यचन्द्रिका

सिद्धांतस्तु । अक्षरं ब्रह्मैव । चतुर्विधविनाशरहिते तत्रैवाक्षर- शब्दप्रवृत्तिनिमित्त-पौष्कल्यात् । ''तस्मादक्षरमित्याचक्षत एतमेव सन्तम् । अक्षरं ब्रह्म परम''मित्यादि-श्रुतिस्मृतिषु तस्य तत्र प्रयोगाच्च । अत एव तत्रोत्तमाक्षरत्वप्रसिद्धिः । किं चेहाकाशं ''यद्भूत''मित्यादिना ''आकाश एव तदोतं च प्रोतं चे''त्यंतेन सर्वचेतनपोषकतया ''एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे''त्यनेनान्याश्रितत्वेन चोच्यते । न च तच्चित्प्रकृतितोऽन्यत्र युक्तम् । न चात्रोतत्वादिकमुपादेयत्वमाधेयत्वं वा न तु पोष्यत्वम् । तच्च सर्वस्य जडप्रकृतिं प्रति सम्भवतीति शङ्क्यम् । ''एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्चे''त्याकाशाश्रयत्वेनोच्यमानाक्षरस्य द्रष्टृत्वादिना चेतनत्वेनो-पादानत्वायोगात् । ''कस्मिन्नु खल्विन्द्रलोका ओताश्चप्रोताश्चेति प्रजापतिलोकेषु गार्गी''त्यादावाधेयत्वस्याप्यभावाच्च । न ह्यधस्तन इन्द्रलोक उपरितने प्रजापतिलोक आहितः । एकप्रकरणस्थस्योतादिशब्दस्य नानार्थत्वं चायुक्तम् । तस्मात् ''रुद्रं समाश्रिता देवाः, राज्ञि राज्यं समाहित''मित्यादाविव पोष्यत्वादिकमेवोतत्वम् । न चाचेतनस्य पोष्यत्वं युक्तमिति ॥ भूतादिपदमपि देहद्वारा भूतत्वादियुक्तचेतन-परमेवेत्याकाशं चित्प्रकृतिरेव । ततश्च तदाश्रयोऽक्षरं ब्रह्मैव । न चित्प्रकृतिः । स्वाश्रयत्वस्य विरुद्धत्वात् । तदुक्तं न्यायविवरणे ''सर्वाधारप्रकृत्याधारत्वं विष्णोरन्यस्य विरुद्ध''मिति ॥ उक्तं च बृहदारण्यकभाष्ये –

दीप्तेराकाशशब्दोक्ता श्रीर्हि सर्वाश्रया मता ।
तदाश्रयः परो विष्णुः सोऽस्थूलादिगुणो मतः ॥ इति ।

एवं च ''मयि सर्वमिदं प्रोत''मित्यादिस्मृतिरप्यनुगृहीता भवति ।

**प्रकाशिका** – ''इदमक्षरं ब्रह्मैवे''ति सूत्रभाष्याद्युक्तप्रतिज्ञांशेनैवाक्षरश्रुतेर्विष्णौ महायोग-विद्वद्रूढिभ्यां मुख्यत्वस्य सूचनान्न तयान्यप्राप्तिर्युक्तेति भावेनान्यत्रोक्तश्रुत्यादिना हरौ महायोगविद्वद्रूढी दर्शयन्नाद्यं श्रुत्यनवकाशत्वप्रयुक्तपूर्वपक्षं तावन्निराह ॥ चतुर्विधेति ॥

अनित्यत्वं देहहानि र्दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेस्सदेदा ॥

इति स्मृतेरिति भावः । प्रयोगबाहुल्यरूपरूढावैतरेयश्रुतिमाह ॥ तस्मादिति ॥ प्रवृत्तिहेतुपौष्कल्यादित्यर्थः । एतं सन्तं प्रवृत्तिनिमित्तवत्तया विद्यमानम् ।

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ इति गीता ।

अत एव अक्षरशब्दमुख्यार्थत्वादेवेत्यर्थः । क्षराक्षरातीतत्वं च मुख्यवृत्त्याऽक्षरशब्दार्थत्वेऽपि परतन्त्रचेतनवैलक्षण्यमात्रेणोपपन्नमिति भावः । प्रसिद्धिः परतः परमक्षरमित्यादौ । एवं प्रतिज्ञांशसूचितन्यायं भाष्यादावस्फुटमपि –

शब्दप्रवृत्तिहेतूनां तस्मिन् मुख्यसमन्वयात् ।
अन्यार्थेष्वल्पता हेतोस्तन्निमित्तत्वतस्तथा ॥
तद्वाचकत्वं शब्दानां बहुलातिप्रयोगतः ।

रूढमित्येव साध्यं स्या''दित्यानन्दमयनयानुव्याख्याने सामान्यत उक्तमन्यत्रोक्तश्रुत्यादिना स्फुटीकृत्येदानीमम्बरान्तधृतेरिति सौत्रलिङ्गोक्तिपरटीकां विवृण्वन्नस्य निरवकाशत्वं वक्तुमाकाशशब्दस्य ''आकाशाख्यप्रकृते''रिति टीकोक्तचित्प्रकृतिरूपमध्यमाक्षरार्थत्वमाह ॥ किञ्चेत्यादिना आकाशं चित्प्रकृतिरेवेत्यंतेन ॥ इहाकाशमित्यस्योच्यत इत्यन्वयः ॥ यद्भूतमिति ॥ यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चे''त्यंतेनेत्यर्थः । ''कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे''ति प्रश्ने ''एतस्मि''न्निति परिहारः ॥ न च तदिति ॥ सर्वोपजीव्यत्वे सत्यन्यैकाश्रितत्वस्य श्रीतत्वस्य श्रीतत्वासाधारणलिङ्गत्वस्य ''अव्यक्तात्पुरुषः परः । मम योनिरप्स्वन्तः समुद्र'' इत्यादिमानसिद्धत्वादिति भावः । ओतत्वं पोष्यत्वमित्येतत्साधयति ॥ न चेत्यादिना ॥ उपादेयत्वं उपादानपरिणामत्वमित्यर्थः ॥ आधेयत्वस्याप्यभावाच्चेति ॥ इन्द्रलोकस्य प्रजापतिलोकादधस्तनत्वादिति भावः । अस्य वाक्यस्य सिद्धान्तार्थस्तु –

शिवो हीश्वरनामा स्यात्तत्पारम्यात्सरस्वती ।
इन्द्रेत्युक्ता तत्सुखानां ब्रह्माधिर्मुक्तिगामिनाम् ।
तत्सुखानां परं ब्रह्म मुक्तिगानां परायणम् ।।

इत्यादिब्रह्माण्डस्मृत्या ध्येयः । संसाराल्लुप्तानां मुक्तानां कानि सुखानि लोका इत्यर्थः । ननु तत्र बाधकादर्थान्तरमस्त्वित्यत आह ।। एकेति ।। अदृश्यत्वनयेऽक्षरशब्दस्य नानार्थत्वं परावधित्वादिबाधकात् । ''अक्षरत्रयमीरित''मित्यादिस्मृतिबलाच्चोपेतमपि नेहैकार्थत्वे बाधकमस्तीति भावः । तावतोतत्वं पोष्यत्वरूपमिति कुत इत्यत आह ।। तस्मादिति ।। परिशेषादित्यर्थः ।

रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो नित्यं नाहं कश्चिदुपाश्रितः ।। इत्यादिभारतवाक्यादाविवेत्यर्थः ।

**पाण्डुरङ्गि** – अत एवेति ।। प्रवृत्तिनिमित्तपौष्कल्यादेवेत्यर्थः । अनेन महायोगविद्वद्रूढिभ्यामक्षरशब्दस्य ब्रह्मपरत्वमित्युक्तं भवति । अम्बरान्तधृतेरिति स्थितिहेतुभागसूचितां युक्तिमाह ।। किंचेति ।। नन्वाकाश एव तदोतमित्यत्रोतशब्दस्याधेयपरत्वादिन्द्रलोका ओता इत्यत्र तु पोष्यत्वार्थकत्वान्न विरोध इत्यत आह ।। एकप्रकरणेति ।। ननु नात्रोतत्वं पोष्यत्वम् । ओतत्वेनोक्तानां भूतानामचेतनत्वेन पोष्यत्वानुपपत्तेरित्यत आह ।। भूतादिपदमिति ।।

## तात्पर्यचन्द्रिका

**न चाकाशपदस्य प्रसिद्ध्यनुसरणे भूताकाशपरता । आकाशाधिकरणानुसरणे च ब्रह्मपरता । न तु जडाजडपरत्वमिति पूर्वपक्षः सिद्धांतश्चायुक्त इति वाच्यम् । ''आकाशस्तल्लिङ्गा''दित्यत्र प्रसिद्धित्यागेन लिङ्गानुसार्यर्थपरत्वस्योक्ततया लिङ्गानुसारिप्रकृतिपरताया अपि तन्न्यायसिद्धत्वात् । किञ्च ''अक्षरस्य प्रशासने'' इत्यत्र प्रशब्दार्थो सङ्कुचितविषयत्वानन्यायत्तत्वादिरूपप्रकर्षो भाष्योक्तश्रुत्यादिभिर्न ब्रह्मणोऽन्यत्र युक्तः । किञ्च ''अस्थूलमन''ण्वित्यादिना न स्थौल्यादिमात्रस्य**

**निषेधः । निःस्वभावत्वापातात् । श्रुत्यन्तरविरोधाच्च । प्राकृतस्य स्थौल्यादेर्निषेधोऽपि चित्प्रकृतावीश्वर इव न निरपेक्षः । न च ''यस्य पर्णमयी जुहूर्भवती''त्यादौ प्रकृतिगतनिरपेक्षजुह्वा इवात्रापि निरपेक्षास्थूलत्वादेर्ग्रहणसम्भवे सापेक्षं ग्राह्यम् । किं च भाष्योक्तश्रुत्यादिभिरस्थूलत्वादि विष्णावेव प्रसिद्धम् । न च प्रसिद्ध-सम्भवेऽप्यप्रसिद्धं ग्राह्यम् ।**

**प्रकाशिका** – ननु ''भूतं च भवच्चे''त्युक्तजडस्य कथं पोष्यत्वम् । अत एतस्मादेव बाधकान्नानार्थत्वं युक्तमित्यत आह ।। न चेति ।। टीकायां भाष्येऽनुक्तस्यापि ''आका-शाख्यप्रकृते''रित्युक्तिर्निर्मूला । किञ्चेदं लिङ्गमन्यस्य नेत्येतदपि टीकायां न प्रतीयते । यस्यात्र विवरणं क्रियत इत्यत आह ।। तदुक्तमिति ।। विष्णोरन्यस्य श्रीतत्वस्येत्यर्थः । टीकायां न्यायविवरणे च प्रकृतिपदस्यैव प्रयोगाच्चित्प्रकृतिपरत्वे स्पष्टं ज्ञापकमाह ।। उक्तं चेति ।। समाख्याबलाच्चैवमिति भावेनाह ।। एवं चेति ।। विष्णोरेव सर्वाधारत्वे –

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
रसोऽहमप्सु कौंतेय प्रभास्मि शशिसूर्ययोः ।।

इत्यादिगीताप्यनुकूलिता भवतीत्यर्थः । अत्राकाशस्य चित्प्रकृतिपरत्वमाकाशनयन्याय-सिद्धत्वं चेत्येतच्छङ्कापूर्वमाह ।। न चाकाशेति ।। लिङ्गानुसारीति ।। तथा च पूर्वपक्षे सर्वाधारत्वे सत्यक्षरशब्दितश्रीतत्वाधीनत्वस्य जडप्रकृतिलिङ्गत्वात्सर्वाधारत्वे सति ब्रह्मैकाश्रितत्वस्य चित्प्रकृतिलिङ्गत्वात्सिद्धान्ते चित्प्रकृति परत्वं युक्तमिति भावः । ''सा च प्रशासना''दिति सूत्रोक्तहेतोरपि निरवकाशत्वमाह ।। किञ्चेति ।। भाष्योक्तेति ।। ''सप्तार्धगर्भा भुवनस्ये''त्यादिभिरित्यर्थः । एतेन ''युक्त्यंतरेण विष्णोरेवाक्षरत्व''मित्यादिटीकातात्पर्यार्थ उक्तो भवति । ''अन्यभावव्यावृत्तेश्चे''ति सूत्रोक्तहेतुर्भाष्यादावन्यवस्तुस्वभावानां लौकिक-स्थौल्यादीनां राहित्यकथनादिति व्याख्यातः । स न युक्तः । श्रुतौ तथा प्रतीत्यभावेना-सिद्ध्यापत्तेः । टीकायां लौकिकस्थौल्यादिराहित्यस्य ''मध्यमाक्षरस्याप्राकृतविग्रह-वत्त्वेऽपी''त्यादिना व्यभिचारमाशङ्क्य ''भगवदपेक्षयैवे''ति समाधानमुक्तम् । तदपि न

युक्तम्। निरपेक्षस्थौल्यादिराहित्यस्य श्रुतावप्रतीतेरित्यतो भाष्याद्याशयं व्यंजयन्नन्यभावेति सूत्रोक्तनिरपेक्षप्रकृतस्थौल्यादिराहित्यस्य श्रुत्यभिप्रेतत्वं साधयति ॥ किञ्चेत्यादिना ॥ अस्तु को दोष इत्यत आह ॥ श्रुत्यन्तरेति ॥ ''अस्थूलोऽनणुरमध्यमो मध्यमो व्यापकोऽव्यापको यो हरिः । अणोरणीयान्महतो महीयान् ज्यायान्पृथिव्या दिवो ज्याया''नित्यादि-श्रुत्यंतरविरोधाच्चेत्यर्थः । यद्वा ''सर्वधर्मा सर्वनामा सर्वकर्मा गुणाश्श्रुताश्च नेत्याद्या प्रमाणं श्रुतिरत्र चे''त्यनुभाष्योक्तश्रुत्यंतरेत्यर्थः । सुधायां तु ''सर्वत्र प्रसिद्धोपदेशात् । अत्ता चराचरग्रहणात् । रूपोपन्यासाच्चे''त्युक्तविरोधस्स्यादित्यप्ययुक्तम् । निस्स्वभावस्य सर्वत्र स्थित्यदनादेरयोगादिति तदुपलक्षणमिति भावः ॥ न निरपेक्ष इति ॥ तथैव दहरनये भाष्यादौ सत्यकामत्वादिषु प्रतिपादनादिति भावः । अस्तु तर्हि श्रुतौ प्रकृतस्य स्थौल्यादेर्निषेधः । तावता निरपेक्षमेवास्थूलत्वादिकं श्रुतावुच्यत इति कुतः । येन चित्प्रकृतौ व्यभिचारो न स्यादित्यत आह ॥ न च यस्येति ॥ पर्णमय्यधिकरणशरीरं प्राणस्तथानुगमादित्यत्र विवृतम् । ''यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति । यस्य खादिरस्स्रुवो भवति छन्दसामेव रसेनावद्यति सरसा अस्याहुतयो भवन्ती''त्यादौ प्रकृतिरूपक्रत्वर्थतया फलनिरपेक्षजुह्वनुवादेन पर्णमयीत्वविधिः । न तु पुरुषर्थतया । क्रत्वंगजुह्वाः क्रतुफलेनैव फलवत्त्वेन पृथक्फलान-पेक्षत्वात्फलश्रुतिरर्थवाद इत्युच्यते । तद्वन्निरपेक्षस्य ग्रहणमित्यर्थः । प्राकृतस्थौल्यादिराहित्यं न चित्प्रकृतौ व्यभिचारीत्यत्र युक्त्यंतरमाह ॥ किञ्चेति ॥ श्रुत्यादिप्रसिद्धं विष्ण्वसाधारण-मेवास्थूलत्वादिकं श्रुतौ ग्राह्यमिति कुत इत्यत आह ॥ न च प्रसिद्धेति ॥

**पाण्डुरङ्गि** – द्वितीयसूत्रोक्तहेतुमाह ॥ किञ्चेति ॥ श्रुत्यन्तरेति ॥ अणोरणीयानित्यादि-श्रुत्यन्तरविरोधादित्यर्थः । अस्तु प्रकृतौ प्राकृतस्थौल्यादेर्निषेधः सापेक्षः । तथापि स एव किं न गृह्यत इत्यत आह ॥ न चेति ॥ अन्यथा यस्य पर्णमयी जुहूर्भवतीत्यत्रापि विकृतिगतसापेक्षजुह्वा एव ग्रहणं स्यादिति भावः । तृतीयसूत्रोक्तहेतुमाह ॥ किंचेति ॥ ननु प्रसिद्धसम्भवे ह्यप्रसिद्धं न ग्राह्यम् । प्रकृते तु स्थौल्याणुत्वयोर्विरोधेनासम्भवादप्रसिद्धग्रहणं युक्तमेवेत्यत आह ॥ न चेति ॥ विरोधोदृष्टबाधनमित्युक्तत्वादिति भावः ॥

## तात्पर्यचन्द्रिका

ब्रह्मणः परस्परविरुद्धस्थौल्याणुत्वोभयराहित्यं च श्रुतत्वान्न विरुद्धम् ।

दर्वीहोमा यथैवान्ये प्रकृतेर्विकृतेरपि ।
ईश्वरोऽपि तथैवान्यो महतोऽप्यणुतोऽपि हि ॥ १ ॥

युक्तं हि दर्वीहोमानां परस्परविरुद्धप्रकृतिविकृतित्वोभयराहित्यवत् वाय्वादिस्पर्शस्योष्णशीतबहिर्भाववत् अपाकजरूपस्याबादेः पाकजनीलानीलरूपराहित्यवच्चाप्राकृतस्य ब्रह्मणः प्राकृतपरिमाणद्वयराहित्यम् । अथवा अनुव्याख्यानसुधोक्तरीत्याऽस्थूलादि पदैस्तद्विरुद्धाणुत्वादिविधिरस्तु । न चैवं विरोधः ।

यथैकस्यैव दध्यादेः क्रत्वर्थपुरुषार्थते ।
अणीयस्त्वमहीयस्त्वे तथैकस्यैव हीशितुः ॥ १ ॥

दर्शपूर्णमासादीनां केवलप्रकृतित्वेऽपि पशुगणादीनां केवलविकृतित्वेऽपि अग्नीषोमीयपश्वादीनां प्रकृतित्वे सति विकृतित्ववत्, अवघातादीनां दृष्टमात्रार्थत्वेऽपि प्रोक्षणादीनामदृष्टमात्रार्थत्वेऽपि स्विष्टकृदादीनामुभयार्थत्ववत्, अन्यत्र कामाधिकारनित्याधिकारयोरन्यतरमात्रस्य सत्त्वेऽपि जातेष्टौ द्वयोः संवलनवत्, व्रीह्यादीनां क्रत्वर्थमात्रत्वेऽपि गोदोहनादीनां पुरुषार्थत्वमात्रत्वेऽपि दध्यादीनामुभयार्थत्ववच्चान्यत्राणुत्वमहत्त्वयोरेकैकमात्रस्य सत्त्वेऽपि अणुन्येव कृष्णस्य मुखे गर्भीकृतब्रह्माण्डे महत्त्वग्राहकस्य यशोदाप्रत्यक्षस्य अणुत्वलिङ्गस्यैकेनापि दाम्ना बन्धनस्य महत्त्वलिङ्गस्यानेकैरप्यबन्धनस्य ''अणोरणीयान्महतो महीया''नित्यागमस्य च सत्त्वात् । अणुत्वादेर्महत्त्वाद्यसामानाधिकरण्ये च प्राकृतत्वस्योपाधित्वात् । भेदप्रतिनिधेर्विशेषस्य सत्त्वाच्च ॥ ''त्वयीश्वरे ब्रह्मणि नो विरुध्यत'' इत्यादावैश्वर्यादेवाविरोधोक्तेश्च ब्रह्मण्युभयमुपपन्नम् । तदुक्तमनुव्याख्याने –

**अतो विरुद्धवद्भातमपि व्याख्याय तत्वतः ।**
**योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् ॥ इति ।**

**प्रकाशिका** – अत्र भाष्ये -

अस्थूलोऽनणुरूपोऽसावविश्वो विश्व एव च ।
विरुद्धधर्मरूपोऽसावैश्वर्यात्पुरुषोत्तमः ॥

इत्यैश्वर्येणेश्वरे विरोधसमाधानमयुक्तम् । तथात्वे जीवेशाभेदोपगमेनाल्पज्ञत्वसर्वज्ञत्वादिकमपि समाधेयं स्यादित्यतः प्रमाणभावाभावाभ्यां व्यवस्थेति भावेनाह ॥ ब्रह्मण इति ॥ यद्वा लोके भिन्नाधिकरणतयोपलब्धानामस्थूलत्वानणुत्वादीनां कथं विष्णौ समावेश इत्यत आह ॥ ब्रह्मण इति ॥ श्रुतत्वादिति ॥ यत्र हि धर्माणां भिन्नाधिकरणत्वं प्रमितं तत्रैव तेषां समावेशाभ्युपगमे हि विरोधः । यत्र प्रमाणेनैव सहोपलम्भोऽवगतस्तत्र तथैवाभ्युपगमो न विरुद्ध इति भावः । सदृष्टान्तं युक्त्या चोपपादयति ॥ दर्वीति ॥ श्लोकोक्तमुपलक्षणमिति भावेन श्लोकोक्तं व्यनक्ति ॥ युक्तमिति ॥ प्राकृतपरिमाणद्वयराहित्यमित्यन्वयः । तत्र हेतुगर्भमप्राकृतस्येति । असम्भावनानिरासाय दृष्टान्ता दर्वीत्यादि । ''तस्मिन्सोमः प्रवर्तेताव्यक्तत्वा'' दित्यष्टमाध्यायांतिमाधिकरणे ''यदेकया जुहुयाद्दर्वीहोमं कुर्या''दित्यर्थवादगतदर्वीहोमशब्दितान् वास्तुहोमादीनुदाहृत्य किमेते सोमयागादिप्रकृतिका उतापूर्वा एवेति संशये अश्रुतेति कर्तव्यताकत्वाद्देवतासम्बन्धस्यास्पष्टत्वेनाव्यक्तताकत्वाच्चाव्यक्तासु तु सोमस्येति न्यायेन सोमयागप्रकृतिका इति प्राप्ते सोमस्य यागत्वादेतेषां होमत्वात्सादृश्याभावान्न तत्प्रकृतिकाः । किंतु नारिष्टाग्निहोत्रादिहोमप्रकृतिका इति पक्षांतरमुक्त्वा नारिष्टांगभूतानां मध्वादीनां त्र्यम्बकहोमकेषु दर्वीहोमनामकेष्वभावदर्शनादपूर्वा एव दर्वीहोमा इति सिद्धान्तितम् । तथा चैवमुक्तन्यायेन विकृतित्वराहित्यं तन्मुखनिरीक्षकस्यान्यस्य कर्मणोऽभावात्प्रकृतित्वराहित्यं च यथा दर्वीहोमनामकानां होमानां तथा प्रकृतेऽपीत्यर्थः ।

यद्यपि प्रकृतित्वविकृतित्वयोर्न परस्परं विरोधः । अग्नीषोमीयपशोः पश्वंतरापेक्षया प्रकृतित्वेऽपि दर्शपूर्णमासापेक्षया विकृतित्वात् । द्वादशाहस्याहर्गणापेक्षया प्रकृतित्वेऽपि

ज्योतिष्टोमापेक्षया विकृतित्वाच्च । तथापि प्रतियोगिभेदाभावे तयोर्विरुद्धत्वमस्तीति वा स्वापेक्षया स्वस्य द्वयं विरुद्धमिति वा परस्परपरिहारेण क्वचिद्दर्शपूर्णमासादौ दृष्टत्वाभिप्रायेण वा परस्परविरुद्धेति प्रकृतिविकृत्योर्विशेषणमुपात्तम् । यद्वा विरुद्धेति राहित्ययोर्विशेषणम् ॥ वाय्विति ॥ यथा तार्किकमते तेजोगतस्य स्पर्शस्योष्णत्वं जलगतस्य शीतत्वं वायुगतस्योभयबहिर्भावः, पृथिवीवाय्वोरनुष्णाशीतस्पर्शोररीकरणात् । तद्वदित्यर्थः ॥ पाकजेति ॥ पृथिवीगतस्य रूपस्य तपनादितेजस्सम्बन्धेन पाकजत्वमङ्गीकृतमिति पाकजेत्युक्तम् । एवं भाष्याद्युक्तं सूत्रे साक्षादुपात्तं प्राकृतस्थौल्यादिराहित्यरूपहेतुं समर्थ्य सौत्रचशब्दसूचितमनुव्याख्यानादौ विवृतं हेत्वंतरं समर्थयमानः पक्षांतरमाह ॥ अथवेति ॥ न चैवमिति ॥ अस्थूलानण्वादिशब्दैस्तद्विरुद्धाणुत्वमहत्त्वादिप्रापणे सतीत्यर्थः । श्लोकगतहिशब्दोक्तहेतुना न च विरोध इति साध्यस्यान्वयः । यस्मादीशितुस्ते युक्ते तस्मान्न विरोध इति श्लोकोक्तमुपलक्षणमित्यभिप्रेत्य पूर्वार्धं तावद्व्याचष्टे ॥ दर्शेति ॥ अष्टमे प्रथमपादे ''इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्या''दिति चतुर्थेऽधिकरणे ''सौर्यं चरुं निर्वपेत् । ऐंद्राग्नमेकादशकपालं निर्वपे''दित्यादिवाक्योक्तसौर्यैंद्राग्नादिषु दार्शपौर्णमासिको विध्यंत उत सामिक इति संशये नियामकाभावादनियम इति प्राप्ते तद्धितेन देवतानिर्देशो निर्वपतिशब्दश्चेत्यादिलिङ्गविशेषाद्दार्शपौर्णमासिक इति सिद्धांतितम् । तेन तत्र दर्शपूर्णमासयोः सर्वाङ्गोपदेशेन केवलप्रकृतित्वं सिद्धम् । आदिपदेनाग्निहोत्रादिग्रहणं तथा तत्रैव ''तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशुयूपदर्शना''दित्यष्टमेऽधिकरणे ''मैत्रं श्वेतमालभेत वारुणं कृष्ण''मित्यादिषु किमग्नीषोमीयस्य पशोर्विध्यंत उतैकादशिनानां पशूनां विध्यंत इति संशये आलभत्यादि सामान्यादग्नीषोमीयस्येति प्राप्ते प्रतिपशुयूपदर्शनादविशेषलिङ्गादग्नीषोमीयप्रकृतित्वे चोदकेनैकस्यैव यूपस्य प्राप्तत्वेन प्रतिपशुयूपदर्शनं विरुध्येतेति पशुगणेष्वेकादशिनानां पशूनां विध्यंत इति सिद्धान्तितम् । तेन तत्र पशुगणानां केवलविकृतित्वं सिद्धम् । आदिपदेन शाक्यानामयनादिसंवत्सरसत्राणां ग्रहणम् ।

तथा तत्रैव ''पशौ च लिङ्गदर्शना''दिति पञ्चमेऽधिकरणे ''अग्नीषोमीयं पशुमालभेते''त्युक्ताग्नीषोमीयपशौ किं दार्शपौर्णमासिको विध्यंत उत सौमिक इति सन्देहे अनियम इति प्राप्ते

तद्धितेन देवतानिर्देशादिलिङ्गदर्शनाद्दार्शपौर्णमासिको विध्यंत इत्युक्तत्वादग्नीषोमीयपशोर्विकृतित्वं सिद्धम् । तथा तत्रैव ''दैक्षस्य चेतरे''ष्विति षष्ठेऽधिकरणे सवनीयानुबंध्यनिरूढादिपशुषु किं दार्शपौर्णमासिको विध्यंत उत दैक्षस्य दीक्षितेनानुष्ठीयमानेषु प्राथमिकत्वादैक्षशब्दितस्याग्नीषोमीयस्येति संशये पूर्ववद्दार्शपौर्णमासिक इति प्राप्ते पशुद्रव्यकत्वसामान्याद्विशसनादिद्रव्यसंस्कारलाभाच्च दैक्षस्याग्नीषोमीयस्य विध्यंत इत्युक्तत्वादग्नीषोमीयस्य पशोस्सवनीयादिपशुबन्धं प्रति प्रकृतित्वं दर्शपूर्णमासविकृतित्वं च पूर्वोक्तदिशा सिद्धमिति द्वैरूप्यं ध्येयम् ॥ अवघातादीनामिति ॥ छन्दोभिधानादित्यत्र प्राक्प्रपञ्चितमेतत् । ''तानि द्वैधं गुणप्रधानभूतानी''त्यधिकरणे दृष्टतुषविमोकमात्रार्थत्वं सिद्धम् ।

॥ प्रोक्षणेति ॥ द्वितीयस्याद्यपादे ''धर्ममात्रे तु कर्मस्यानिवृत्तेः प्रयाजव''दिति पञ्चमेऽधिकरणे ''व्रीहीन् प्रोक्षति स्रुचस्संमार्ष्टी''त्युक्तप्रोक्षणसंमार्जनादीनां द्रव्यगतसंस्काररूपादृष्टार्थत्वमुक्तम् ॥ स्विष्टकृदिति ॥ स्विष्टकृदधिकरणं जिज्ञासाधिकरणे प्रपञ्चितम् ॥ कामेति ॥ ''ऐंद्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम'' इत्यादीनां कामाधिकारत्वं षष्ठाद्यस्वर्गकामाधिकरणे सिद्धम् । ''यावज्जीवमग्निहोत्रं जुहोति यावज्जीवं दर्शपूर्णमासाभ्यां यजेत वसंते वसन्ते ज्योतिषा यजेते''त्यादीनां ''अभ्यासो कर्मशेषत्वात्पुरुषार्थो विधीयत'' इति ''सर्वशक्तौ प्रवृत्तिस्स्यात्तथाभूतोपदेशा''दित्यादिषु नित्याधिकारत्वं षष्ठे द्वितीयपादे तृतीयपादे च सिद्धम् । यद्वा नित्यशब्दो नैमित्तिकपरः । जीवनादिगृहदाहाद्यनागन्तुकागन्तुकनिमित्तवत्त्वमात्रेण नित्यनैमित्तिकयोर्भेदात् । क्वचित्तु नैमित्तिकेत्येव पाठः । ''यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपे''दित्यादेर्नैमित्तिकाधिकारत्वं ''क्षामेतु सर्वहोमस्स्यादेकदेशस्यावर्जनीयत्वा''दिति षष्ठचतुर्थपादीयपञ्चमाधिकरणे सिद्धम् । ''यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमा''नित्यादेरधिकारद्वयसंवलनं ''पूर्ववंतो विधानार्थास्तत्सामर्थ्यं समाम्नाये'' इति प्रथमाध्यायचतुर्थपादीयद्वादशाधिकरणे ''फलसंयोगस्त्वचोदितेन स्यादशेषभूतत्वा''दिति चतुर्थाध्यायतृतीयपादीयसप्तदशोऽधिकरणे च सिद्धम् । पुत्रजन्मनिमित्तकत्वस्य फलार्थत्वस्य च श्रवणात् ॥ व्रीह्यादीनामिति ॥ एतच्च ''तानि द्वैधं गुणप्रधानभूतानी''त्यत्र सिद्धम् । तानि द्वैधाधिकरणं छन्दोनये विवृतम् ॥ गोदोहनेति ॥

चतुर्थस्याद्यपादे ''यस्मिन्प्रीतिः पुरुषस्य तल्लिप्सार्थलक्षणाविभक्तत्वा''दिति सूत्रे तृतीयवर्णके ''गोदोहनेन पशुकामस्य प्रणये''दिति दर्शपूर्णमासप्रकरणे श्रुतं गोदोहनं क्रत्वर्थमप्युत पुरुषार्थमेवेति संशये षष्ठीश्रुत्या पुरुषार्थत्वं क्रतूपकारकत्वाच्च क्रत्वर्थमित्युभयार्थमिति प्राप्ते उपकारकत्वलक्षणशेषत्वनिराकरणादन्यार्थस्यापि क्रतूपकारकत्वाविरोधात् श्रुत्या पुरुषार्थत्वमेवेति सिद्धांतितम् ॥ दध्यादीनामिति ॥ चतुर्थस्य तृतीयपादे ''एकस्य तूभयत्वे संयोगपृथक्त्व''मिति तृतीयाधिकरणे ''दध्नेंद्रियकामस्य जुहुया''दित्यत्राग्निहोत्रप्रकरणगते वाक्ये किं काम्यमेव दधि नित्येऽप्यग्निहोत्रे स्यादुत ततोऽन्यन्नित्य इति संशये काम्यस्य नित्यार्थत्वासम्भवादन्यदेव नित्ये स्यात्। न च दध्ना जुहोतीति दध्नो नित्यार्थत्वमपि श्रूयत इति वाच्यम् । तस्य काम्यवाक्यैकवाक्यत्वादिति प्राप्ते उभयोर्वाक्ययोर्नैराकांक्ष्येणैकवाक्यत्वासम्भवात्संयोगपृथक्त्वेनोभयार्थमिति सिद्धान्तितम् । एवं दृष्टान्तपरं पूर्वार्धं व्यक्तीकृत्योत्तरार्धोक्तं दार्ष्टांतिकं व्यनक्ति ॥ अन्यत्रेत्यादिना ॥ सत्त्वेऽपीति ॥ ब्रह्मण्युभयमुपपन्नमित्यन्वयः । ननु दृष्टान्तोक्त्या सम्भावनैवोक्ता । न तु प्रमेयं तेन सिध्यति । मानाधीनत्वात्तस्येत्यतः ''अणोरणीयानित्याद्यागमस्योभयकार्यदर्शनानुमानस्य यशोदादिप्रत्यक्षस्य च प्रमाणत्वा''दिति सुधावाक्यं विवृण्वन्प्रत्यक्षादिप्रमाणान्याह ॥ अणुनीति ॥ अल्पपरिमाण इत्यर्थः । उक्तं च सन्न्यायरत्नावल्यां ''दृष्टश्चैवंविधः प्रभावो यशोदया गोविन्दे । तथाहि भागवतवचनम् -

पीतप्रायस्य जननी सुतस्य रुचिरस्मितम् ।
मुखं लालयती राजन् जृंभतो ददृशेऽखिलम् ।

खं रोदसी ज्योतिरनीकमास्ये सूर्येन्दुवह्निश्वसनानुर्षींश्चेत्यादी''ति ॥ अणुत्वलिङ्गस्येति ॥ अणुत्वानुमापकस्य । महत्त्वलिङ्गस्य महत्त्वानुमापकस्येत्यर्थः । सत्त्वादित्यन्वयः । एतच्च -

गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा ।
तद्दामबध्यमानस्य स्वार्भकस्य कृतागसः ।

व्यङ्गुलोनमभूत्तेन सन्दधेऽन्यच्च गोपिके''त्यादिना ''दृष्ट्वापरिश्रमं कृष्णः कृपयाऽऽसीत्स्व-

बन्धन'' इत्यादिना चावसेयम् । अणोर्महत इति च पञ्चमी । नन्वेवं घटादावपि रूपरसवदणुत्वमहत्त्वे स्यातामित्यत ''एकत्र युगपदणुत्वमहत्त्वविरोधस्तु प्राकृतत्वोपाधिकृत इति सन्न्यायरत्नावल्युक्तमाह ।। अणुत्वादेरिति ।। आदिपदेन ह्रस्वत्वदीर्घत्वादिग्रहः ।। भेदेति ।। यथाभेदेन सूचीकटाहादेरणुत्वमहत्त्वादिनिर्वाहस्तथेह नेहनानेत्यादिना भेदस्य निषेधेन भेदाभावेपि तत्प्रतिनिधितत्कार्यनिर्वाहकस्य विशेषस्य सत्त्वादित्यर्थः । इत्यादाविति ''विरुद्धधर्मरूपोऽसावैश्वर्यात् पुरुषोत्तम'' इति भाष्यं ग्राह्यम् । उक्तं च छान्दोग्यभाष्ये सप्तमे ''अल्पपरिमाणस्यापि महत्परिमाणं च युज्यतेऽचिंत्यशक्तित्वात् । यस्मिन् विरुद्ध गतयोऽप्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्ये''त्यादि । उक्तं चात्र तत्वप्रदीपे यद्यपि लोकेऽस्थूलत्वात्यणुत्वादयो धर्मा एकत्र विरुद्धाः । तथापि विष्णावैश्वर्यादुपपद्यन्ते । तदाह विरुद्धधर्मरूपोऽसावैश्वर्यादितीति ।। अत इति ।। यतो ब्रह्म विरुद्धलक्षणैर्युक्तमेवातो विरुद्धार्थप्रतिपादकमिव प्रतीतमपि वाक्यं तत्वतो व्याख्याय हरौ योजनीयं योजयितुं शक्यमिति । नन्वणुत्वमहत्त्वयोरन्यत्र सहानवस्थानरूपविरोधमभ्युपेत्य ब्रह्मण्यप्राकृतत्वेन वा विशेषबलेनाचिंत्यैश्वर्येण वा द्वयमप्युपपन्नमित्युक्तमयुक्तमिव । अणुत्वमहत्त्वादिपरिमाणावान्तरजातेर्वैशेषिकाधिकरणानुव्याख्यानादौ निराकृतत्वात् । परिमाणापकर्षोत्कर्षयोरेवाणुत्वादिशब्दार्थत्वात्तयोश्च प्रतिवस्तु स्थितेरभ्युपगतत्वेन विरोधस्यैवाभावात् । उक्तं चानुव्याख्याने -

अणुत्वं च महत्त्वं च परमाणावणावपि ।
कथं त्र्यणुकपूर्वेषु नाणुत्वमपि कथ्यत ।। इति ।
अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षया ।
तारतम्यस्थिता यस्मात्पदार्थास्सर्व एव च ।।

इति चेन्मैवम् । तात्पर्यभेदात् । ब्रह्मणोऽपरिच्छिन्नत्वेन ततोऽधिकपरिमाणस्यान्यस्य वस्तुनोऽभावेन तदपेक्षयाऽणुत्वासम्भवात्स्वापेक्षयैव स्वस्याणुत्वस्य वक्तव्यत्वात्तस्य च घटादावदर्शनाद्विरुद्धत्वमिति भावेन ब्रह्मण्युक्तयुक्त्या तयोस्समर्थनात् । तथाचोक्तमत्र सुधाय ''न चैकपरिमाणोपेतमेवोत्कृष्टापकृष्टापेक्षयाऽणु महद्दीर्घं ह्रस्वं चेत्युच्यत इत्याश्रयणेन विरोधपरिहारः । घटादितुल्यत्वेन वक्तव्यत्वात् । उत्कृष्टापकृष्टपरिमाणद्रव्यांतराभावाच्चे''ति

अणीयांश्च महीयांश्च भगवानागमोदित'' इति वैशेषिकनयानुव्याख्यानव्याख्यावसरे ''नन्वेवं स्वस्मादेव स्वयमुत्कृष्टोऽपकृष्टश्चेत्यागतम् । को नेत्याहे''त्यादि । एवं लोके त्य द्वयोर्ब्रह्मणि समावेशस्समर्थितः । इदानीं घटादावन्यापेक्षयाऽणुत्वमहत्त्वयोरविरोध क्षयाऽपि स्वस्य तथाभावो युक्तः । ''महतोऽल्पत्वमपि हि व्योमवत्प्राह वेदवित्'' अतस्सर्वपदार्थानां भागास्संत्येव सर्वदा । सर्वदिक्ष्वपि सम्बन्धा''दित्यादिवैशेषिक-योत्त्यनुरोधेनात्र सुधायां ''किं चाकाशस्य परमाणुसंयोगः किमाकाशैकदेशे वर्तत एवे''त्यादिना प्रपञ्चितरीत्या परिच्छिन्ने गगनादौ परिमाणापकर्षलक्षणाणुत्वस्यापि वेरोधस्यैवाभावाद्ब्रह्मणि तत्समावेशो युक्त इत्यभिप्रेत्याकाशेऽणुत्वमपि साधयति ॥ दिना नाणुत्वमहत्त्वयोर्विरोध इत्यंतेन ॥ यद्वा ''परमाणुसम्बद्ध ईश्वरप्रदेशः रेमाणतामणति । मेरुमन्दरादिगतस्तत्परिमाणतामुपैति । स एव गगनसम्बन्धी तादृशो । न हि तेषां प्रदेशानामीश्वरान्मिथो वा भेदं वादिनो वदन्ती''त्यादिना तिक्तदिशा ईश्वरोऽणुपरिमाणाश्रयः ।

**डुरङ्गि** – ॥ दर्शपूर्णमासादीनामित्यादि ॥ दर्शपूर्णमासाग्निहोत्रज्योतिष्टोमानां शेन केवलप्रकृतित्वेपि आग्नेयं कृष्णग्रीवमालभेत सोम्यं चरुं बभ्रुमाग्नेयं कृष्णाग्रीवं स्पर्धमान इत्यादि पशुगणानां शाक्यानामयनादिसंवत्सरसत्राणां केवलविकृतित्वेपि यपशुद्वादशाहादीनां यथाप्रकृतित्वेपि विकृतित्वं अवघातादीनां वैतुष्यादिदृष्ट-पि प्रोक्षणसंमार्जनादीनां द्रव्यगतादृष्टमात्रार्थत्वेपि यथास्विष्टकृदुत्तमप्रयाजादीनामंश-ार्थत्वं ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः यस्य गृहान् दहत्यग्नये क्षामवते ष्टाकपालं निर्वपेदित्यैंद्राग्नक्षामवत्यादौ कामाधिकारनैमित्तिकाधिकारयोरन्यतरमात्र-मथावा जातेष्टौ यस्मिन् जात एतामिष्टिं निर्वपति पूत एव सतेजस्व्यन्नाद इन्द्रियावी भवतीत्यधिकारद्वयसंवलनं व्रीहिभिर्यजेत सोमेन यजेतेत्यादिना व्रीहिसोमादीनां मात्रत्वेपि गोदोहनेन पशुकामस्य प्रणयेदेकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येत्यादिना कविंशत्यनुवचनादीनां पुरुषार्थत्वमात्रत्वेपि यथा च दध्नाजुहोति दध्नेंद्रियकामस्य खादिरो यूपो भवति खादिरं वीर्यकामस्य यूपं कुर्यादित्यादिना दधिखादिरत्वा-

दीनामुभयार्थत्वं तथा प्रकृतेपीति । कामाधिकारनित्याधिकारयोरिति पाठे नित्यशब्दो नैमित्तिकपरः । जातेष्टेः शुद्धकाम्यत्वे पुत्रे जात इति पुत्र जननरूपनिमित्तश्रवण-विरोधाच्छुद्धनैमित्तिकत्वे च पूत एव तेजस्व्यन्नाद इति पूतत्वादिफलश्रवणविरोधात्संवलिताधि-कारोंगीकृतो न तूभयबहिर्भाव इति भावः ।

## तात्पर्यचन्द्रिका

किञ्च -

प्रतिसम्बन्धिना तुल्यदेशे सम्बन्धिनि स्थितेः ।
संयोगस्याणुसंयोगो ह्याकाशेऽप्यणुमात्रगः ॥ १ ॥

आकाशस्येश्वरस्य च परमाणुसंयोगः प्रतिसम्बन्धिभूतपरमाणुतुल्यपरिमा-णाकाशादिप्रदेशवृत्तिर्वाच्यः । सूच्यग्रादिना पर्वतादेः संयोगस्य सूच्यग्रसमपरिमाण-पर्वतादिप्रदेशवृत्तित्वदर्शनात् । यदि चान्यत्रादृष्टाप्याकाशसंयोगस्य प्रतिसम्बन्धिपरि-माणादधिकपरिमाणदेशवृत्तिता तर्ह्यन्यत्रादृष्टमीश्वरस्य महतोऽप्यणीयस्त्वं स्यात् । भेरीशब्दासमवायिकारणस्य हन्यमानभेर्याकाशसंयोगस्य कृत्स्नाकाशवृत्तित्वं च स्यात्। तथाच त्वन्मते जन्यविभुविशेषगुणानां देशनियमस्यासमवायिकारण-कृतत्वादाद्य एव भेरीशब्दः कृत्स्नव्यापीति तस्य सर्वत्रोपलब्धिः स्यात् । वीची-तरङ्गन्यायेन शब्दपरंपरोत्पत्तिप्रक्रियाभङ्गश्च स्यात् । संयोगस्य स्वात्यंताभाव-सामानाधिकरण्याददोष इति चेन्न । अणुत्वमहत्त्वयोरसामानाधिकरण्यनियमे भावा-भावयोः सुतरां सामानाधिकरण्यायोगात् । किंच भेर्यवष्टब्धप्रदेशे संयोगव-त्तदत्यंताभावस्य अन्यत्र च तदत्यंताभाववत्संयोगस्य धीःस्यात् । प्रदेशस्यौपाधिकत्वे तूपाधिसंयोगोऽप्युक्तरीत्याऽणुप्रदेशवृत्तिःस्यात् । न च निरवयवे गगनेऽणुपरिमाणः प्रदेशोऽन्योस्तीति महतो गगनस्यैवाणुत्वं सिद्धमिति नाणुत्वमहत्त्वयोर्विरोधः ।

**प्रकाशिका** – अणुपरिमाणपरमाणुसंयोगाश्रयत्वादित्यनुमानमभिप्रेत्य हेतोर्व्याप्तिसिद्ध्यर्थं गगनादौ दृष्टान्ते दार्ष्टान्तिके ईश्वरेच तत्साधयति ।। किञ्चेत्यादिना ।। श्लोकं व्याख्याति ।। आकाशस्येति ।। अप्रयोजकत्वमाशङ्क्य विपक्षे बाधकद्वयमाह ।। यदिचेति ।। अस्तु कृत्स्नवृत्तित्वं को दोष इत्यत आह ।। तथाचेति ।। एतेन ''भेरीसंयोगस्यापि तथात्वोपपत्तेः । तथाच सर्वत्र शब्दोपलब्धिप्रसङ्गा''दिति सुधावाक्यं विवृतं भवति । संयोगस्याव्याप्यवृत्तित्वं मत्वोक्तबाधकपरिहारमाशङ्कते ।। संयोगस्येति ।। अदोष इति ।। संयोगस्य प्रदेशवृत्तित्वदर्शनादीश्वरे गगनादौ च परमाणुतुल्यपरिमाणप्रदेशोऽपि परमाणुसंयोगाश्रयतयाऽभ्युपगन्तव्य इति दोषो नास्तीत्यर्थः । अन्यथा न्यायामृते प्रदेशस्य प्रदेशिनो भिन्नत्वेनान्यवृत्तिधर्मस्यान्यवृत्तित्वाभ्युपगमेऽतिप्रसङ्गादिति भावः । ''भावाभावयोरन्यत्र सर्वत्र सहानवस्थितयोः कथं विरोधो न भवे''दिति सुधोक्तं दोषं व्यक्तमाह ।। अणुत्वेति ।। सुतरामिति ।। अणुत्वमहत्त्वयोरेकत्र वृत्तौ हि तत्परिमाणप्रदेशादिनिष्ठतया संयोगतदभावयोरविरोधो नान्यथेति भावः । अल्पपरिमाणप्रदेशवृत्तित्वमनंगीकृत्य स्वात्यंताभावसामानाधिकरण्यनियमे दोषांतरं चाह ।। किंचेति ।। यद्वा एकत्र संयोगतदभावौ प्रतीतिविरोधान्न स्त इत्याह ।। किंचेति ।। नन्वस्तूक्तदिशा परमाणुसंयोगो गगनादौ परमाणुतुल्यपरिमाणप्रदेशवृत्तिर्न तावता गगनादेरणुत्वमहत्त्वसिद्धिः । प्रदेशस्यौपाधिकत्वात् । स्वाभाविकत्वे वा पटादाविव भिन्नत्वेनाणुत्वस्य तन्मात्रनिष्ठत्वेन गगनादावभावादित्यतो द्वयमपि क्रमेण निराह ।। प्रदेशस्येति ।। उक्तरीत्येति ।। सूच्यग्रेत्यादिनोक्तरीत्येत्यर्थः । नन्वस्तूपाधिसंयोगोप्यणुपरिमाणकप्रदेशवृत्तिः । को दोष इति चेत् सोपि किमौपाधिक उत स्वाभाविकः । नाद्यः । आत्माश्रयाद्यापत्तेः । द्वितीये तु स्वाभाविकाणुपरिमाणकप्रदेशो गगनादावंगीकृतस्स्यादिति भावः । उक्तं च तत्वविवेकटीकायां ''तथैवांशांशिनोरपी''त्येतद्व्याख्यावसरे किं चाकाशस्य तावदंशास्संतीत्यंगीकरणीयम् । अन्यथाऽऽकाशे विहगशरीरभावाभावौ न स्याताम् । संयोगस्स्वात्यंताभावसमानाश्रय इति चेन्न । विरोधात् । अन्यथा सर्वत्र भावाभावविरोधाभावप्रसङ्गात् । न चोपाधिकृतांशसद्भावादविरोधः । उपाधेरपि विहगशरीरसमानयोगक्षेमत्वा''दिति ।। निरवयव इति ।। ''कूटं खं विदलं व्योमे''त्यादौ विदलत्वप्रसिद्धेः । परैरपि तथाऽङ्गीकाराच्चेति भावः । गगने प्रदेशोऽन्यो नह्यस्तीत्यनेनैतदपि निरस्तम् । संयोगः प्रदेशवृत्तिरित्ययुक्तम् । तथात्वे घटादिसंयोगोऽपि घटाद्यंशसंयोगपूर्वकः सोऽपि तदंशसंयोगपूर्वक इत्यनवस्थापत्तेः । न चेयं निरंशे परंपरा

विश्राम्यतीति वाच्यम् । उक्तरीत्या कस्याप्यनंशत्वाभावादिति प्रदेशप्रदेशिनोरभेदेन प्रदेशसंयोगस्यैव प्रदेशिसंयोगत्वेनानवस्थाभावादिति । एतेनैवान्यसंयोगस्य कथमन्यसंयोगत्वम् । अतिप्रसङ्गादित्यपि प्रत्युक्तम् । तयोरभेदादिति । प्रपञ्चितं चैतद्वैशेषिकानुव्याख्यानसुधयोः

अंशांशिनोरभेदेन त्वंशं संयोग एव हि ।
अंशिनो नानवस्थातो यद्यप्यंशेष्वविश्रमः ॥
एकस्मिन् जात एवान्यः संयोगो जायते यदि ।
अनवस्था तदैव स्यात् संयोगैक्ये भवेत् क्व सा ॥ इत्यादिनेति भावः ।

**पाण्डुरङ्गि** – वीचीतरंगन्यायेनेति ॥ प्रथमोत्पन्नावीचीवीच्यंतरमारभते तच्च तरङ्गांतरं तथा शब्दोपि सर्वतो दिक्षुसजातीयशब्दांतरं तदपि शब्दांतरमिति वीचीतरंगन्यायेनेत्यर्थः ॥ उक्तरीत्येति ॥ आकाशस्योपाधिसंयोगः प्रतिबन्धभूतोपाधितुल्यपरिमाणाकाशादिप्रदेशवृत्तिर्वाच्य इत्युक्तरीत्येत्यर्थः ॥

## तात्पर्यचन्द्रिका

**अत्तृत्वानशनयोरविरोधस्तु ''अनशनोक्तिस्त्वनुपजीवनार्थत्वेने''ति न्यायविवरण एवोक्तः ।**

**साशनानशनत्वेन नरदेवौ यथोदितौ ।**
**अत्तिं विनाप्यदौर्बल्यात्तथाऽनत्तिर्हरेर्भुजिः ॥**

**इति च स्मृतिः । ''सर्वत्र प्रसिद्धे''त्यत्र सर्वगतस्याप्येकदेशवृत्तिः शते पंचाशन्न्यायेनाविरुद्धा । एकदेशमात्रगतत्वं त्वसिद्धमित्युक्तम् । भूमाधिकरणे तु सर्वगतेऽप्यणुत्वमत्र वक्ष्यमाणं सिद्धं कृत्वा तद्बलादुत्क्रांतिरुक्ता । इह तु पुनर्महतोऽप्यणुत्वमुच्यते । ''अल्पश्रुते''रित्यत्र तु गगनवन्नावयविरूपेणैव महत्त्वम् । किंत्ववयवरूपेणापीति वक्ष्यत इति भेदः । अत्र चाद्ये सूत्रे विषयवाक्यस्थसाधकोक्तिः । द्वितीये तदुत्तरवाक्यस्थस्य । तृतीये यद्यपि विषयवाक्यस्थास्थूलत्वादि-**

**रूपसाधकोक्तिः तथापि तेनैव ब्रह्माक्षरं चेत्स्थौल्यादिरहितत्वान्निःस्वभावं स्यादिति शंकितस्य बाधकस्य पदार्थांतरस्वभावरूपप्राकृतस्थौल्यादिरहितम् । न तु सर्वथेत्येव-मुद्धारात् तथाऽणुत्वमहत्त्वादिकं विरुद्धमिति शंकितस्य बाधकस्याणुत्वमहत्त्व-योर्विरोधे प्राकृतत्वं तन्त्रम् । ब्रह्म तु प्राकृतपदार्थव्यावृत्तमित्येवमुद्धारात्तस्यांत्यता ।**

**प्रकाशिका** – एवं सूत्रोपात्तसाधकान्युपपाद्य यत्पूर्वपक्षिणाऽनशनं बाधकमिति शङ्कितं तत् ''अनेनैव न तदश्नाति किंचनेत्येतदपि जीवस्वभावभूतोपजीवनार्थाशनव्यावृत्त्यर्थ''मिति टीकोक्तेर्मूलं वदन्निराह ।। अत्तृत्वेति ।। नन्वर्भकौकस्त्वादिनाऽणुत्वमुक्तम् । ''महतोऽल्पत्वमपि हि व्योमवत् प्राह वेदवि''दित्यनुव्याख्यानोक्तेः । अतः पौनरुक्त्यमित्यत आह ।। सर्वत्रेति ।। विवृतं चैतत्तत्रैवाऽस्माभिरल्पश्रुतेरिति दहराधिकरणे ।। विषयवाक्यस्थेति ।। ननु भाष्यटीका-रीत्या ''अदृष्टं द्रष्टृ''त्यादिचरमवाक्यस्य विषयत्वे तत्र ''एतस्मिन्खल्वक्षरे गार्ग्याकाश ॐतश्चे''ति श्रवणेऽप्यंबरधृतेरेव श्रवणेनांबरांतसर्वधृतिर्न श्रुता । चन्द्रिकोक्तरीत्या ''तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदंत्यस्थूल''मित्यादेर्विषयत्वे तत्रांबरस्यैव सर्वाधारत्वश्रवणेन सर्वाधारांबराधारत्वस्य तत्राश्रवणात्कथं विषयवाक्यस्थसाधकोक्तिरिति । मिलित्वा सर्वस्य विषयत्वाद्विषयवाक्यस्थेत्युक्तिरित्युक्तावपि द्वितीये तदुत्तरवाक्यस्थेत्युत्तरग्रन्थासङ्गतिः । तस्य मध्यवाक्यस्थसाधकत्वात् । मैवम् । भाष्याद्युक्तेस्सङ्गत्याद्यर्थतयोपपत्त्या चन्द्रिकोक्तस्यैव विषयत्वात् । तत्रांबरे सर्वाधारत्वमात्रश्रवणेऽपि सर्वाधारांबरस्याक्षराधारकत्वविवक्षयाऽक्षर-स्यास्थूलमित्यादिना महिमोक्तेरंबरांताधारत्वं तत्राभिमतमिति विषयवाक्यस्थेत्युक्तम् । यद्वा विषयवाक्यस्थेत्यस्याद्यंतविषयवाक्यस्थेत्यर्थः । आदावंबरे सर्वाधारत्वस्यांतेऽक्षरेंबराधारत्वस्य श्रवणात् । अत्रांतपदं प्रकृतिद्वाराऽक्षरस्य सर्वाधारतोक्त्यर्थमंबरस्य चित्प्रकृतित्वोक्त्यर्थं च । तेनांतपदं व्यर्थमिति कस्यचिद्दूषणमलग्नकं ध्येयम् । ''द्वितीये तदुत्तरवाक्यस्थे''त्यस्य त्वादिवाक्यापेक्षयोत्तरवाक्यस्थेत्यर्थः । ''एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत'' इत्युत्तरवाक्ये सा च धृतिराज्ञामात्रेणोच्यत इत्यर्थः । ''अन्यभावव्यावृत्ते'' रित्यस्याद्यत्वमाशंक्यांत्यत्वमुपपादयति ।। तृतीय इति ।।

**पाण्डुरङ्गि** – तेनैवेति ।। तृतीयसूत्रेणैवेत्यर्थः । अत्र तेनेत्यस्योद्धारादित्यनेनान्वयः ।।

## तात्पर्यचन्द्रिका

अन्ये तु । वर्णा एवाक्षरम् । अक्षरशब्दस्य तत्र रूढेः । न च वर्णेष्वाकाशस्योतत्वाद्ययोगः । सर्वस्यापि रूपधेयस्य गौरयं वृक्षोऽयमिति नामधेयानुविद्धतया भानात् । तथा च वर्णमात्रमेवाक्षरमिति पूर्वः पक्षः । भाष्ये "ॐकारोक्षर" मित्युक्तिस्त्वोंकारस्य सर्ववर्णात्मकत्वश्रुतेः । सिद्धांतस्तु पृथिव्यादेर्भूताकाशांतस्य विकारजातस्य धारणात् न क्षरतीत्यादिव्युत्पत्तिसम्भवाच्च निर्विशेषं ब्रह्मैवाक्षरमित्याहुः । तन्न । गौरित्यादौ गोत्वादिजातिसम्भेदस्य गोशब्दादिवाच्यत्वस्य वा भानेऽपि "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे"त्यादिश्रुत्युक्तस्याकाशाश्रयत्वस्याभानेन वर्णेषु द्रष्टृत्वादेरसम्भवेन च पूर्वपक्षानुदयात् । उत्तराधिकरणे तु यथेक्षितृत्वश्रवणेऽपि जडप्रकृतेः प्राप्तिस्तथा तत्रैव वक्ष्यते । किं चैवं पूर्वपक्षे पृथिव्यादेर्नामानुविद्धताया आकाशव्यवहितत्वाभावेन श्रुतौ मध्य आकाशोक्तिर्व्यर्था स्यात् ।

**प्रकाशिका –** ॥ अन्येत्विति ॥ भामत्युक्तमनुवदति ॥ वर्णाएवाक्षरमिति ॥ रूढेरिति ॥ "अक्षरसमाम्नाय" इत्यादौ प्रसिद्धत्वात् । ब्रह्मणि त्ववयवप्रसिद्ध्या यौगिकः । अवयवप्रसिद्धेश्च समुदायप्रसिद्धिरूपरूढिर्बलीयसीति भावः ॥ रूपधेयस्येति ॥ रूप्यते निरूप्यते इत्यभिधेयमिति कल्पतरूक्त्याऽभिधेयवाचिरूपशब्दात् "भागरूपनामभ्योधेय" इति स्वार्थे धेयप्रत्ययः । वाच्यार्थस्येत्यर्थः ॥ अनुविद्धतयेति ॥ तादात्म्येनेत्यर्थः । ननु परभाष्ये "ॐकार एवेदं सर्वमित्यादौ च श्रुत्यंतरे वर्णस्याप्युपास्यत्वसर्वात्मत्वावधारणा"दित्युक्त्योंकाररूपवर्ण एवाक्षरमिति प्रतीतेर्वर्णमात्रमेवेति कथमुच्यत इत्यतो "नामानि चोंकारात्मकानि । तद्व्याप्तत्वा"दित्यादिना भामत्युक्तमेवाशयमाह ॥ भाष्य इति ॥ "तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णानि । एवमोंकारेण सर्वा वा"गिति श्रुतेरित्यर्थः । तथाच "ॐकार एवेदं सर्व"मिति श्रुत्यंतर ॐकारस्य सर्वात्मकत्वश्रवणात् "ॐकारेणैवे"ति श्रुत्या सर्ववर्णात्मकत्वात् इह च श्रुतौ पृथिव्याद्यंबरांतसर्वतादात्म्येनोतप्रोतपदाभ्यां श्रुतमक्षरं वर्णा एवेति अक्षरे विषयवाक्यश्रुतसर्वात्मकत्वं वर्णेषूपपादयितुं वर्णानां सर्वात्मकत्वे

स्पष्टश्रुतेरभावादोंकारस्य सर्ववर्णात्मकत्वं श्रुत्यंतरसिद्धं हृदि सिद्धवत्कृत्योंकारस्य सर्वात्मकत्वे ''ॐकार एवेदं सर्व''मिति भाष्ये श्रुतिरुक्ता । नत्वत्रोंकार एवाक्षरमित्युपेत्येति भावः ॥

विकारजातस्येति ॥ सर्वस्य ब्रह्मविकारत्वाद्ब्रह्मण्येवाकाशादेरोतत्वं युक्तम् । न तु वर्णेषु । न च नामधेयात्मकं रूपधेयमित्युक्तत्वाद्वर्णेष्वपि तद्युक्तमिति वाच्यम् । स्वरूपभेदादुपाय-भेदादर्थक्रियाभेदाच्च तयोर्भेदात् । तथाहि । शब्दत्वसामान्यात्मकानि श्रोत्रग्राह्याण्यर्थ-प्रत्ययार्थक्रियाणि नामधेयानि । रूपधेयानि तु घटादीनि घटत्वसामान्यात्मकानि चक्षुरादीन्द्रियग्राह्याणि जलाधारप्रावरणाद्यर्थक्रियाणीति तयोर्भेदाद्वर्णेष्वाकाशादेरोतत्वाद्ययोगा-द्ब्रह्मैवाक्षरमित्याहुरित्यर्थः । जातिसम्भेदस्य जातितादात्म्यस्येत्यर्थः । नन्वत्राप्योतप्रोतपदाभ्यां पृथिव्याद्यंबरांतसर्वात्मकत्वमेवोच्यते । न तु तदाश्रयत्वमिति चेन्न । सूत्रे धृतेरिति धृतिपदायोगात् । ''पृथिव्यादेराकाशांतस्य धारणा''दिति त्वदीयभाष्याद्युक्त्ययोगाच्च । न चात्राक्षरस्य सर्वात्मकत्वं भ्रांत्वाऽक्षरस्य वर्णत्वं शंक्यत इति युक्तम् । तथात्वे गौरयं वृक्षोयमित्यादौ रूपधेयस्य नामधेयसंभेदेन भानेऽपीह सर्वाधारत्वमेवोच्यते । नत्वंबरांत-संभेदोऽक्षरस्योच्यते । येन नामरूपसम्भेदोपपादनं संगच्छेतेत्येव समाधिर्वाच्यः । न तु नामरूपभेदसमर्थनेन समाधिर्वाच्यः । एतेन भाष्ये ॐकार एवेदं सर्वमिति सर्ववर्णात्मकतया श्रुत्यंतरसिद्धोंकारस्य सर्वात्मकत्वोक्तिरपि व्यधिकरणा । विषयवाक्येऽक्षरस्य सर्वाभेदा-श्रवणादित्युक्तं भवति । नन्वत्र द्रष्टृत्वादिना वर्णानामक्षरत्वशङ्कानुपपत्तावुत्तराधिकरणे तदैक्षतेतीक्षणश्रवणेऽपि कथं प्रधानमिति पूर्वपक्ष इत्यत आह ॥ उत्तरेति ॥ अंतर्याम्यधिकरणे द्रष्टृत्वादिश्रवणेऽपि प्रधानमिति पूर्वपक्षकरणमनेन न विरुध्यत इत्येतत्तत्रैवोक्तमस्माभिः । अक्षरस्य वर्णत्वेन पूर्वपक्षे दोषांतरमाह ॥ किं चैवमिति ॥ गौरयं वृक्षोयमित्यादौ नाम्नो रूपात्मना भानेनात्राक्षरशब्दितेषु यद्भूतमित्यादिना सर्वात्मकत्वकथनं यद्यभिमतं तदा ''ॐकार एवेदं सर्व''मिति श्रुताविव ''यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते तदक्षर ओतं च प्रोतं चे''त्येव साक्षात्सर्वसम्भेदोऽक्षरेऽभिधीयेत । मध्ये आकाशप्रणाड्या तदभिधानं व्यर्थमिति श्रुतहानि-स्स्यादित्यर्थः । व्यर्थेत्युपलक्षणम् । वक्ष्यमाणदिशा भूतभवद्भविष्यदाद्योतत्वस्यानित्या-काशेऽनुपपत्त्या विरुद्धार्थाच स्यादित्यपि ध्येयम् ॥

**पाण्डुरङ्गि** – अन्येत्विति ॥ अत्र रूप्यते इति । रूप्यत इति रूपमभिधेयम् । स्वार्थे धेयप्रत्यय इति बोध्यम् । अत्र वर्णा एवेत्यनेन न प्रधानजीवयोर्व्यावृत्तिः । किंतु भाष्य ॐकारमात्रोक्तेस्तस्यैव व्यवच्छेद इति ध्येयम् । रूपधेयस्य रूपात्मकप्रपञ्चस्येत्यर्थः । तर्हि भाष्य ॐकारमात्रस्य पूर्वपक्षनिविष्टत्वोक्तिः कथमित्यत आह ॥ भाष्य इति ॥ तन्नेति ॥ अक्षरत्रयमीरितमित्यादौ यथाऽक्षरशब्दवाच्यत्वं वाऽक्षरत्वजात्याधारत्वं प्रतीयते तथा गौरित्यत्रापीत्यर्थः । जातिसंभेदः जातिसंबन्धः ।

## तात्पर्यचन्द्रिका

सिद्धांतोऽप्ययुक्तः । ''आकाश एव तदोतंचे''ति पूर्ववाक्ये त्रिकालवर्तिवस्त्वाश्रयत्वेनोक्तस्याकाशस्यानित्यभूताकाशतायाः, तथा अवाच्ये निर्विशेषे ब्रह्मणि नक्षरतीति त्वदुक्तस्य योगस्य, तथा ''एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंती''ति श्रुत्युक्तस्य वाच्यत्वस्य द्रष्टृत्वादेश्चायोगात् । आद्यसूत्रे धृतिपदं चायुक्तम् । त्वन्मते भ्रमाधिष्ठानत्वादन्यस्य धारणस्याभावात् । तस्य च ''आकाश एव तदोत''मित्यादिप्रक्रमानानुगुण्यात् । नह्याकाशे त्रैकालिकं वस्त्वध्यस्तम् । द्वितीयोक्तं प्रशासनं चायुक्तम् । यतः –

अध्यस्तस्यांबरांतस्य ह्यधिष्ठानात्मिका चितिः ।
न शास्त्री नहि शुक्त्यादि शास्ति रूप्यादिकं क्वचित् ॥ १ ॥

न हीह सविशेषं ब्रह्म प्रतिपाद्यम् । न च निर्विशेषे व्यावहारिकमपि शास्तृत्वमस्ति । प्रातिभासिकंतु प्रधानेऽपि । यच्चोक्तं चेतनधर्मः शास्तृत्वं चेतने ब्रह्मण्येवारोप्यते । नत्वचेतने प्रधाने । न हि राजत्वं राजपरिवारोपेतेऽमात्य इव कुड्येप्यारोप्यत इति । तन्न । परमतेऽधिष्ठानाध्यस्तयोः सादृश्यनियमाभावात् । अमात्ये राजसादृश्यवन्निर्विशेषे ज्ञातृरूपचेतनसादृश्याभावाच्च । शासनकर्तृत्वरूपशास्तृत्वादेर्जडांतःकरणधर्मत्वेन जडस्य प्रधानस्यैव तत्सदृशत्वाच्च । यच्चोक्तं यदन्यद्ब्रह्मणोऽक्षर-

**शब्दवाच्यमिहाशङ्क्यते प्रधानजीवादितद्भावादिदमक्षरं व्यावर्तयति श्रुतिः । द्रष्टृत्वादेः प्रधानादावसम्भवादिति तृतीयसूत्रार्थ इति । तन्न । द्रष्टृत्वादेरिवांबरांतधृतिप्रशासनयोरपि वर्णादावसम्भवतोरनेनैव सूत्रेण विवक्षासम्भवेन पूर्वसूत्रयोर्वैयर्थ्यात् । अक्षरप्रकरणस्थं ''नान्यदतोस्ति द्रष्टृ''त्यादि वाक्यं त्वन्यत्र व्याख्यातम् । अत्रापि परमतेऽन्यभावव्यावृत्तेरित्यनेन जीवाद्भेदोक्तेरभेदनिषेधः स्पष्ट एव ।**

**प्रकाशिका** – अनित्येति ।। आत्मन आकाशस्सम्भूत इत्यादिश्रुत्या नवियदश्रुतेरिति वक्ष्यमाणदिशा च भूताकाशस्यानित्यत्वादिति भावः ।। त्वदुक्तस्ययोगस्येति ।। ''नक्षरत्यश्नुते चेति नित्यत्वव्यापित्वाभ्यां परमेव ब्रह्मे''ति परभाष्येऽभिधानादिति भावः । सूत्रार्थानामपि प्रत्याह ।। आद्येति ।। श्रुतावोतपदास्वारस्यं चाह ।। तस्य चेति ।। भ्रमाधिष्ठानत्वस्येत्यर्थः ।। वस्त्वध्यस्तमिति ।। येनाक्षरे ओतमित्यत्राप्योतशब्दस्याध्यस्तत्वमर्थस्स्यादिति भावः ।। द्वितीयेति ।। ''आद्यसूत्रेंऽबरांतधृत्या वर्णानामक्षरत्वं निरस्तम् । साचप्रशासनादिति सूत्रे जडप्रकृतेरक्षरत्वं निरस्यते । तथाहि । अंबरांतधृतेर्विश्वोपादाने प्रधानेऽपि सम्भवात्प्रधानमेवाक्षरमिति शङ्कायां साच धृतिः परमात्मन एव कर्म । एतस्य वा अक्षरस्य प्रशासने गार्गी इत्यादिनाऽऽज्ञापरपर्यायस्य प्रशासनस्य श्रवणात् । नह्यचेतनस्य प्रशास्तृत्वं युक्तमित्यर्थ उक्तः । तत्र प्रधान इव निर्विशेषब्रह्मण्यपि प्रशासनं न युक्तम् । सविशेषं तु नात्र प्रतिपाद्यम् । पादासङ्गतेः । स्थौल्यादिनिषेधानुपपत्तेश्चेति भावः । शास्तृत्वं किं तात्त्विकमुत व्यावहारिकमथ प्रातिभासिकम् । आद्यद्वयं निराह ।। न चेति ।। अपिपदेन तात्त्विकं तु शङ्कानर्हमिति समुच्चीयते । निर्विशेषत्वादित्यर्थः । तृतीये तु न प्रधाननिरास इत्याह ।। प्रातिभासिकं त्विति ।। प्रातिभासिकप्रशासनपक्षे कल्पतरूक्तं समाधिमनूद्य निराह ।। यच्चेति ।। एतच्चोपलक्षणम् । यद्यत्र वर्णप्रधानयोः क्रमेण निरासस्तर्ह्यक्षरं प्रशासनादित्येतावन्मात्रोक्तावपि चेतनधर्मेण प्रशासनेन वर्णप्रधानयोर्द्वयोरपि जडयोर्निराससिद्ध्यांऽबरांतधृत्युक्तिर्योगद्वयोक्तिश्च व्यर्था । किं च प्रागुक्तरीत्या प्रकृष्टशासनस्य जीवेऽप्ययोगेनाक्षरं प्रशासनादित्येतावतैव जीवस्यापि निरासादुत्तरसूत्रवैयर्थ्यं चेत्यपि ध्येयम् । एवं वर्णप्रधानयोरक्षरशब्दार्थत्वं व्युदस्य जीवस्याक्षरशब्दार्थत्वं व्युदसितुं प्रधानादिसर्वनिराससाधारणं ''अन्यभावव्यावृत्ते''रिति सूत्रम् । तदर्थमनूद्य निराह ।। यच्चेति ।। अदृष्टं द्रष्टृत्यादिश्रुतिः अचक्षुष्कमश्रोत्रमिति च श्रुतिरित्यर्थः ।

आदिपदेनाचक्षुष्कत्वादेर्जीवेऽसम्भवादिति गृह्यते । यत्त्वत्र ''नान्यदतोऽस्ति द्रष्टृ नान्यदतोस्ति श्रोतृ''त्यादिनाऽऽत्मभेदप्रतिषेधान्न शारीरस्याक्षरशब्दवाच्यत्वमित्युक्तं भाष्ये तदप्ययुक्त-मित्याह ।। अक्षरेति ।। अन्यत्र न्यायामृते द्वितीयपरिच्छेदे । अतो नेदं वाक्यं निर्विशेषबोधकमित्यर्थः ।

**पाण्डुरङ्गि** – भूतं भवद्भविष्यच्चेत्यनेन लब्धमर्थमाह ।। त्रिकालेति ।। ननु शास्तृत्वादिकं निर्विशेषस्य यद्यपि न सम्भवति । तथापि सविशेषे तूपपद्यत एव । तदेवात्र प्रतिपाद्यमित्यत आह ।। नहीति ।। तथात्वे पादसङ्गतिर्न स्यादिति भावः । ननु च न पादासङ्गतिः । निर्विशेषस्यैव शास्तृत्वादिना प्रतिपाद्यत्वाङ्गीकारात् । न च तस्य शास्तृत्वानुपपत्तिः । पारमार्थिकशास्तृत्वस्य निर्विशेषेऽभावेपि व्यावहारिकशास्तृत्वस्य तत्र सत्त्वादित्यत आह ।। न च निर्विशेष इति ।। ननु व्यावहारिकशास्तृत्वस्य निर्विशेषेऽसम्भवेपि प्रातिभासिकं शास्तृत्वं निर्विशेषस्य सम्भवतीत्यत आह ।। प्रातिभासिकमिति ।। तथाच न प्रधानपक्षप्रतिक्षेपकतेत्यर्थः । ननु प्रातिभासिकमपि शास्तृत्वं ब्रह्मण्येव । न प्रधाने । तथाच युक्तस्तेन प्रधानपक्षनिरास इत्याशङ्कते ।। यच्चेति ।। ननु तथापि नान्यदतोस्ति द्रष्टृ नान्यदतोस्ति श्रोतृ नान्यदतोस्ति मन्तृ नान्यदतोस्ति विज्ञात्रित्यादिनाऽत्मभेदनिषेधान्न शारीरस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वम् । अचक्षुष्कमश्रोत्रमवागमन इति चोपाधिमत्ताप्रतिषेधात् । न हि निरुपाधिकः शारीरो भवतीति परकीयभाष्ये । तथा भामत्यां तृतीयसूत्रेण जीवस्याक्षरता निषिध्यते । नान्यदित्यादिकया श्रुत्या आत्मभेदः प्रतिषिध्यते । तथाचोपाधिभेदभिन्ना जीवा निषिद्धा भवन्ति । अभेदाभिधानात् । किंच न शारीरस्याक्षरशब्दवाच्यता । अक्षरस्य चक्षुराद्युपाधिं वारयंत्यचक्षुष्कमित्यादिश्रुति-रौपाधिकस्य जीवस्याक्षरतां निषेधतीत्युक्तत्वान्नास्याः श्रुतेर्द्रष्टृत्वादिमात्रे तात्पर्यं किं तु शारीरस्यात्माभेदनिरासे तात्पर्यमित्यत आह ।। अक्षरप्रकरणस्थमिति । अन्यत्रेति ।। न्यायामृते इत्यर्थः ।

## तात्पर्यचन्द्रिका

**एतेन यत्केचिज्जडं प्रधानमेवाक्षरमिति पूर्वपक्षयंति तदपि निरस्तम् । जडस्य शास्तृत्वद्रष्टृत्वादेरयोगेन पूर्वपक्षानुदयात् । यच्च श्रुतावाकाशशब्दः प्रधानपर इत्युपेत्य**

सूत्रेंऽबरशब्दो भूताकाशपरः । तथाचांबरस्य अंतः अवधिः कारणमिति अंबरांतपदं प्रधानपरमित्युक्तम् । तन्न । सूत्रे श्रुत्यनुसारित्वस्यैव न्याय्यत्वात् । अंतपदंतु अम्बरं अन्तो यस्येति व्युत्पत्त्या पृथिव्यादिपरं सत् तस्यापि प्रकृतिद्वारा ब्रह्मैवाश्रय इति सूचयितुम् । तथाच ''पृथिव्यादिप्रकृत्यंत''मिति स्मृतिरपि सूत्रेणानुसृता भवति ।

टीकाक्षरार्थस्तु ॥ सोमं राजानं जुह्वति । तं देवा भक्षयंतीत्यादिवदिति ॥ यथा ''सोमं राजान''मित्यादौ हूयमानभक्ष्यमाणसोमलताभिमानित्वाच्चन्द्रे हूयमानत्वादि-व्यपदेशः तथाऽत्रापि सोममभिषुणोतीति वाक्यविहिताभिषवयुक्तसोमलताभिमानि-त्वाच्चन्द्रेऽभिषूयमाणत्वव्यपदेश इत्यर्थः । ''एकोदेवो बहुधा निविष्टः'' इत्यस्य शेषभूतं वाक्यं ''यदाभारं तंद्रयते सभर्तुम् । निधायभारं पुनरस्तमेती''ति । तस्यार्थमाह ॥ सच यदा तं भारं भर्तुं नेच्छतीति ॥ ''यस्मिन्निदं संचविचैति-सर्व''मिति श्रुतौ यच्छब्दस्य ''यतः प्रसूते''त्यादि यच्छब्दवत् ''तदेव ब्रह्म परमं कवीनां'' इत्युत्तरवाक्यस्थेन तच्छब्देनान्वय इत्याह ॥ तदेव ब्रह्मेत्यर्थ इति ॥ श्रुतावेधीत्यस्यावर्धतेत्यर्थः । मध्यम इत्याद्युक्तमिति ॥ श्रुतौ मध्यमादिशब्दः स्थौल्यादेरप्युपलक्षक इत्यर्थः ॥ तमोवाय्वादीनां सर्वात्मनेति ॥ ''अदुःखमसुख'' मित्यादौ यथाऽसुखमित्यनेन बाह्यसुखनिषेधेऽप्यदुःखमित्यनेन दुःखमात्रनिषेधः तथाऽत्राप्यस्थूलमित्यादौ प्राकृतस्थौल्यादिनिषेधेऽप्यतमोऽवाय्वित्यादौ सर्वात्मना तमआदेर्निषेध इत्यर्थः ॥ छ ॥ अक्षराधिकरणम् ॥ ३ ॥

**प्रकाशिका** – ॥ एतेनेति ॥ अस्थूलमनण्वित्यादिनोक्तमक्षरं प्रधानजीवान्यतरदुत ब्रह्मेति संशये अक्षरशब्दस्य वर्णेषु रूढिसम्भवेऽपि ''अह्रस्वमदीर्घ''मित्यादिनिषेधायोगेन वर्णानां शङ्कानर्हत्वात् । प्रधानस्य च सर्वविकारास्पदत्वेनाकाशपृथिव्यादिधारणसम्भवात्प्रधानं वा चित एवाचिद्वस्त्वाधारत्वसम्भवाज्जीवो वेति प्राप्ते न तावत्प्रधानम् । त्रिकालवर्तिसकलवस्त्वा-धारतयोच्यमानस्य भूताकाशत्वायोगेनाव्याकृतापरनामकप्रधानपरत्वात् ''अक्षरे गार्ग्याकाश ओत'' इत्युक्तप्रधानाधारत्वस्य प्रधानेऽनुपपत्तेः । नापि जीवः । द्वितीयसूत्रोक्तस्याप्रति-हताज्ञापरनामकस्य प्रशासनस्य जीवेऽनुपपत्तेः । अन्यभावस्य परमात्मनोऽन्यत्वस्यादृष्टं

द्रष्ट्रित्यादिनाऽक्षरस्य व्यावृत्तेश्च परमात्मैवाक्षरमिति सिद्धान्तः । तत्र दूष्यांशमनुवदति ॥ जडमिति ॥ एवकारः परोक्तवर्णमात्रव्यावर्तकः । एतेनेत्युक्तमेवाह ॥ जडस्येति ॥ सूत्रार्थं च प्रत्याह ॥ यच्चेति ॥ श्रुत्यनुसारित्वस्येति ॥ श्रुताविव सूत्रेप्यंबरशब्दस्यैव प्रधानपरत्वं वाच्यमित्यंतपदं व्यर्थमित्यर्थः । आकाशस्य चित्प्रकृतित्वपक्षेप्येष दोषस्तुल्य इत्यत आह ॥ अन्तपदं त्विति ॥ तस्यापि पृथिव्यादेरपि ।

पृथिव्यादिप्रकृत्यंतं भूतं भव्यं भवच्च यत् ।
विष्णुरेको बिभर्तीदं नान्यस्तस्मात् क्षमो धृतौ ॥

इति स्कान्दस्मृतिरित्यर्थः । एतेनाक्षरं प्रणवजीवान्यतरदिति प्राप्तेऽबरांतधृत्यादेश्शिव-धर्मत्वाच्छिव एवेति कस्यचित्प्रलपनं प्रत्युक्तम् । द्रष्टृत्वादेरयोगेन पूर्वपक्षानुदयात् । भाष्योक्तश्रुत्यादिनांऽबरांतधृत्यादेर्विष्ण्वेकनिष्ठत्वेन शिव इति सिद्धान्तानुदयाच्चेति । टीकायां दुर्गमानि कानिचिद्वाक्यानि व्यनक्ति ॥ टीकेति ॥ भाष्ये शेषस्यानुदाहृतत्वात् सच यदेत्यादिकस्यार्थ इत्यज्ञानादाह ॥ एकोदेव इति ॥ भाष्येऽनुक्तमपि तदेव ब्रह्मेति कस्मादुच्यत इत्यत आह ॥ यस्मिन्निति ॥ टीकायामनुक्तेरेधीत्यस्यासभुवीत्यस्य रूपत्वाद्भवेत्यर्थत्वेऽन्वया-योगादाह ॥ श्रुताविति ॥ एधवृद्धावित्यस्य रूपमिति भावः ॥ श्रुतौ मध्यमादिशब्द इति ॥ ''अस्थूलोऽनणुरमध्यमो मध्यम'' इति श्रुतावित्यर्थः ॥ छ ॥ अक्षराधिकरणम् ॥ ३ ॥

**पाण्डुरङ्गि** – सोमं राजानं जुह्वतीत्यादेः प्रातीतिकार्थमभ्युपेत्य व्याचष्टे ॥ यथेति ॥ यद्यपीदं वाक्यं चन्द्रलोकगतकर्म जीवपरम् । तथापि कर्मजीवस्य सोमे प्रवेशानङ्गीकारा-दधिष्ठानत्वेन चन्द्रस्यापि विवक्षितत्वादियमुक्तिरिति ध्येयम् । टीकायामेधीत्यस्याव्या-ख्यातत्वात्स्वयं व्याख्याति ॥ श्रुताविति ॥ अक्षराधिकरणम् ॥ ३ ॥

## सदधिकरणम्

**॥ ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ अत्रोभयत्रप्रसिद्धिः ''कारणत्वसाम्या-द्विष्णोरचेतनप्रकृतेश्च सदेवेत्यादिसृष्टिस्थानं साधारण''मिति न्यायविवरण एवोक्ता । तत्र यद्यपि यत्कारणत्वसामान्यं ब्रह्म प्रधानसाधारणं न तन्मात्रमिह वाक्ये भाति ।**

''तदैक्षत तत्तेजोऽसृजते''त्यत्र चेतनमात्रासाधारणस्रष्टृत्वरूपविशेषस्यैव ''बहुस्या'' मित्यत्र च जडमात्रासाधारणोपादानत्वरूपविशेषस्यैव भानात् । तथापि यदा स्रष्टृत्वविकारयोरविरोधायान्यतरानुसारेणान्यन्नेयमिति निश्चयः । न त्वेतदनुसारेणैतन्नेयमिति विशेषनिश्चयः तदा ''सदेव सोम्येदमग्र आसी''दित्यादिवाक्येन प्रतीतनियतपूर्वसत्त्वरूपकारणत्वमात्रनिश्चयात्तद्विशेषस्य चानिश्चयात्तस्य साधारण्यम्। एवं च भूमाधिकरणीयन्यायविवरणस्थमङ्गपदमिहापि न्यायविवरणेऽनुषंजनीयम् । अत एव न्यायविवरणे टीकायां च ''सदेव सोम्येत्यादी''त्युक्तम् । यद्यप्यबाध्यत्वादिवाची सच्छब्दः स्वत एवोभयत्र प्रसिद्धः । निर्दोषत्वादिवाची तु कारणत्वमुखेनापि न जडप्रकृतौ प्रसिद्धीकर्तुं शक्यः । यथाचाबाध्यत्वादि ब्रह्मप्रधानाभ्यामन्यत्राप्यस्ति तथाकारणत्वमप्यदृष्टादौ । तथापि सदेवेत्यादि वाक्य एकव्यक्तेरेव सर्वकारणता प्रतीतेरदृष्टादिव्यक्तीनां च भिन्नत्वाद्व्यक्त्यैक्येन वा उपादानत्वकर्तृत्वयोरन्यतरत्वेन वा विशिष्टस्य कारणत्वस्य द्वयमात्रसाधारण्यादबाध्यत्वाद्यर्थस्य च सच्छब्दस्य सर्वसाधारण्यात्कारणत्वमुखेनैवोभयत्र प्रसिद्धिरुक्ता । यद्यपि च ''आकाशादेव समुत्पद्यंत'' इत्यादावप्यापाततः साधारणस्य कारणत्वमात्रस्यैव धीः । तथापि सच्छब्दस्य स्वतोर्थविशेषे प्रसिद्ध्यभावेन कारणत्वपारतंत्र्यवदाकाशशब्दस्य स्वतोऽर्थविशेषे प्रसिद्धत्वेन तत्परतंत्रत्वस्याभावात् प्रत्युत कारणत्वस्यैव तत्परतंत्रत्वान्नाकाशादिशब्दानां कारणत्वमुखेनोभयत्रप्रसिद्धत्वापातः ।

न च यस्य कारणत्वस्य साधारण्यात्सच्छब्दस्य साधारण्यं तस्यैव कारणत्वरूपलिङ्गस्य समन्वय उच्यताम् । सन्नामसमन्वयस्त्वर्थात् सिध्यत्विति वाच्यम् । प्रथमश्रुतस्य सच्छब्दस्यातिक्रमायोगात् । अक्षरनामसमन्वयोक्त्या नाम्न एव बुद्धिस्थत्वाच्च । श्रुतिरूपप्रबलनामसमन्वयस्यार्थात् सिद्धिर्दुर्बललिङ्गसमन्वयस्य तु साक्षादुक्तिरित्यस्यान्याय्यत्वाच्च । सन्नामसमन्वयोक्तौ ''सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः सता सोम्य तदा सम्पन्नो भवति सति सम्पद्य न विदुः स त आगत्य न

विदु''रित्यादीनां सच्छब्दयुक्तानां सर्वाधारत्वसुषुप्तिगम्यत्वादिगुणप्रतिपादकानामनेकेषां प्रकरणानां ब्रह्मणि समन्वयस्यार्थात् सिद्ध्या सन्नामसमन्वये फलाधिक्याच्च। अत एवानुव्याख्याने ''स्थानं लिङ्गमनुग्रह'' इति न्यायविवरणे च ''सदेव सोम्येत्यादिसृष्टिस्थान''मित्यनेकप्रकरणवाचिस्थानपदप्रयोगः ।

भाष्ये ''तच्च सत् ''इति सच्छब्दप्रयोगस्तु सच्छब्दस्य साक्षात् समन्वयोक्त्यभिप्रायेण । अनुव्याख्याने पादार्थोक्तिदशायां ''लिङ्गनाम्ना''मिति लिङ्गनामग्रहणमप्यस्मिन्पादे पूर्वपादद्वय इव लिङ्गनाम्नोरेकैकस्यैव समन्वय इति नियमव्यवच्छेदार्थम्। न तु स्थानसमन्वयव्यवच्छेदार्थम् । स्थानसमन्वयस्य साक्षात्त्वव्यवच्छेदार्थं वा । एवं चाधिकरणान्तरेष्वपि तत्तदधिकरणसमन्वेतव्येन नाम्ना लिङ्गेन वा युक्तानां स्थानानां समन्वयोप्यर्थात्सिद्ध इति द्रष्टव्यमिति प्रदर्शनार्थं तच्चोक्तम् । यद्वाऽन्यत्र समन्वेतव्यशब्दयुक्तानेकावान्तरप्रकरणाभावादत्र च तत्सद्भावादिह स्थानसमन्वयोक्तिः । अथवाऽत्र सदात्मादिनानाशब्दयुक्तानां विप्रकीर्णानां ''सदेव सोम्येदमग्र आसीत् आत्मावा इदमेक एवाग्र आसी''दित्यादिसृष्टिप्रकरणानां समन्वयसिद्धेरन्यत्र तदभावादिह स्थानसमन्वयोक्तिः । सिद्धे च स्थानसमन्वये तदेकदेशयोः प्रकरणवाक्ययोरपि स कैमुत्यन्यायसिद्ध इति न ते पृथगुक्ते । समाख्यायास्तु ब्रह्मपरत्वस्यानिर्णये समाख्यात्वस्यैवायोगात् निर्णये च निर्णीतसमन्वयस्य निर्णेतव्यनामादिसमन्वयाधीनत्वायोगान्न सा पृथगुक्ता । केचित्तु अनुव्याख्यानादौ स्थानपदं सृष्टिकालेऽवस्थानवाचीत्याहुः । तस्माद्युक्ता पादसङ्गतिः । पूर्वाधिकरणवैषम्यप्रदर्शनेन वा पूर्वाधिकरणसिद्धांतन्यायेन वांऽबरांतधृतिरूपपूर्वहेत्वाक्षेपेण वा पूर्वपक्षोत्थानादवांतरसङ्गतिः । त्रेधा पूर्वपक्षोत्थानं चानंतरमेव दर्शयिष्यते । अत्र ''सदेव सोम्येदमग्र आसी''दिति श्रुतं सत् किं जडप्रकृतिः किं वा ब्रह्मेति चिन्ता । तदर्थं ''तदैक्षते''ति श्रुतं सत ईक्षणं किं गौणं किं वा मुख्यमिति ॥ तदर्थं ''बहुस्या''मित्युक्तो बहुभावः किं विकारः किं वा स्वरूपबहुत्वमिति ।

**प्रकाशिका** – ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ।। ''सदेव सोम्येत्यादिसृष्टिप्रतिपादकस्थानगतसन्नाम्नो ब्रह्मप्रधानयोः कारणत्त्वसाम्येन साधारणस्ये''त्यादिटीकोक्तेर्मूलं परिष्कर्तुमाह ।। अत्रोभयत्र प्रसिद्धिरिति ।। नास्माभिरपूर्वतया वाच्येत्येवकारार्थः । तत्र प्रतीतानुपपत्तिनिरासेन तत्समर्थनमात्रं कार्यमिति भावः । यद्वा नात्र टीकायां सन्नाम्न इत्युक्तेस्तत्र तु स्थानमित्युक्तेर्न मूलमूलिभावः इति शङ्क्यम् । वक्ष्यमाणदिशैकार्थ्यादिति भावेनैवकारः । न्यायविवरणटीकायां ''यद्यपि निमित्तत्त्वमुपादानत्त्वं च विलक्षणम् । तथापि कारणत्त्वमात्रं विष्णोरचेतनप्रकृतेश्च समम् । महदादीनां कारणत्त्वेऽपि न सर्वकारणत्त्वम् ।कारणत्त्वं चात्र स्थाने सतः प्रतीयते । तदैक्षतेति प्रकृतौ विरुद्धमिति चेत् बहुस्यामिति विष्णोरपि साम्यमेवे''ति ग्रन्थेन ''कारणत्त्वसाम्या''दित्येतदाक्षिप्य समाहितम् । तदस्पष्टत्त्वाद्विवरीतुं शङ्कोत्तरे आह ।। तत्र यद्यपीति ।।तत्र न्यायविवरणे । साधारणं अभिमतमिति शेषः ।। अनुषंजनीयमिति ।। अज्ञानां कारणत्वसाम्यात्साधारणमित्यनुषंजनीयमित्यर्थः ।। अत एवेति ।। नियतपूर्ववृत्तित्वरूपकारणत्वस्य विवक्षितत्वादेवेत्यर्थः । ''स्थानमिति स्थानेऽनुवर्तमानस्य सन्नाम्नो विवक्षितत्वात् । तथाच संक्षेपे सोऽक्षरस्सन् हृदब्जग इति । सतस्स्रष्टृत्वमित्यादि भाष्येचे''ति न्यायविवरणटीकादिरीत्या स्थानपदेन सन्नामग्रहणमुपेत्य शङ्कते ।। यद्यपीति ।। ननु नाबाध्यत्वमेव सत्त्वम् । किन्तु निर्दोषत्वाद्यपि । तच्च न स्वत उभयत्र प्रसिद्धमिति वा । अबाध्यत्वं पूर्वोत्तरकोटिद्वयादन्यत्र वियदादावपि सत्त्वाद्वा कारणत्वमुखनिरीक्षणमावश्यकमित्यतः क्रमेण द्वयमपि निराह ।। निर्दोषत्वेति ।। विशिष्टस्येति ।। कारणत्वमात्रं सन्नाम्नो नोभयत्र प्रसिद्धिसम्पादकम् । किंत्वेकव्यक्तित्वे सति करणत्वं वा उपादानत्वकर्तृत्वान्यतरत्वे सति कारणत्वं वा तथा । तादृशं च नातिप्रसक्तमित्यर्थः । नन्वेतदपि महत्त्वत्वादावतिप्रसक्तमिति चेन्न । सच्छब्दार्थे प्रतीयमानसर्वकारणत्वस्य तत्राभावात् । कारणत्वपदेनोक्तविशेषणविशिष्टस्य सर्वकारणत्वस्याभिमतत्वादिति न्यायविवरणटीकायां स्पष्टत्वादिति भावः । एतेन टीकास्थकारणत्वशब्दस्यैवमेवार्थो ध्येय इत्युक्तं भवति । अतिप्रसङ्गमाशंक्य निराह ।। यद्यपि चेति ।। आपातत इति ।। विमर्शे सति तस्य कर्तृत्वरूपत्वात्पूर्वपक्षे चोपादानत्वरूपत्वादिति भावः । न्यायविवरणटीकायां च सदेवेति वाक्योपादानस्य कृत्यांतरशंकापूर्वं व्यनक्ति ।। न चेत्यादिना ।। अर्थात्सिध्यत्विति ।। एतेन न्यायविवरणेऽनेकप्रकरणजातरूपस्थानोक्तिरार्थिकाभिप्राया । भाष्याद्युक्तसन्नामानुरोधादित्युक्तं भवति । अत एवेति ।। उक्तदिशा

स्थानसमन्वयस्याप्यभिमतत्वादेवेत्यर्थः । ननु स्थानसमन्वयस्यार्थिकत्वे तन्न वक्तव्यं स्यात् । साक्षादन्वीयमानस्यैव वाच्यत्वादित्यतस्तदुक्तेः प्रयोजनमाह ।। एवं चेति ।। अर्थात्समन्वीयमानं स्थानमपीत्यर्थः । अत्रैवैतस्य वचने कोहेतुरित्यतः पक्षांतरमाह ।। यद्वेति ।। पादांत्यप्राणनय-विषयवाक्ये प्राणशब्दयुक्तानेकावांतरप्रकरणमस्तीत्यतः पक्षांतरमाह ।। अथवेति ।। नन्वर्थात्समन्वीयमानस्याप्युक्तौ वाक्यप्रकरणसमाख्यानामप्युपादानप्रसङ्ग इत्यत आह ।। सिद्धेचेति ।। स इति ।। समन्वय इत्यर्थः । ''सदेव सोम्येत्यादिना प्रतिपादितं सृष्ट्यर्थं प्रलये प्रथममवस्थानमित्येके वर्णयंति । एवं तर्हि विषयमालायां लिङ्गमित्येव वक्तव्यम् । सत्यम् । विशेषतस्तदेव प्रदर्शितमित्यदोष'' इति न्यायविवरणटीकोक्तं पक्षांतरमाह ।। केचित्त्विति ।। अत एव ''तत्रान्यत्रप्रसिद्धानां लिङ्गानाम्नां पुनर्हरि''रित्यनुव्याख्याने लिङ्गेत्येवोक्तिरिति भावः । एवमन्तर्भावसङ्गतिपरटीकायामुपपादनसापेक्षपादान्तर्भावांशं समर्थ्येदानीं ''जन्माद्यस्य यत'' इत्यादिटीका फलपरेति भावेन पूर्वानन्तर्ये सङ्गतित्रयमाह ।। पूर्वेति ।। प्रत्युदाहरणरूपावाऽपवादरूपावाऽऽक्षेपिकीवेत्यर्थः । एतेन -

अम्बरावधिकाधारात् प्रणवः पर्युदासितः ।
तद्धचेयमपरं किं वा परमित्यत्र चिंत्यते ।।

इति बुद्धिसङ्गति''रिति कल्पतरूक्तं निरस्तम् । पूर्वत्र द्रष्टृत्वाद्ययोगेन वर्णपक्षस्य प्रत्याख्याततया बुद्धिसन्निध्यभावात् भामत्यादौ वर्णमात्रस्यैव पर्युदस्तत्वेन विशिष्य प्रणवपर्युदासाभावाच्च । परात्परत्वरूपलिङ्गत्यागेन सूत्र ईक्षतिकर्मत्वोक्त्या ''त्रिमात्रेणोमि-त्यनेने''त्युदाहरणस्य सूत्राननुगुणतयाऽन्यस्यैवात्र विषयत्वाच्चेति । ''तत्सदत्र विषय'' इत्यादिविषयसंशयटीकां व्यनक्ति ।। अत्रेति ।। छान्दोग्ये षष्ठेऽध्याये ''सदेवसोम्येदमग्र आसीदेकमेवाद्वितीय''मित्युपक्रम्य ''तदैक्षत बहुस्यां प्रजायेयेति । तत्तेऽजोसृजते''त्यादि श्रूयते। तत्रत्यसच्छब्दो विषय इत्यर्थः । यदि विकारस्तदा बहुभावाद्बाधकादीक्षणं गौणमिति जडप्रकृतिरिति सिध्यति । अन्यथातु विष्णुरिति स्पष्टमिति भावः ।

**पाण्डुरङ्गि** – ।। ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ।। ननु न्यायविवरणादौ सच्छब्दस्य कारणत्वमुखेनोभयत्रप्रसिद्धिव्युत्पादनं व्यर्थम् । अबाध्यत्ववाचिसच्छब्दस्य कारणत्वमुखनिर-

पेक्षस्यैवोभयत्र प्रसिद्धत्वादित्याशङ्कते ॥ यद्यपीति ॥ ननु नात्राबाध्यत्वं सच्छब्दप्रवृत्तिनिमित्तम्। किं तु निर्दोषत्वमेव। तस्य स्वत एवोभयत्र प्रसिद्ध्यभावात् कारणत्वमुखेनोभयत्र प्रसिद्धिव्युत्पादनं सार्थकमित्यत आह ॥ निर्दोषत्ववाचीति ॥ अन्यत्राप्यस्तीति ॥ तथाच संशयकोटिद्वयमात्रसाधारण्याभावान्न तेन रूपेणोभयत्र प्रसिद्धतेति भावः। ननु कारणत्वमुखेन सच्छब्दस्योभयत्र प्रसिद्धत्वे "इति होवाचे"ति वाक्योक्तकारणत्वस्यापि प्रसिद्धाकाशब्रह्मसाधारण्यादाकाशशब्दस्योभयत्र प्रसिद्धत्वापत्त्याऽन्यत्रप्रसिद्धसमन्वयप्रतिपादकपादे निवेशो न स्यादित्यत आह ॥ यद्यपीति ॥ नन्वेवमीक्षतिकर्मेत्यत्र स्थानसमन्वयप्रतिपादकत्वे भाष्ये सच्छब्दोक्तिरयुक्तेत्यत आह ॥ भाष्य इति ॥ ननु तथाप्यत्र स्थानसमन्वयो वक्तुं न शक्यते। अनुव्याख्यान एतत्पादार्थोक्तिदशायां लिङ्गनाम्नां समन्वयस्य प्रतिज्ञातत्वेनावस्थानसमयस्य व्यवच्छेदितत्वादित्यत आह ॥ अनुव्याख्यान इति ॥ ननु लिङ्गनाम्नामित्यनेन केवलनाम्नः केवललिङ्गस्य च समन्वयव्यवच्छेदवत् स्थानसमन्वयव्यवच्छेदोपि विवक्षितुं शक्य एव। अन्यथा नामलिङ्गादावपि सङ्कोचः स्यादित्यरुचेराह ॥ स्थानसमन्वयस्येति ॥ ननु ज्योतिरादौ ज्योतिरादिशब्देन तत्सूक्तानां तत्प्रकरणानां च ब्रह्मपरत्वस्य साधितत्वात्कथमन्यलिङ्गनाम्नोरेकैकस्यैव समन्वय इत्युच्यत इत्यत आह ॥ एवं चेति ॥ ननु प्रधानातिक्रमे कारणाभावात् ज्योतिरधिकरण एव वक्तव्यमेतदित्यरुच्याऽऽह ॥ यद्वेति ॥ आहुरित्यस्वरसोद्भावनम्। तद्बीजं तु सृष्टिकालेऽवस्थानमदृष्टप्रकृत्यादिसाधारणम्।

## तात्पर्यचन्द्रिका

**पूर्वपक्षस्तु। इदं सत्प्रधानमेव। न तु ब्रह्म। "बहुस्यां प्रजायेये"ति सति श्रुतस्य विकारस्य निर्विकारे ब्रह्मणि विरोधात्। युक्तो हि भूमगतयोरुत्क्रमणसर्वगतत्वयोरविरोधः। तयोः प्रतियोग्यनुयोगिभावाभावात्। युक्तश्चाक्षरधर्मयोर्महत्त्वाणुत्वयोरप्यविरोधः। तयोः प्रतियोग्यनुयोगिभावेपि भावरूपत्वेन भावाभावरूपत्वाभावात्। युक्तश्च तद्धर्मयोरेव स्थौल्याभावाणुत्वाभावयोरविरोधः। तयोरप्यभावरूपत्वेन भावाभावरूपत्वाभावात्। युक्तश्च तद्धर्मयोरेवात्तृत्वानशनयोरप्यविरोधः। तयोर्भावाभावरूपत्वेप्यनशनस्यात्तृत्वविशेषाभावरूपत्वेनात्तृत्वसामान्याभावरूपत्वाभावात्।**

**विशेषाभावसामान्ययोश्चाविरोधात् । इह तु ''बहुस्या''मिति श्रुतेन विकारेण ''निर्विकारः सदा शुद्धः'' इत्यादौ श्रुतस्य विकाराभावस्याविरोधो न युक्तः । तस्य विकारसामान्याभावरूपत्वात् । सामान्याभावविशेषयोश्च विरोधात् । नह्यनशन-श्रुतेरिव निर्विकारश्रुतेरपि विशेषनिषेधपरता सिद्धांतिन इष्टा युक्तावा । चेतने विकारसामान्यस्य क्वाप्यदर्शनात् । तदुक्तं न्यायविवरणे ''अन्यस्यान्यभावादृष्टि''रिति ।। न च नानाविधहेयात्मनाविकारो गुणः । येन ''गुणाः श्रुताः सुविरुद्धाश्च देवे सन्ती''त्यादिश्रुत्या विरुद्धोऽप्यङ्गीक्रियते । प्रत्युतानर्थत्वाद्दोष एव ।**

**प्रकाशिका** – ''सत्प्रधानमेवभवे''दित्यादि ''इति भाव'' इत्यंतटीकां विवृण्वन् पूर्वपक्षयति ।। पूर्वपक्षस्त्विति ।। ननु पूर्वत्रेवात्रापि विकारतदभावयोरीश्वरे विरोधसमाधान-सम्भवान्नायं हेतुः पूर्वपक्षप्रापक इत्यतः पूर्ववैषम्येणास्य निरवकाशत्वमाह ।। युक्तोहीति ।। प्रतियोग्यनुयोगिभावेऽपीति ।। निरूप्यनिरूपकभावेपीत्यर्थः ।। अत्तृत्वविशेषेति ।। उपजीवनार्थादनरूपविशेषेत्यर्थः । पनसे चूतत्वाभाव वृक्षत्वयोरिवेति भावः ।। विकारसा-मान्याभावरूपत्वादिति ।। एतेन विकाराविकारयोः प्रतियोग्यनुयोगिरूपत्वादित्यपि सिद्धं बोध्यम् । भाष्यादावविकारे विकारासम्भव इत्येवोक्त्या तदुपपादनस्यास्पष्टत्वादाह ।। तदुक्तमिति ।। लोके क्वचिद्विशेषसामान्याभावयोरविरोधादृष्ट्या विरुद्धत्वमित्येतदित्यर्थः । विस्तृतं चैतत् -

न चेतनविकारस्स्याद्यत्र क्वापि ह्यचेतनम् ।
नाचेतनविकारोऽपि चेतनः स्यात् कदाचन ।।
न चान्यस्यान्यरूपत्वं विकृतत्वेऽपि दृश्यते ।

इत्यादिचतुर्थपादीयानुव्याख्यानसुधयोः । एतेन ''युक्तो ही''त्यादिना ''पूर्वाधिकरणवैष-म्यप्रदर्शनेने''त्युक्तमुपपादितं ध्येयम् । अन्यत्रादृष्टमपि श्रुतत्वादस्त्वित्यत आह ।। न चेति ।। श्रुतौ हि बहुस्यामिति तेजःप्रभृत्यात्मना नानाविधमहं स्यां भवेयमिति तेजःप्रभृत्यात्मना बहुभवनं सङ्कल्प्य तत्तेजोऽसृजतेति तेजोऽभवदिति तेजःप्रभृत्यात्मना भवनश्रवणात्तस्य च गुणत्वाभावादित्यर्थः । भाष्याद्युक्तो विकारासम्भवो हरावुपलक्षणम् ।

**पाण्डुरङ्गि** – ॥ अस्मदुक्तरीत्या साक्षात् स्थानसमन्वयस्यैव सम्भवेन स्थानपदस्यार्थांतरपरिकल्पनस्यायुक्तत्वाच्चेति पूर्वाधिकरणवैषम्येण पूर्वपक्षमाह ॥ युक्तो हीति ॥ अयुक्तत्वमुपपादयति ॥ चेतन इति ॥ ननु गुणाः श्रुता इति श्रुतेर्विकारस्य च गुणरूपत्वान्निर्विकारेऽपि ब्रह्मणि विकारः सम्भवतीत्यत आह ॥ नचेति ॥ नानाविधहेयात्मनेति गुणत्वाभावे हेतुः ।

## तात्पर्यचन्द्रिका

**न च प्रधानेपि ''तदैक्षते''त्युक्तमीक्षणं विरुद्धमिति शङ्क्यम् । प्रधानस्य ज्ञानहेतुसत्त्वगुणयोगेन वा कार्योन्मुखत्वेन वाऽभिमानिन ईक्षितृत्वेन वा तस्य गौणत्वात् । युक्तं चेक्षणस्य गौणत्वम् । ''तत्तेज ऐक्षत ता आप ऐक्षंते''ति गौणेक्षणप्रायपाठात् । एतेनेक्षणं मुख्यं विकारस्तु गौण इति ब्रह्मैव सदस्त्विति निरस्तम् । पूर्वाधिकरणे चरमस्य द्रष्टृत्वादेर्मुख्यत्वाय प्रथमस्य भूतभवत्त्वादेर्गौण-त्ववदत्रापि चरमस्य विकारस्य मुख्यत्वाय प्रथमस्येक्षणस्यैव गौणताया न्याय्यत्वाच्च । नन्वेवं प्रधानस्योपादानत्वेपि निमित्तत्वं ब्रह्मण एवेति ''सतः स्रष्टृत्वमुच्यत'' इति भाष्योक्तजन्मादिसूत्राक्षेपो न युक्त इति चेदुच्यते । सदेवेत्यवधारणेन प्रधानातिरिक्त-कारणव्यवच्छेदात्सर्वाणि कारणवाक्यानि प्रधानपराणि । प्रधानस्य परिणामश्च क्षीरस्य दधिभाववच्चेतननिरपेक्षोऽभिमानिचेतनमात्रसापेक्षो वा । तथाचेश्वरस्य कारणतैव नेति वा श्रुत्यंतरेणेश्वरस्य कारणत्वेऽपीहाद्वितीयपदसन्निधानात्प्रतीतानन्या-धीनकारणता प्रधानस्यापीति वा पूर्वः पक्षः । एवं च श्रुतौ भाष्ये च स्रष्टृत्वव्यपदेशो लक्षणया कारणत्वमात्रपरः । गौण्याऽनन्याधीनकारणत्वपरो वा । प्रधानाभि-मानिचेतनस्य स्रष्टृत्वपरो वा । तथाचेक्षणादेर्गौणत्वेन प्रधानस्यास्रष्टृत्वेऽपि जन्मादिसूत्रोक्तकारणत्वसामान्यस्य वाऽनन्याधीनकारणत्वस्य वा स्रष्टृत्वस्य वाऽऽक्षेपो युक्तः । अथवा यथा विवर्तमते तत्वतो निर्विकारस्यैव ब्रह्मणो तात्वि-कविकारः तथा तत्वतो चेतनस्य विकारिणश्च प्रधानस्यातात्विकमीक्षणं स्रष्टृत्वं**

**चास्तु । एवं चेक्षणादिकमपि मुख्यमेव । न तु गौणमिति पूर्वः पक्षः । यद्वा यथा विशिष्टोपादानमते विशेष्यस्य निर्विकारत्वेपि विशिष्टस्य तात्विक एव विकारः तथा प्रधानस्याचेतनत्वेपि स्वाभिमानिचेतनविशिष्टस्य तात्विकमेवेक्षणादीति पूर्वःपक्षः ।**

**प्रकाशिका** – तदैक्षतेतीक्षणोपपत्तिश्च प्रधाने ध्येयेति भावेन शंकासमाधी आह ॥ न च प्रधानेपीति ॥ टीकोक्तमाह ॥ ज्ञानेति ॥ ''सत्त्वात्संजायते ज्ञानं रजसो लोभ एव चे''ति गीतोक्तदिशा ज्ञानहेतुसत्त्वगुणयोगेन ''चक्षुःपश्यती''तिवत्तदैक्षतेति निर्देश इत्यर्थः । ननु प्राथमिकेक्षणानुरोधेन चरमबहुभाव एव गौणो नीयतामित्यत आह ॥ युक्तमिति ॥ तेजःप्रभृतेः पूर्वपक्षे जडत्वादिति भावः । ननु प्रधानेऽभिमानिनमङ्गीकृत्येक्षणमुपपादयंस्तेजःप्रभृतेः कथमभिमानिचेतनत्वं नोपैतीति चेत्सत्यम् । एवमप्यभिमानिद्वारा गौणताया अवश्यं वाच्यत्वादिति भावः । अत एव गौणेक्षणप्रायपाठेत्येवोक्तम् ॥ एतेनेति ॥ प्रायपाठेनेत्यर्थः । न केवलं प्रायपाठेन । अपि तु पूर्वसिद्धांतन्यायेनापीत्याह ॥ पूर्वेति ॥ नान्यदतोस्ति द्रष्टृत्यादिवाक्यशेषबलाददृष्टं द्रष्टृत्यादिना प्रतीतानन्याधीनासङ्कुचितप्रशास्तृत्वास्थूलत्वा-नणुत्वादेश्च ब्रह्मण्येव मुख्यतया तदनुरोधेन ततः प्राक् श्रुतस्याक्षरस्य ब्रह्मत्वे तदेकाश्रितत्व-लिङ्गेनाकाशस्य चित्प्रकृतित्वात्तदोतत्वादिनोक्तभूतभवदादेर्जडत्वे पोष्यत्वादिरूपो तत्वरूप-स्यायोगेन देहद्वारा भूतत्वभवत्त्वादियुक्तचेतनपरतया भूतत्वं भवत्त्वं भविष्यत्त्वमित्येतद्गौणं तथेहापीत्यर्थः । अन्यथा तत्र भूतभवत्त्वादेर्मुख्यत्वाय भूतं च भवच्चेत्युक्तस्य जडत्वे तदाधारत्वस्य प्रधानेपि सम्भवात्सर्वाधारप्रधानाधारस्याक्षरस्य चित्प्रकृतितापत्त्या द्रष्टृत्वादिकम-न्याधीनममुख्यं प्राप्नोतीति भावः । एतेन ''पूर्वाधिकरणसिद्धान्तन्यायेन वा पूर्वपक्षोत्थाना'' दित्येतदुपपादितं बोध्यम् । अत्रास्थूलत्वादेरिति वक्तव्ये द्रष्टृत्वादेरिति वचनं तस्य साक्षात्सूत्रोपात्तास्थूलत्वादेरिवास्यापि सिद्धांतसाधकतासूचनाय । उक्तं च बृहदारण्यकभाष्ये ''नान्योतोस्ति द्रष्टेत्यादियुक्तिभिश्चे''ति ।

यद्यपि पूर्वं पोष्यत्वाद्यर्थकोतत्वान्यथानुपपत्त्यैव भूतभवत्त्वादेर्गौणत्वं युक्तमिति चरमोतत्व-मुख्यत्वाय प्रथमभूतभवत्त्वादेर्गौणत्ववदित्यपि वक्तुं शक्यम् । भाष्यादावनुक्तत्वं चोभयत्र समम् । तथापि द्रष्टृत्वादेर्मुख्यत्वमपि तद्गौणतायां बीजमिति दर्शयितुमेवमुक्तम् । न चास्मिन्पक्षेंऽबरशब्दितश्रीतत्वाधारतयाऽक्षरस्य ब्रह्मत्वोक्तिविरोधः । अक्षरस्य ब्रह्मत्वनिर्णये-

नाकाशस्य चित्प्रकृतिपरत्वनिर्णयेऽन्योन्याश्रयश्च स्यादिति वाच्यम् । अस्मिन्पक्षेंऽब-रांतधृतिहेतोरविवक्षितत्वात् । द्रष्टृत्वादिनैवाक्षरस्य ब्रह्मत्वनिर्णयेऽन्योन्याश्रयाभावाच्च । अत एव पूर्वत्राद्यहेतुसमर्थनायोतत्वमुखेनैवाकाशस्य चित्प्रकृतिपरत्वमुक्तम् । केचित्तु आकाशः किं प्रधानं चित्प्रकृतिर्वेति विशये भूतभवत्त्वादेर्मुख्यत्वाय प्रधानमिति प्राप्ते स्वतंत्रद्रष्टृत्वादेर्मुख्यत्वायाक्षरस्य ब्रह्मतया तदेकाश्रितत्वलिङ्गेनाकाशस्य श्रीतत्वपरतया तत्पोष्यत्वनिर्वाहाय भूतत्वादिकं गौणं यथेति विचारांतराभिप्रायेणैतदित्याहुः । पूर्वतन्त्रादौ प्रथमेन चरमस्य बाधोक्तावपीह पूर्वसिद्धांतन्यायेनात्र चरमेण पूर्वस्य बाधशङ्कनादत्र शास्त्रे चरमस्यैव प्राबल्याश्रयणाच्चरमेण पूर्वस्य बाधोक्तिरदोषायेति भावः । एवं प्रधानपक्षे ''तदैक्षते''त्यस्य गतिमुक्त्वा ''तत्तेजोसृजते''त्याद्युक्तेर्गतिं विवक्षुः ''नन्वेतत्स्थाने प्रधानस्य प्रतिपाद्यत्वेपी''त्यादि टीकायां सृष्ट्युक्तिगत्युक्तिद्वारा जन्मादिसूत्राक्षेपप्रकारस्यास्फुटत्वात्तां तात्पर्यतो विवृण्वन् टीकोक्ताक्षेपमनूद्य पञ्चधा समाधिमाह ॥ नन्वेवमित्यादिना ॥ केवलजडस्य कथं परिणाम इत्यत आह ॥ प्रधानस्येति ॥ तत्राप्योतं च न कर्तुस्सत्वेन विवादादाह ॥ अभिमानीति ॥ तथाचेति ॥ सकलकारणवाक्यानां प्रधानपरत्वे सतीत्यर्थः ॥ प्रधानस्यापीति ॥ तथाच प्राचीनपक्षे ब्रह्मणि कारणत्वरूपलक्षणस्यासम्भवः । द्वितीयपक्षेऽतिव्याप्तिरिति भावः । एवं तर्हि श्रुतौ ''असृजते''ति भाष्ये ''सतस्स्रष्टृत्वमुच्यत'' इति स्रष्टृपदं च विरुध्यत इत्यत आह ॥ एवं चेति ॥ स्रष्टृत्वं नाम कृतिमत्कारणत्वम् । तत्र तदेकदेशः कारणत्वमात्रं लक्ष्यत इत्यर्थः ॥ गौण्येति ॥ यथास्रष्टाऽनन्याधीनस्तथाऽनन्याधीनकारणमपीत्यर्थः । पूर्वं श्रुत्यादिगते-क्षणादेरमुख्यत्वमुपेत्याक्षेपप्रकार उक्तः । इदानीं मुख्यत्वमुपेत्याह ॥ अथवा यथाविवर्तमत इति ॥ तात्विकमेवेक्षणादिकमुपेत्याह ॥ यद्वायथाविशिष्टेति ॥ प्राक्पक्षेऽतात्विकत्वमेवास्वारस्य बीजम् । अस्मिन्पक्षे च प्रागुक्तस्रष्टृत्वाक्षेपस्सुकर इति भावः ।

**पाण्डुरङ्गि** – ननु ब्रह्मपक्षे विकारस्येव प्रधानपक्ष ईक्षणस्य गौणत्वादीक्षणस्य गौणत्वमङ्गीकृत्य प्रधानस्य सच्छब्दार्थत्ववद्विकारस्य गौणत्वमभ्युपेत्य ब्रह्मण एव सच्छब्दार्थत्वमिति किं नस्यात् । विशेषनियामकाभावादित्यत आह ॥ युक्तं चेति ॥ ननु तत्तेज ऐक्षतेत्यादिनेक्षणस्रष्टृत्वदेवतात्वानां श्रवणात्तेजःप्रभृतिचेतनमेव । तत्र चेक्षणं मुख्यमेवेति प्रायपाठो ब्रह्मपक्ष एव गुण इति कथम् । तद्दृष्टान्त एव विप्रतिपन्न इत्यत आह ॥ अभिमानीति

।। अस्मिन्पक्षे प्रधानस्येक्षणं भवतीतीदमेवास्वारस्यं मनसि निधाय पक्षांतरमाह ।। अथवेति ।। नन्वेवमीक्षणस्य तात्विकत्वेऽतात्विकेक्षणप्रतिपादकस्य तदैक्षतेतीक्षणवाक्यस्याप्रामाण्यं स्यादित्यरुच्याह ।। यद्वेति ।।

## तात्पर्यचन्द्रिका

यद्वा यथा पूर्वाधिकरणसिद्धांते विशेष्यभूतब्रह्मनिष्ठयोस्तात्विकयोरेवा णुत्व-महत्त्वयोरविरोधः तथा प्रधानेऽपि श्रौतत्वाज्जाड्येक्षणयोर्विकारस्रष्टृत्वयोश्चाविरोध इति पूर्वः पक्षः । नह्यत्र सांख्यमतं पूर्वः पक्षः । किन्तु श्रुत्यवष्टंभेन सम्भावितं मतम् । एवं च पूर्वपक्ष उपादानस्य प्रधानस्यैव स्रष्टृत्वमपीति जन्मादिसूत्राक्षेपो युक्तः । अथवा प्रधानस्य सांशत्वादेकेनांशेन चेतनत्वस्रष्टृत्वे । अंशांतरेणत्वचेतनत्वविकारित्वे । ब्रह्मतु निरंशम् । तथाच प्रधानस्यैव स्रष्टृत्वमिति पूर्वपक्षप्रवृत्तेस्तदाक्षेपः । अत्र यद्यपि पूर्वपक्षे ''सदायतना'' इत्युक्तं सर्वाधारत्वमपि प्रधानस्य स्यादित्यंबरांतधृतिरूप पूर्वाधिकरणहेतुर्वा द्युभ्वाद्यधिकरणं वाऽऽक्षेप्तुं शक्यम् । तथाप्यस्य सर्वस्य जन्मादि सूत्रनिर्वाहार्थत्वेन तच्छेषत्वात् सदेवेत्यादिवाक्ये कारणत्वस्य प्रथमप्रतीतत्वाच्च तदेवाक्षिप्तम् । यद्यपि चात्रत्यस्य स्रष्टुरन्यत्वे ''सोऽकामयत बहुस्यां प्रजायेये''ति ''स इदं सर्वमसृजते''त्युक्त आनन्दमयरूपोपि स्रष्टाऽन्यः स्यात् । ब्रह्मतु तदवयव इत्यजिज्ञास्यं स्यादिति जिज्ञासासूत्रमेवाक्षेप्तुं शक्यम् । तथापि तदाक्षेपस्यानन्दमयाक्षेप सापेक्षत्वान्निरपेक्षो जन्मादिसूत्राक्षेप एवात्र कृतः । यत्तु ''ब्रह्मलक्षणानां श्रवणा''दिति टीकायां ''एकमेवाद्वितीय''मित्यद्वितीयादिपदोक्तानां सर्वोत्तमत्वा-दीनां ब्रह्मधर्मत्वमाक्षिप्तं तदनुव्याख्यानादिस्थस्थानपदानुसारेण भाष्यस्थस्रष्टृपदं गुणांतरस्याप्युपलक्षकम् । ततश्च सर्वोत्तमत्वादिगुणांतराक्षेपोऽपि सम्भवतीत्यभि-प्रायेण। न तु स्रष्टृत्वाक्षेपोन सम्भवतीत्यभिप्रायेण । अत एव टीकायां ''यद्यत्र

**रिकारणत्वमेवोच्येते''त्यवधारणप्रयोगः । तत्तेजोऽसृजतेति स्रष्टृत्ववाचि-दाहरणं च ।**

**काशिका** – अस्मिन्पक्षेविशिष्टस्येक्षितृत्वस्य स्रष्टृत्वलाभेऽपि बहुभवनरूपविकारस्य धाननिष्ठतयेक्षणस्रष्टृत्वविकाराणामेकनिष्ठत्वाय पक्षांतरमाह ॥ यद्वा यथा पूर्वाधिकरणेति न ''पूर्वाधिकरणसिद्धांतन्यायेन वा पूर्वपक्षोत्थाना''दित्येतत्प्रकारांतरेणापि दर्शितं । ननु सांख्यमते प्रधानस्यैवंविधत्वानंगीकारादपसिद्धांत इत्यत आह ॥ न हीति ॥ अत कादौ मायावादादिमत इव उक्तदिशा निर्वाहस्सुकर इति विशिष्य प्रपञ्चनाभाव इति उपादानस्यैव स्रष्टृत्वे कार्यानुस्यूत्यननुस्यूत्योरयोगात्तदनुगुणं पक्षांतरमाह ॥ अथवेति ॥ ष्यकारीयं जन्मादिसूत्राक्षेपप्रकारमुपपाद्य तदाक्षेपोक्तौ भाष्यकृतोऽचातुर्यमाशंक्याह ॥ द्यपीति ॥ आक्षेप्तुं शक्यमिति ॥ एतेन ''अंबरांतधृतिरूपपूर्वहेत्वाक्षेपेण वा थाना'' दित्येतद्विवृतं भवति । अत्र यद्यपि सन्मूलाः सोम्येमाः सर्वाः प्रजाः नास्सत्प्रतिष्ठा'' इति प्रजानामेव सदाधारकत्वमुच्यते । नतु पृथिव्यादिप्रकृत्यंत-तस्य सदाधारकत्वम् । येन सच्छब्दार्थस्य प्रधानत्वे तत्र श्रुताम्बरांतधारकत्वमप्यस्यैवेति बरांतधृतिरूपहेतुर्न विष्णुत्वसाधक इत्याक्षेपेण पूर्वपक्षस्स्यात् । तथापि पूर्वत्रांबरांतपदेन दिप्रकृत्यंतस्य चेतनराशेरेवाभिमन्यमानसहितस्य विवक्षितत्वेनेहापि प्रजापदेन तथैव पत्तेः सङ्कोचकाभावादिति भावः । टीकाविरोधमाशंक्य तत्तात्पर्यमाह ॥ यत्त्विति ॥ गेति ॥ तेन स्रष्टृत्वरूपकारणत्वस्याप्यनुमतत्वप्रतीतेरिति भावः ।

**डुरङ्गि** – पूर्वाधिकरणवैषम्येण पूर्वपक्षं प्रदर्श्य पूर्वाधिकरणसिद्धांतन्यायेन पूर्वपक्षमाह ॥ ॥ पूर्वाधिकरणसिद्धांतहेत्वाक्षेपेण पूर्वपक्षमाह ॥ अथवेति ॥ नन्वेवमधिकरणांतरे सूत्राक्षेप एव स्यान्नत्वधिकरणांतरस्येत्यतो नियामकांतरमाह ॥ सदेवेत्यादि वाक्य इति ं यदि जन्मादिसूत्राक्षेपस्तर्हि टीकाविरोधः स्यात् । टीकायामद्वितीयत्वादिपदोक्त-वादेरेवाक्षेपादित्यत आह ॥ यत्त्विति ॥ अत एवेति ॥ पस्याभिप्रेतत्वादेवेत्यर्थः ।

## तात्पर्यचन्द्रिका

सिद्धान्तस्तु । न तावदाद्यः पूर्वःपक्षो युक्तः । यतः-

ईक्षतिर्बहुभावश्च मुख्यौ ब्रह्मपरिग्रहे ।
प्रधानपक्षे तु तयोरमुख्यत्वं प्रसज्यते ।। १ ।।

आद्यपूर्वपक्ष ईक्षणं तावद्गौणमिति परेणैवोक्तम् । बहुभावोऽपि गौण एव । तत्तेजोसृजतेति यत्तेजःप्रभृति सृज्यमुक्तं तदात्मना हि त्वया बहुभावो वाच्यः । तेजःप्रभृति च चेतनम् । ''तत्तेज ऐक्षत तदपोसृजत ता आप ऐक्षत ता अन्नमसृजंत तिस्रो देवता'' इतीक्षितृत्वस्रष्टृत्वदेवतात्वानां श्रवणात् । तेजोबन्नानां देवतात्वेपि त्रिवृत्करणविरोधश्छान्दोग्यभाष्यादवगन्तव्यः । न च जडस्य प्रधानस्य चेतनात्मना बहुभावो मुख्यः । एतेन प्रायपाठो निरस्तः । ब्रह्मपक्षे तु न केवलमीक्षणं मुख्यम् । किं तु बहुभावोपि । ''गुहांप्रविष्टा''वित्यत्रैकस्मिन्नपि बहुत्वस्य ''द्युभ्वादी''त्यत्र चाजेऽपि जनेरुक्तत्वात् । न चैवमिदमधिकरणं व्यर्थमिति शङ्क्यम् । ''बहुस्या''मिति तेज आद्यात्मना बहुभाव एव सङ्कल्पितो न स्वरूपबहुभावः । ''तत्तेजोसृजते''ति वाक्यशेषात् । न हि स्वरूपबहुभावं सङ्कल्प्य तेजःप्रभृतिसर्जनं युक्तम् । तेजआदिभावश्च न ब्रह्मणि युक्त इति शङ्कायां तत्समाधानार्थत्वादस्य ।

**प्रकाशिका** – क्रमेणोक्तान् पञ्चपक्षान्निराकरिष्यन्सिद्धांतयति ।। सिद्धांतस्त्विति ।। ''सदेवेत्यादिस्थाने सच्छब्देन विष्णुरेवोच्यते । सतस्तदैक्षतेतीक्षत्याख्यव्यापारश्रवणात् । जडप्रधानस्येक्षणासम्भवा''दित्यादिना कृत्स्नसिद्धांतटीकायामीक्षणबहुभावौ विष्णावुपपाद्य प्रधाने सूत्रोपात्तेक्षणासम्भव एवोक्तो न तु बहुभावासम्भवोऽपि । अतष्टीकोक्तमुपलक्षणं मत्वा सर्वं तावत्संगृह्याह ।। यतः । ईक्षतिरिति ।। यत इत्यस्य श्लोकेनान्वयः । ततो न युक्त इत्यर्थः । उत्तरार्धं विवृणोति ।। आद्यपूर्वपक्ष इत्यादिना ।। त्रिवृत्करणेति ।। ''या इमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकामकरो''दित्युक्ततेजोबन्नानां त्रयाणां मेलनेनैकैकद्रव्यांतर-करणरूपं यत्त्रिवृत्करणं तद्विरोधः । देवतानां तदयोगात् ।

सृष्टेष्वेतेषु भगवानीक्षांचक्रे स केशवः ।
जीवाख्येनैव रूपेण योऽनिरुद्ध इति स्मृतः ॥
तेन रूपेण लक्ष्म्यादीन्प्रविष्टो रूपनामनी ।
करिष्ये त्रिवृतश्चैतानेकैकं करवाणिच ॥
इति मत्वा प्रविश्याथ तेभ्य इन्द्रादिनामपि ।
नामरूपाणि कृतवांस्तांश्चान्योन्यप्रवेशिनः ॥
कृत्वाऽग्निसोमसूर्यादिष्वेतांस्त्रीन्विदधे पुनः ।

इत्यादिनाऽभिमन्यमानतेजोबन्नांशैर्द्रव्यांतरं कृत्वा तत्राभिमानिदेवतांशानामपि प्रवेशकरणेन त्रिवृत्करणोक्तेरविरोधो बोध्य इत्यर्थः । तथा ''अन्नमशितं त्रेधा विधीयते । यःस्थविष्ठो भागस्तत्पुरीषं योमध्यमस्तन्मांस''मित्यादिनोक्ताध्यात्मत्रिवृत्करणाविरोधोपि ''देवता एव मांसादिशब्दवाच्याः । तत्र प्रवेशात् । अश्यमानाच्च । उपजीव्यत्वात् । न च दुःखं तासाम् । ऐश्वर्या''दिति भाष्यवाक्यादवगन्तव्य इत्यर्थः ॥ एतेनेति ॥ तेजः प्रभृतेश्चेतनत्वेन तत्र श्रुतेक्षणस्य गौणत्वाभावेन गौणेक्षणप्रायपाठात् ''तदैक्षतें''ति श्रुतमीक्षणं गौणमित्येतन्निरस्तमित्यर्थः । नन्वस्त्वीक्षणबहुभावयोर्मुख्ययोः प्रधानेऽसम्भवः । हरौ तु कथमीक्षणस्य चेतनत्वेन ''नान्योतोस्ति द्रष्टे''त्यादिभाष्योक्तश्रुत्याच मुख्यस्य सम्भवेऽप्येकस्मिन्नजे ''अजायमानो बहुधा विजायत'' इति श्रुत्युक्तत्वेपि बहुत्वजननयोरुपपत्तिः । तथाच ''बहुभावस्य विकारित्वं विनैव स्वरूपबहुत्वेन सावकाशत्वा''दिति टीका न युक्ता । तत्संग्रहश्चात्र श्लोकेन युक्त इत्यतः पूर्वार्धं विवृणोति ॥ ब्रह्मपक्षेत्विति ॥ नह्यन्यार्थं सङ्कल्पमभिधायान्यक्रियाभिधानं सङ्गच्छते । न हीश्वरो स्वतंत्रो सत्यकामो वेति चतुर्थपादीयं सुधोक्तदिशा वाक्यशेषस्योक्तार्थज्ञापकत्वं व्यनक्ति ॥ न हीति ॥ अतस्तेजःप्रभृत्यात्मनैव बहुभावस्संकल्पित इति वक्तव्यमिति भावः ॥ न ब्रह्मणि युक्त इति ॥ ''न चेतनविकारस्स्याद्यत्र क्वापि ह्यचेतन''मिति चतुर्थपादीयानुभाष्योक्तदिशेति भावः । यद्वा प्रागुक्तदिशा निर्विकारत्वादिति भावः ।

**पाण्डुरङ्गि** – एतेनेति ॥ तेज आदेर्देवतात्वेन तत्रेक्षणस्य मुख्यत्वोपपादनेनेत्यर्थः ॥

## तात्पर्यचन्द्रिका

समाधानं तु-

बहुस्यामिति सङ्कल्प्य तेजःप्रभृतिसर्जनम् ।
गुरुः स्यामिति सङ्कल्प्य शिष्यसम्पादनादिवत् ॥ १ ॥

तत्तन्नियामकस्वरूपबहुभावं संकल्प्यानंतरं नियम्य सृष्टिर्युक्तैव । गुरुत्वराजत्वादेः शिष्यभृत्यादिसापेक्षत्ववन्नियामकताया नियम्यसापेक्षत्वात् । अत एव श्रुत्यन्तरे ''सोकामयत बहुस्यां प्रजायेये''ति प्रक्रम्य ''स इदं सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा । तदेवानुप्राविश''दिति अत्रापि श्रुतौ ''अनेन जीवेनात्मनानुप्रविश्ये''ति भगवतः स्वसृष्टवस्तुनियमनाय तदनुप्रवेश उक्तः । तदेतदभिप्रेत्योक्तं न्यायविवरणे ''अचेतनस्येक्षणादृष्टिः । बहुभावश्रुतिस्त्वन्यभावं विना तत्तन्नियामकतया स्वरूपबहुत्वार्थत्वेनैव युज्यत'' इति । तस्मादीक्षणबहुभावौ द्वावपि मुख्यौ । एकस्य गौणत्वेऽपीक्षितृत्वस्रष्टृत्वमध्यगतत्वेन ताभ्यां सन्दष्टो बहुभाव एव गौणः । न च संकल्पस्य सृष्ट्यर्थत्वात् ''गुणे त्वन्याय्यकल्पने''ति न्यायेनेक्षणं गौणमिति वाच्यम् । बहुस्यां प्रजायेयेत्यस्यापि सङ्कल्पांतर्भूतत्वात् ''असृजते''ति प्रधानभूतस्रष्टृत्वानुरोधेन बहुभावादेरेव गौणत्वापत्तेः । गौणसङ्कल्पेन सृष्टेः क्वाप्यदर्शनेन सङ्कल्पस्य गौणत्वे सृष्ट्यर्थत्वस्यैवायोगाच्च ।

**प्रकाशिका** – ''बहुस्यामिति तस्यैव ह्युक्तमार्गेण युज्यते । तत्तद्गतेन रूपेण तदर्थं ह्यसृजज्जग''दिति चतुर्थपादीयानुव्याख्यानोक्तं दृष्टान्तपूर्वं संगृह्योपपादयति ॥ समाधानं त्वित्यादिना ॥

सच्चत्यच्चाभवदिति नास्य विश्वत्वमुच्यते ।
तत्सृष्ट्वेति गिरैवास्य पूर्वं विश्वस्य सिद्धितः ॥

इत्युत्तरपादीयानुव्याख्यानोक्तमाह ॥ अत एवेति ॥ स्वरूपबहुत्वसङ्कल्पानंतरं नियम्यसर्वजनस्योक्तदिशाऽभिमतत्वादित्यर्थः । नन्वस्तु तैत्तिरीयश्रुतौ तत्सृष्ट्वेति वाक्यशेषबलात्तथोप-

पत्तिः । नैवं छन्दोगश्रुतौ । तथोपपत्तिकल्पकवाक्यशेषाभावात् । तथाच ''बहुस्यामिति तस्यैव ह्युक्तमार्गेणे''त्यनुव्याख्याने ''सच्चत्यच्चेति वाक्यव्याख्यानन्यायेने''त्युक्तिरयुक्तेत्यत आह ॥ अत्रापि श्रुताविति ॥ अनेन जीवनामकेनानिरुद्धेन स्वात्मना तेजोबन्नशब्दितान् श्रीब्रह्मरुद्रान् प्रविश्येत्यर्थः । तैत्तिरीयभाष्ये तु -

सृष्ट्वा जगदिदं सर्वं नियामकतयाऽस्य तु ।
बहुरूपो भवानीति स्याज्जगच्चेत्यचिंतयत् ॥

इति बहुस्यामिति संकल्प एव नियम्यानेकसर्जनपूर्वकस्वरूपबहुभावसर्जनविषयक इत्यर्थान्तरमुक्तम् । तस्मिन्पक्षे नियम्यसर्जनस्य प्रथमसङ्कल्पितत्वान्नियम्यसर्जनं नासंगतमिति भावः । भाष्यटीकयोरस्फुटत्वादाह ॥ तदिति ॥ तत्वप्रदीपे सौत्रकर्मशब्दस्य सृष्टचर्थत्वमुपेत्येक्षणस्रष्टृत्वयोर्द्वयोर्हरौ मुख्यत्वोक्त्या सूचितं पक्षान्तरमाह ॥ एकस्य गौणत्वेपीति ॥ सन्दष्ट इति ॥ ''तदैक्षत बहुस्यां प्रजायेयेति । तत्तेजोसृजते''ति श्रवणादिति भावः । एतेन ''पूर्वाधिकरणे चरमस्य द्रष्टृत्वादेर्मुख्यत्वाये''त्यादिनोक्तपूर्वसिद्धान्तन्यायेन पूर्वपक्षोक्तिरपि प्रत्युक्ता । अत्रेव पूर्वत्र संदंशाभावेन द्रष्टृत्वादेर्मुख्यत्वसम्भवेनास्य पूर्ववैषम्यात् । ननु बहुभावस्य सन्दष्टत्वेपि न्यायांतरेणेक्षणं गौणं स्यादित्याशङ्क्याह ॥ न चेति ॥ तदैक्षतेत्यस्य सङ्कल्परूपत्वात्संकल्पस्येत्युक्तम् ॥ गुणेत्विति ॥ नवमे तृतीयपादे विप्रतिपत्तौ विकल्पस्स्यात् समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वा''दिति जैमिनीयसूत्रोक्तन्यायेनेत्यर्थः । विवृतश्चायं न्यायो गुहाधिकरणे। बहुभावादेरित्यादिपदेन प्रजननं गृह्यते । कथमेतावतेक्षणस्यागौणत्वमित्यत आह ॥ गौणेति ॥

**पाण्डुरङ्गी** - अत एवेति । नियामकताया नियम्यसापेक्षत्वादेवेत्यर्थः ।

## तात्पर्यचन्द्रिका

**द्वितीयतृतीयौ तु पूर्वपक्षौ प्रकृत्यधिकरणेऽनुव्याख्यानाद्युक्तेन विवर्तविशिष्टमतनिरासकन्यायेन निरस्तौ । चतुर्थोऽप्ययुक्तः । यतः -**

विचित्रशक्तियोगित्व विरुद्धगुणभागिते ।
श्रूयेते ब्रह्मणो यद्वन्न तथा प्रकृतेः क्वचित् ॥ १ ॥

न हि मानं विना दृष्टांतमात्रेण मेयसिद्धिः । पञ्चमोप्ययुक्तः । उक्तप्रकारेणाक्लिष्टे ब्रह्मपक्षे सम्भवत्येकस्य चेतनरूपांशस्येक्षितृत्वादि अन्यस्य त्वचेतनरूपांशस्योपादानत्वादि अंशिनस्तु सतो न किमपीत्यस्यातिक्लिष्टस्य कल्पनस्यायोगात् । सूत्रे कर्मपदं तु सिद्धांतेपि ''ऐक्षते''तीक्षणकर्तृत्वव्यपदेशो न युक्तः । स्वरूपातिरिक्तेक्षणक्रियाभावादिति शङ्कायां विशेषबलात्क्रियाकर्तृभाव इति दर्शयितुम् । एतदेवाभिप्रेत्य टीकायां ''ईक्षत्याख्यव्यापारे''त्युक्तम् । यद्वा सौत्रः कर्मशब्दः ''न कर्तृत्वं न कर्माणी''त्यादाविव सृष्टयादिक्रियापरः । तथा च प्रधानपक्षे न केवलमीक्षितृत्वस्यायोगः किं तु स्रष्टृत्वादेरपीति दर्शयितुम् । यद्यप्यत्र सूत्रांतर इव समन्वयसूत्रस्थो ब्रह्मपरस्तच्छब्दोऽनुषंगार्हः । तथापि ''एको नारायण आसीत् । स मुनिर्भूत्वा समचिंतय''दित्यादिश्रुतिषु यः कारणत्वेन निर्णीतः स एवात्राप्युच्यत इति समाख्यानमपि प्रमाणीकर्तुं स इत्युक्तम् ।

**प्रकाशिका** – एवं टीकोक्तविवरणेनाद्यपक्षं निरस्येक्षणादिकमतात्विकमिति पक्षं तात्विकमेवेति पक्षं चान्यत्रोक्तदोषेण निराह ॥ द्वितीयेति ॥

यच्चाविकृतमेवैकं ब्रह्म विश्वात्मना मृषा ।
दृश्यते मन्ददृष्टचैव ससर्ग इति कथ्यते ॥
सा मंददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगा ।
ब्रह्मणश्चेत्क सार्वज्ञमन्यगा चेत्स्वतोऽन्यता ॥ इत्यादिना ब्रह्मविवर्तमतस्य
न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते ।
अविकारस्सदा शुद्धो नित्य आत्मा सदा हरिः ॥

इत्यादिना विकारमतस्यानुव्याख्यानसुधयोर्निरासात् दृष्टान्तस्यैवासंमत्या निरस्तावित्यर्थः । यद्वा तत्र हि ब्रह्मणो विवर्तत्वं प्रपञ्चस्य तद्घटकाज्ञानस्य ब्रह्माश्रितत्वादिविकल्पानुपपत्तेः

सत्यत्वग्राहिप्रत्यक्षादिविरोधाच्च निराक्रियते । ब्रह्मविकारत्वं च निर्विकारश्रुत्यादिनाऽपाक्रियते । प्रधानस्यैवंविधत्वं वदता पूर्वपक्षिणा तु ब्रह्मस्थाने प्रधानमेवाभिषिक्तमिति तत्रोक्तदोषास्सर्वे प्रधानेऽपि तुल्या इति तन्न्यायेन निरस्तावित्युक्तम् । तथाहि । ब्रह्मणस्सर्वज्ञत्वेन तदाश्रितस्य वा जीवस्याज्ञानकल्पितत्वेनान्योन्याश्रयापत्त्या जीवाश्रितस्य वाऽज्ञानस्यासम्भवेन ब्रह्मण्यज्ञा-नाधीनातात्विकजगद्रूपतावभासस्य विशिष्टोपादानमते विशेष्यस्य ब्रह्मत्वेऽप्यविकारित्वेन विशेषणस्य विकारित्वेऽप्यब्रह्मत्वेन ब्रह्मणस्तात्विकजगदाकारपरिणामलक्षणविकारस्यानु-पपत्ते''रित्यादिना तन्मतद्वयं निरस्यते । तथाच प्रधानस्यैव ब्रह्मसार्वज्ञादिश्रुतिविषयत्वस्य वक्तव्यत्वात्तत्राप्यज्ञाननिबन्धनस्यैवारोपस्य वाच्यत्वादुक्तदोषा योज्या इति । जाड्येक्षणादेः प्रधानेऽप्यविरोधोऽस्त्विति पक्षं दृष्टांतवैषम्योत्त्या निराह ॥ चतुर्थोपीति ॥ यत इत्यस्य श्लोकेनान्वयः । ''विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशास्स्युः । अणोरणीयान्महतोमहीया''नित्यादिना श्रूयेते । न चैवं प्रकृते । तदैक्षतेत्यादिश्रुतिस्तूक्तदिशा ब्रह्मपरेति श्रौतत्वादिति प्रागुक्तो हेतुरसिद्ध इति भावः । अयं च समाधिः -

सर्वधर्मा सर्वनामा सर्वकर्मा गुणाश्श्रुताः ।
दोषाश्श्रुताश्च नेत्याद्या प्रमाणं श्रुतिरत्र च ॥

इत्यक्षरनयानुभाष्येऽस्थूलत्वादिविरुद्धधर्मवत्त्वे प्रमाणोत्त्या सूचितः । विपक्षे व्याघात-सूचनाय मानं विना मेयसिद्धिरिति मानमेयपदोक्तिः । अंशविभागेनोभयोपादानमयुक्तमित्याह ॥ पञ्चमोपीति ॥ अत्र यद्यपि

भागेन परिणामश्चेद्भागयोर्भेद एव हि ।
यो भागो न विकारी स्यात्स एवास्माकमीश्वरः ॥

इत्याद्युत्तरपादीयानुव्याख्यानोक्तन्यायेन तन्निरासोऽपि प्रतीयते । तथापि दोषान्तरोक्ति-रियमिति । एतेन भाष्यकारीयफलाक्षेपोऽपि समाहितो ध्येयः । नन्वत्र सूत्रे ''ईक्षतेर्नाशब्द''-मित्यत्रेवेक्षतेस्स इति वा ईक्षतिव्यपदेशात्स इति वा वक्तव्यम् । लाघवात् । न तु कर्मेति ।

व्यर्थत्वात् । न च परमत इवेक्षतिं प्रति कर्मत्वरूपोऽर्थोऽभ्युपेयते । किं चाध्यायपरिसमाप्ति-समन्वयसूत्रात्तत्त्वित्यस्य साध्यनिर्देशकस्यानुवर्तमानत्वात्स इत्यपि व्यर्थम् । न च स इत्येतद्धर्मिनिर्देशपरमेव । न साध्यनिर्देशपरमिति वाच्यम् । सदित्यस्यैव धर्मिपरत्वेनेक्षतिकर्मव्य-पदेशात्सदिति निर्देशापातात् । "स एवेश्वरस्सच्छब्दोक्तो न प्रधान"मिति तत्वप्रदीपविरो-धाच्चेत्यतः कर्मपदसार्थक्यं तावदाह ॥ कर्मपदं त्विति ॥ "तत्तेजोऽसृजतेति तत्पूर्वककर्म-व्यपदेशान्नामरूपे व्याकरवाणी"त्यादिना चेक्षतिपूर्वव्याकरणादिकर्मव्यपदेशात्स एवेश्वरस्स-च्छब्दोक्त" इत्यादि तत्वप्रदीपानुरोधात्पक्षांतरमाह ॥ यद्वेति ॥ "न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभु"रिति गीतायां कर्मपदस्य "क्रियायामदृष्टोत्पादने फले च स्वातन्त्र्यं लोकस्य न सृजतीश्वर" इत्यदृष्टोत्पादनादिपरत्वेन गीतातात्पर्ये भगवत्पादैर्व्याख्यानादिति भावः । एतेन ब्रह्मधर्मेक्षणकर्मसंदष्टो बहुभावोपि ब्रह्मण्येव कथंचिन्नेय इति सूचितमिति ततोपि कर्मपदसार्थक्यं ध्येयम् । स इत्येतदाक्षिप्य समाधत्ते ॥ यद्यपीति ॥ एतेन यदुक्तं श्रुतप्रकाशे "अत्र स इत्युक्तिरस्मिन्पादे सर्वाधिकरणे साध्यप्रतिज्ञानुवृत्त्यर्था । यथाद्यपादे भेदव्यपदेशाच्चान्य इत्यन्यशब्दोक्तिः द्वितीयेऽत एव च सब्रह्मेति ब्रह्मशब्दोक्तिः चतुर्थपादे च वदतीति चेन्न प्राज्ञो हीति प्राज्ञशब्दोक्ति"रिति तन्निरस्तम् । समन्वयसूत्रस्थतत्पदस्यैव समन्वयपराधिकरणेष्वादितः सर्वत्रानुवृत्तिसम्भवे प्रतिपादं तदुक्तिवैयर्थ्यात् । पादेष्वादावेव साध्यनिर्देशकस्य वक्तव्यत्वेन मध्ये निर्देशायोगात् । ब्रह्मादिपदेनैव साध्यनिर्देशौचित्येनान्य-शब्देन तन्निर्देशायोगाच्च । प्रथमपादेऽन्यशब्दस्यात्र स इति तच्छब्दस्य च कृत्यांतरसम्भवाच्च । अत एव च सब्रह्मेति सूत्रस्यासांप्रदायिकत्वेन प्रक्षिप्तत्वाच्चेति ॥

**पाण्डुरङ्गि** – ॥ द्वितीयतृतीयौ त्विति ॥ ईक्षणमतात्विकं स्वाभिमानिचेतनविशिष्टस्य तात्विकमिति द्वितीतृतीयावित्यर्थः ॥ चतुर्थ इति ॥ अणुत्वमहत्त्ववदीक्षणविकारावपि श्रौतत्वात्प्रधानेन विरुद्धाविति चतुर्थ इत्यर्थः । पञ्चमः अंशभेदेनेक्षणविकारावविरुद्धाविति पञ्चम इत्यर्थः । एकस्य चेतनरूपांशस्येक्षितृत्वादीत्यादिपदेन स्रष्टृत्वसङ्ग्रहः । उपादानत्वा-दीत्यत्रत्येनाचेतनत्वपरिग्रहः ।

## तात्पर्यचन्द्रिका

अत्र सूत्रे समन्वेतव्यविशेषानुक्तिस्तु हेत्वनुसारेण समन्वेतव्यविशेष ऊह्य इति शिष्यशिक्षार्थं वा ''सदेव सोम्येदमग्रे सोऽकामयत बहुस्या''मित्यादि- भिन्नसृष्टि-प्रकरणस्थनानाशब्दा इह तुल्यवत्समन्वेतव्याः । न तु शब्दविशेष इति प्रदर्शनार्थं वा अल्पाक्षरे सूत्रे निर्देशानर्हानेकप्रकरणात्मकसदेवेत्यादिस्थानस्य समन्वेतव्यत्व-प्रदर्शनार्थं वेति द्रष्टव्यम् । अथवा ''आनन्दमयोभ्यासा''दित्यादौ हेतुविशेषानुक्तेः समन्वेतव्यविशेषोक्तिः । अत्र त्वीक्षणरूपहेतुविशेषोक्त्या तद्युक्तशब्दस्य समन्वेतव्य-त्वसिद्धेस्तदनुक्तिः । यद्वा ''स ईक्षांचक्रे सोऽकामयते''त्यादौ स इत्यस्य समन्वे-तव्यत्वात्स इत्यनेन ब्रह्मपरेणापि तन्त्रेणावृत्त्या वा एकदेशकीर्तनमुखेन समन्वेतव्य-स्याप्युक्तिरिति । अन्येतु । ''यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुष-मभिध्यायीते''त्यस्मिन्वाक्येऽभिध्यातव्यत्वेनोक्तं वस्तु हिरण्यगर्भाख्यमपरं ब्रह्मैव । ''ससामभिरुन्नीयते ब्रह्मलोक''मिति तद्विदो देशपरिच्छिन्नफलोक्तेः । न हि परब्रह्मविदः फलं देशपरिच्छिन्नमिति प्राप्ते इदं वस्तु परंब्रह्मैव । ''परात्परं पुरिशयं पुरुषमीक्षत'' इत्युत्तरवाक्येऽस्यैवेक्षणकर्मत्वोक्तेः । ईक्षणं हि परमार्थसत्कर्मकम् । न च ब्रह्मणोऽन्यत्परमार्थसदस्ति । न चेक्षणीयस्य परब्रह्मत्वेऽभिध्यातव्यमपरब्रह्मेति युक्तम् । ईक्षणध्यानयोरेकविषयत्वात् । तदुक्तं भामत्यां -

ईक्षणध्यानयोरेकः कार्यकारणभूतयोः ।
अर्थ औत्सर्गिकं तत्वविषयत्वं तथेक्षतेः ॥ इति ।

निरुपाधिकब्रह्मज्ञानस्यैव चापरिच्छिन्नफलकत्वादिह च त्रिमात्रोंकाररूपोपाधि-मत्त्वात्फलस्य परिच्छिन्नता युक्तेति सिद्धान्त इत्याहुः । तन्न । सूत्रे कर्मशब्दस्य भावप्रधानताया आश्रयणीयत्वात् । निरवकाशे प्रथमे च परात्परत्वे ब्रह्मलिङ्गे सति तत्त्यागेन सूत्रे चरमसावकाशेक्षतिकर्मत्वोक्त्ययोगाच्च । त्वन्मत ईक्षणकर्मणो मिथ्या-त्वनियमेनेक्षणकर्मत्वस्य परमार्थसद्ब्रह्मत्वे हेतुत्वायोगाच्च । किं च ध्यानस्य

परमार्थसद्विषयकेक्षणैकविषयत्वाय निरुपाधिकब्रह्मविषयतायाः परिच्छिन्नफलत्वाय चोंकारोपाधिकविषयतायाश्च त्वयैवोक्तत्वाद्व्याघातः । अपि च ओंकारोपाधिकध्यान-फलस्य परिच्छिन्नत्वोक्तिरयुक्ता । ''ॐकारेणैवायनेनान्वेति विद्वान्यत्तच्छांतमज-रममृतमभयं परं चे''ति वाक्यशेषे तस्यापरिच्छिन्नत्वोक्तेः । किञ्च -

ईक्षणस्यानुसारेण ध्यानं सद्विषयं यदि ।
तर्हि ध्यानानुसारेणास्त्वीक्षणं कल्पितार्थकम् ॥ १ ॥

त्वन्मते ''योषितमग्निंध्यायीते'' त्यादौ ध्यानस्यारोपितविषयतायाः क्लृप्तत्वात् । ''य एषोऽतरादित्ये हिरण्मयः पुरुषो दृश्यते यदा पश्यः पश्यते रुग्मवर्ण''मित्यादा-वीक्षणस्याप्यतत्वविषयत्वाच्च । व्यावहारिकविषयतातु हिरण्यगर्भविषयत्वेपि युक्ता । अत्रापि परमते ईक्षतिकर्मेतिसूत्रेण जीवेशयोः कर्तृकर्मभावेन भेदोक्तेर्ब्रह्मणो दृश्यत्वोक्तेश्च परमतप्रतिकूलता व्यक्तैव ।

**प्रकाशिका** – ॥ एकदेशेति ॥ समन्वेतव्यसदादिनानाशब्देष्वेकदेशभूततच्छब्दकीर्तन-मुखेनेत्यर्थः । यद्वा समन्वेतव्यसृष्टिस्थानैकदेशभूततच्छब्दकीर्तनमुखेन स्थानरूपसमन्वयस्याप्यु-क्तिरित्यर्थः ॥ अन्येत्विति ॥ ''एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानैतेनै-वायनेनैकतरमन्वेतीति प्रक्रम्य श्रूयते । यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीते''त्यादि यथाश्रुतपरभाष्योक्तविषयवाक्यम् । पूर्वपक्षमनुवदति ॥ अभिध्यात-व्यत्वेनेति ॥ ''कार्यब्रह्महिरण्यगर्भ एवे''ति कल्पतरूक्तेर्हिरण्यगर्भाख्येत्यनुवादः ॥ तद्विद इति ॥ ''तस्माद्विद्वा''नित्युक्ताभिध्यातव्यवस्तुज्ञानिन इत्यर्थः । ईक्षणध्यानयोरेकविषयत्वादिति भावः ॥ न हीति ॥ ''ब्रह्मवेद ब्रह्मैव भवतीति श्रुतेः सर्वगतपरब्रह्मवेदने तद्भावापत्तौ सामभिरुन्नीयते ब्रह्मलोकमिति न देशविशेषप्राप्तिरुपपद्यत'' इति भामत्युक्तेरिति भावः ॥ ईक्षणं हीति ॥ न च स्वप्नादौ व्यभिचारेणेक्षणस्य तत्वविषयत्वनियमाभाव इति वाच्यम् । उत्सर्ग-तस्तत्वविषयकत्वादिह चापवादकाभावात्सत्कर्मकमेवेत्यर्थः ॥ तदुक्तमिति ॥ यद्यप्ययमर्थो भाष्येपि व्यक्तः । तथापि तदर्थसङ्ग्राहकत्वात्संग्रहेण तद्दर्शयितुं भामत्यामित्युक्तम् । यद्वा -

कार्यब्रह्मजनप्राप्तिफलत्वादर्थभेदतः ।
दर्शनध्यानयोर्ध्येयमपरं ब्रह्म गम्यते ॥

इति पूर्वपक्षकारिकायामर्थभेदत इत्यनेन क्षणध्यानयोर्भिन्नविषयत्वमुक्त्यापि भामत्यां पूर्वपक्षितत्वात्सिद्धान्ते तेनैव भामतीकृता तयोरेकविषयत्वमुक्तं प्रदर्शयितुं भामत्यामित्युक्तम् ॥ एक इति ॥ एकोर्थ इत्यन्वयः । स्वप्नादौ व्यभिचारादाह ॥ औत्सर्गिकमिति ॥ ईक्षतेरीक्षणस्य तत्वविषयत्वमौत्सर्गिकम् । न चेहापवादः कश्चिदिति भावः । ननु कथमत्रेक्षणध्यानयोरेकविषयत्वम् । येनेक्षणवद्ध्यानस्यापि परमार्थभूतं ब्रह्मैव विषयस्स्यात् । ध्यानस्य परमपुरुषविषयत्वात् । ईक्षणस्य परात्परपुरुषविषयत्वादिति चेन्न । ''एतस्माज्जीवघनात्परात्पर''मिति प्रकृतापेक्षैतच्छब्दसमभिव्याहारावगतैकवाक्यतानुगृहीतेन ''पुरुषमभिध्यायीत पुरुषमीक्षत'' इति पुरुषप्रत्यभिज्ञानेन तयोरेकविषयत्वावगमात् । न च परं परात्परमिति च रूपभेदानुपपत्तिः । प्रतीतैकवाक्यतानुसारेण जीवघनात्परादिति जीवघनशब्दस्य हिरण्यगर्भब्रह्मलोकान्यतरविषयत्वेन ध्यातव्यपुरुषविषयत्वाभावात् । नन्वथापि ध्यानस्योपाधिविशिष्टविषयत्वात्कथं शुद्धविषयेक्षणैकार्थत्वमिति चेन्न । ''उपाधेः कल्पितत्वेन विशेष्यस्य शुद्धत्वा''दिति तद्भाष्याद्युक्तमनुसन्धेयमिति भावः । नन्विह दर्शनस्य तत्वविषयत्वत्यागे परिच्छिन्नफलश्रवणमेव बाधकमित्यत आह ॥ निरुपाधिकेति ॥ नेदमुदाहरणं युक्तम् । सूत्राक्षरासामंजस्यादिदोषप्राप्तेरिति दूषयति ॥ तन्नेति ॥ विरुद्धोऽयं हेतुरित्याह ॥ त्वन्मत इति ॥ निरुपाधिकेति ॥ अन्यथापरमार्थसद्विषयेक्षणैकार्थत्वं न स्यादिति भावः । अयनेन अयनसाधनेन । अयनसाधनमोंकारं मात्रात्रयात्मकं सम्यग्ज्ञात्वेति यावत् । ''पूर्वोतवत्स्वरस्संधा''वित्यादेः ''ध्यानानुसारेणास्त्वीक्षण''मित्यत्र न यतिभङ्गश्शङ्कनीयः । वैपरीत्ये को हेतुरित्यत आह ॥ त्वन्मत इति ॥ ननु तत्रापि न प्रातिभासिकविषयत्वम् । किं तु व्यावहारिकविषयत्वमेवेत्यतस्तर्हीहापि तथात्वापत्त्या न सिद्धांतोत्थितिरित्याह ॥ व्यावहारिकेति ॥ दृश्यत्वेति ॥ तेन चावेद्यत्वांगीकारादिति भावः ।

**पाण्डुरङ्गि** – नन्वेवं सति ज्योतिश्चरणाभिधानादित्यत्रापि कर्णादिविदूरत्वरूपविशेषहेत्वनुसारेणैव समन्वेतव्यज्योतिश्शब्दलाभसम्भवेन तत्र समन्वेतव्यज्योतिश्शब्दोक्तिरयुक्तेत्यरुचेराह ॥ सदेवेत्यादि ॥ नन्वेवमानन्दमयाधिकरणेऽपि समन्वेतव्यशब्दोक्तिर्न स्यात् ।

तत्रापि भिन्नप्रकरणस्थानां तुल्यवत्समन्वेतव्यत्वेन शब्दविशेषस्यैवासमन्वेतव्यत्वात् । अल्पाक्षरे सूत्रे सर्वशब्दानां ग्रहणेऽल्पाक्षरत्वाभावापत्त्योपलक्षणतया शब्दविशेषोपादानासम्भवादित्य-रुचेराह ॥ अथवेति ॥ नन्वेवं ज्योतिस्सूत्रे समन्वेतव्यशब्दोक्तिर्न स्यात् । विशरणरूपहेतु-विशेषोक्त्या तदुक्तशब्दस्य समन्वेतव्यत्वसिद्धेरित्यस्वरसादाह ॥ यद्वेति ॥ नन्वेवं स इति तच्छब्दस्य समन्वेतव्यत्वे भाष्यटीकाविरोधः । तत्र तच्छब्दस्य समन्वेतव्यत्वेनानभि-धानादित्यतः सच्छब्दस्यैव समन्वयाभिधानान्न विरोध इति भावेन तर्हीक्षतिकर्मव्यपदेशात्सदिति वक्तव्यं स इति तु कथमित्याशङ्कां परिहरति ॥ एकदेशकीर्तनेति ॥ ईक्षणध्यानयोरिति संमतिश्लोकस्यायमर्थः । एकोर्थ इत्यन्वयः । ध्यानस्य हि साक्षात्कारः फलम् । साक्षात्कारश्चो-त्सर्गतस्तत्वविषयः । क्वचिद्बाधकोपनिपाते समारोपितगोचरो भवेत् । न चासत्यपवादे शक्य उत्सर्गस्त्यक्तुम् । तथाचेक्षणस्य तत्वविषयत्वात्कारणस्य ध्यानस्यापि तत्वविषयत्वमिति ॥ सदधिकरणम् ॥ ४ ॥

## तात्पर्यचन्द्रिका

**केचित्तु । पुरुषमीक्षत इत्युक्तमीक्षतिकर्म सः परमात्मैव । व्यपदेशादिति सूत्रार्थः । यद्यपीक्षतिवाक्ये परात्परत्वादीनां ''यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्त'' इति पूर्ववाक्ये तद्विदः पापालेपादीनामुत्तरवाक्ये चामृतत्वाभय-त्वादीनां ब्रह्मधर्माणां स्फुटत्वेन पूर्वपक्षानुदयः । तथापि ''सोंऽतरिक्षं यजुर्भि''रिति प्राकृतांतरिक्षलोकसन्निधानात् ''ससामाभिरुन्नीयते ब्रह्मलोक''मित्युक्तस्य ब्रह्म-लोकस्य चतुर्मुखलोकत्वशङ्कया तदुदय इत्याहुः । तन्न । ''तद्धर्मोपदेशात् भेदव्य-पदेशा''दित्यादाविव सिद्धांतसाधकार्थविशेषघटितस्यैव व्यपदेशस्य हेतूकर्तव्यत्वात् । त्वद्रीत्यैतच्छास्त्रस्य पूर्वभागे पूर्वतन्त्र एव ''आनन्तर्यमचोदने''त्यत्र लिङ्गादिभ्यः सन्निधानदौर्बल्यस्योक्ततया पुनरिह तत्प्राबल्यशङ्कानुदयाच्च । टीकाक्षरार्थस्तु । सोमो वै राजा गन्धर्वेष्वासीदित्यादिवदिति टीकाया अयमर्थः । यथा ''सोमो वै राजा गन्धर्वेष्वासीत् । तं देवाश्च ऋषयश्चाभ्यध्याय''न्नित्यादौ सोमलताभिमानिचेत-नविवक्षया गन्धर्वेष्वासीदिति व्यपदेशस्तथाऽत्रापि प्रधानाभिमानिचेतनविवक्ष-येक्षितृत्वव्यपदेश इति ॥ छ ॥ सदधिकरणम् ॥ ४ ॥**

**प्रकाशिका** – केचित्त्विति ।। स इत्यनूद्य परमात्मेति व्याख्यातम् । व्यपदेशादिति ।। ईक्षतिकर्मविषयतयोदाहृतश्लोके ''एतदमृतमभयमेतद्ब्रह्मे''त्यादिभ्यः परमात्मन एव व्यपदेशादित्यर्थः । पूर्वपक्षेऽपि दूष्यांशमात्रमनुवदति ।। यद्यपीत्यादिना ।। सन्निधानादिति ।। सन्निधानेन लिङ्गानामन्यथा नयनमिति भावः । एवं हि तेषामधिकरणम् । प्रागुदाहृते वाक्य ईक्षतिकर्मणः परमात्मत्वं व्यवस्थाप्य ध्यायतेस्ततो भिन्नविषयतया पूर्वपक्षं कृत्वा एकविषयत्वेनाद्वैतिभिः सिद्धान्तः कृतः । स न युक्तः । ध्यानेक्षणयोर्हेतुहेतुमद्भावापन्नयोरकेविषयत्वावश्यंभावादिति परमतं निरस्यैकविषयतामुपेत्य ध्यानेक्षणविषयः किं चतुर्मुखः परमात्मावेति संदिह्य पूर्वत्र मनुष्यलोकान्तरिक्षलोकौ क्रमेणैकमात्रद्विमात्रप्रणवोपासनाफलत्वेनोक्त्वा अनन्तरं त्रिमात्रप्रणवोपासनाफलत्वेनोच्यमानब्रह्मलोकस्थपुरुषेक्षणकर्मभूतः पुरुषो हिरण्यगर्भ एव । मनुष्यलोकादिसान्निध्येन ब्रह्मलोकस्य हिरण्यगर्भलोकत्वमिति निश्चयात् । सन्निधानेन ब्रह्मलिङ्गानां बाधादिति प्राप्ते ईक्षतिकर्मतया निर्दिष्टपुरुषविषये ''तमोंकारेणायनेनान्वेति विद्वा''निति श्लोके निरुपाधिकशान्तत्वामृतत्वादिव्यपदेशात् परमात्मैवायं परमपुरुषः । एवं परमात्मत्वेऽवगते ब्रह्मलोकशब्दोपि तत्स्थानस्यैव वाचको भवति । तद्विषये ''यत्कवयो वेदयंत'' इति श्लोके सूरिभिर्दृश्यत्ववचनं च तदेव द्रढयतीति सिद्धान्त इति ।। उक्तं च -

नन्वत्रोंकारमात्रात्रयफलगणना रूढभूम्यंतरिक्ष -

प्रत्यासत्त्या निवासस्सरसिजवसतेर्ब्रह्मलोकोऽस्तु मैवम् ।<br>
पापोन्मुक्तेन लभ्यो ह्ययमिह कथितस्सूर्यसम्पत्तिपूर्वः<br>
सोढव्यो मर्त्यलोके व्यवधिरिति समस्तत्समाधानमार्ग :।। इति ।

सूत्रार्थं तावन्निराह ।। तद्धर्मेति ।। ईक्षतिरूपकर्मणो व्यपदेशादित्यस्मत्सिद्धांत इव समस्तमेवेक्षतिकर्मपदं व्याख्येयम् । न तु विभज्येति भावः । न चैवं सूत्रे धर्मिनिर्देशाभावान्न्यूनतादोषः । ''अत्र सूत्रेसमन्वेतव्यविशेषानुक्ति''स्त्वित्यादिना चन्द्रिकायामेव प्रागस्य दोषस्य समाधानादिति भावः । पूर्वपक्षानुदयेनाधिकरणशरीरं च निरस्यति ।। त्वद्रीत्येति ।। विंशतिलक्षणमेकं शास्त्रमिति त्वद्रीत्येत्यर्थः । तृतीयेऽध्याये ''आनन्तर्यमचोदने''त्याद्यपादीयचतुर्दशेऽधिकरणे ज्योतिष्टोमगतं ''मुष्टीकरोति वाचं यच्छति दीक्षितमावेदयती''ति

वाक्यमुदाहृत्य मुष्टीकरणवाग्यमने मनःप्रणिधानद्वारा करिष्यमाणसर्वकर्मांगमुतानंतरस्यादीक्षिता वेदनस्येति संशये आनन्तर्यादिकवाक्यत्वादवांतरप्रकरणाद्वादीक्षिता वेदनमात्रांगमिति प्राप्ते लिङ्गप्रकरणाभ्यां सर्वार्थत्वावगमात्सन्निधानात्प्रबलेन सामर्थ्यरूपलिङ्गे करिष्यमाणसर्वकर्माङ्गमिति सिद्धांतितमिति सन्निधेर्दौर्बल्यं सिद्धमित्यर्थः। एतेनेदं वाक्यं ब्रह्मपरतया यत्र क्वच निर्णेयत्वादधिकरणांतरस्य चैतन्निर्णायकस्यादर्शनादत्रैव निर्णेयमिति निरस्तम्। ब्रह्मलिङ्गादिबाहुल्येन सन्निधिबाधसम्भवेन संशयस्यैवानुदयादिति। एतेन रामानुजीयरीतिमनुसृत्य पूर्वोत्तरपक्षौ सूत्रार्थं च वर्णयतः कस्यचिच्छैवस्य मतमपि प्रत्युक्तं बोध्यम्। विषयवाक्यस्थब्रह्मात्मपुरुषादिशब्दानां तत्र तत्र भाष्यादौ पूर्वत्रास्माभिश्च विष्ण्वेकनिष्ठताया दर्शितत्वेन शिव इति सिद्धान्तस्यातितुच्छत्वादिति ॥ छ ॥ सदधिकरणम् ॥ ४ ॥

## दहराधिकरणम्

**॥ ॐ दहरउत्तरेभ्यः ॐ ॥ अत्र पादसङ्गतिः ''योवेद निहितं गुहायां तस्यांते सुषिरं सूक्ष्मं हृदि ह्येष आत्मेत्यादिश्रुतिभिर्ब्रह्माकाशजीवसाधारणस्य हृत्पद्मस्थत्वलिङ्गस्ये''ति टीकायामेवोक्ता। अनन्तरसङ्गतिस्तु पूर्वाधिकरणविषयवाक्ये ''येनाश्रुतं श्रुतं भवत्यमतं मत''मित्यादिनोक्तस्यान्वेष्टव्यत्वस्य वा ''सदायतनाः सत्प्रतिष्ठा'' इत्यदिनोक्तस्य सर्वाधारत्वस्य वा ''सदेवसोम्येद''मित्यादिनोक्तस्य सृष्टिहेतुत्वस्य वाऽऽक्षेपेण पूर्वपक्षोत्थानात्। अन्वेष्टव्यत्वसर्वाधारत्वयोराक्षेपः पूर्वपक्षे दर्शयिष्यते। सृष्टिहेतुत्वाक्षेपस्तु वक्ष्यमाणेन स्थितिहेतुत्वरूपाधारत्वाक्षेपेण सेत्स्यति। स्थितिहेतोरेव सृष्टिहेतुत्वात्।**

**प्रकाशिका** – ॥ ॐ दहरउत्तरेभ्यः ॐ ॥ अत्रत्यन्यायविवरणे लिङ्गं हृत्पद्मस्थितत्वं साधारणमित्युक्तम्। तट्टीकायां तु तत्कुत्र कथमित्याशङ्कायामन्यत्रास्माभिरुक्तमित्युक्तम्। तत्कुत्रेत्याकांक्षायामाह ॥ अत्रेति ॥ यो वेदेति ॥ आनन्दमयनयोक्तरीत्या ब्रह्मणि प्रसिद्धिः ॥ तस्यांत इति ॥ नारायणोपनिषदि ''पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुख''मित्युपक्रम्य तस्य

हृत्पद्मस्यांते सुषिरशब्दितस्याकाशस्याम्नानात्तत्र प्रसिद्धिः । न च सुषिरशब्दस्याकाशाधिकरणन्यायेन विष्णुवाचितेति वाच्यम् । ''तस्याश्शिखाया मध्ये परमात्मे''ति सुषिरमध्यगतशिखामध्यस्थत्वेन विष्णोरुक्त्या सुषिरस्याकाशत्वे विवादाभावादिति भावः ॥ हृदिह्येष आत्मेति ॥ षट्प्रश्नोपनिषद्यात्मशब्दितस्य जीवस्य हृत्पद्मस्थितत्वेन निर्देशात्तत्रप्रसिद्धिरित्यर्थः वक्ष्यति च ''अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदिही''ति सूत्रकारः । यद्यपि ''अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यत'' इत्यग्नेरप्यंतस्स्थितत्वमुच्यते । तथापि हृत्पद्मस्थत्वाश्रवणाद्वा तस्य वैश्वानरनये ब्रह्मपरत्वोक्तेर्वा न तत्साधारण्यशङ्केति भावः ॥ सङ्गतिस्त्विति ॥ आक्षेपिकीत्यर्थः ॥ येनेति ॥ येन श्रुतेन विज्ञातेनान्यत्सर्वं श्रुतमतविज्ञातफलं भवतीत्यर्थवादेन भगवति श्रवणमननादिविषयत्वरूपजिज्ञास्यत्वस्याभिप्रेतत्वादिह च ''सोन्वेष्टव्य'' इति वाक्येऽन्यस्यैव तत्प्रतीतेस्तदाक्षेप इत्यर्थः ॥ सर्वाधारत्वस्यवेति ॥ उभे अस्मिन्द्यावापृथिवी इत्यादिना श्रुतसर्वाधारत्वस्यान्यगतत्वप्रतीतेरिति भावः । अत्र सृष्टिहेतुत्वस्याप्रतीतेः कथं तस्याक्षेप इत्यत आह ॥ वक्ष्यमाणेनेति ॥ स्थितिहेतोरिति ॥ यद्यपि नायं नियमः । अन्यथापि लोके दर्शनात् । तथापि प्रकृताभिप्रायेणैतदिति ध्येयम् । ''चन्द्रादित्याद्याधारत्वं विष्णोरुक्त''मित्यक्षराधिकरणाक्षेपभाष्यं तूक्ताभिप्रायमिति भावः । एतेन यदुक्तं कल्पतरौ प्रागुदाहृतपरमपुरुषशब्दितस्य दहरवाक्यशेषगतोत्तमपुरुषवदब्रह्मत्वशङ्कायां तस्यापि ब्रह्मविषयत्वोपपादनात्सङ्गतिरिति तन्निरस्तम् । पुरुषमीक्षत इत्यस्य प्रागनुदाहरणत्वेनोक्तत्वात् । सन्निहितप्रधानान्वेष्टव्यत्वादिकमुखाक्षेपस्य सम्भवेऽन्यस्यानादरणीयत्वात् । एतेनैव पुरिशयस्य प्राक् परमात्मत्वं साधितम् । अत्र पुरिशयस्याकाशशब्दवाच्यस्यापरमात्मत्वं निरस्यत इति सङ्गतिरित्यादिश्रुतप्रकाशोक्तमपि निरस्तं बोध्यम् । आकाशस्य सिद्धांतेऽप्यब्रह्मत्वस्य साधयिष्यमाणत्वाच्चेति ।

**पाण्डुरङ्गि –** ॥ ॐ दहरउत्तरेभ्यः ॐ ॥ योवेदेति ॥ अत्र यो वेद निहितं गुहायामिति श्रुत्या ब्रह्मणि साधारणत्वं तस्यांते सुषिरं सूक्ष्ममित्याकाशे साधारणत्वं हृदिह्येष आत्मेति श्रुत्या जीवे साधारणत्वमिति सम्बन्धो बोध्यः । अन्वेष्टव्यं यथापृथिव्यादीति विग्रहः ।

## तात्पर्यचन्द्रिका

अत्र ''अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नं तराकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति । तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नंतराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति । स ब्रूयात् । यावान्वा अयमाकाशस्तावानेषोंतर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभा''वित्यादि छान्दोग्यवाक्यस्थं हृत्पद्मस्थत्वं किमाकाशादेः किं वा ब्रह्मण इति चिन्ता । तदर्थं हृत्पद्मस्थे श्रुतमपहतपाप्मत्वादिकं किममुख्यमुत मुख्यमिति । तदर्थं तस्य मुख्यत्वे ''यावान्वा'' इत्यादिप्रतिवचनं विरुध्यते न वेति । तदर्थं प्रतिवचनं किं ''दहरोस्मिन्नंतराकाश'' इति पूर्वं हृत्पद्मस्थतयोक्तभूताकाशमनूद्य तत्स्थस्य द्यावापृथिव्यादेरन्वेष्टव्यत्वप्रतिपादकं किं वा ''तस्मिन्यदंतस्तदन्वेष्टव्य''-मिति पूर्वोक्तान्वेष्टव्यस्य ब्रह्मत्वं विधाय तस्यान्वेष्टव्यत्वाय द्यावापृथिव्याद्याश्रयत्वप्रतिपादकमिति । तथा ब्रह्मणो द्यावापृथिव्याश्रयत्वे सुषिरश्रुतिर्विरुध्यते न वेति । यद्याद्यस्तदा प्रतिवचनविरोधेन सुषिरश्रुतिविरोधेन चापहतपाप्मत्वादेर्भूताकाश एवामुख्यस्य सम्भवात्तस्यैवान्वेष्टव्यद्यावापृथिव्याद्याश्रयत्वविशिष्टं हृत्पद्मस्थत्वम् । यदि तु द्वितीयस्तदा विरोधद्वयाभावान्मुख्येनापहतपाप्मत्वादिनाऽन्वेष्टव्यत्वद्यावापृथिव्याद्याश्रयत्वविशिष्टं हृत्पद्मस्थत्वं ब्रह्मण एव ।

**प्रकाशिका** – विषयसंशयटीकां व्यनक्ति ।। अत्रेति ।। ''तद्धृदयपद्मस्थत्वं विषय'' इत्यत्र तच्छब्दपरामर्शमाह ।। अथ यदिदमित्यादिना ।। छान्दोग्येति ।। छान्दोग्येऽष्टमाध्यायगतवाक्यस्थमित्यर्थः । वाक्यस्यार्थोऽग्रे व्यक्तः । आकाशादेः आकाशजीवयोरित्यर्थः । दहरे ब्रह्मैवेति प्रतिज्ञांशं व्यावर्त्य पूर्वपक्षोपयुक्तचिन्तामुक्त्वा ''उत्तरेभ्यः गतिशब्दाभ्या''मित्यादि हेत्वंशव्यावर्त्यपूर्वपक्षोपयुक्तचिन्तामाह ।। अपहतेति ।। ''एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्प''इत्यादिना श्रुतमित्यर्थः ।। ब्रह्मत्वमिति ।। आकाशपदेनेत्यर्थः । यद्यप्येवं न भाष्ये प्रतीयते । न्यायविवरणे च

''योऽन्वेष्टव्यो भगवांस्तस्यांतर्हृदय'' इत्यादिनान्वेष्टव्यतयोक्तस्य ब्रह्मत्वं सिद्धं कृत्वा प्रकारप्रश्ने तत्कथनपरतया यावानित्यादिवाक्यं योजितम् । विवृतं चैवमेव टीकायाम् । अतः ''तस्मिन्यदंतस्तदन्वेष्टव्य''मिति पूर्वोक्तान्वेष्टव्यस्य ब्रह्मणोऽन्वेष्टव्यत्वायाकाशादिसर्वाश्रयत्वादिप्रकारप्रतिपादकमिति चिन्ता प्रदर्शनीया । तथाप्यस्मिन्पक्षे वक्ष्यमाणदिशा प्रश्नप्रतिवचनयोस्तुल्यविभक्तिकत्वाभावात् ब्रह्मत्वविधानपक्षे तत्सत्त्वस्य वक्ष्यमाणत्वाच्छांदोग्यभाष्योक्तब्रह्मत्वकोटिकचिन्ता प्रदर्शितेति ज्ञेयम् । अत्र द्वौ पूर्ववादिसाधकावुत्तरवादिबाधकौ वाक्यानन्वयसमाख्याविरोधरूपौ न्यायविवरणभाष्याभ्यामुक्तौ । तत्राद्यघटितां चिन्तामुक्त्वा द्वितीयघटितामाह ॥ तथेति ॥ अस्पष्टत्वात् फलफलिभावं व्यनक्ति ॥ यद्याद्य इति ॥ यदि यावानित्यादिप्रतिवचनं ब्रह्मपरत्वे सुषिरश्रुतिविरोधेन भूताकाशानुवादेन तत्स्थस्य द्यावाभूम्यादेरन्वेष्टव्यत्वप्रतिपादकं तर्हि भूतस्यैव हृत्पद्मस्थत्वप्राप्तेः प्रतिवचनविरोधेनापहतपाप्मत्वादेर्गौणतया प्राक्तनमपि हृत्पद्मस्थत्वं भूतस्यैव सिध्यतीत्यर्थः । ननु यावानिति प्रतिवचनस्य वाक्यतया कथं तद्विरोधेनापहतपाप्मत्वादेर्लिंगस्य बाधेन गौणत्वोक्तिः । वैपरीत्यस्यैवौचित्यात् । वक्ष्यतिच ''शब्दादेवे''त्यत्र ''किं तदत्र विद्यत'' इत्यादिवाक्यस्यापहतपाप्मत्वादिलिङ्गाद्दुर्बलत्वमिति । न च प्रतिवचनरूपवाक्यस्य प्रथमस्थत्वेनासंजातविरोधित्वेन प्राबल्यं मन्यते पूर्वपक्षी । अग्रेतनं लिङ्गवाक्ययोः प्राबल्यदौर्बल्यकथनं तु लिङ्गत्ववाक्यत्वप्रयुक्तमेवेति न विरुध्यत इति वाच्यम् । चरमस्य मुख्यत्वाय प्रथमस्येक्षणस्यैव गौणताया न्याय्यत्वादिति पूर्वाधिकरणोक्तदिशा पूर्वबाधस्यैव युक्तत्वात् । न चाकाशश्रुतियुक्तत्वेन वाक्यस्य लिङ्गाद्बलवत्त्वम् । एष आत्माऽपहतपाप्मेति श्रवणेन लिङ्गस्यापि ''स्वशब्दा''दित्युक्तन्यायेन ब्रह्मवाचकात्मश्रुतियुक्तत्वात् । न च वाक्ये श्रुतेरभ्यासोऽस्तीति तस्य बलवत्त्वम् । ''तद्य इहात्मानमननुविद्य व्रजंति । अथ य आत्मानमनुविद्य व्रजन्ती''ति चात्मश्रुतेरभ्यासाल्लिङ्गानां बहुत्वाच्चेति चेन्मैवम् । वक्ष्माणादिशा वाक्यस्य निरवकाशत्वं लिङ्गानां सावकाशत्वमिति पूर्वपक्षिणोऽभिमानात् । एकेनापि जात्या दुर्बलेन निरवकाशेन बहूनां सावकाशानां बाधात् । ''आनर्थक्यप्रतिहतानां विपरीतं बलाबल''मिति न्यायादिति भावः ॥ यदित्विति ॥ यदि ''यावा''निति प्रतिवचनं ''किं तदत्र विद्यत'' इति प्रश्ने आकाशशब्दितं ब्रह्म विद्यत इत्यन्वेष्टव्यं ब्रह्मेत्युक्तिपरं तदा विष्णोरेव सर्वाधारतया हृत्पद्मस्थत्वप्राप्तेः प्रतिवचनविरोधाभावात् प्राक्तनमपि हृत्पद्मस्थत्वं तस्यैव । एवं

चापहतपाप्मत्वादिकं मुख्यमेव । तथा सुषिरश्रुतेरपि सर्वाधारत्वाभिप्रायेण परंपरया सुषिरस्य सर्वाधारत्वबोधनपरतयोपपत्तेस्तद्विरोधाभावाद्धृत्पद्मस्थत्वं विष्णोरेव सिध्यतीत्यर्थः ।

**पाण्डुरङ्गि** – विरोधद्वयाभावादिति ॥ प्रतिवचनविरोधसुषिरश्रुतिविरोधरूपविरोध-द्वयाभावादित्यर्थः ।

## तात्पर्यचन्द्रिका

अत्र यद्यपि ''दहरोऽस्मिन्नंतराकाश'' इति वाक्योक्ते हृत्पद्मस्थदहराकाशत्वेन चिन्ता । तस्य सिद्धान्तेऽप्यब्रह्मनिष्ठत्वात् । नापि ''तस्मिन्यदंतस्तदन्वेष्टव्य''मिति वाक्योक्ते हृत्पद्मस्थदहराकाशस्थत्वे । तत्र भाष्योक्ताकाशशब्दाख्यपूर्वपक्षबीजा-भावात्। पूर्वपक्षे दहराकाशस्थस्य सर्वाधारत्वाभावेन भाष्यटीकोक्तांबरांतहृत्याक्षेपा-योगाच्च । नापि हृत्पद्मस्थो दहर आकाश इति पूर्वपक्षे हृत्पद्मस्थदहरस्थं ब्रह्मेति सिद्धान्तो युक्तः । नापि सर्वाधारत्वे चिन्ता । ''चन्द्राद्याधारत्वं विष्णोरुक्तम् । तच्चाकाशस्य प्रतीयत'' इति भाष्यानुसारात् । ''सचन्द्रादित्याद्याधारः किं दहराकाश आहोस्वित्तत्स्थःकश्चि''दित्यादि तत्वप्रदीपानुसाराच्चेति वाच्यम् । ''लिङ्गं हृत्पद्मस्थ-त्व''मिति न्यायविवरणे ''सोक्षरः सन्हृदब्जग'' इति संक्षेपेच हृत्पद्मस्थत्वस्यैव विषयत्वोक्तेः । अत्रापि ''दहरे विष्णुरेवे''ति सिद्धांतभाष्ये सूत्रेऽपि सप्तम्यंतेन दहरपदेन दहराकाशस्थत्वस्यैव समन्वेतव्यत्वप्रतीतेश्च । ''प्रसिद्धेश्चे''त्यादिसूत्रे विष्णोर्दहराकाशस्थत्वस्यैवोपपादनाच्च । ''चन्द्राद्याधारत्व''मिति भाष्यं त्वक्षराधि-करणाक्षेपेणात्र पूर्वपक्ष इति दर्शयितुमिति टीकायामेव व्याख्यातम् । तत्वप्रदीपोऽपि तथैव व्याख्येयः । तथापि ''यावान्वा अयमाकाशस्तावानेषोंतर्हृदय'' इति वाक्योक्ते हृत्पद्मस्थत्वे चिन्ता । एवं च न कोपि दोषः । तस्य सिद्धान्ते ब्रह्ममात्रनिष्ठत्वात् । तत्र पूर्वपक्षबीजादेः सत्वाच्च ॥

**प्रकाशिका** – पूर्वपक्षटीकां विवरीतुकामो भाष्याद्युक्तपूर्वपक्षहेतूनामसिद्धिपरिहाराय समन्वीयमानलिङ्गस्वरूपं निर्णेतुमाक्षिपति ॥ अत्र यद्यपीति ॥ न चिन्तेति विच्छेदः ॥ पूर्वपक्ष इति ॥ भूतस्यैव सर्वाधारत्वेन पूर्वपक्षकरणादिति भावः ॥ नापि हृत्पद्मस्थ इति ॥ व्यधिकरणत्वादिति भावः । उक्तदोषपरिजिहीर्षया पक्षान्तरं सोपष्टंभमाशङ्कते ॥ नापीति ॥ बह्वनुरोधेनैकं भाष्यवाक्यं टीकोक्तरीत्याऽन्यथा व्याख्येयमित्याह ॥ लिङ्गमिति ॥ तथैवेति ॥ पूर्वाधिकरणाक्षेपेणात्रपूर्वपक्ष इति दर्शयितुमित्येवंरूपेणेत्यर्थः । अत एवोत्तरत्र तत्वप्रदीपे ''तत्स्थः कश्चिदित्यपरः पक्षः । सोऽपि जीव इति प्राप्त''मिति हृत्पद्मगतसुषिरस्थ एव विषयो दर्शित इति भावः । त्रेधा समाधित्सुःछान्दोग्यभाष्यरीत्या तावत्समाधिमाह ॥ तथापि यावानिति ॥ तत्रेति ॥ यावानयं बाह्याकाशस्तावान् हृदये विद्यत इत्याकाशस्य हृदयस्थताश्रवणेनाकाशश्रुतिरूपपूर्वपक्षबीजस्य सिद्धान्ते तदाकाशत्वस्य ब्रह्मनिष्ठतायाश्च सत्वादित्यर्थः ।

**पाण्डुरङ्गि** – ॥ तस्येति ॥ हृत्पद्मस्थदहराकाशत्वस्येत्यर्थः ॥ नापीति ॥ पूर्वपक्षस्य हृत्पद्मस्थदहराकाशत्वविषयकत्वात् सिद्धान्तस्य हृत्पद्मस्थदहराकाशस्थस्य ब्रह्मविषयकत्वेन समानविषयत्वाभावेन पूर्वपक्षसिद्धान्तभावानुपपत्तेरित्यर्थः । तत्वप्रदीपोऽपि तथैवेति ॥ अक्षराधिकरणाक्षेपार्थत्वेनैवेत्यर्थः ।

## तात्पर्यचन्द्रिका

**यद्वा अन्वेष्टव्य इति वाक्योक्ते हृत्पद्मस्थत्वे चिन्ता । पूर्वपक्षे तच्छब्दस्य व्यवहितपुण्डरीकपरत्वेन पुण्डरीकस्थाकाशस्यैवान्वेष्टव्यत्वेन पूर्वपक्षबीजसम्भवात् । तस्यैव सर्वाधारत्वेनाम्बरान्तधृत्याक्षेपसम्भवाच्च । यद्वा एतत्प्रकरणस्थे हृत्पद्मस्थत्वसामान्ये चिन्ता । तच्चाकाशस्येति न पूर्वः पक्षः । नापि तदाकाशस्य नेति सिद्धान्तः। येन बाधः । किन्तु द्यावापृथिव्याद्याश्रयतया यत्साक्षाद्धृत्पद्मस्थत्वं तदाकाशस्यैव । भाष्योक्तसुषिरश्रुतेः । यत्तु व्यवहितमन्वेष्टव्यतया हृत्पद्मस्थत्वं तत् द्यावापृथिव्यादेरेव । न्यायविवरणोक्तानन्वयात् । तथाच ब्रह्मणि विशेषाभावात्सामान्यमपि नेति प्राप्ते सत्यं साक्षाद्धृत्पद्मस्थत्वमाकाशस्यैव । व्यवहितं तु ब्रह्मणः ।**

**तस्यैव द्यावापृथिव्याद्याश्रयत्वमन्वेष्टव्यत्वं च । तथाच विशेषसद्भावात्सामान्यमप्यस्तीति सिद्धान्तयिष्यमाणत्वान्न कोपि दोषः ।**

**प्रकाशिका** – नन्वस्य छान्दोग्यभाष्यरीत्या सम्भवेऽपि न्यायविवरणरीत्या हृदयशब्दस्य विष्णुहृदयपरत्वात्तत्स्थत्वं सिद्धान्तेपि प्रसिद्धाकाशस्यैव । न तु विष्णोरित्यत उभयानुगुणं पक्षान्तरमाह ।। यद्वेति ।। ''यदिदमस्मिन्ब्रह्म पुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नंतराकाश'' इत्युक्त्वा ''तस्मिन्यदंतस्तदन्वेष्टव्य''मिति वाक्योक्त इत्यर्थः । तच्छब्दस्य तस्मिन्नित्यस्य । नन्वेवमाकाशस्यैवान्वेष्टव्यत्वप्राप्त्या पूर्वपक्षे द्यावाभूम्यादेरन्वेष्टव्यत्वोक्तिर्न युज्यत इत्यतस्साक्षात्परंपरासाधारण्येन वाक्यविशेषस्थत्वं विनैतत्प्रकरणगतं हृत्पद्मस्थत्वसामान्यमेव लिङ्गमित्याह ।। यद्वेति ।। बाध इति ।। सिद्धत्वमित्यपि योज्यम् । आकाशे हृत्पद्मस्थत्वस्य सिद्धान्तेप्यनुमतत्वात् ।। किं तु द्यावापृथिव्यादीति ।। अत एव टीकायां ''सर्वाधारतया हृत्पद्मस्थत्वमाकाशस्ये''त्युक्तमिति भावः ।। तस्यैवेति ।। यावान्वेति वाक्ये प्रागुक्ताकाशानुवादेन सर्वाधारत्वोक्तेरिति भावः ।। विशेषेति ।। साक्षात्परंपरालक्षणविशेषभावादिति भावः ।

**पाण्डुरङ्गि** – यावान्वायमाकाश इति टीकोक्तव्याख्यानानुसारेण चिन्तामुपपाद्य भगवतस्सर्वाधारत्वे तस्मिन्सर्वं प्रतिष्ठितमिति सुषिरस्य सर्वाधारत्वश्रुतिविरोध इति व्याख्यानानुसारेणापि चिन्ताप्रकारमाह ।। यद्वेति ।। येन बाध इति ।। दहरोस्मिन्नंतराकाश इत्यत्र हृत्पद्मस्थत्वस्याकाशमात्रनिष्ठत्वस्य सिद्धान्तेप्यभ्युपगतत्वेनाकाशस्य नेत्युच्यमाने बाधः स्यादित्यर्थः ।। तथाचेति ।। यावद्विशेषाभावे सामान्यस्य बाधितत्वादित्यर्थः । वाक्यान्वयानुपपत्तेरित्यादि टीकानुपपन्ना । आकाशशब्दस्य ब्रह्मपरत्वेन किं तदत्र विद्यत इति प्रश्ने आकाशशब्दोक्तं ब्रह्मास्तीति परिहारस्य श्लिष्टत्वात् । न चाकाशस्य प्रसिद्धाकाशपरत्वाभिप्रायेण यावान्वा इत्यादेरन्वयाभावापादनमिति शङ्क्यम् । तथापि नानन्वयः ।

## तात्पर्यचन्द्रिका

**पूर्वपक्षस्तु । हृत्पद्मस्थत्वमाकाशस्यैव । न तु ब्रह्मणः । तद्धि ब्रह्मणो हृत्पद्मस्थदहराकाशतया वा दहराकाशाश्रितान्वेष्टव्यतया वा । तत्राद्य ''आकाशस्य**

प्रतीयत'' इत्यादिभाष्येण तद्विवरणरूपया ''दहरोस्मिन्नंतराकाश'' इत्यादिटीकया च दूषितः । तत्रायं भावः । पूर्वस्मिन् ''दहरोस्मिन्नंतराकाश'' इति हृत्पद्मस्थवाक्ये परस्मिंश्च ''तावानेषोंऽतर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी'' इत्यादौ सर्वाधारवाक्ये च गगने प्रसिद्धाकाशशब्दश्रवणान्न ब्रह्मदहराकाशः । न च तल्लिङ्गादित्युक्तन्यायेन स ब्रह्मपरः । ''पद्मकोशप्रतीकाशं हृदय''मिति प्रकृतहृत्पद्मपरामर्शेन ''तस्यांते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठित''मिति श्रुत्यन्तरे सुषिरस्य हृत्पद्मस्थत्वसर्वाधारत्वयोरुक्तेः । न च तत्र सुषिरशब्दो ब्रह्मपरः । ''तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः'' इति परमात्मनः सुषिरस्थशिखामध्यस्थत्वोक्तेः । किं च दहराकाशस्य ब्रह्मत्वे ''तस्मिन्यदंतस्तदन्वेष्टव्य''मिति दहरस्थस्यान्वेष्टव्यत्वोक्तिरयुक्ता स्यात् । द्वितीयस्तु ''दहरोस्मिन्नंतराकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यमित्यनेन यावान्वा अयमाकाशस्तावानेषोंऽतर्हृदय आकाश इत्यस्यान्वयाभाव'' इति न्यायविवरणे तद्विवरणरूपायां ''वाक्यान्वयानुपपत्ते''रित्यादि टीकायां च परिहृतः । तत्रायं भावः । यावान्वा अयमाकाश इति वाक्यस्थ आकाशः किं प्रसिद्धाकाशः किं वा ब्रह्म । नाद्यः । तस्मिन्यदंतरित्यत्रान्वेष्टव्यतयोक्तस्य हृत्पद्मस्थदहराकाशस्थस्य ब्रह्मत्वे ''किं तदत्र विद्यत' इति प्रश्नस्य ब्रह्म विद्यत इति परिहारं विना ''यावान्वा'' इत्यादिना प्रसिद्धाकाशस्यान्वेष्टव्यत्वोक्तेरनन्वयात् ।

**प्रकाशिका** – आकाशप्रापकपूर्वपक्षटीकां ''सर्वाधारतया हृत्पद्मस्थत्वमाकाशस्ये''त्यादि रूपां तावत्प्रपञ्चयति ॥ हृत्पद्मस्थत्वमिति ॥ न्यायविवरणे वाक्यानन्वयोऽत्र पूर्वपक्षे हेतुरुक्तः । भाष्ये समाख्याविरोधो हेतुरुक्तः । तद्धेतुद्वयं पक्षभेदेन योज्यम् । अन्यथानुपपत्तेरिति भावेन विकल्पपूर्वमाद्यपक्षे भाष्योक्तं हेतुं योजयति ॥ तद्धीत्यादिना ॥ टीकायां प्रतिज्ञाविशेषादेरस्पष्टत्वात् समाख्याया निरवकाशत्वानुक्त्या समाख्यया लिङ्गबाधायोगाच्च निष्कृष्य तदभिप्रायमाह ॥ तत्रायं भाव इति ॥ टीकोक्तमुपलक्षणं मत्वाऽऽह ॥ परस्मिंश्चेति ॥ ''नन्वस्त्वि''त्यादि टीकां व्यनक्ति ॥ नच तल्लिङ्गादिति ॥ आकाश इति होवाचेति वाक्ये

परोवरीयस्त्वादिलिङ्गश्रवणादाकाशो ब्रह्मेत्युक्तं ''आकाशस्तल्लिङ्गा''दित्यत्र । तथेहापि सर्वाधारत्वरूपब्रह्मलिङ्गादाकाशो ब्रह्म स्यादित्यर्थः । ''तस्यांत'' इति तच्छब्दार्थविवरणायोक्तं पद्मकोशेति ॥ ''पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् । अधोनिष्ठ्यावितस्त्यांतु नाभ्यामुपरि तिष्ठति । ज्वालमालाकुलं भाति विश्वस्यायतनं महत् । संततँसिराभिस्तु लंबत्याकोशसन्निभम् । तस्यांते सुषिर''मिति नारायणोपनिषदि समाम्नानादिति भावः ॥ उक्तेरिति ॥ ननु तावता कथं लिङ्गस्य समाख्यामात्रेण बाधः । नचाकाशश्रुतिसमाख्याभ्यां लिङ्गस्य बाध इति युक्तम् । एकेनापि निरवकाशेनानेकबाधदर्शनादित्यतस्समाख्याया निरवकाशत्वं शङ्कापूर्वमाह ॥ न च तत्रेति ॥ उक्तन्यायेनैवेत्यर्थः । व्यवस्थितेत्यनंतरं ''नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी पीता भास्वत्यनूपमे''ति मन्त्रोऽनुपयोगादत्र नोदाहृतः । युक्त्यंतरं च स्वयमाह ॥ किञ्चेति ॥ न च तच्छब्दस्य पुण्डरीकपरत्वाद्ब्रह्मण एवान्वेष्टव्यत्वमिति वाच्यम् । अव्यवहिताकाशपरत्वसम्भवे व्यवहितपुण्डरीकपरत्वायोगात् । दहरस्थहृत्पुण्डरीकस्थताया दहरोस्मिन्नित्यत्रैवोक्तत्वेन पुनस्तदुक्तिवैयर्थ्याच्चेति भावः । एतेनोत्तरवाक्यगतबहुतरहेतु-विरोधाद्भूते प्रसिद्धाकाशश्रुत्या पूर्वपक्षस्तुच्छ इति भामत्युक्तं निरस्तम् । निरवकाशसमाख्यया अन्यस्यान्वेष्टव्यत्वोक्त्ययोगरूपयुक्त्याच सहिताकाशश्रुत्याऽऽकाशपूर्वपक्षस्य युक्तत्वादिति ॥ द्वितीयस्त्विति ॥ दहराश्रितान्वेष्टव्यतया वेति पक्ष इत्यर्थः । टीकोक्तं प्रतीतचोद्यनिरासेन विकल्पमुखेन विशदयन्नाद्यपक्ष इव द्वितीयपक्षेऽप्युत्तरवाक्यस्य ब्रह्मपरत्वे टीकोक्तसुषिरश्रुति-विरोधवदनन्वयोऽपि योज्य इति भावेन टीकाभिप्रायमाह ॥ तत्रेति ॥

**पाण्डुरङ्गि** – अन्वेष्टव्यद्युपृथिव्याद्याधारतयाऽऽकाशोक्तेः सम्भवादित्यतो व्याख्याति ॥ तत्रायं भाव इति ॥

## तात्पर्यचन्द्रिका

**न चान्वेष्टव्यं प्रत्याधारतया तदुक्तिः । आधारतायाः ''तस्मिन्यदन्त''रिति प्रागेवोक्तत्वेन ''किं तदत्र विद्यत'' इत्याधेयस्यैव पृष्टत्वेन चाकाङ्क्षाभावेन द्यावापृथिव्यादेरन्वेष्टव्यत्वप्रसङ्गेन चाधारत्वोक्तेरनन्वयात् । आकाशपक्षेत्वस्त्यन्वयः ।**

आकाशस्य दहरवाक्ये हृत्पद्मस्थतामुक्त्वाऽन्वेष्टव्यवाक्ये दहराकाशान्तःस्थस्यान्वेष्टव्यत्व उक्ते ''किं तदत्र विद्यत'' इत्यत्रान्वेष्टव्य आधेये पृष्टे ''यावान्वा''इत्यादिना पूर्वोक्तमाधारमाकाशमनूद्य तच्च द्यावापृथिव्याद्याश्रयत्वयोग्यत्वाय बाह्याकाशतुल्यतया विशेष्य ''उभे अस्मि''न्नित्यादिना द्यावापृथिव्यादेरन्वेष्टव्यत्वोक्तेःश्लिष्टत्वात् । एवं च पूर्वपक्षे जिज्ञासासूत्रस्याप्याक्षेपः । अत एव ''मुख्यतः पृथिव्यादीनामनुपास्यत्वा''दिति सिद्धान्तटीकायां पृथिव्यादेर्जिज्ञास्यत्वप्रतिषेधः । ननु तर्हि ब्रह्मेति द्वितीयोऽस्तु । न चैवमाधेयप्रश्नस्य ''यावा''नित्यनेनैवोत्तरितत्वेन ''उभे अस्मि''न्नित्यादिकं व्यर्थमिति वाच्यम् । ब्रह्मणो जिज्ञास्यत्वाय सर्वाधारत्वोक्तेरिति चेन्न । तस्मिन्सर्वं प्रतिष्ठितमिति समाख्याश्रुतौ साक्षात्सुषिरस्यैव सर्वाधारत्वोक्तेः । दहरोऽस्मिन्नंतराकाशस्तस्मिन्निति पूर्वोक्तप्रसिद्धाकाशस्यैवेहापि ''यावान्वा अयमाकाश'' इत्याकाशश्रुत्या ''उभे अस्मि''न्निति सप्तम्याच प्रत्यभिज्ञानाच्च । नह्यस्मिन्निति सप्तमीनिर्दिष्ट आकाशः पृष्टमाधेयं प्रत्याधारो न । प्रथमानिर्दिष्टं च द्यावापृथिव्यादिकं पृष्टमाधेयं न । किं त्वन्यदेवेत्यन्वितं भवतीति । टीकायामस्मिन्पक्षे न्यायविवरणोक्तानन्वयमनुक्त्वा भाष्योक्तसुषिरश्रुतिविरोधोक्तिस्त्वनन्वयो न लगतीति नाभिप्रेत्य । किं तु सुषिरश्रुतिविरोधोऽपि लगतीत्यभिप्रेत्य । तस्मादाकाशमेव हृत्पद्मस्थम् । अपहतपाप्मत्वादिकं त्वाकाशेऽपि युक्तम् । तस्याचेतनत्वेन पाप्माद्यत्यंताभावस्य सत्त्वात् । तत्प्रध्वंसस्य च ब्रह्मण्यप्यसत्त्वात् । सत्यकामत्वादिकं तु प्रतिहतकामादिराहित्यात् । यद्वा अभिमान्यभिप्रायेणाकाशे अपहतपाप्मत्वादिकं सत्यकामत्वादिकं चास्तु । तस्माद्धृत्पद्मस्थमाकाशमेव । जीवो वाऽस्तु । ''एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मे''त्युत्तरत्रैतच्छब्देन प्रकृतं जीवमनूद्य तस्यात्मशब्देन ''य आत्माऽपहतपाप्मा विजरो विमृत्यु''रित्यादिनोक्तहृत्पद्मस्थात्मत्वविधानात् । तत्र चैतच्छब्दस्य परज्योतिःपरत्वे नपुंसकलिङ्गता स्यात् । अपहतपाप्मत्वादिकं तु मुक्तौ जीवेऽपि सम्भवात् ''अस्य सूत्रस्य शाटकं वय यूपं तक्षती''त्यादिवद्भाविभावाभिप्रायम् । अत एवास्मिन्नेव प्रकरण उत्तरत्र ''स यदि

**पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुतिष्ठन्ते । अत्र ह्येते सत्याः कामा'' इत्यादिना मुक्तानां सत्यकामत्वाद्युक्तिः । यावान्वा इत्यादिवाक्यानन्वयस्तु ब्रह्मपक्षेऽपि सम इति ।**

**प्रकाशिका** – अन्वेष्टव्यं ''उभेअस्मि''न्नित्यादिना वक्तुं तदुपयुक्तत्वेनैतदुत्त्यन्वयोस्त्वि-त्याशङ्क्य टीकोक्तमनन्वयं साधयति ।। न चेति ।। द्यावापृथिव्यादेरिति ।। यद्यप्येतत्पूर्वपक्षिण-स्समीहितमेव । तथापि ''तमेवैकं जानथ आत्मानमन्या वाचोविमुंचथे''त्यादिना सिद्धांति-भिरन्वेष्टव्यत्वस्य त्याजितत्वादेतदनिष्टमिति भावः । तेन नोत्तरग्रन्थविरोध इति ध्येयम् । अस्मिन्पक्षे भाष्यमुपलक्षणमन्यदप्याक्षेप्यमित्याह ।। एवं चेति ।। तेन जिज्ञास्यत्वरूपब्रह्मधर्मा-दाकाशो ब्रह्मेति निरस्तम् । ''यावान्वा''इति वाक्यगताकाशो ब्रह्मेति द्वितीयपक्षष्टीकायां ''नचयावानित्यादिनाऽऽकाशाख्यो विष्णु''रित्यादिग्रन्थेन शङ्कापूर्वं निरस्तः । तं विशदयति ।। नन्विति ।। टीकोक्तं सुषिरश्रुतिविरोधमुक्त्वाऽनन्वयमपि योजयति ।। नहीति ।। हृत्पद्मस्थाकाशस्थं किमिति पृष्टे हृदये ब्रह्म तत्र च सर्वमस्तीत्यस्यानन्वयादिति भावः ।। अस्मिन्पक्ष इति ।। प्रतिवचनगताकाशो ब्रह्मेति पक्ष इत्यर्थः । ननु विष्णुलिङ्गविरोध इत्यत आह ।। अपहतेति ।। तस्मात् लिङ्गविरोधाभावादित्यर्थः । एवमाकाशपूर्वपक्षटीकां प्रपञ्च्य ''इतरपरामर्शात्स इति चे''दिति सूत्रपूर्वपक्षोक्तिपरां ''जीवस्य वैतद्भवे''दित्यादिटीकां व्यनक्ति ।। जीवोवास्त्विति ।। हृत्पद्मस्थ इत्यनुषङ्गः । तस्यात्मत्वविधानेऽपि हृत्पद्मस्थत्वं कुत इत्यत आह ।। य आत्मेति ।। तस्य प्रकृतहृत्पद्मस्थविषयत्वादिति भावः ।। विधानादिति ।। एतेन टीकादौ ''परामर्शा''दित्यस्य परामृश्यात्मत्वविधानादित्यर्थ उक्तो भवति ।

ननु तत्रैष इत्यस्य ज्योतिश्शब्दनिर्दिष्टविष्णुपरत्वमस्त्वित्यत आह ।। तत्र चेति ।। नपुंसकेति ।। उपलक्षणमेतत् । सम्पद्यत इत्यत्र कर्तृत्वेन सन्निहितजीवपरित्यागायोगादित्यपि ध्येयम् । लिङ्गविरोधमाशङ्क्य ''उत्तराच्चे''दिति सौत्राक्षेपाभिप्रायमाह ।। अपहतेति ।। अस्यसूत्रस्येति ।। सूत्रतादशायां शाटकभावाभावादिति भावः । सूत्रस्य शाटकं वयेत्येतद्यथोभे सूत्रे शाटकं भवति तथा कुर्विति भावेन प्रयुज्यते यथाच तक्षणे कृते यूपो भवति तथा कुर्विति भावेन प्रयुज्यते तद्वदिति भावः । विवृतश्चायं दृष्टान्तो महाभाष्ये ''इग्यणस्संप्रसारण''मित्यत्र यदि शाटको न वातव्यः अथ वातव्यो न शाटकः शाटको वातव्यश्चेति विप्रतिषिद्धम् । भाविनी

खल्वस्य संज्ञाऽभिप्रेता । समन्येवातव्योयस्मिन्नुते शाटक इत्येतद्भवतीति । एवमिहापि स यणः स्थाने भवति । यस्याभिनिर्वृत्तस्य सम्प्रसारणमित्येषा संज्ञा भविष्यती''ति । तथा पूर्वतन्त्रे नवमाद्यपादे ''अग्नये जुष्टं निर्वपामी''त्यत्र जुष्टमित्येतद्भाविभावाभिप्रायेणेत्युक्तं गुणशब्दस्तथेति चेदित्यत्र द्वादशेऽधिकरणे । तदेतदाह ॥ इत्यादिवदिति ॥ मुक्तावपि सत्यकामत्वादिकं प्रसिद्धम् । तदा निश्शेषकामनिवृत्तेरित्यत आह ॥ अत एवेति ॥ अपहतपाप्मत्वादेर्मुक्तविषयत्वादेवेत्यर्थः । ''सयदि पितृलोककाम'' इत्यादेर्मुक्तविषयत्वं च ''संकल्पादेव च तच्छ्रुते''रित्यधिकरणसिद्धमिति तत्प्रकरणादस्यापहतपाप्मेत्यादेर्मुक्तविषयत्वमवश्यं वाच्यम् । अन्यथा ''सयदी''त्यादेरप्रकृतविषयत्वं स्यादिति भावः । नन्वेवमप्यनन्वयदोषस्तदवस्थ इत्यतो ''यश्चोभयोस्समोदोष'' इति न्यायेन नाहं पर्यनुयोज्य इति भावेनाह ॥ यावान्वा इति ॥

**पाण्डुरङ्गि** – आकाशपक्षेतु अस्त्यन्वय इत्यादिटीका । तत्र यावान्वा इत्यादिना प्रसिद्धाकाशस्यैव विशेषमभिधायेत्युक्तं ।नतु तत्प्रयोजनमुक्तमित्यतस्तत्प्रयोजनं वदन्नेवार्थतष्टीकामनुवदति ॥ आकाशपक्ष इति ॥ अत एवेति ॥ पूर्वपक्षे जिज्ञासासूत्रस्याप्याक्षेपस्याभिमतत्वादेवेत्यर्थः । यावान्वा अयमाकाश इति वाक्यस्थाकाशो न प्रसिद्धाकाशः । किंतु ब्रह्मेति द्वितीयोस्त्विति शङ्कते ॥ नन्विति ॥ टीकायां न च यावानित्यादिनाऽऽकाशाख्यो विष्णुः सर्वाधारतया परिहारे कथ्यत इति शङ्काग्रन्थे सर्वाधारतयेत्युक्तम् । तस्य प्रयोजनमाह ॥ न चैवमाधेयप्रश्नस्येत्यादिना ॥ तस्मिन्सर्वं प्रतिष्ठितमिति साक्षात्सुषिरस्यैव सर्वाधारत्वोक्तिविरोधादिति परिहारटीकायां यावानिति वाक्योक्ताकाशस्य विष्णुत्वे न्यायविवरणोक्तानन्वयासम्भवेन सुषिरश्रुतिविरोधोऽभिहित इति प्रतीतिनिरासायाह ॥ तस्मिन्सर्वमिति ॥ यावानिति वाक्योक्ताकाशस्य ब्रह्मत्वेऽप्युक्तरीत्याऽनन्वयश्चेत्तर्ह्यस्मिन्पक्षेऽनन्वयमनुक्त्वा सुषिरश्रुतिविरोधोक्तिरयुक्तेत्यत आह ॥ टीकायामिति ॥ ननु प्रसिद्धाकाशपक्षेऽपहतपाप्मत्वाद्ययोग इत्यतोऽपहतपाप्मत्वं किं पापात्यंताभावो वा पाप्मध्वंसो वा । आद्यस्तु प्रसिद्धाकाशेऽप्यनुपपन्न इत्याह ॥ तस्येति ॥ द्वितीय आह ॥ तत्प्रध्वंसस्य चेति ॥ ननु च पाप्मात्यंताभाव एव विवक्षितः । न च चेतनत्वेनाकाशस्यापि पाप्मात्यंताभावोक्तिरिति वाच्यम् । तस्याचेतनत्वेन पापप्रसक्तेरेवाभावेन तन्निषेधायोगात् । न च नांतरिक्षेऽग्निश्चेतव्य इत्यादाविवाप्रसक्तनिषेधः किं

न स्यादिति वाच्यम् । तस्य हिरण्यं निधायाग्निचयनं कर्तव्यमिति विधिस्तावकत्वेन स्वार्थे तात्पर्याभावादित्यस्वरसादाह ।। यद्वेति ।। जीवस्य वै तद्भवेदिति टीका । तत्र जीवस्य पूर्वमप्रकृतत्वेनैतच्छब्देन तत्परामर्शानुपपत्तिः । अस्तु वा प्रकृतत्वम् । तथापि परंज्योतिश्शब्देन ब्रह्मणोऽपि प्रकृतत्वादेतच्छब्देन तत्परामर्शः किं न स्यादित्यतो व्याख्याति ।। अत एवेति ।। भाविभावाभिप्रायेण जीवेऽप्यपहतपाप्मत्वादेः सम्भवादेवेत्यर्थः ।

## तात्पर्यचन्द्रिका

**सिद्धान्तस्तु ।। हृत्पद्मस्थत्वं विष्णोरेव । अपहतपाप्मत्वादिलिङ्गात् । तच्च न हृत्पद्मस्थदहराकाशतया । येनोक्तदोषाः (षः) । किन्तु हृत्पद्मस्थदहराकाशगततया । न च गगनेऽपहतपाप्मत्वाद्युक्तिर्युक्ता । तत्र पाप्माद्यप्रसक्तेः । न चेश्वरेऽपि तदप्रसक्तिः ।**

**सजातीये दर्शनं हि प्रतिषेधे प्रयोजकम् ।**
**चेतने चैव पाप्मादिमत्ता दृष्टा जडे तु न ।। १ ।।**

**जीवस्य तु न संसारदशायामपहतपाप्मत्वादिकम् । मुक्तिदशायां तु देहाभावान्न हृत्पद्मस्थत्वम् । किञ्च अपहतपाप्मत्वादिकं भाष्योक्तश्रुत्यादिभिरीशस्य निरपेक्षम् । जीवस्य तु ईशदत्तत्वात्सापेक्षम् । न च निरपेक्षसम्भवे सापेक्षं ग्राह्यम् । एतेन सत्यकामत्वादेरपि ब्रह्मलिङ्गता सिद्धा । एतेनैवाकाशेऽप्यभिमान्यभिप्रायमपहतपाप्मत्वादीत्यपि निरस्तम् । अन्वयानुपपत्तिश्च ''योऽन्वेष्टव्यो भगवांस्तस्यांतर्हृदये यावान्वा अयमाकाशस्तावानाकाशस्तस्मिन् द्यावापृथिवी अन्तरेव समाहिते सच भगवानपहतपाप्मेत्यन्वय'' इति न्यायविवरणे परिहृता । तद्विवृतं ''तथाही'' त्यादिटीकायाम् ।**

**प्रकाशिका** – ''दहरपद्मस्थो विष्णुरेव भवे''दित्यादिटीकार्थमनूद्य व्यनक्ति ।। हृत्पद्मस्थत्वमिति ।। लिङ्गानां बहुत्वेन सूत्रादौ बहुवचननिर्देशेऽपि प्रत्येकं हेतुत्वं सूचयितुं

लिङ्गादित्येकवचननिर्देशः । एतच्च ''गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च । धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेः । प्रसिद्धेश्चे''ति सौत्रसाधकानामुपलक्षणम् । उक्तदोषाः सुषिरश्रुति-विरोधादय इत्यर्थः । लिङ्गनिवकाशत्वोक्तिपरां ''नचाकाशस्यापि पापाद्यभावेने''त्यादिटीकां व्यनक्ति ।। नच गगन इति ।। दर्शनं हीति ।। हिर्हेतौ । प्रसिद्धौ वा । नन्वस्त्विहापि सजातीये जडांतरे पापदर्शनाद्गगने तन्निषेध इत्यत आह ।। जडे तु नेति ।। यदपि जीवे सावकाशमित्युक्तं तदपि नेति भावेन ''असम्भवात् । उत्तराच्चेदाविर्भूतस्वरूपस्त्वि''ति सूत्रभाष्यटीकोक्तं व्यनक्ति ।। जीवस्यत्विति ।। ननूक्तं भाविभावाभिप्रायेण संसारिण्यपि युक्तमिति । तथाऽऽकाशेऽप्य-भिमानिद्वारा युज्यत इति चेत्यतो भाष्यटीकोक्तरीत्याऽनवकाशत्वमाह ।। किञ्चेति ।। श्रुत्यादिभिः ''एषसर्वेभ्यः पाप्मभ्य उदित'' इति ''सर्वे पाप्मानोऽतोऽनिवर्तंते'' इति ''न ह वै देवान् पापं गच्छती''त्यादि श्रुतिभिः,

> नित्यतीर्णाशिनायादिरेक एव हरिः स्वतः ।
> अशनायादिकानन्ये तत्प्रसादात्तरंति हि ।
> सत्यकामः परो नास्ति तमृते विष्णुमव्ययम् ।
> सत्यकामत्वमन्येषां भवेत्तत्काम्यकामिता ।।

इत्यादिस्मृतिभिरित्यर्थः ।। जीवस्यत्विति ।। एतेन ''आविर्भूतस्वरूपस्त्वि''ति सौत्रखण्डस्य तात्पर्यमुक्तं भवति ।। न च निरपेक्षेति ।। ''यस्य पर्णमयी जुहूर्भवती''ति श्रुतजुहूवदिति भावः । अत एव च ''यद्योन्यां तदुत्तरयोर्गायती''त्यत्रोत्तराशब्दस्योत्तराग्रन्थे निरपेक्षवृत्तित्वेन तद्गतयोरेवोत्तरयोर्ग्रहणम् । न पुनस्सापेक्षयोर्योन्युत्तरयोरित्युक्तं नवमे । एवमुत्तरेभ्य इति सौत्रलिङ्गानां निरवकाशतोक्त्या हृत्पद्मस्थदहराकाशस्थो विष्णुरित्युक्तम् । इदानीं परोक्तबाधकं निरसिष्यन्नन्वयानुपपत्तिं तावत्परिहर्तुमाह ।। अन्वयेति ।। टीकायामिति ।। ''प्रसिद्धेश्चे''तिसूत्रटीकायामित्यर्थः । एतेन भाष्येऽनुक्तावपि टीकायामन्वयोक्तिर्न्याय-विवरणमूलेति दर्शितम् ।

**पाण्डुरङ्गि –** प्रथमसूत्रोक्तं हेतुमाह ।। हृत्पद्मस्थत्वमिति ।। येनोक्तदोष इति ।। सुषिरस्य दहरस्थाकाशत्वप्रतिपादकश्रुतिविरोध इत्युक्तदोषो नेत्यर्थः । ननु चेतनत्वेन साजात्यविवक्षया

जीवे पापप्रसक्त्येश्वरे तन्निषेधे पारतंत्र्येण जीवजडाकाशयोरपि साजात्यविवक्षया जीवे पापप्रसक्त्या भूताकाशेऽपि तन्निषेधोपपत्तिरित्यरुचेराह ॥ किञ्चेति ॥ एतेनेति ॥ अपहतपाप्मत्वादेः ब्रह्मधर्मत्वोपपादनेनेत्यर्थः ॥ एतेनेति ॥ जीवस्यापहतपाप्मत्वस्येशदत्तत्वेन तत्सापेक्षत्वोपपादनेनेत्यर्थः । तथाहीत्यादिवाक्यान्वयानुपपत्तिपरिहारकटीकाग्रन्थोऽनुपपन्नः ।

## तात्पर्यचन्द्रिका

तत्रायं भावः । शरीरहृत्पुण्डरीकयोर्ब्रह्म प्रति पुरत्ववेश्मत्वोक्त्यैवान्वेष्टव्यस्य ब्रह्मत्वे सिद्धे तस्मिन्यदंतरित्यत्र हृत्पद्मस्थाकाशगतं ब्रह्मान्वेष्टव्यमित्युक्ते किं तदित्यत्र तद्ब्रह्म किं प्रकारमिति पृष्टे यावानिति परिहारवाक्ये यद्ब्रह्मान्वेष्टव्यतयोक्तं तस्यांतर्हृदये यावानेष आकाशस्तावान् सर्वोऽपि विद्यते । द्यावापृथिव्यादिकं चास्मिन्समाहितमिति ब्रह्मण आकाशादिसर्वाश्रयत्वापहतपाप्मत्वादिप्रकार उक्तः । एवं च प्रश्नवाक्ये ब्रह्मणः किं तदिति प्रथमया आकाशस्यतु अत्रेति सप्तम्या निर्देशेऽपि परिहारवाक्ये ब्रह्मणोऽस्मिन्निति सप्तम्या आकाशादेस्तु प्रथमया निर्देशो नायुक्तः । प्रकारे पृष्ट आकाशादिसर्वाश्रयत्वादिप्रकारोक्तेः ।

न प्रश्नोत्तरभावे हि हेतुतुल्यविभक्तिता ।
समानविषयत्वं तु हेतुस्तच्चात्र विद्यते ॥ १ ॥ इति ।

छान्दोग्यभाष्ये तु अस्मिन्भूताकाशे ब्रह्माख्य आकाशो वर्तते स च यावान्बहिः परमात्मा व्याप्तोऽस्ति तावानेव विद्यत इति पक्षांतरमुक्तम् । तद्विवृतमथवेत्यादि-टीकायाम् । तत्रायं भावः । ब्रह्म प्रति शरीरादेः पुरत्वादेरुक्तावपि दहराकाशस्थस्य न स्पष्टं ब्रह्मत्वं सिद्धम् । अन्यपुरेऽप्यन्यस्य वेश्मसम्भवात् । अन्यवेश्मन्यप्यन्यावस्था-नसम्भवाच्च । तथाच दहराकाशस्थमन्वेष्टव्यमिति सामान्योक्तौ किं तदित्यत्राधेय-स्वरूपप्रश्नः । तस्य च सन्निहितं यावान्वा इत्याद्युत्तरम् । तत्र सप्तम्यंतेन हृदयननिमित्तकेन हृदयशब्देनांतस्स्थत्वलिङ्गेन च दहरोऽस्मिन्नंतराकाशस्तस्मिन्नित्यं-

तस्स्थत्वयुक्तपूर्ववाक्ये किं तदत्रेति प्रश्नवाक्ये च सप्तम्याऽऽधारत्वेनोक्तस्याकाशस्य प्रत्यभिज्ञायमानतया हृदयशब्देन भूताकाशमनूद्याकाशशब्देन प्रथमांतेन ''तल्लिङ्गा'' दिति न्यायेन ब्रह्मणि मुख्येन प्रश्नवाक्ये किं तदिति प्रथमानिर्दिष्टाधेयस्य ब्रह्मत्वं विधाय ''यावान्वा अयमाकाशस्तावा''नित्यनेन च तस्य व्याप्तत्वोक्तेः । अस्मिन्पक्षे प्रश्नोत्तरयोस्तुल्यविभक्तिताऽप्यस्ति । व्यवहितं ''उभे अस्मि''न्नित्यादिकं तु जिज्ञास्यत्वोपपादकम् । न तु तत्र सप्तम्या ''किं तत्र विद्यत'' इति प्रश्नवाक्य-स्थाधारोक्तिः । न वा ''उभे'' इत्यादिना प्रथमांतेन प्रश्नवाक्यस्थाधारप्रति-योगिकाधेयोक्तिः ।

यथाहि लोके कोवांऽतर्वर्तते योऽसौ संसेव्य इति चोदिते राजांऽतर्वर्तते तस्मिन्राष्ट्रं सर्वं समाहितमित्युक्ते आधेयप्रश्नस्य सन्निहितं राजेत्यादिकमेवोत्तरम् । व्यवहितं तु राष्ट्रमित्यादिकं संसेव्यत्वोपपादकम् । तद्वत् । उक्तं चास्यामेव श्रुतावुपरि ''तस्यैतदेव निरुक्तं हृदयमिति । तस्माद्धृदय''मिति हृदयशब्दस्य हृदयननिमित्तकत्वम् । अस्मिंश्च पक्षे ''दहरोऽस्मिन्नंतराकाश'' इति वाक्यस्थ आकाशो भूताकाशः । दहरत्वादन्वेष्टव्यं प्रत्याधारत्वाच्च । यावानिति वाक्यस्थस्तु ब्रह्माकाशः । पूर्णत्वादन्वेष्टव्यत्वाद्द्या-वापृथिव्याद्याधारत्वाच्चेति ।

**प्रकाशिका** – नन्वत्र टीकाद्युक्तान्वयघटना न युक्तेव । प्रश्नवाक्ये ''किं तदत्रे''ति ब्रह्माकाशयोः प्रथमासप्तमीभ्यां निर्दिष्टयोः परिहारे सप्तमीप्रथमाभ्यां निर्देशायोगेन परिहारानन्वयस्योक्तत्वादित्यतस्तदुक्तिव्यक्तिपूर्वमुक्तशङ्कां परिहरति ।। तत्रायं भाव इति ।। यद्यपि पुण्डरीकं वेश्मेत्येव श्रुतम् । न तु ब्रह्म वेश्मेति । तथापि वेश्मेत्युक्तौ कस्येत्याकांक्षायां ब्रह्मपुर इत्युक्तपुरस्वामिनो ब्रह्मण एव पदिन्यायेनान्वय इति भावेन ब्रह्मप्रति वेश्मत्वोक्त्ये-त्युक्तम् । हृदय इत्यत्र कस्येत्याकांक्षायां तत्रापि प्रकृतं ब्रह्मैवान्वेतीत्याह ।। यद्ब्रह्मेति ।। अस्मिन् ब्रह्मणीत्यर्थः । अत्र परिहारांतरमप्यनुसन्धेयमिति भावेन टीकोक्तपक्षांतरं मूलोक्तिपूर्वं प्रागुक्तरीत्या ब्रह्मान्वेष्टव्यमित्यस्य लाभेन पुनः किं तदत्र विद्यत इत्यन्वेष्टव्यस्वरूपप्रश्नायोगेन परिहारस्य ब्रह्मस्वरूपाविषयत्वादिति प्रतीतानुपपत्तिनिरासेन व्यनक्ति ।। छान्दोग्येति ।।

शरीरादेरित्यादिपदेन वेश्म गृह्यते ।। हृदयनेति ।। हृद्युपपदे ''अय गता''वित्यस्माद्धातोः पचादित्वादच्प्रत्यये हृद्गतवाचिना हृदयशब्देनेत्यर्थः । हृदयनमप्यन्यस्य स्यादित्यत उक्तम् ।। अन्तस्थत्वलिङ्गेनेत्यादि ।। अन्तश्शब्दसमानाधिकृतत्वलिङ्गेनेत्यर्थः ।। इति न्यायेनेति ।। अत्रापि सर्वाधारत्वरूपब्रह्मलिङ्गश्रवणादिति भावः । पूर्वस्मादप्यस्य पक्षस्य विशेषोऽस्तीत्याह ।। अस्मिन्निति ।।

नन्वेवमाधेयप्रश्नस्य यावानित्यनेनैवोत्तरितत्वेनोभे अस्मिन्नित्यादिकं व्यर्थमित्यत आह ।। व्यवहितमिति ।। सन्निहितव्यवहितपदे हेतुगर्भे इति भावेन तत्फलमाह ।। न त्विति ।। तद्दृष्टान्तेन व्यनक्ति ।। यथा हीति ।। चोदिते शङ्किते सतीत्यर्थः । एतेन ''स च पृथिव्याद्याश्रयत्वा''दित्यादिटीका विवृता । हृदयशब्दस्य रूढ्या मनःपरत्वाद्योगेन दुर्बलेन कथमेतदर्थग्रहणमित्यतो वाक्यशेषबलादाज्यादिशब्दवददोष इत्याह ।। उक्तं चेति ।। ननूक्तमत्र पूर्वोक्तप्रसिद्धाकाशस्यैवेहापि ''यावान्वा अयमाकाश'' इत्याकाशश्रुत्या प्रत्यभिज्ञानादाकाशो न विष्णुरिति तत्राह ।। अस्मिंश्चेति ।। बाधकात्प्रत्यभिज्ञा बाध्यत इति भावः ।। ब्रह्माकाश इति ।। ''आसमन्तात्काशनादासमन्तात्कमश्नातीति वा । अस्मिन्कामास्समाहिता इति वाक्यशेषात् । आसमन्तात्कामानश्नातीति वे''ति छान्दोग्यभाष्योक्तव्युत्पत्त्येति ध्येयम् । अत्र प्रकरणे ब्रह्मपुरशब्दस्य बहुधा श्रुतत्वात्तस्य ब्रह्मरूपैकार्थत्वे ''दहरं पुण्डरीकं वेश्मे''त्याद्ययोगात् शरीरमात्रार्थत्वे च ''ब्रह्मपुरे सर्वं समाहितम् । नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते तदेतत्सत्यं ब्रह्मपुर''मित्यादेरयोगात् ।

**पाण्डुरङ्गि** – समानविभक्तिकत्वस्य प्रश्नोत्तरभावे प्रयोजकत्वेन प्रकृते च प्रश्नवाक्ये ब्रह्मणः किं तदिति प्रथमया आकाशस्य त्वत्रेति सप्तम्या निर्देशेन समानविभक्तिकत्वाभावेन प्रश्नोत्तरभावानुपपत्तिरित्यतष्टीकाभिप्रायमाह ।। तत्रायं भाव इति ।। अथवेत्यादि-टीकाऽनुपपन्ना । शरीरपुण्डरीकयोर्ब्रह्मप्रतिपुरत्ववेश्मत्वोक्त्यैवान्वेष्टव्यस्य ब्रह्मत्वसिद्धेः कथं ब्रह्मावस्थाननिश्चयाभिप्रायेण किं तदित्यादिप्रश्नानुपपत्तेः पूर्वपक्षोत्तरपक्षयोर्भेदाप्रतीतेश्चेत्य-तोऽभिप्रायमाह ।। अयं भाव इति ।।

## तात्पर्यचन्द्रिका

पक्षद्वयेऽपि ''अथयदिद''मिति वाक्ये ब्रह्मपुरशब्दः शरीरेऽपि वर्तते। ''ब्रह्मपुरे सर्वं समाहितम्। एतत्सत्यं ब्रह्मपुर''मित्यादौ तु पूर्णत्वात्पुरमिति व्युत्पत्त्या ब्रह्मण्येवेति द्रष्टव्यम्। अत्र न्यायविवरणे ''आकाशपक्ष एवान्वयाभाव'' इत्युक्तम्। तद्विवृतं ''न चाकाशपक्षेऽन्वयोऽस्ती''त्यादिटीकायाम्। अत्रायं भावः। हृत्पद्मस्थाकाशस्थं किमिति पृष्टे आकाशं हृत्पद्मस्थमिति परिहारोऽनन्वितः। वैयधिकरण्यात्। दहरोऽस्मिन्नंतराकाश इत्यत्रैवाकाशं हृत्पद्मस्थमित्युक्तत्वेनाकांक्षाभावाच्चानन्वयः। अथ यावानित्यादिवाक्ये द्वितीयस्याकाशशब्दस्य सप्तम्यंततामाश्रित्य दहराकाशस्थो व्याप्ताकाशोऽन्वेष्टव्य इति उच्येत तदेश्वरवदचिंत्यशक्त्यभावेन व्याप्ताकाशस्य दहराकाशस्थत्वाभावात् ''तमेवैकं जानथे''त्यादिश्रुतौ ब्रह्मण एवान्वेष्टव्यत्वसर्वाधारत्वयोरुक्तत्वेनाकाशे तयोरयोगाच्चानन्वय एव। यदि च पूर्वोक्तहृत्पद्मस्थाकाशानुवादेन तस्यापरिच्छिन्नत्वं विधाय द्यावापृथिव्यादेरन्वेष्टव्यतोच्येत तदापि परिच्छिन्नेऽपरिच्छिन्नत्वस्यायोग्यत्वादनन्वय एव। किं चोक्तरीत्या ''यावान्वा अय''मित्यादेः सन्निहितस्यैवाधेयप्रश्नोत्तरत्वेनान्वये ''उभे अस्मिन्द्यावापृथिवी'' इत्यादेरसन्निधानादनन्वयः। अपि च ''किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्य''मित्यन्वेष्टव्ये पृष्टे ''द्यावापृथिवी'' इत्याद्यनन्वेष्टव्योक्तेरनन्वय एव।

तमेवैकं जानथेति वाक्ये द्युभ्वादिकं प्रति।
आधारस्य ज्ञेयतोक्ता न तु द्युभ्वादिकस्य हि॥ १॥

किञ्च ''तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य''मित्यत्रैकत्वस्य विधेयविशेषणत्वेन पश्वेकत्ववद्विवक्षितत्वाद्वा वेत्यवधारणाच्च जिज्ञास्यस्यैकत्वं भाति। तच्च द्यावापृथिव्यादीनामनेकेषामन्वेष्टव्यत्वेऽनन्वितं स्यात्।

किं च हृत्पद्मस्थाकाशस्थस्य जडत्वे शरीरपुण्डरीकयोः पुरवेश्मत्वोक्तिरनन्विता।

पुरत्वं वेश्मता चैव चेतनं प्रति हि स्वतः ।
पुरं वा वेश्म वा दृष्टं न हि लोके जडं प्रति ॥ १ ॥

यच्चोक्तं एष आत्मेति वाक्य एतच्छब्दः परज्योतिः परश्चेन्नपुंसकलिङ्गः स्यादिति तन्न । यतः –

विधेयापेक्षया चैतच्छब्दे पुल्लिङ्गता मता ।
शैत्यं हि यत्सा प्रकृतिर्जलस्येत्यादिकेष्विव ॥ १ ॥

यद्यपि ''एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योति''रिति पूर्ववाक्ये प्रथमान्तेन पुँल्लिङ्गेनैतच्छब्देन जीवः प्रस्तुतः । परमात्मा तु द्वितीयांतेन नपुंसकलिङ्गेन परज्योतिःशब्देन । तथापि ''एष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्मे''त्यत्रैष इति शब्देन ब्रह्मैव ग्राह्यम् । निरवकाशात्मश्रुतेरमृतत्वादिलिङ्गाच्च । न ह्येतच्छब्देन परामर्शे समानविभक्तिकेनैतच्छब्देन प्रस्तावः प्रयोजकः । चैत्र आगतस्तं भोजयेत्यादौ तददर्शनात् । किं तु प्रस्तावमात्रम् । पुँल्लिङ्गं तु विधेयात्मापेक्षम् । सा प्रकृतिर्जलस्येत्यत्र तच्छब्दे स्त्रीलिङ्गतावत् । ''णेरणौ यत्कर्मणौ चेत्स कर्ते''त्यत्र तच्छब्दस्य पुँल्लिङ्गतावदस्मिन्नेव प्रकरणे ''एतत्सत्यं ब्रह्मपुरम् । एष आत्मे''त्यत्रैष इत्यस्य पुँल्लिङ्गतावत् । अस्मिन्नेव वाक्ये ''एतदमृतमभयमेतद्ब्रह्मेत्यत्रैतच्छब्दस्य नपुंसकतावच्च । न च सुषिरस्य सर्वाश्रयत्वश्रुतिविरोधः ।

सुषिरस्थब्रह्मसंस्थं सुषिरस्थमितीर्यते ।
मंजूषास्थोऽपि हि मणिर्गेहस्थ इति गीयते ॥ १ ॥

सप्तदशारत्निर्वाजपेयस्य यूप इत्यत्र वाजपेयसम्बन्धिपशुसम्बन्धिनोऽपि यूपस्य वाजपेयसम्बन्धव्यपदेशवच्च सुषिराश्रिता श्रिताश्रितस्य सुषिराश्रितत्वव्यपदेशो युक्त एवेति ।

**प्रकाशिका** – पूर्वस्य ब्रह्मपुरशब्दस्य शरीरपरत्वे पश्चात्तनस्य ब्रह्मपरत्वे प्रकृतहानाप्रकृतस्वीकारापाताद्विवेकमाह ।। पक्षद्वयेऽपीति ।। न्यायविवरणपक्षे छान्दोग्यपक्षेऽपीत्यर्थः । तथा च ''नष्टेऽपि देहे न नश्यति । अपहतपाप्मत्वादिगुणं चे''त्यादिटीका युक्तेति भावः । तथा च ब्रह्मपुरे हरौ तदाधारतया स्थितं यद्ब्रह्मपुरं शरीरं तत्र दहरं पुण्डरीकमित्यादियोजना ब्रह्मपुरपदस्य तंत्रावृत्त्यन्यतराश्रयणेन ध्येयेति भावः । उक्तं च -

बृहत्त्वात्पूर्णकामत्वाद्विष्णुर्ब्रह्मपुराभिधः ।
तस्मिंस्तस्य पुरं देहस्तस्मिन्हृदयमास्थितम् ।। इत्यादि ।

नन्वेवं ब्रह्मपुरशब्देनोभयोः प्रकृतत्वे कथमुत्तरत्रैकस्यैव ग्रहणमिति चेन्न । द्वयोस्सहनिर्देशेऽपि बुद्ध्या विभागेनैकस्यैव ग्रहणोपपत्तेः । ''अथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः । तरंत्यंजस्स्थूलधिय'' इत्यत्र भागवते जडप्रकृतेरिव । उक्तं च तात्पर्ये –

बहूनां सहनिर्देश एकयाऽभिधयैव तु ।
तयैवाभिधया तेषां परामृश्यैकमुच्यते ।। इति ।

अत एव गीतायां ''प्रकृतिं पुरुषं चैवे''त्यत्र पुरुषपदेन जीवपरयोर्ग्रहणेऽपि ''पुरुषः प्रकृतिस्थ'' इत्यत्र पुरुषपदेन जीवस्यैव ग्रहणम् । तथैव तद्भाष्योक्तेरिति । एवमन्वयानुपपत्तिबाधकं परिहृत्य सुषिरश्रुतिविरोधरूपबाधकमग्रे निरसिष्यन्परपक्षे ''न चे''त्यादिटीकातात्पर्यवर्णनमिषेण बाधकं वक्तुं तट्टीकां दुर्गमत्वान्मूलोक्तिपूर्वं व्यनक्ति ।। अत्रेत्यादिना ।। अन्वयादर्शनादित्येतद्द्वेधा व्याचष्टे ।। हृत्पद्मेति ।। ''न हि दहराकाशस्थ'' इति टीकावाक्यं शङ्कापूर्वं विवृणोति ।। अथेति ।। ''तदभावादयोगाच्चे''ति हेतुद्वयं टीकोक्तं स्फुटयति ।। तदेति ।। आदिपदेन ''यस्मिन्द्यौः पृथिवी''त्यादिश्रुताविति गृह्यते । ''नापी''त्यादिटीकाग्रन्थं योजयति ।। यदीति ।। ''दहरस्य व्याप्तत्वायोगा''दित्युपलक्षणमिति भावेनाह ।। किं चेति ।। उक्तेति ।। यथा हि लोक इति प्रागुक्तरीत्येत्यर्थः । मुख्यत इति हेतुं व्यनक्ति ।। अपि चेति ।। अनन्वेष्टव्यमसिद्धमित्यत आह ।। तमेवेति ।। हिर्हेतौ प्रसिद्धौ वा । एतदप्युपलक्षणं मत्वाऽऽह ।। किं चेति ।। पश्वेकत्ववदिति ।। उक्तमधिकरणशरीरं प्राक् छन्दोधिकरणे । पशुना यजेतेत्यत्रैकत्वं यथा विधेयं करणकारकविशेषणत्वाद्विवक्षितं तथेहापि तदित्येकवचनप्राप्तमेकत्वमपीत्यर्थः ।

कुत इत्यत आह ॥ पुरत्वमिति ॥ हि यस्मादेवं तस्मात्तदुक्तिरनन्वितेति । चेतनं प्रत्येवेत्यन्वयः । एवमाकाशजीवपूर्वपक्षौ निरवकाशभगवल्लिङ्गादिना निरस्यानन्वयबाधकं चान्वयोपपादनेन निराकृत्य परपक्षेऽनन्वयबाधकं चोक्त्वा अधुना यज्जीवपूर्वपक्षवादिनोक्तं स्वसाधकं परबाधकं तत् ''अन्यार्थश्च परामर्श'' इति सूत्रभाष्यटीकाकृतविवरणेन परिहरति ॥ यच्चेति ॥ यत इत्यस्य श्लोकेनान्वयः । विशेषशङ्कानुवादपूर्वकं श्लोकं व्याचष्टे ॥ यद्यपीति ॥ प्रस्तावः प्रकृतत्वम् । हृत्पद्मगताकाशस्थो विष्णुरित्युपेत्य तस्य सर्वाधारत्वाङ्गीकारे प्रागुक्तं बाधकान्तरमप्यनूद्यापाकरोति ॥ न चेति ॥ हि यस्मात्तस्मान्न चेति पूर्वेणान्वयः ॥ मञ्जूषेति ॥ गृहगतमञ्जूषास्थ इत्यर्थः । श्लोकोक्तो लौकिकदृष्टान्तस्स्फुट इत्युपेक्षणमिति भावेन वैदिकदृष्टान्तपूर्वं पूर्वार्धं व्यनक्ति ॥ सप्तदशेति ॥ प्राग्विवृतमधिकरणशरीरं जिज्ञासाधिकरणे । यथा साक्षात्परंपरासाधारण्येन सम्बन्धमात्रे षष्ठ्यनुशासनाद्देवदत्तस्य नप्तेत्यादाविव परंपरया वाजपेयसम्बन्धिनो यूपस्य वाजपेयसम्बन्धव्यपदेशस्तथात्रापीत्यर्थः । न चायं न्यायोऽङ्गाङ्गि-भावविषयः । तथैव रेवत्यधिकरणे द्वितीयेऽभिधानादिति वाच्यम् । अत्रापि सुषिराधेयतया श्रुतं सर्वं तदाऽधेये हरौ युक्तमित्यङ्गाङ्गिभावतुल्यत्वादिति भावः ॥

**पाण्डुरङ्गि** – ब्रह्मैव पूर्णत्वात्पुरमित्युपपत्तेरित्युक्त्या सर्वत्र ब्रह्मपुरशब्दस्य ब्रह्मपरत्वमिति प्रतीतिनिरासायाऽऽह पक्षद्वयेऽपीति ॥ न चाकाशपक्षेऽन्वयोऽस्तीति टीकाऽनुपपन्ना । पूर्वोक्त-हृत्पद्मस्थाकाशानुवादेन तस्यापरिच्छिन्नत्वं विधाय द्यावापृथिव्यादेरन्वेष्टव्यताया उच्यमा-नत्वेनान्वयोपपत्तेरित्यतोऽभिप्रायमाह ॥ तत्रायं भाव इति ॥ ननु नात्र दहराकाशस्थविषयः प्रश्नः । येन परिहारे दहराकाशोक्तावनन्वयः स्यात् । किं तु हृत्पद्मस्थविषय एव । तच्छब्दस्य व्यवहितपुण्डरीकपरामर्शकत्वेन दहराकाशपरामर्शकत्वाभावादित्यत आह ॥ दहरोऽस्मिन्निति । पृथिव्यादीनां मुख्यतो जिज्ञास्यत्वादिति टीका । तत्र हेत्वनुक्तेस्तदुक्तिपूर्वकं टीकां व्याख्याति ॥ अपि चेति ॥

## तात्पर्यचन्द्रिका

**अत्राद्ये सूत्रे स्वपक्षसाधनाय विषयवाक्ये सन्निहितात्मश्रुतेरपहतपाप्मत्वादि-लिङ्गानां चोक्तिः । तत्र च दहरशब्दः सप्तम्यंतो न तु परमत इव प्रथमान्तः । द्वितीये**

व्यवहितब्रह्मश्रुतेः सुप्तगम्यत्वादिलिङ्गस्य चोक्तिः । अत्र यदा सौत्रेण लिङ्गशब्देन ब्रह्मलोकशब्दस्य विष्णुलोकपरत्वेऽरण्याख्यसुधासमुद्राश्रयलोकत्वरूपलिङ्गोक्तिः तदा तस्य हेतुसाधकहेतुत्वाद्गतिशब्दयोरिव हृत्पद्मस्थस्य ब्रह्मत्वरूपप्रधानसाध्ये हेतुत्वाभावात्तस्य लिङ्गशब्देन पृथगुक्तिर्युक्ता । यदा तु लिङ्गशब्देन प्रधानसाध्य एवारण्याश्रयलोकवत्वरूपलिङ्गोक्तिस्तदापि ''अहरहर्गच्छंत्य एतं ब्रह्मलोक''मित्यस्यानन्तरं ''स एष आत्मा हृदी''ति श्रवणाद्गतिशब्दयोर्हृत्पद्मस्थनिष्ठता सिद्धेति तौ द्वन्द्वेनोपात्तौ । अरण्याश्रयलोकवत्त्वलिङ्गस्य तु न सा सिद्धा । ''अरश्च ह वैण्यश्चार्णवौ ब्रह्मलोक'' इत्यस्य सन्निधौ हृत्पद्मस्थस्यानुक्तेः । किंतु साध्येति लिङ्गशब्देन तस्य पृथगुक्तिर्युक्ता । तथा दृष्टमित्यनेन तु यथा गतिर्हृत्पद्मस्थनिष्ठा दृष्टा तथा लिङ्गमपि तन्निष्ठं दृष्टम् । हृत्पद्मस्थस्यावासत्वेन तल्लोके हृत्पद्मे ''एतं ब्रह्मलोक''मिति प्रयुक्तस्य ब्रह्मलोकशब्दस्यारण्याश्रयलोकेऽपि प्रयोगादिति हृत्पद्मस्थनिष्ठता साधिता । एवमरण्याश्रयलोकवत्त्वस्य हृत्पद्मस्थनिष्ठत्वेन पक्षधर्मतायां सिद्धायां साध्येन विष्णुत्वेन व्याप्त्युपपादनाय भाष्योक्तस्मृतिषु या विष्णुलिङ्गत्वप्रसिद्धिस्तद्द्योतकः सूत्रे हिशब्दः ।

तृतीये तु ''स सेतुर्विधृति''रिति स्वप्रकरणस्थधृतिरूपलिङ्गस्य ''एष सेतुर्विधरण'' इति धृतियुक्तायाः ''य एषोंऽतर्हृदय आकाशस्तस्मि''न्निति वाजसनेयश्रुतिसमाख्यायाश्चोक्तिः । समाख्याया विष्णुविषयत्वोपपादनाय तु महिमरूपविष्णुलिङ्गोक्तिः । अत्र चास्य भूताधिपतित्वादिविष्णुमहिम्नः अस्मिन् दहराकाशस्थे वस्तुनि वाजसनेयशाखायामुपलब्धेश्चेति चशब्दो भिन्नक्रमः । चतुर्थे तैत्तिरीयश्रुतिसमाख्यामात्रोक्तिः । पञ्चमे स्वपक्षबाधके परपक्षसाधके च शङ्किते परपक्षे तावदपहतपाप्मत्वाद्यसम्भवरूपबाधकोक्तिः । षष्ठे जीवेऽपि मुक्तिदशायामपहतपाप्मत्वादिसम्भवं शङ्कित्वा स्वतोऽपहतपाप्मत्वाद्यसम्भवाद्बाधकतादवस्थ्यमित्युक्तिः । सप्तमे पञ्चमे शंकितस्य जीवपरामर्शकैतच्छब्दरूपस्य स्वपक्षबाधकस्य परपक्षसाधकस्य च परिहारोक्तिः । अष्टमे तु दहरस्थत्वलिङ्गरूपे स्वपक्षबाधके परपक्षसाधके च शङ्किते पूर्वोक्तपरिहारस्मारणम् । न च स्मारणं व्यर्थम् । युक्तं व्योम्नोंऽशतोऽल्पौकस्त्वम् ।

**अंशस्यापूर्णत्वात् । ब्रह्मणि त्वंशोऽपि पूर्ण इत्यधिकाशङ्कायां ब्रह्मणोऽचिन्त्य-शक्तित्वात् ''एष म आत्माऽऽन्तर्हृदये ज्याया''नित्यादिश्रुतौ हृदयस्थांशस्यैव सर्वज्यायस्त्वोक्तेः ''गुणाः श्रुताः सुविरुद्धाश्चे''त्यादिश्रुतेश्चेत्यधिकपरिहारार्थत्वादिति सूत्रक्रमः ।**

**प्रकाशिका** – अत्राद्य इति ।। ''दहर उत्तरेभ्य'' इत्यत्र यद्यपि ''य आत्माऽऽपहतपाप्मा विजरो विमृत्युरित्यादिभ्य उत्तरेभ्यो गुणेभ्य'' इति भाष्ये ''गुणश्रवणा''दिति टीकायां लिङ्गान्येवोक्तानीति भाति । तथापि ''य आत्मे''त्यंशस्याप्युदाहृतत्वात्प्रथमश्रुतात्मशब्दत्यागे हेत्वभावात्स्पष्टत्वेन भाष्यादावनुल्लेखसम्भवादात्मश्रुतिरित्युक्तम् । गतिसूत्रे श्रुतिलिङ्गयोर्द्वयोर-प्युक्त्या तस्य प्राथम्यनिरासाय विषयवाक्ये सन्निहितेत्युक्तम् । ननु सूत्रे दहरो ब्रह्मेति भाति । कथं दहरस्थो ब्रह्मेत्युक्तिरित्यत आह ।। तत्रेति ।। निर्देशस्येत्थमपि सम्भवात् ''य एषोंऽतर्हृदय आकाशस्तस्मिन् शेते दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठितः य एषोंऽतर्हृदय आकाशस्तस्मिन्नयं पुरुषः यो वेद निहितं गुहायां परमे व्योम''न्नित्यादिश्रुत्यंतरबला-त्प्रथमांतपक्षे बाधकभावाच्चेति भावः । नन्वेवमाकाश उत्तरेभ्य इत्येव कस्मान्न सूत्रितं शब्दलाघवादपि प्रतिपत्तिलाघवस्य ज्यायस्त्वात् । मैवम् । वाक्यविशेषद्योतनार्थत्वात् दहरपदस्य प्राथम्यादल्पश्रुतेरिति चेदिति शङ्कोत्थानार्थत्वात् तत्रापि दह्रं गगनमिति समाख्यारूप-वाक्यविशेषस्य ''प्रसिद्धेश्चे''त्यत्रोपादानमिति सूचनार्थत्वाच्च दहरपदस्यैवोक्तिरिति । नन्वेवं तर्हि सूत्रे यथा श्रुतश्रौतपदानुकरणं न प्राप्तं स्यात् । श्रुतौ ''दहर'' इति प्रथमांतत्वादिति चेन्न । ''तस्मिन् यदन्त''रिति निर्देशेन तस्य श्रुतावपि सप्तम्या निर्देशात् तस्मिन्नित्येतत्पुण्ड-रीकपरामर्शि न तु दहराकाशपरामर्शि । येन श्रुतौ दहरपदं सप्तमीनिर्दिष्टं स्यादिति तु परमतप्रक्रियाखण्डने निरसिष्यते ।

द्वितीय इति ।। ''गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं चे''त्यत्र ।। व्यवहितेति ।। विषयवाक्य इत्यनुषङ्गः । श्रुतौ ''अहरहर्गच्छंत्य एतं ब्रह्मलोक''मित्युक्त्या तत्क्रमानुरोधेन ''द्वंद्वेघी''ति स्मृत्यनुरोधेन च सूत्रे गतेः पूर्वं निर्देशोऽपि प्राधान्यादुक्तिसौकर्याय च ब्रह्मश्रुतेस्सुप्तगम्यत्वादि-

लिङ्गस्य चेति व्युत्क्रमेणानुवादः । टीकायां ''तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरंतो न विंदेयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छंत्य एतं ब्रह्मलोकं न विंदन्ति । अनृतेन हि प्रत्यूढाः । स वा एष आत्मा हृदि । तस्यैतदेव निरुक्तं हृदयमितीति सुप्तप्रजाप्राप्यत्वव्यपदेशात् हृत्पद्मस्य ब्रह्मलोकत्वोक्त्या तदन्तर्गते ब्रह्मशब्दश्रवणाच्च विष्णुरेव दहरस्थ'' इति गतिशब्दौ व्याख्याय ''तथा हि दृष्टं लिङ्गं चे''त्यंशस्य ''अरश्च ह वैण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयं सरस्तदश्वत्थस्सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मय''-मित्यरण्याख्यसुधासमुद्राश्रयलोकवत्त्वरूपलिङ्गं च दृष्टमित्येकमर्थमुक्त्वा अथ वेत्यादिना ब्रह्मलोकशब्दस्य सत्यलोके प्रसिद्ध्या प्रागुक्तगतिब्रह्मशब्दरूपहेत्वोरसिद्ध्यापत्तेर्हृत्पद्मे प्रयुक्तब्रह्मलोकपदोक्तस्य विष्णुलोकत्वसाधकत्वेन हृत्पद्मस्थस्य विष्णुत्वसाधकगतिब्रह्म-शब्दाख्यहेतुसाधकपरतयाऽर्थान्तरमुक्तम् । तत्पक्षद्वयाभिप्रायव्यक्तिपूर्वं सूत्रे हेतुत्रयस्य गतिशब्दलिङ्गेभ्य इति निर्देष्टव्यत्वेऽन्यथानिर्देशो न युक्त इति चोद्यनिरासाय सूत्रविन्यासं समर्थयते ॥ अत्रेति ॥ अरण्याख्येति ॥ ''अरश्च हवैण्यश्चार्णवौ ब्रह्मलोक'' इत्युत्तर-वाक्येऽरण्याख्यसुधासमुद्राश्रयत्वलिङ्गेन ब्रह्मलोकशब्दस्य विष्णुलोकार्थकत्वेनावधृतस्येह ''ब्रह्मलोकं न विन्दन्ती''ति सुप्तगतिपरवाक्ये प्रयोगादत्रत्यब्रह्मलोकशब्दस्य विष्णुलोकप-रत्वेऽरण्याश्रयलोकत्वरूपलिङ्गोक्तिरित्यर्थः ॥ हेतुसाधकेति ॥ गतिब्रह्मशब्दरूपहेतुसाध-केत्यर्थः। किं तु साध्येत्युक्तसाधनप्रकारं सूत्रखण्डविवरणेनाह ॥ तथेति ॥ टीकायां ''हृत्पद्मस्थस्यारण्याश्रयलोकवत्त्वरूपलिङ्गश्रवणेऽपि कुतोऽयं विष्णुरिति चेत्तस्य विष्णुलोकैकलिङ्गत्वादिति हिशब्दाभिप्रायमाह- अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वाविति भाष्येणे''त्युक्तम् । तद्विवृण्वन्सौत्रहिशब्दार्थमाह ॥ एवमिति ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेरिति सूत्रटीकार्थं निष्कृष्य व्यनक्ति ॥ तृतीये त्विति ॥ य एष इति वाक्योक्तिस्तस्य हृत्पद्मस्थस्येति विषयत्वसूचनाय । एतेन गतिधृतिशब्देभ्य इति निर्देशेन लिङ्गं चेत्यनेन वाक्योपादानसम्भवे योगविभागो विफल इति प्रत्युक्तम् । समाख्यापरत्वस्यापि सत्त्वात् । एतेनैव चारण्याश्रयलोकवत्त्वलिङ्गापेक्षया धृतिरूपलिङ्गस्य पूर्ववाक्यगतत्वलिङ्गं चेत्यतः प्रागेवास्य निर्देशः कार्य इत्यपि निरस्तम् । लिङ्गं चेत्यस्य पूर्वहेतुसाधकतारूपत्वस्यापि

सत्त्वाच्चेति । एवं तर्हि समुच्चेयलिङ्गान्तरस्यानुक्तेः ''धृतेश्चे''ति चशब्दोऽस्मिन्पक्षे न युक्त इत्यतोऽस्मिन्नित्यस्यार्थद्वयं वदंश्चशब्दान्वयमाह ।। अत्र चेति ।। चतुर्थे ''प्रसिद्धेश्चे''त्यत्र ''दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दह्रं गगनं विशोकस्तस्मिन्य-दंतस्तदुपासितव्य''मिति विष्णोर्हृत्पद्मस्थत्वप्रसिद्धेश्चेत्युक्तत्वादिति भावः । मात्रपदेन लिङ्गं व्यावर्त्यते । तेन पूर्वानंतर्यमिति भावः । पञ्चमे ''इतरपरामर्शात्स इति चेन्नासम्भवा''दित्यत्र । एष आत्मेति जीवपरामर्शात्स एव दहरस्थ इति शङ्कितेऽपहतपाप्मत्वादीनां जीवेऽसम्भवादि-त्यर्थोक्तेरिति भावः । षष्ठे ''उत्तराच्चेदाविर्भूतस्वरूप''स्त्वित्यत्र उत्तराच्चेदित्यंशेन ''स तत्र पर्येति जक्षन्क्रीड''न्नित्युत्तरवचनाज्जीवेऽपहतपाप्मत्वादीनां भाविभावाभिप्रायेण सम्भवं शङ्कित्वा ''अविर्भूते''त्यंशेन परमेश्वरं गुणप्रदातृतया परंज्योतिरिति पूर्ववाक्येऽभिधाय ''स तत्र पर्येती''त्यादिना परमेश्वरप्रसादेनाविर्भूतगुणस्वरूपस्यैवोत्तरवाक्ये कथनादिति व्याख्यानादिति भावः । ''पूर्वादिभ्यो नवभ्यो वे''ति स्मात्स्मिनोर्विकल्पितत्वादुत्तरादिति सौत्रनिर्देशस्साधुः । सप्तमे ''अन्यार्थश्च परामर्श'' इत्यत्र ''इतरपरामर्शात्स इति चे''दिति शङ्कितस्य यं ज्योतिराख्यं भगवंतमभिसम्पद्य जीवस्स्वेन रूपेणाभिनिष्पद्यते स एष आत्मेति परमात्मानमेवैष इति परामृश्य तस्यात्मत्वोक्त्याऽन्यार्थत्वेन परामर्शोपपत्तेरुक्तत्वात्पुंल्लिङ्गतायाश्च समर्थनादिति भावः । अष्टमे ''अल्पश्रुतेरिति चेत्तदुक्त''मित्यत्र दहराकाशस्थत्वेनाल्प-स्थानस्थितत्वमयुक्तमित्याशङ्क्य ''अर्भकौकस्त्वा''दिति सूत्रे ''व्योमव''दित्युक्तस्य सर्वगतस्याप्यल्पस्थानस्थत्वरूपपरिहारस्य स्मारणमित्यर्थः । प्रागुक्तस्मारणेऽभ्यधिकाशङ्का-तत्परिहारयोरुक्तिपरां ''न व्योमवदीश्वरस्ये''ति टीकां विवृणोति ।। न चेति ।। अंशोऽपि पूर्ण इति ।। विश्वतश्चक्षुरित्यादेरिति भावः । विवृतं चावयवस्य पूर्णत्वमानन्दमयनये ।।

**पाण्डुरङ्गि** – हेतुसाधकहेतुत्वादिति ।। ब्रह्मणो हृत्पद्मस्थत्वसाधकं सुप्तगम्यत्वम् । तस्य ब्रह्मलिङ्गत्वसाधकमरण्याख्यसुधासमुद्राश्रयलोकवत्त्वमिति भावः । स्वपक्षबाधके सिद्धान्त-पक्षबाधके । परपक्षसाधके पूर्वपक्षसाधके । एवमुत्तरत्रापि ज्ञातव्यम् । ननु चाचिंत्यशक्तिः प्रामाणिकेऽर्थे कल्प्यते । न च पूर्णस्यांशस्य दहरस्थत्वं प्रमितमित्यत आह ।। एष इति ।। ननु विरुद्धं प्रमाणेनापि कथं प्रतिपादयितुं शक्यमित्यत आह ।। गुणा इति ।।

## तात्पर्यचन्द्रिका

अत्रान्यैः कैश्चिच्चोक्तं दहराकाशस्य भूताकाशत्वे जीवत्वे वा प्राप्ते ब्रह्मत्वेन सिद्धान्तः । सूत्रे दहरपदं च प्रथमान्तं न तु सप्तम्यंतमिति । तन्न । दहराकाशस्य ब्रह्मत्वे तस्मिन्यदंतरिति दहराकाशस्थस्यान्वेष्टव्यत्वाद्युक्त्ययोगात् । अत्रोक्तं परैः तस्मिन्यदंतरिति तच्छब्देन हृत्पुण्डरीकपरत्वायोगात् । अत एव सप्तमे चातुर्मास्यस्य तृतीये पर्वणि साकमेधीये ''एतद्ब्राह्मण एककपाल'' इति श्रुतस्यैतच्छब्दस्य व्यवहितवैश्वदेविकैककपालत्यागेन सन्निहितवारुणप्रघासिकैककपालपरत्वमुक्तम् । दहरस्य हृत्पुण्डरीकस्थतायाः ''दहरोऽस्मि''न्नित्यत्रैवोक्तत्वेन पुनस्तदुक्तिवैयर्थ्याच्च । यदंतरित्यत्र यच्छब्दस्य ''तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य''मित्यत्र तच्छब्दस्य च दहरपरत्वे पुल्लिङ्गतापत्तेश्च । केचित्तु यदन्तरित्यत्राध्याहृतेन य इत्यनेन पुल्लिङ्गेन दहरः परामृश्यते । श्रुतेन यदित्यनेन तु दहरान्तर्वर्तिगुणजातमुच्यते । यद्वा यः यत् इति पुंनपुंसकलिङ्गयोर्यच्छब्दयोः ''त्यदादीनि सर्वैर्नित्य''मित्यनेनैकशेषे ''न पुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या''मिति नपुंसके एकवचने च कृते यदिति रूपम् । एवं च यो दहरः यच्च तदंतर्वर्तिगुणजातं तदुभयमन्वेष्टव्यमिति श्रुत्यर्थ इत्याहुः । तन्न । अन्यथोपपत्तावध्याहारस्यैकशेषादिकल्पनस्य चायोगात् । लोके प्रातिपदिकार्थैकदेशस्य पदार्थान्तरेणान्वयस्याव्युत्पन्नतया यच्छब्दोक्तयोर्द्वयोरप्यंतर्वर्तित्वान्वयापाताच्च । न हि यावन्तर्वर्तेते तावानयेत्युक्त एकस्यैवान्तर्वर्तित्वधीः । किं तु द्वयोः ।

**प्रकाशिका** – अत्रान्यैः कैश्चिच्चेति ।। अन्येषामयं भावः । अथ यदिदमस्मिन्ब्रह्मपुर इति वाक्ये श्रुतो दहराकाशः किं भूताकाश उत जीवोऽथ ब्रह्मेति संशये आकाशशब्दस्य भूताकाशे रूढत्वात् ''यावा''निति वाक्ये हृत्पुण्डरीकावच्छिन्नस्याकाशस्य बाह्याकाशेनोपमितत्वाद्द्यावापृथिव्यादिसर्वाधारत्वस्योपचारेणोपपत्तेर्भूताकाश एव दहराकाश इत्येकः पक्षः । अयं चाकाशशब्दस्य ''तल्लिङ्गा''दित्यादौ रूढित्यागस्याश्रितत्वाद्वाक्यशेषगतबहुतरश्रुतिलिङ्गादिविरोधात् गत्यंतरसम्भवेऽगतिकस्य स्वेनैव स्वस्योपमेयत्वस्यायोगाच्च भूतपक्षस्तुच्छ इति जीव एव दहर इति पक्षान्तरमुक्तम् । तथा हि । जीवं प्रति देहस्य ब्रह्मपुरशब्दोक्तपुरत्वं युज्यते ।

जीवस्य परिच्छिन्नत्वेन ''ब्रह्मपुर'' इति सप्तमीनिर्दिष्टाधारं प्रत्याधेयत्वसम्भवात् । देहस्य जीवकर्मार्जितत्वेन तत्सम्बन्धविशेषसद्भावाज्जीवस्य ब्रह्मणः पुरमिति षष्ठ्युक्तसम्बन्धोपपत्तेः । ब्रह्मणस्तु स्वमहिम्नि प्रतिष्ठितस्य तदाधेयत्वाभावात्तदार्जितकर्मशून्यत्वाच्च देहस्य तदीयताव्यपदेशायोगात् । ब्रह्मपुर इति ब्रह्मशब्दस्य देहबृंहणादिना जीवेऽप्युपपत्तेः । नीरूपत्वादिना सादृश्यनिमित्तेन गौणस्याकाशशब्दस्य जीवेऽप्युपपत्तेश्च । न च राजपुरे स्वगृहे चैत्र इव जीवस्वामिके देहाख्यपुरे स्ववेश्मनि हृत्पुण्डरीक आकाशाख्यं ब्रह्म वर्ततामिति वाच्यम् । ''पुण्डरीकं वेश्म दहरोऽस्मिन्नंतराकाश'' इत्यत्रास्मिन्निति निर्दिष्टाधारत्वस्याधेयाकांक्षायां ब्रह्मपुरशब्दसन्निधापितपुरस्वामिनो जीवस्यैवाधेयत्वेनान्वयादिति । तदुक्तं भामत्यां -

आधेयत्वाद्विशेषाच्च पुरं जीवस्य युज्यते ।
देहो न ब्रह्मणो युक्तो हेतुद्वयवियोगतः ।। इति ।

एवं प्राप्ते ब्रह्मप्रातिपदिकार्थस्य विशेष्यस्य प्रधानतया तदनुसारेणाप्रधानषष्ठ्यर्थसम्बन्धस्य नेयत्वात् ब्रह्मणो देह एवोपलब्ध्या तस्य देहेन सहोपलब्धिद्वारकसम्बन्धसम्भवादाधारपरसप्तम्या अपि प्रथमश्रुतब्रह्मशब्दानुसारेण ब्रह्मोपलब्ध्याधारपरत्वात् ब्रह्मपुरस्य जीवपुरत्वेऽपि वा राजपुरे चैत्र सद्मवज्जीवपुरे ब्रह्मसद्महृत्पुण्डरीकसम्भवात् प्रागुक्त सन्निधानस्य चोत्तरवाक्यगतब्रह्मलिङ्गैर्बाधसम्भवाद्दहरो ब्रह्मेति सिद्धान्त इति । उक्तं च भामत्यां

उपलब्धेरधिष्ठानं ब्रह्मणो देह इष्यते ।
तेनासाधारणत्वेन देहो ब्रह्मपुरं भवेत् ।। इति ।

केषांचिद्दहराकाश एव पूर्ववत्संशये आकाशशब्दस्य भूते प्रसिद्धेः ''तस्मिन्यदंतस्तदन्वेष्टव्य''मित्यन्यस्यैवान्वेष्टव्यत्वोक्तेर्दहरस्य ब्रह्मत्वायोगाच्च भूताकाश इत्येकः पूर्वपक्षः । संप्रसादवाक्ये जीवप्रतीतेस्तस्यैव चोत्तरत्रेन्द्रविरोचनयोर्हिरण्यगर्भसंवादाख्यायिकायां ''य आत्माऽपहतपाप्मे''त्यादिनाऽपहतपाप्मत्वादिप्रतीतेश्च जीव इति द्वितीयः । एवं प्राप्ते ''किं तदत्र विद्यत'' इति प्रश्ने ''यावान्वा'' इत्यादिना ''एतत्सत्यं ब्रह्मपुर''मित्यंतेन दहरस्यातिमहत्त्वसर्वाश्रयत्वाद्युक्त्वा ''तस्मिन्कामास्समाहिता'' इत्याकाशान्तर्वर्तिनः कामा अन्वेष्टव्या इति प्रतिपाद्य कोऽयं दहर इति निर्दिष्टः, के तदाश्रया अन्वेष्टव्या इत्यपेक्षायां ''एष

आत्माऽपहतपाप्मे''त्यारभ्य ''सत्यसंकल्प'' इत्यंतेनाकाशशब्दनिर्दिष्टः परमात्मा, तदाश्रिता अन्वेष्टव्याः कामा अपहतपाप्मत्वादय इत्युक्त्वा ''तद्यदात्मानमनुविद्ये''त्यादिना ''कामचारो भवती''त्यंतेनान्वेष्टव्याधारतया प्रतिज्ञात आकाशः परमात्मा तद्विशेषणीभूता अन्वेष्टव्याः कामा अपहतपाप्मत्वादय इत्युपसंहाराच्च न भूताकाशो दहरः । नापि जीवः । प्रजापतिवाक्ये कर्मपरवशतया जाग्रदाद्यवस्थाभिस्तिरोहितापहतपाप्मत्वादिगुणकस्य परमात्मोपसत्तिमतस्त-त्प्रसादाविर्भूतगुणकस्य प्रत्यगात्मनः प्रतिपादितत्वेऽपि पूर्ववाक्येऽतिरोहितनिरुपाधि-कापहतपाप्मत्वादिगुणकत्वेन जीवेऽसम्भाव्यमानजगद्विधारणसर्वचिदचिद्वस्तु नियमनाद्यनंत-गुणकत्वेन दहराकाशस्य प्रतिपन्नतया दहरो ब्रह्मेति सिद्धान्त इति । अत्रावान्तरवैलक्षण्यमल्पं विहाय दूष्यांशमात्रं साधारण्येनानुवदति ।। दहरेति ।। यदवादि भामत्यां भूतपक्षस्तुच्छ इति तदयुक्तम् । तल्लिङ्गादित्यत्र निरवकाशब्रह्मलिङ्गेन रूढित्यागेऽपि इह प्रागुक्तनिरवकाश-सुषिरश्रुतिरूपसमाख्याविरोधेन वाक्यशेषस्थापहतपाप्मत्वादिधर्माणां पूर्वं चन्द्रिकोक्तदिशा भूताकाशे सावकाशत्वेन वैषम्यात् । बाह्याभ्यंतरत्वोपाधिनाऽऽकाशभेदेनोपमानसम्भवाच्च । आकाशशब्दस्य जीवेऽस्वारस्याच्च ।

यदपि मतद्वयेऽप्याकाशस्य जीवत्वेन पूर्वपक्षांतरकरणं तदप्यसाधु । भूतेरूढस्याकाश-शब्दस्य जीवेऽस्वारस्यात् । सम्प्रसादवाक्यादावुत्तरत्रापहतपाप्मत्वादिना जीवप्रतीत्यादिना पूर्ववाक्ये तस्य ग्राह्यत्वेऽपि आकाशान्तर्वर्तित्वेनापि जीवग्रहणसम्भवे दहराकाशत्वेनैव तस्य ग्रहणे प्रमाणाभावात् । य एष आत्मेत्याद्युत्तरवाक्ये दहराकाशस्थस्यैव परामर्शसम्भवेन दहरस्य परामर्शे प्रमाणाभावाच्चेत्यादि- पूर्वपक्षदोषस्य स्फुटत्वात्तमुपेक्ष्य सिद्धान्तांशमात्रं मतद्वयेऽपि दूषयति ।। दहराकाशस्येति ।। तस्मिन्यदन्तरित्यत्र तच्छब्दोऽनन्तरमप्याकाशमतिलंघ्य हृत्पुण्डरीकं परामृशतीति भामत्युक्तमनुवदति ।। अत्रोक्तं परैरिति ।। अत एवेति ।। सन्निहित-त्यागेन व्यवहितपरत्वायोगादेवेत्यर्थः । सप्तमस्याद्यपादे ''एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्ध्यवदानस्य वचना''दित्यंतिमेऽधिकरणे चातुर्मास्याख्ये कर्मणि चत्वारः पर्वशब्दिताः कर्मसमुदाया वैश्वदेववरुणप्रघाससाकमेध-शुनासीरीयनामकाः । तत्र वैश्वदेवे द्यावापृथिव्य एककपालश्श्रुतः । वरुणप्रघासेष्वपि काय एककपालः । तयोः पृथग्ब्राह्मणं समाम्नातम् । साकमेधेषु वैश्वकर्मण एककपालः । तत्र

साकमेधेषु श्रूयते ‘‘एतद्ब्राह्मण एककपाल’’ इति । तत्र साकमेधीयैककपाले किं वैश्वदेविकैककपालब्राह्मणस्यातिदेश उत वारुणप्रघासिकस्येति संशये वैश्वदेवे बहवो धर्माः आविः प्रष्टः कार्यः इत्यादयः प्रकृतित्वात् । वारुणप्रघासेषु विकृतित्वादल्पा एव धर्मविशेषाश्शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्तीत्यादय उपदिष्टाः । अतो बह्वनुग्रहाय वैश्वदेविकस्येति प्राप्ते वारुणप्रघासिकस्य सन्निहितत्वाद्वारुणप्रघासिकैककपालब्राह्मणातिदेश इति सिद्धान्तितम् । तत्र यथैतच्छब्दस्य व्यवहितपरत्वपरित्यागेन सन्निहितपरत्वं तथाऽत्रापि न्याय्यमित्यर्थः । यद्यपि ‘‘यच्चातुर्मास्यैर्यजत’’ इत्युत्पत्तिवाक्यगतबहुत्वस्य विवक्षितत्वाच्चातुर्मास्यानामिति वाच्यम् । तथापि सामान्याभिप्रायेणैकवचनम् । एतेन वाक्यशेषस्थबहुतरश्रुतिलिङ्गानुरोधेन दहराकाशस्यैवान्वेष्टव्यत्वावश्यंभावाद्बह्वनुग्रहाय सन्निधित्यागो युक्तः । ‘‘लिङ्गैः सन्निधिर्बाध्यत’’ इति कल्पतरूक्तेरिति प्रत्युक्तम् । तथात्वे साकमेधीयैककपालेऽपि बह्वनुग्रहाय वैश्वदेविकैककपालब्राह्मणातिदेश एव स्यान्न तु वारुणप्रघासिकैककपालब्राह्मणातिदेशः । स च नेत्युक्तम् । तथा च तन्न्यायविरोध इति ।

किञ्च ‘‘एष आत्माऽपहतपाप्मे’’त्यादिवाक्यशेषेन दहराकाशपरामर्शः । येन बह्वनुग्रहाय सन्निधित्यागः । किन्तु ‘‘किं तदत्र विद्यत’’ इति दहराकाशस्थ आधेये पृष्टे ‘‘यावान्वा’’ इति सन्निहितवाक्ये हृदयशब्देन हृदयननिमित्तकेन दहराकाशमनूद्याकाशशब्देन प्रथमान्तेनाधेयस्य ब्रह्मत्वं विधाय यावानित्यनेन च तस्य व्याप्तत्वं चोक्त्वा ‘‘उभेऽस्मि’’न्नित्यादिना सर्वाधारत्वं च तस्योक्त्वा ‘‘एष आत्माऽपहतपाप्मे’’त्यादिवाक्यशेषे व्याप्ताकाशशब्दितस्य दहराकाशस्थस्य सर्वाधारत्वेनोक्तस्य ब्रह्मण एव परामर्शेनात्मत्वापहतपाप्मत्वाद्युक्तिरिति प्रागेव व्यक्तमेतत् । ननु तत्र न सन्निहितत्वमात्रेण वारुणप्रघासिकस्य परामर्शः । किंतु वैश्वदेविकधर्माणां ‘‘स्वरसामैककपालामिक्षं च लिङ्गदर्शनात्’’ इति सप्तस्यं तृतीयपादीयदशमाधिकरणेऽन्यत्र श्रुतैककपालस्य वैश्वदेविकैककपालविकारत्वमित्युक्त्या तन्न्यायेनैव सिद्धेः ‘‘एतद्ब्राह्मण’’ इति वचनानर्थक्यप्रसङ्गादपीति चेत्तर्हीहाप्युक्तसुषिरश्रुतिविरोधवाक्यानन्वयादेरप्युक्तत्वाद्वक्ष्यमाणबाधकाच्च तथाऽस्तु । किं चेहापि तस्मिन्यदन्तरिति वाक्यावैयर्थ्यायैव सन्निहितदहराकाशपरत्वमुपेयमिति भावेनाह ।। दहरस्येति ।। अस्मिन्नित्यस्याधिकरणसप्तम्यंतस्य सन्निहितपुण्डरीकपरत्वादिति भावः । उपलक्षणमेतत् । तस्मिन्यदन्तरिति वाक्यं

दहराकाशस्य पुण्डरीकवेश्माधारत्वप्रतिपादनपरं चेत्तदनंतरवाक्यस्य तदाक्षेपपरतया व्याख्यानं चायुक्तम् । परमात्मनोंऽतर्वर्तितत्कारणसूक्ष्मं किमपि न सम्भवतीति ''किं तदत्र विद्यत'' इति वाक्येनाक्षिप्य द्यावापृथिव्यादिकार्यस्य तदन्तर्वर्तितया समाधानमिति परैर्व्याख्यातत्वादिति ध्येयम् । प्रागुक्तदोषनिरासाय श्रुतप्रकाशोक्तं समाधानद्वयमनूद्यापाकरोति ।। केचित्त्विति ।। गुणजातमिति ।। सत्यकामत्वादीत्यर्थः ।। त्यदादीनीति ।। त्यद्तद्यदित्यादीनि शब्दरूपाणि सर्वैस्त्यदादिभिरन्यैश्च सह वचने नित्यं शिष्यंत इत्येकस्य शेषे पुल्लिङ्गशेषः कुतो नेत्यत आह ।। नपुंसकमिति ।। नपुंसकानपुंसकमात्रकृतविशेषेऽनपुंसकेन सहोक्तौ च नपुंसकं शिष्यते एकवच्चास्य कार्यं विकल्पेन भवतीति नपुंसकस्य शेष एकवचनं चेत्यर्थः । ननु किमिह सूत्रद्वयोदाहरणेन कृत्यम् । यावता ''नपुंसकमनपुंसकेने''ति सूत्रेणैव यः यत् इति पुन्नपुंसकयोर्विग्रहे न पुंसकैकशेषस्सिध्यति । न च नित्यमेकशेषसिद्ध्यर्थं त्यदादीनीत्यस्योक्तिरिति वाच्यम् । एकवद्भावसूत्र एकवद्भावस्यैव वैकल्पिकत्वेनैकशेषस्य तत्रापि नित्यत्वात्। यथोक्तं मञ्जर्यां ''अन्यतरस्यां ग्रहणमानंतर्यादेकवच्चेत्यनेन सम्बध्यते । न त्वेकशेषेणेत्याह''तीति । सत्यम् । तथापि यः यत् इत्यनयोः ''नपुंसक''मिति सूत्रविषयत्वेऽपि त्यदादिषु पाठाद्विशिष्य त्यदादिविषयसूत्रेणैवैकशेषनिर्वाहश्श्रुतप्रकाशे दर्शित इत्यभिप्रेत्य यथाश्रुततद्ग्रन्थानुवादोऽत्र कृत इत्यदोषः ।

ननु च यच्छब्दस्य त्यदादिषु पाठेऽपि ''नपुंसकमनपुंसकेने''त्यनेनैवैकशेषो वाच्यः । अन्यथैकवद्भावाप्राप्तेः । सूत्रेऽस्येत्यनेन ''नपुंसकेने''त्यनेन प्राप्तैकशेषस्यैव परामर्शेनैकवद्भावोक्तेः । यथोक्तं मञ्जर्यां ''अस्य ग्रहणमेकवच्चेत्यस्योत्तरत्रानुवृत्तिर्मा भूदि''तीति । मैवम्। ''त्यदादीनी''त्यनेन सामान्यत एकशेषप्राप्तौ नपुंसकैकशेषस्य ''नपुंसक''मिति सूत्रेणैव प्राप्तत्वेनैकवद्भावसिद्धेरिति । ''यदन्त''रित्यत्र यच्चाकाशश्चेति यदित्यभिप्रायेण त्यदादिसूत्रोक्तिः । यच्च यश्चेति यदित्याशयेन नपुंसकसूत्रोक्तिरिति केचित् । यच्छब्दद्वयनिर्दिष्टमुभयं तच्छब्देन प्रतिनिर्दिश्यत इति भावेनाह ।। एवं चेति ।। यथोक्तं तद्भाष्ये ''तस्मिन्दहरपुण्डरीकवेश्मनि यो दहराकाशो यच्च तदंतर्वर्तिगुणजातं तदुभयमन्वेष्टव्य''मिति ।। अन्यथेति ।। सिद्धान्ते प्रागुपपादितदिशेति भावः । एतेन दहराकाशस्य तद्गुणजातस्य चोत्तरवाक्ये श्रवणात्तदनुरोधेनोक्तकल्पनं न्याय्यमिति प्रत्युक्तम् । उक्तरीत्याऽन्यथोपपत्तेः । दहरस्य ब्रह्मत्वे

बाधकानां भावाच्चेति भावः । यदुक्तं तस्मिन्हृदयवेश्मनि यदन्तर्वर्तते दहराख्यं तदन्तर्गुणजातं च यच्छब्दप्रातिपदिकार्थः । तत्र गुणजाते दहरान्तर्वृत्तित्वमन्वेति । दहरे च पुण्डरीकस्थ-त्वमिति । तदयुक्तमित्याह ॥ लोक इति ॥ तदेव व्यनक्ति ॥ न हीति ॥ एतेन तस्मिन्नित्यनेन वेश्मनिर्देशे व्यवहितपरामर्शदोषः । दहरवद्गुणजातस्यापि वेश्मस्थतापत्त्या दहराकाशान्त-र्वर्तित्वासिद्धिः । दहराकाशनिर्देशे तु दहरस्य स्वांतर्वर्तित्वाभावेनांतर्वर्तिन एवान्वेष्टव्यत्वोक्त्या दहरस्यान्वेष्टव्यत्वासिद्धिः । उभयनिर्देशस्तु सति गत्यंतरे क्लिष्टः । यच्छब्दप्रातिपदिकार्थ-योर्दहराकाशगुणजातयोर्द्वयोरपि साक्षाद्वेश्मस्थत्वस्य वा दहराकाशान्तर्वर्तित्वस्य वाऽऽपातेन दहरस्य वेश्मस्थत्वं गुणजातस्य दहरान्तर्वर्तित्वमित्यस्यासिद्धिरेव । तथा व्युत्पत्त्यभावादि-त्यपि सूचितम् ।

**पाण्डुरङ्गि** – अत एवेति ॥ सन्निहितपरत्वसम्भवे तत्त्यागेन व्यवहितपरत्वस्या-योगादेवेत्यर्थः । ननु च सन्निहितपरत्वे व्यवहितकल्पनमन्याय्यम् । न तु तदसम्भवे । प्रकृते च सन्निहितदहरपरामर्शे ब्रह्मांतःस्थस्यान्वेष्टव्यत्वं समायाति । न च तत्संभवतीत्यतो व्यवहितपुण्डरीकपरत्वमभ्युपगम्यत इत्यतो दोषान्तरमाह ॥ दहरस्येति ॥

## तात्पर्यचन्द्रिका

**किञ्च ''य एषोऽतर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा संप्रतिष्ठितः । य एषोऽतर्हृदयआकाशस्तस्मिन्नयं पुरुषः यो वेद निहितं गुहायां परमे व्योमन् दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्य-संस्थम्। तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदंतस्तदुपासितव्य''मित्यादिश्रुतिषु ब्रह्मणो हृदयाकाशस्थतैवोक्ता । न तु हृदयस्थाकाशता । यच्चोक्तं द्वितीयसूत्रे ''यथा हि दृष्ट''मित्यस्य ''सता सोम्य तदा सम्पन्नो भवती''त्यादिश्रुत्यंतरे सुप्तौ जीवानां ब्रह्मविषयकं गमनं दृष्टमित्यर्थ इति तन्न । सूत्रे गमनस्य समासैकदेशेन स्त्रीलिङ्गेन च गतिशब्देन निर्दिष्टस्य नपुंसकलिङ्गेन दृष्टपदेनानन्वयात् । एतेन दृष्टशब्दो गतिशब्दरूपोभयविशेषणमिति केषांचित्पक्षोऽपि निरस्तः । तथात्वे दृष्टशब्दस्य**

पुल्लिङ्गत्वद्विवचनांतत्वयोरापातात् । यच्चोक्तमुभाभ्यां लिङ्गामित्यस्य तदेवगमनं ब्रह्मलोकशब्दे ब्रह्मैव लोक इति सामानाधिकरणसमासो न तु षष्ठी समास इत्यत्र लिङ्गाम् । न हि जीवानामहरहः सत्यलोकगमनमस्तीत्यर्थ इति । तन्न । उत्तरत्र ''अरश्च ह वैण्यश्चार्णवौ ब्रह्मलोके । तृतीयस्यामितो दिवि । तदैरं मदीयं सरः । तदश्वत्थः । सोमसवनस्तदपराजितापूर्ब्रह्मणः'' इति श्रुतौ ''परस्य ब्रह्मणो लोके श्वेतद्वीपाभिधे परे । अरोण्यश्चार्णवौ दिव्या'' वित्यादिस्मृतौ च षष्ठीश्रवणादरण्याख्यसुधासमुद्रसरोश्वत्थाद्याश्रयत्वलिङ्गाच्च षष्ठीसमासस्य युक्तत्वात् । ''एतया निषादस्थपति''मित्यत्र तु वाक्यशेषे षष्ठ्या अश्रवणात्समानाधिकरणसमासो युक्तः । एवं चोत्तरवाक्यानुसारेण ''अहरहर्गच्छंत्य एतं ब्रह्मलोक''मित्यत्रापि ब्रह्मण आवासस्थानत्वाद्दहराकाशो ब्रह्मलोकशब्दार्थः । यथा ब्रह्मपुरे दहरमित्यत्र शरीरं ब्रह्मपुरशब्दार्थस्तद्वत् । न हि तदावासस्थानप्राप्तिं विना तत्प्राप्तिः । यच्चोक्तमुभाभ्यां तृतीयसूत्रे धृतेर्महिम्न इति पदद्वयं समानाधिकरणमिति । तन्न । अम्बरान्तधृतेरित्यादाविव धृतेरित्यनेनैव सेतुर्विधृतिरिति श्रौतस्य धारकत्वस्योक्तिसम्भवेन महिम्न इत्यस्य वैयर्थ्यात् ।

**प्रकाशिका** – एवं श्रुत्यर्थास्वारस्यं दहरस्य ब्रह्मत्वे व्युत्पाद्यानेकमानविरुद्धं च दहरस्य ब्रह्मत्वमिति भावेन मतद्वयेऽपि सूत्रार्थं निराह ॥ किञ्चेति ॥ एतेन दहरस्याब्रह्मत्वे ''यावान्वा'' इत्यादिना दहराकाशमाहात्म्यवर्णनं न स्यादिति निरस्तम् । अनेकमानविरोधेनोक्तरीत्या तस्य दहराकाशस्थाकाशाख्यभगवन्माहात्म्यपरत्वोपपत्तेरिति । य एष इति वाजसनेयश्रुतौ सर्ववशित्वादिलिङ्गाद्ब्रह्मपरत्वं ''दिव्य'' इत्याथर्वणे ''मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ये हृदयं सन्निधाय । तद्विज्ञानेन परिपश्यंति धीरा आनन्दरूपममृतं यद्विभाती''ति वाक्यशेषाद्धृद्गताकाशस्थस्य ब्रह्मत्वं सिद्धम् । य एष इत्यादि ॥ त्रीण्यपि वाक्यानि तैत्तिरीयोपनिषदि क्रमेण शिक्षाब्रह्मवल्लीनारायणेषु श्रुतानि । व्योमन् व्योम्नि ''सुपांसुलु''गित्यादिना सप्तम्या लुकि ''न ङिसम्बुद्ध्यो''रिति नलोपाभावः ।

मतद्वयेऽपि द्वितीयसूत्रैकदेशार्थं दूषयितुं परमतं तावदनूद्य प्रत्याह ॥ यच्चेति ॥ परैरिति वर्तते । अहरहर्गच्छन्त्य एतं ब्रह्मलोकमित्युक्तं यत्सुप्तप्रजानां ब्रह्मलोकगमनं यश्च ब्रह्मैव लोक्यत इति लोक इति ब्रह्मलोकशब्दः ताभ्यां गतिशब्दाभ्यां दहरो ब्रह्म । तद्धि सुप्तजीवानां ब्रह्मविषयगमनरूपलिङ्गं च "सता सोम्य तदा सम्पन्न" इत्यादौ दृष्टम् । तथा ब्रह्मलोकशब्दः सत्यलोकपरः किं न स्यादित्याशङ्कय तथा हि इदमेव सुप्तानां ब्रह्मलोकगमनरूपलिङ्गं ब्रह्मलोकशब्दस्य समानाधिकरणसमासे दृष्टम् । न हि सुप्तानामहरहस्सत्यलोकगमनमस्तीत्यर्थः परेषाम् । केषाञ्चित्तूक्ताभ्यामेव गतिशब्दाभ्यां दहरो ब्रह्म । तथा हि सुप्तौ जीवानां गमनरूपं लिङ्गं च ब्रह्मविषयं दृष्टं "सति सम्पद्य नविदु"रित्यादौ । तथा ब्रह्मलोकशब्दश्च "एष ब्रह्मलोकस्सम्राडिति होवाचे"त्यादौ ब्रह्मविषयो दृष्टः । तथा सुप्तगमनं लिङ्गं ब्रह्मलोकशब्दस्य समानाधिकरणसमासेऽपि दृष्टम् । सुप्तानामहरहस्सत्यलोकगमनाभावादित्यर्थः । तत्र गतिशब्दाभ्यामित्यंशार्थस्याविरोधादनिरासेनांशान्तरार्थस्यैव निरासः । एतेनेति ॥ परमते सूत्रखण्डार्थनिरासेनेत्यर्थः ॥ तथात्व इति ॥ उभयविशेषणत्वे तथा हि लिङ्गशब्दौ दृष्टाविति विन्यासः स्यादित्यर्थः । सूत्रखण्डस्य द्वाभ्यामप्युक्तमर्थान्तरमप्यनूद्य निराह ॥ यच्चेति ॥ न तु षष्ठीति तथात्वे कमलासनलोकपरः स्यादिति भावः । तस्य लिङ्गत्वं व्यनक्ति ॥ न हीति ॥ अत्र प्रयुक्तस्यैव ब्रह्मलोकशब्दस्याग्रे षष्ठ्यंतविग्रहाश्रयणदर्शनादिहापि तथैव युक्त इत्याह ॥ उत्तरत्रेति ॥ तत्रापि कथं षष्ठ्यंतसमास इत्यतस्तस्य लोकपरत्वेन ब्रह्मपरत्वाभावात्तथासमास इति भावेन वाक्यशेषमुदाहरति ॥ तृतीयस्यामिति ॥ ऐरं मद्ययुक्तम् । मदीयं मदकरम् । सरः सरोवरम् । सोमसवनः अमृतस्रावी । पूः पुरी । "दिव्यौ चिदानन्दरसात्मका"विति छान्दोग्यभाष्योक्तस्मृतावित्यर्थः । अत्र यद्यपि पूर्वतंत्र एव निषादस्थपतिनये कर्मधारयबलवत्त्वस्य सिद्धत्वान्न तल्लिङ्गेनेह साध्यमिति सूत्रखण्डो व्यर्थ एवेत्यपि सुवचम् । तथापीह षष्ठीसमास निराकरणेन कर्मधारयस्थापनाय लिङ्गमप्यधिकमस्तीति तदप्युक्तं सूत्रकारेणेति भामत्यामुक्तत्वात्तद्दूषणमुपेक्ष्य श्रुतिविरुद्धं चैतद्व्याख्यानमिति वक्तुं दूषणान्तरमेवोक्तम् । यदुक्तं भामतीरामानुजभाष्ययोर्निषादस्थपतिन्यायेन च कर्मधारय इति तत्र तद्वैषम्यमाह ॥ एतयेति ॥ षष्ठे "स्थपतिर्निषादः स्याच्छब्दसामर्थ्या"दित्याद्यपादीयांतिमाधिकरणे "रौद्रं वास्तुमयं चरुं निर्वपे"दिति रौद्रेष्टिं प्रकृत्य श्रुते "एतया निषादस्थपतिं याजये"दित्यत्र द्विजातिरेव यो निषादानामाधिपत्यं करोति तस्यात्राधिकारः षष्ठीसमास एवायमथ निषाद एव स्थपतिः

तस्याधिकारः कर्मधारय एव समास इति संशये पक्षद्वयेऽप्यस्य यौगिकत्वात्षष्ठी-समासत्वेऽग्निविद्यावत एव त्रैवर्णिकस्याधिकारलाभात् कर्मधारयपक्षेऽग्निविद्याशून्यस्यापि तत्प्राप्तेः षष्ठीसमास एवेति प्राप्ते अस्मिन्पक्षे षष्ठ्यश्रवणेन निषादशब्दस्य तत्सम्बन्धिनि स्थपतौ लक्षणापत्तेः कर्मधारये तदभावाद्वचनबलादग्निविद्याहीनस्याप्यधिकारोपपत्तेः कर्मधारय एवेति सिद्धान्तितम् । तत्र षष्ठीग्राहकवाक्यशेषोऽत्रैव नास्तीत्यर्थः । तथा चेह वाक्यशेषान्यथानुपपत्त्या प्रबलोऽपि कर्मधारयस्त्याज्यः । यथा ''श्येनेनाभिचरन्यजेते''त्यत्र ''यथा वै श्येन'' इति वाक्यशेष- बलाच्छ्येनशब्दे प्रबलरूढित्यागस्तद्वदिति भावः ।

नन्वेवं कथं तर्हि टीकायां ब्रह्मैव सर्वलोकाश्रयत्वादिना लोकपदोक्तं वेति कर्मधारयस्स्वीकृत इति चेन्न । षष्ठ्यर्थात्यागेनैवार्थान्तरस्योक्तेः । अत एव ''परं ब्रह्मैव लोकनात् । ब्रह्मलोक इति प्रोक्तस्तस्य लोकोऽपि कथ्यत'' इति छान्दोग्यभाष्यविरोधोऽपि प्रत्युक्तः । अस्त्वेवं तत्र ततश्च किमित्यत आह ।। एवं चेति ।। दहराकाशो ब्रह्मलोकशब्दार्थ इति ।। यद्यपि टीकायां ''हृत्पद्मस्य ब्रह्मलोकत्वोक्त्ये''त्यादिना हृत्पद्मस्थं ब्रह्मलोकशब्दार्थ इति भाति । तथापि परैर्दहराकाशस्य कर्मधारयेण ब्रह्मलोकशब्दार्थत्वेन ब्रह्मत्वोक्तेस्तन्नि-रासतात्पर्येणैवमुक्तिः । नन्वेवं दहराकाशगत्या दहरस्थस्य कथं ब्रह्मत्वम् । दहरस्थगतेरेव वक्तव्यत्वात् । अतो दहरमेव ब्रह्मेत्यत आह ।। न हीति ।। वैयर्थ्यादिति ।। सिद्धान्ते तु महिम्न इत्यादेस्समाख्याप्रदर्शकत्वेन सार्थक्यमिति भावः । ननु धृतेर्धारणाद्दहराकाशो ब्रह्मेत्युक्ते कुत इत्याशङ्कायां धृतिरूपलिङ्गस्य ब्रह्मधर्मतासाधनाय महिम्न इत्यादि सार्थकम् । अस्य धारणलक्षणस्य महिम्नोऽस्मिन्नीश्वरे ''एष सेतुर्विधारण'' इत्यादिश्रुत्यंतरे उपलब्धेरिति भामत्त्याद्युक्तेरित्यत उक्तमंबरांतेति ।। अन्यथा तत्रापि साधनप्रसङ्ग इति भावः । ब्रह्मधर्मतासाधकत्वेऽप्यस्यास्मिन्नुपलब्धेरित्येतावतैव पूर्तौ महिम्न इति व्यर्थमिति भावेनोक्तं महिम्न इत्यस्येति ।। श्रुत्यंतरेष्वित्यध्याहारप्रसङ्गाच्चेत्यपि ध्येयम् ।।

**पाण्डुरङ्गि –** ब्रह्मणो दहराकाशस्थत्वाभ्युपगमे श्रुत्यंतरविरोधं चाह ।। किं चेति ।। नन्वेवं निषादस्थपतिमित्यत्रापि निषादश्चासौ स्थपतिश्चेति कर्मधारयो न स्यात् । किन्तु निषादानां स्थपतिरिति षष्ठीसमास एवेत्यत आह ।। एतयेति ।। ननु षष्ठीसमासे निरंतरं ब्रह्मलोकगमनं वक्तव्यम् । न च तदस्तीति कथं षष्ठीसमास इत्यत आह ।। न हीति ।। ब्रह्मैव लोकमिति समानाधिकरणसमासो न स्यात् । ब्रह्मप्राप्तेर्ब्रह्मलोकप्राप्तिं विनाऽयोगादित्यभिप्रायः ।

## तात्पर्यचन्द्रिका

यच्चोक्तमुभाभ्यां ''आकाश इति होवाचे''त्यादावाकाशशब्दस्य ब्रह्मणि प्रसिद्धेरिति चतुर्थसूत्रार्थ इति । तन्न । अस्मद्रीत्या समन्वीयमानाकाशस्थत्वस्य ब्रह्मणि प्रसिद्ध्युक्तिसम्भवेऽसमन्वीयमानदहरशब्दसमानाधिकरणाकाशशब्दस्य ब्रह्मणि प्रसिद्ध्युक्तेरयोगात् । यच्चोक्तं पञ्चमसूत्रे असंभवादित्यस्य बुद्ध्याद्युपाधिपरिच्छिन्ने जीवे ''यावान्वा अयमाकाश'' इत्याकाशोपमेयत्वाद्यसंभवादित्यर्थ इति । तन्न । ब्रह्मणोऽपि ''ज्यायानाकाशा''दित्यादिश्रुत्याऽऽकाशादपि ज्यायस्त्वेन तदुपमेयत्वायोगात् । पुण्डरीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरं तदिति चेन्न । त्वन्मते सुषुप्त्यादावनुगतजीवभावे तदननुगतबुद्ध्यादेरनुपाधित्वात्तदनुगताविद्याया एव चोपाधित्वादविद्योपाधिकजीवेऽपि पुण्डरीकवेष्टनकृतदहरत्वनिवृत्तेः सम्भवात् । यच्चोक्तं षष्ठस्य परं ज्योतिरित्याद्युत्तरवाक्य आविर्भूतो जीव उच्यते । न त्वविद्यावृतः । आविर्भूतं च स्वरूपं ब्रह्मैवेति तद्वाक्यं शुद्धब्रह्मपरमेव । न तूपहितजीवपरमित्यर्थ इति । तन्न । ''स तत्र पर्येति जक्षन्क्रीडन्रममाण'' इति तत्र विशिष्टस्यैवोक्त्या शुद्धपरत्वायोगादिति दिक् । अत्रापि परमते दहरस्य जीवत्वनिषेधेन ब्रह्मत्वोक्तेः ''गतिशब्दाभ्या''मित्यनेन च जीवस्य ब्रह्मगत्युक्तेः, दहरवाक्यशेषे च ''सत्यकामः सत्यसङ्कल्प'' इति श्रवणात्परपक्षप्रतिकूलता व्यक्तैव । एवमुत्तरत्राप्यूह्यम् ।

**प्रकाशिका** – यच्चेति ॥ ''अस्य लोकस्य का गतिरित्याकाश इति होवाच आकाशो वै नामनामरूपयोर्निर्वहिते'' त्यादावाकाशशब्दस्य ब्रह्मणि प्रसिद्धेर्दहराकाशो ब्रह्मेत्यर्थ इति तन्मते सूत्रार्थः ॥ दहरशब्दसमानाधिकरणेति ॥ सूत्रे दहरशब्दस्यैवोक्त्या तस्यैवान्यत्र ब्रह्मणि प्रसिद्धिस्तद्घटितश्रुत्युदाहरणेनैव युक्ता । न तु दहरपदरहितश्रुतिषु सूत्रानुपात्तकेवलाकाशपदस्येत्यर्थः । अस्माकं तु सूत्रे दहर इति सप्तम्या दहराकाशस्थत्वस्याभिमतत्वात्तस्य च ''दह्रं गगनं विशोकस्तस्मिन्यदंतस्तदुपासितव्य''मिति श्रुत्यन्तरे श्रवणान्न दोष इति भावेनोक्तमस्मद्रीत्येति ॥ यच्चेति ॥ परैरिति सम्बध्यते । ''एष संप्रसादोऽस्माच्छरीरात्समुत्थाये''त्यादिना सम्प्रसादशब्देन सुप्त्यवस्थापन्नं जीवं परामृश्य तस्यैव

शरीरात्समुत्थानाभिधानाद्दहरो जीव इति चेन्न । बुद्ध्याद्युपाधिपरिच्छिन्ने जीवे ''यावान्वा'' इत्यादिवाक्योक्ताकाशोपमितत्वाद्यसम्भवादित्यन्येषामर्थः । ननु न भूताकाशमानत्वं ब्रह्मणोऽत्र विधीयते । येन ज्यायानयमाकाश इति श्रुतिविरोधस्स्यात् । अतिभूताकाशोपमानेन पुण्डरीकोपाधिप्राप्तदहरत्वं निवर्त्यत इति भाष्यभामतीभ्यामुक्तमाशङ्कते ॥ पुण्डरीकेति ॥ तदननुगतेति ॥ अन्तःकरणलयस्य सुप्तावभ्युपेतत्वादिति भावः । अस्त्वेवमित्यत आह ॥ अविद्येति ॥ तस्य सर्वगतत्वाभ्युपगमात् । तथा चानूदितं प्रति कर्मव्यवस्थाभङ्गे ग्रन्थकारैरविद्योपाधिकं सत्सर्वगतमन्तःकरणोपाधिकं सत्परिच्छिन्नं चेति । तथा च जीवपूर्वपक्षनिरासकः सौत्रो हेतुर्न स्यादिति भावः । अत्रापहतपाप्मत्वाद्यसम्भवस्यैव हेत्वर्थतया रामानुजीयैरुक्तत्वात्तस्य चानुमतत्वात्तन्न दूषितम् ॥ यच्चेति ॥ अत्रापि परैरिति योज्यम् । इन्द्रविरोचनोपाख्यानरूपोत्तरवाक्यसन्दर्भे ''य आत्माऽपहतपाप्मे''त्याद्युपक्रम्य ''य एषोंऽतरक्षिणि पुरुषो दृश्यते'' इत्यक्षिस्थं जीवं निर्दिश्य ''एतं त्वेव भूयोऽनुव्याख्याऽस्यामी''ति तमेव पुनः परामृश्य ''य एष स्वप्ने महीयमानश्चरत्येष आत्मे''ति ''मर्त्यं वा इदं शरीर''मिति शरीरसम्बन्धिनिंदापूर्वं ''एष संप्रसाद'' इत्यादिश्रवणाज्जीवपरमेवैतद्वाक्यमिति चेन्न । तत्राप्याविर्भूतस्वरूपस्य विवक्षितत्वात् । तादृशं च ब्रह्मैवेत्यपहतपाप्मत्वादिकं तत्र युक्तमित्यर्थ इत्युक्तमित्यर्थः । सूत्रान्तरेऽप्यनुपपत्तिरूह्येत्याह ॥ दिगिति ॥ तथा हि । जपाकुसुमसन्निधानात्स्फटिकादेरिव शरीरेन्द्रियादिसन्निधानात्कलुषितस्य जीवस्य स्वाभाविकब्रह्मभावोपदेशार्थं ''य एषोंऽतरक्षिणी''त्यादौ तिसृष्वप्यवस्थासु जीवपरामर्श इति सप्तमार्थ इति तन्न । ''उपसंपद्ये''ति समीपप्राप्तेरेवोक्त्या जीवस्य ब्रह्मभावस्यैवाभावात् । ''स तत्र पर्येति जक्ष''न्नित्याद्ययोगाच्च । यदपि दहरहृत्पद्मस्थतयाऽल्पश्रुतेर्दहरो न ब्रह्मेति चेत् तदुक्तं ''अर्भकौकस्त्वा''दित्यत्र ''यावान्वा'' इत्यादिश्रुत्या बाह्याकाशोपमितित्वोक्त्या च प्रत्युक्तमित्यष्टमार्थ इति तन्न । अत्रोक्तरीत्याऽल्पत्वस्य ब्रह्मण्यप्युपासनार्थत्वे जीवेऽपि ब्रह्मधर्माणामुपासनार्थत्वापत्तेः । ''यावान्वा'' इत्यादिश्रुत्याऽत्राल्पत्वं प्रत्युक्तमित्यप्ययुक्तम् । तस्य दहरत्वनिवृत्तिपरत्वेन तस्या विद्योपाधिके जीवेऽपि सम्भवादिति ।

इदमधिकरणं निर्गुणजीवाभेदप्रतिकूलत्वात्परैरेतन्नारंभणीयमित्याह ॥ अत्रापीति ॥ मिथ्यार्थपरमेतदिति च प्रत्युक्तमन्तर्यामिनय इति भावः । एवं परप्रातिकूल्यमित्यर्थः । यत्तु हृत्पद्मस्थदहराकाशः किं भूतमुत जीवः किं वा शिव इति संशये आकाशश्रुतेर्भूते रूढत्वाद्भूताकाशः । अल्पत्वश्रुतेर्जीवो वा । न व्यापी शिव इति प्राप्ते अपहतपाप्मत्वादिभ्यो हेतुभ्यो दहराकाशश्शिव एवेति । तन्न । दहराकाशस्य ब्रह्मत्वे तद्गतस्यान्वेष्टव्यत्वाद्युत्त्ययोगस्योक्तत्वात् । तस्मिन्नित्यस्य व्यवहितपुण्डरीकपरत्वस्यान्याय्यत्वात् । ''तस्मिन्यदन्त''रित्यस्य व्यर्थत्वाच्च । यदंतरिति यच्छब्दस्य पुल्लिङ्गतापत्तेश्च । यदत्र शिवार्कमणिदीपिकायामुक्तं लिङ्गव्यत्त्ययेन वा नपुंसकलिङ्गस्त्रीलिङ्गपुल्लिङ्गानुगतं सामान्यमेव न तु विशेषान्तरमिति शाब्दिकमर्यादया लिङ्गान्तरनिर्दिष्टे नपुंसकलिङ्गं युक्तमिति वा ''सुपां सुलु''गिति सोर्लुकि सति पुल्लिङ्गस्यैवैतद्रूपमिति वेति तन्न । अस्मद्रीत्या गतौ सत्यां क्लेशायोगात् । उत्तराधिकरणे तु प्रबलबाधकाद्गत्यंतराभावाच्च व्यत्ययादिनोपपत्तिर्वक्ष्यत इति नास्मत्प्रतिबन्दी । ''य एषोंऽतर्हृदय आकाश'' इत्यादिभिर्दहराकाशस्थस्य ब्रह्मत्वबोधकानेकश्रुतिस्मृतिभिर्विरोधस्योक्तत्वाच्च । ''दहरं विपाप्म''मिति श्रुतावग्रे ''तत्परस्समहेश्वर'' इति श्रुतत्वेऽपि ''विश्वं नारायणं देवमक्षरं परमं पद''मित्यादिनारायणशब्दबाहुल्यात् ''यो देवानां नामधा एक एवे''त्यादौ ''अजस्य नाभा''विति पद्मनाभत्वलिङ्गेन विष्णोः सर्वनामवत्त्वस्येवान्यस्य तदभावेन ''महादेवो महत्त्वतः । अन्यनाम्नां गतिर्विष्णु''-रित्यादिद्युभ्वादिनयभाष्योक्तस्मृतिभिर्महेश्वरशब्दस्यापि वैष्णवत्वात् ''नित्यतीर्णाशिनायादिरेक एव हरिस्स्वत'' इत्यादिभाष्योक्तपाद्मस्मृत्या ''सत्यकामः परो नास्ति तमृते विष्णुमव्यय'' मिति स्कांदस्मृत्या चापहतपाप्मत्वादीनां विष्ण्वेकनिष्ठत्वेन शिवे हेतोरसिद्धेश्च । ''परस्य ब्रह्मणो लोक'' इत्यादिस्मृतिसिद्धसुधा- समुद्राश्रयश्वेतद्वीपाख्यब्रह्मलोकत्वरूपलिङ्गविरोधाच्च । असकृद्विष्णुवाचितया प्रतिपादितब्रह्मशब्दविरोधाच्च । सूत्रार्थानां प्रायो रामानुजीयरीत्यविशिष्टत्वात्तथैव दूषणं ध्येयम् । यदत्रोक्तं शिवार्कमणिदीपिकायां गतिसूत्रे दृष्टशब्दः ''चेतोर्पणनिगदात्तथा हि दर्शन''मित्यादाविव भावप्रत्ययांतो न कर्मणि निष्ठांतः । तथा च दृष्टशब्दस्य गतिशब्दौ प्रतिविशेषणत्वाभावात्पुल्लिङ्गेन द्विवचनेन च भाव्यमिति शङ्काऽनवकाश इति तन्न । दृष्टशब्दस्य लिङ्गं चेत्यनेनानन्वयापत्तेः । यदि ''तथा हि दर्शन''मित्यस्य गतिशब्दयोः ''सति संपद्ये''त्यादावन्यत्र ब्रह्मविषयतया दर्शनमुच्यते । लिङ्गं चेत्यनेन च

मास्त्वन्यत्रानयोर्दर्शनमत्रैव प्रकरणे सुप्तगतिब्रह्मलोकशब्दावीश्वरस्य दहराकाशत्वे लिङ्गं पर्याप्तगमकमित्यर्थ इत्युक्तिः तदापि लिङ्गं चेत्यस्याभ्युपेत्य प्रवृत्तत्वे व्यर्थत्वात् । पर्याप्तत्वानुपपादनाच्च । लिङ्गशब्दस्य रूढार्थत्यागापाताच्च । गतिशब्दावित्यध्याहारापाताच्च । लिङ्गमित्यस्याक्लेशेनैवास्मद्रीत्याऽऽन्वयसम्भवे क्लेशायोगाच्च ।

यदप्युक्तमस्तु वा तद्विशेषणम् । तथापि न दोषः । विशेष्यस्य पुल्लिङ्गद्विवचनांतनिर्दिष्टत्वेऽपि ''द्विगुरेकवचन''मित्यत्र लिङ्गसामान्यविवक्षया पुल्लिङ्गविशेषणे नपुंसकलिङ्गवत् ''कर्मणो रोमंथतपोभ्यां वर्तिचरो''रित्यत्र द्विवचनांतस्य विशेषणे विशेष्यद्वयगतप्रातिस्विकैकत्वविवक्षयैकवचनाच्चात्रानपुंसकस्यैकवचनस्य चोपपत्तिरिरिति तदप्यनेनैव निरस्तम् । गतिसम्भवेऽस्य क्लिष्टत्वात् । यच्चोक्तं प्रसिद्धेरित्यस्य ''दहरं विपाप्मं परवेश्मभूत''मित्यत्र ''हृत्पुण्डरीकं विरज''मित्यारभ्य ''उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वे''त्यादिकैवल्योपनिषदि च शिवस्य हृत्पद्मस्थत्वप्रसिद्धेश्चेत्यर्थ इति तन्न । अनेकश्रुतिस्मृतिविरोधेन नारायणादिशब्दविरोधेन च तेषां शब्दानां विष्णुवाचकत्वात् । उक्तं च गीताभाष्ये ''तत्रापीष्टसिद्धिर्नामवैशेष्या''दितीत्याद्यूह्यम् ।

## तात्पर्यचन्द्रिका

**टीकाक्षरार्थस्तु । पूर्वं हृत्पद्मस्थस्य ब्रह्मत्वे हेत्वंतरोक्त्यर्थं सौत्रं लिङ्गपदमित्येवं परतयाऽरश्चेत्यादिभाष्यं व्याख्यातम् । अधुना ब्रह्मलोकशब्दस्य प्रसिद्ध्या सत्यलोकपरत्वाशङ्कानिरासार्थं तदित्येवंपरतयाऽरश्चेत्यादिभाष्यं व्याचष्टे ॥ अथवा ब्रह्मलोकमिति ॥ तल्लक्षणोक्तेश्चेति ॥ एष आत्मा अपहतपाप्मेत्यत्र हृत्पद्मस्थलक्षणत्वेनोक्तस्यापहतपाप्मत्वस्य सर्वे पाप्मानोऽतो निवर्तंत इत्यनेन ससेतुरित्युक्तसेतुधर्मत्वोक्तेरित्यर्थः ॥ एतस्येति प्रतीकग्रहणेनेति ॥ प्रतीकग्रहणेन ''एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्दमसौ । एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ'' इत्यादीनि बहुवाक्यानि सूचयतीत्यर्थः ॥ विष्णुरित्यभ्युपगमे सुषिरश्रुतिविरोध इति ॥ ब्रह्मणो हृत्पद्मस्थत्वे सुषिरस्य ''तस्यांते सुषिर''मिति**

**हृत्पद्मस्थत्वश्रुतिविरोध इति निरस्तं । सुषिरस्य ''दहरोऽस्मिन्नंतराकाश'' इति वाक्योक्तहृत्पद्मस्थत्वमुपेत्यैव ब्रह्मणो ''दहरं विपाप्म'' मित्यादिश्रुतिबलात्तस्मिन्यदन्तरिति वाक्योक्तहृत्पद्मसुषिरस्थताया एव स्वीकारादित्यर्थः ।।**

**तदाधारतया पृथिव्यादिकमिति ।। आकाशाभिमान्याश्रितं पृथिव्याद्यभिमान्यादिकमित्यर्थः ।। ब्रह्मैव पूर्णत्वात्पुरमिति ।। एतत्सत्यं ब्रह्मपुरमिति प्रकृतस्य शरीरस्यैवैष आत्मेति परामर्शादात्मा न विष्णुरिति न शंक्यम् । छान्दोग्यभाष्योक्तरीत्या ''यदिदमस्मिन्ब्रह्मपुर'' इत्याद्यस्य ब्रह्मपुरशब्दस्य षष्ठीतत्पुरुषकर्मधारययोराश्रयणेन शरीरब्रह्मोभयपरत्वेऽपि ''ब्रह्मपुरे सर्वं समाहित''मिति द्वितीयस्य ''एतत्सत्यं ब्रह्मपुर''मिति तृतीयस्य च ब्रह्ममात्रपरत्वादिति भावः ।। शरीरनाशेनास्याविनाशोक्तेरिति ।। यद्यपि ''एतज्जराऽऽवाप्नोती''ति पूर्वत्रैतच्छब्देन शरीरस्य प्रकृतत्वात् ''एतत्सत्यं ब्रह्मपुर''मित्यत्रापि तस्य प्राप्तिः । तथापि नास्य जरयैतज्जीर्यत इति सन्निहितपूर्ववाक्ये शरीरमस्येति निर्दिश्यैतच्छब्देन ब्रह्मनिर्देशाच्छरीरनाशेऽप्यविनाशित्वलिङ्गाच्च न शरीरमिह ब्रह्मपुरशब्दार्थ इत्यर्थः ।। न चैवमङ्गीकारेऽपि सुषिरश्रुतिविरोध इति ।। सुषिरस्य सर्वाधारत्वश्रुतिविरोध इत्यर्थः ।। दहराधिकरणम् ।। ५ ।।**

**प्रकाशिका** – अथवेत्यादिटीकाया उद्भाष्यत्वभ्रान्तिं निवारयन्पक्षयोरर्थभेदं व्यंजयन् भाष्यव्याख्यानमेतदित्याह ।। पूर्वमिति ।। ''धृतिसूत्रे सर्वे पाप्मानोऽतो निवर्तंत इति तल्लक्षणोक्ते''रिति वाक्ये तच्छब्देन परामृश्यमानं न स्फुटम् । किं च तल्लक्षणमिति न स्फुटं प्रतीयते । तथात्वे वा स हृत्पद्मस्थः कुत इत्यतो व्यनक्ति ।। एष इति ।। एतस्येति प्रतीकग्रहणेन बहुवाक्यानि सूचितानीत्यत्रोक्तानि बहुवाक्यानि च दर्शयति ।। प्रतीकेति ।। ''प्रसिद्धेश्चे''ति सूत्रे ''हृत्पद्मस्थाकाशो विष्णुरित्यभ्युपगमे सुषिरश्रुतिविरोध इत्येतदनेनैव निरस्त''मिति वाक्यविरोधतच्छांत्योरस्फुटत्वादाह ।। ब्रह्मण इति ।। ''यद्ब्रह्मान्वेष्टव्यतयोक्तं तस्यांतर्हृदये यावानेष आकाशस्तावान्सर्वोऽपि विद्यन्ते । तदाधारतया पृथिव्यादिकं च समाहित''मित्यत्र जडस्यैव जडाधारताप्रतीतेराह ।। आकाशेति ।। एतच्छब्देन शरीरस्य प्रकृतत्वान्नेति चेन्न ।

शरीरनाशेनास्याविनाशोक्तेरित्येतदप्रतीतेश्शङ्कोत्तरयोर्भावं व्यनक्ति ॥ यद्यपीति ॥ दहराकाशस्थस्य विष्णोरेव सर्वाधारत्वमिति प्रकृतेऽर्थे शङ्कितश्रुतिविरोधं सङ्गमयति ॥ सुषिरस्येति ॥ शिष्टमुपन्यासमुखेन विवृतमिति भावः ॥ दहराधिकरणम् ॥ ५ ॥

**पाण्डुरङ्गि** – समानविषयत्वस्य विकल्पप्रयोजकत्वात्प्रकृते तदभावाद्विकल्पद्योतकोऽथ वेति वाशब्दोऽननुपपन्न इत्यतो व्याख्यानांतराभिप्रायेण वाशब्द इत्याह ॥ पूर्वमिति ॥ सर्वत्र ब्रह्मपुरशब्दस्य ब्रह्मपरत्वभ्रांतिनिरासायाह ॥ एतत्सत्यं ब्रह्मपुरमिति ॥ पौनरुक्त्यपरिहाराय व्याख्याति ॥ सुषिरस्येति ॥ दहराधिकरणम् ॥ ५ ॥

## अनुकृत्यधिकरणम्

**ॐ अनुकृतेस्तस्य च ॐ ॥ अत्रानुव्याख्याने अनुग्रहाख्यलिङ्गस्य समन्वय इत्युक्तम् । अनुग्रहश्चानुकूल्येन गृह्यमाणत्वमित्युक्तं न्यायविवरणे । तच्च ''कथं नु तद्विजानीयामिति ज्ञानार्थं प्रार्थितत्व''मित्युक्तं टीकायाम् । तच्च विजानीयामिति लिङ्गाज्ज्ञानार्थं ज्ञेयस्य प्रार्थनाधीरित्यभिप्रेत्य वा कथं नु पुत्रं पश्येयं स आगच्छति वा न वेत्यत्र यथा पुत्रज्ञानार्थं तदागमनप्रार्थनाधीः तथा ''कथं नु तद्विजानीया''-मित्यादिवाक्ये ज्ञानार्थमाविर्भावरूपभानप्रार्थनाधीरित्यभिप्रेत्य वेति द्रष्टव्यम् । ''परमात्मैवानिर्देश्यसुखरूप'' इति सिद्धान्तभाष्यं तु फलितोक्तिपरम् । केचित्तु एतद्भाष्यानुसारान्न्यायविवरणोक्तमानुकूल्येन गृह्यमाणत्वं सुखत्वमेवेत्याहुः । अत्र च ''कथं नु तद्विजानीया''मिति प्रार्थनं ज्ञानिनः । तत्प्रार्थनस्य तत्सुखमिवेश्वरोऽपि तं प्रति प्रियत्वाद्विषयः । परमं सुखमिति समभिव्याहृतसुखशब्दश्चोभयसाधारणः । ततश्चानुकूल्येन गृह्यमाणत्वमीश्वरज्ञानिसुखयोः साधारणमिति ज्ञेयम् । अनन्तरसङ्गतिस्तु पूर्वाधिकरणन्यायेन तद्वैषम्येण वा पूर्वपक्षोत्थानात् ।**

**प्रकाशिका** – ॐ अनुकृतेस्तस्य च ॐ ॥ अत्र समन्वीयमानलिङ्गस्योभयसाधारण्येन टीकोक्तपादसङ्गतिं विवरितुं तत्स्वरूपकथनपरटीकाया मूलं वदंस्तन्निर्धारयति ॥ अत्रेति ॥ ''स्थानं लिङ्गमनुग्रह'' इत्यनुव्याख्याने ''कथं नु तद्विजानीयामित्यानुकूल्येन ग्रहणं कस्येति

विचार्यमनुग्रह'' इति न्यायविवरणे। न तु टीकोक्तम्। कथं शब्दलभ्यमित्यत आह ।। तच्चेति ।। लिङेति ।। विधिनिमंत्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङि''ति स्मरणादिति भावः ।। भानेति ।। ''किमु भाति न भाति वे''ति श्रवणादिति भावः। भाष्यविरोधमाशङ्क्याह ।। परमात्मेति ।। द्विरूपस्यापि प्रार्थनस्य भगवत्परत्वे सिद्धेऽत्रोक्ततादृशसुखरूपोऽपि स एवेति फलिष्यतीत्यभिप्रायमित्यर्थः ।। सुखत्वमेवेति ।। तथा च तस्योभयत्रप्रसिद्धिस्सुशकेति भावः। साधारण्योपपादनाय लिङा प्रतीतं प्रार्थनं न सर्वकर्तृकमित्याह ।। अत्र चेति ।। ''तमात्मस्थं येऽनुपश्यंति धीरा'' इति ज्ञानिन एव प्रकृतत्वादिति भावः। एवं लिङ्गस्वरूपं निर्धार्येदानीं ''आनुकूल्येन गृह्यमाणत्वलिङ्गस्य भगवति ज्ञानिसुखे च सुखशब्दवृत्त्या साधारणस्ये''ति टीकोक्तं साधारण्यं स्वत एवोभयसाधारणसुखशब्दसमभिव्याहारोण वेति द्वेधोपपादयति ।। तत्प्रार्थनस्य चेति ।। तं ज्ञानिनं प्रति। ''प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रिय'' इत्यादेरिति भावः ।। उभयेति ।। ''एष परम आनन्दः यो वै भूमा तत्सुख''मित्यादौ भगवतोऽपि परमसुखरूपत्वात्तत्र सुखशब्ददृष्टेरिति भावः। एतेन टीकायां ''सुखशब्दवृत्त्ये''त्येतत्सुखशब्दवृत्त्या चेति चशब्दानुषङ्गेण पक्षांतरतया योज्यमित्युक्तं भवति। नन्वानुकूल्येन गृह्यमाणत्वस्य समभिव्याहृतसुखनिष्ठतया तस्य च द्वयसाधारण्येन लिङ्गस्य चोभयत्र प्रसिद्धिरयुक्ता। सुखशब्दस्याज्ञसुखेऽपि सत्त्वात्। तस्येह पूर्वपक्ष्यनभिमतत्वात्। द्वयमात्रसाधारण्येन वक्तव्यत्वस्योक्तत्वादिति चेन्न। प्रकरणविशेषितस्य तस्य द्वयमात्रसाधारण्यात्प्रकरणस्य च ज्ञानीश्वरमात्रसम्बन्धित्वात्पूर्वत्रकारणत्ववदस्याप्युपपत्तेः। केचित्तु सुखशब्देन पारम्यविशेषितसुखपरेणानेवंरूपाज्ञसुखानभिधायिना द्वयमात्रसाधारण्यम्। अत एव ''परमं सुखमिति समभिव्याहृतसुखशब्दश्चे''त्युक्तमित्याहुः ।। अनन्तरेति ।। पूर्वत्र ''तस्मिन्यदंत''रिति तच्छब्दस्य सन्निहितत्यागेन व्यवहितपरत्वायोगवदिहापि सन्निहितज्ञानिसुखत्यागेन व्यवहितेश्वरपरत्वायोग इति पूर्वन्यायेन वा ''एष आत्मे''त्येतच्छब्दस्य प्रकृतज्योतिःपरत्वेऽपि विधेयात्मापेक्षया पुल्लिङ्गत्वेऽपीह तदेतच्छब्दयोर्मध्य एकस्योद्देशकत्वावश्यंभावेन द्वयोर्नपुंसकत्वायोगादिति पूर्ववैषम्येण वेत्यग्रे स्पष्टमिति भावः। तथा चापवादिकी वा प्रत्युदाहरणरूपा वेत्यर्थः। ''अदृश्यत्वादय'' इति भाष्यादि तु फलपरमिति भावः। एतेन यदुक्तं कल्पतरौ ''पूर्वमेतं त्वेव त इत्येतच्छब्दस्य प्रकृतार्थत्वाद्दहरस्य जीवतानिरासि'' इति। तदसाधु। तत्रेत्यादौ प्रकृतार्थत्वानियमादिति शङ्कानिरासात्सङ्गतिरिति तद्युक्तमिति सूचितम्।

तन्मते ''तस्मिन्यदंत''रित्यत्र पूर्ववाक्य एव ''ब्रह्मपुरे जीवदेहे'' इत्यर्थोक्त्याऽप्रकृतस्यापि ब्रह्मणो ''यदन्तस्तदन्वेष्टव्य''मित्यत्र यच्छब्दार्थत्वस्य तस्मिन्नित्यस्य समीपप्रकृतदह-राकाशपरत्वानियमस्य स्वीकारेणैतच्छंकायाः प्रागेव निरसनीयत्वेन पुनरिह तथा शङ्कोत्थानायोगादिति ।

**पाण्डुरङ्गि** – ॐ अनुकृतेस्तस्य च ॐ ॥ ननु टीकाभाष्यविरोधः । भाष्येऽनिर्देश्यसुख-रूपलिङ्गसमन्वयस्य प्रतिपाद्यत्वाभ्युपगमात् । टीकायां ज्ञानार्थं प्रार्थितत्वरूपलिङ्गसमन्वयस्य प्रतिपाद्यत्वाभ्युपगमात् । किं चानुकूल्यगृह्यमाणत्वं नाम ज्ञानार्थं प्रार्थितत्वमिति नोपपद्यते । कोशाद्यभावेन तत्र रूढेरभावेन योगस्याप्यसम्भवादित्यतो भाष्यटीकयोर्विरोधप्रदर्शनपूर्वकं टीकोक्तं ज्ञानार्थं प्रार्थितत्वरूपत्वमानुकूल्येन गृह्यमाणत्वस्योपपादयति ॥ अत्रेति ॥ सुखशब्द-प्रवृत्त्या साधारण्यमुक्तमिति नाभिप्रायः । किं त्वानुकूल्यस्य साक्षादेवोभयत्रप्रसिद्धत्वसम्भवेऽपि सुखशब्दप्रवृत्त्याऽपि साधारण्यस्य सत्त्वादित्यभिप्रायेण सर्वेषामपि स्वसुखस्यैवानुकूल्येन गृह्यमाणत्वेन परमात्मनश्च सुखत्वाभावेन कथं तस्यानुकूल्येन गृह्यमाणत्वमित्यतस्तदुपपादयति ॥ अत्र चेति ॥ तत्प्रार्थनस्येति ॥ ज्ञानार्थिप्रार्थनस्येत्यर्थः । टीकोक्तं सुखशब्दप्रवृत्त्या साधारण्यमप्याह परमं सुखमितीति ॥ पूर्वाधिकरणन्यायेनेति ॥ तस्मिन्यदंतरिति तच्छब्देन सन्निहितदहरस्यैव परामर्शः । न तु व्यवहितपुण्डरीकस्येति पूर्वाधिकरणन्यायेनैव प्रकृतेऽपि तदेतदित्यत्र सन्निहितज्ञानिसुखस्यैव परामर्शः । न तु व्यवहितप्रकृतेश्वरस्येति पूर्वाधिकरणन्यायेन पूर्वपक्षोत्थानादित्यर्थः ॥ वैषम्येण वेति ॥ पूर्वाधिकरणे परज्योतिश्शब्देन प्रकतस्य ब्रह्मणः पुल्लिङ्गेन ''एष'' इत्येतच्छब्देन परामर्शसम्भवेऽपि प्रकृते तदेतच्छब्दयोर्मध्ये एकस्योद्देश्यत्वावश्यंभावेन द्वयोर्नपुंसकलिङ्गत्वायोगेन विधेयसुखापेक्षया नपुंसकलिङ्गत्वा-योगेनेति वैषम्येणेत्यर्थः ।

## तात्पर्यचन्द्रिका

**अत्र ''कथं नु तद्विजानीयां किमु भाति न भाति वे''ति काठकोक्तमानुकूल्येन गृह्यमाणं किं ज्ञानिसुखं किं वा ब्रह्मेति चिन्ता । तदर्थं ''तदेतदिति मन्यंत'' इति पूर्ववाक्यस्थं तच्छब्दादिकं किं सन्निहितज्ञानिसुखपरं किं वा व्यवहितेश्वरपरमिति ।**

**तदर्थं सन्निहितपरत्वे ''तमेव भांतमनुभाती''त्यनुकृतिप्रतिपादकमुत्तरवाक्यं न विरुध्यत उत विरुध्यत इति । तदर्थं तत्स्थस्तमेवेति तच्छब्दः किं पुल्लिङ्गानुसाराद्व्यवहितप्रकृतेश्वरपरः किं वा प्रातिपदिकानुसारात्सन्निहितप्रकृतानुकूलगृह्यमाणपर इति । यद्याँद्यस्तदाऽनुकृतेरानुकूल्येन गृह्यमाणनिष्ठत्वाभावेन ब्रह्मपक्षे साधकाभावात् ''तदेत''दिति तच्छब्दादेः सन्निहितज्ञानिसुखपरत्वत्यागे कारणाभावेन ज्ञानिसुखपक्षे साधकसद्भावाच्चानुकूल्येन गृह्यमाणं ज्ञानिसुखमेव । यदि तु द्वितीयस्तदाऽनुकृतेरानुकूल्येन गृह्यमाणनिष्ठत्वेन ब्रह्मपक्षे साधकसद्भावात्तेनैव कारणेन ''तदेत''दिति तच्छब्दादेः सन्निहितज्ञानिसुखपरत्वाभावेन ज्ञानिसुखपक्षे साधकाभावाच्चानुकूल्येन गृह्यमाणं ब्रह्मैव ।**

**प्रकाशिका** – विषयसंशयटीकां व्यनक्ति ।। अत्रेति ।। ''हंत त इदं प्रवक्ष्यामि गुह्यं ब्रह्मसनातन''मित्युपक्रम्य ''एको वशी सर्वभूतांतरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यंति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् । नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यंति धीरास्तेषां शान्तिश्शाश्वती नेतरेषाम् । तदेतदिति मन्यंतेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयां किमु भाति न भाति वा । न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भांति कुतोऽयमग्निः । तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती''ति पञ्चमखण्डगतवाक्यस्थमानुकूल्येन गृह्यमाणं विषय इत्यर्थः ।। काठकेति ।। अन्यगतं वाक्यं विषय इत्येतन्निरसिष्यत इति भावः ।। तच्छब्दादिकमिति ।। आदिपदेनैतच्छब्दस्तत्समानाधिकरणपरमसुखपदं च गृह्यते । ''कथं नु तद्विजानीया''मित्यत्र तच्छब्दस्य ''तदेत''दिति पूर्ववाक्योक्तपरामर्शकत्वं सिद्धमिति पूर्ववाक्यमेव किं परमिति चिंतितम् । तथा च वक्ष्यति ''तद्विजानीयामिति तच्छब्देने''त्यादि । अतः ''तदेतदिति मन्यंते कथं नु तद्विजानीयामिति तेषां सुखं शाश्वतमित्युक्तज्ञानिसुखग्रहणमिति विपरीतश्रुतिभ्रम'' इति न्यायविवरणविरोधशङ्कानवकाशः ।। सन्निहितेति ।। तेषां सुखमिति वाक्येनेत्यर्थः ।। व्यवहितेति ।। एको वशीति वाक्योक्तेश्वरेत्यर्थः । यद्यप्यत्र ''तेषां सुख''मिति वाक्यात् ''नित्यो नित्याना''मितीश्वरवाक्यस्य परत्वादीश्वरस्सन्निहितः । ज्ञानिसुखं तु तदपेक्षया व्यवहितम् । तथापि ''नित्यो नित्याना''मित्यस्मादपि परस्मिन्

''तमात्मस्थं येऽनुपश्यंति धीरास्तेषां शान्ति''रित्यत्र प्रकृतेन ज्ञानिफलेन शान्तिशब्दार्थेन सुखेन ''नित्यो नित्याना''मिति वाक्योक्तस्य व्यवहितत्वादिति पूर्वपक्ष्यभिप्रायादेवमुक्तम् । वक्ष्यति चैतदेवेत्यादिना सिद्धान्ते ।

अनुकृतीति ॥ सूर्यादितेजसां भगवत्कृत्यनुसारिकृतिमत्त्वप्रतिपादकं ''तमेव भांतमनुभाती''ति वाक्यमित्यर्थः । अनुभानप्रतिपादकमिति वक्तव्येऽनुकृतीति वचनं तु श्रुतौ भानस्य कृतिमात्रोपलक्षणतया तमेव कुर्वंतमनुकरोति सर्वमिति श्रुत्यर्थमभिप्रेत्य सूत्रेऽनुकृतेरित्युक्तत्वाच्चहेत्वनुवादोयमिति ध्येयम् । तत्स्थः उत्तरवाक्यस्थः । न तत्र सूर्यो भातीत्यस्य सूर्याद्यप्राकाश्यत्वरूपलिङ्गप्रतिपादकवाक्यस्यादित्वेऽपि तस्य पुन्नपुंसकसाधारण्याद्वक्ष्यमाणदिशा युक्तिसूचनाय सूत्रोपात्तपुंल्लिङ्गोपेतं तमित्येतदेव गृहीतम् ॥ व्यवहितेति ॥ एको वशीति वाक्योक्तेत्यर्थः ॥ सन्निहितेति ॥ कथं नु तदिति वाक्योक्तेत्यर्थः । साधकसद्भावादिति ॥ सन्निहितपरत्वरूपेत्यर्थः ॥ द्वितीय इति ॥ आनुकूल्येन गृह्यमाणपर इत्यर्थः ।

## तात्पर्यचन्द्रिका

पूर्वपक्षस्तु । इदमानुकूल्येन गृह्यमाणं ज्ञानिसुखमेव । न तु ब्रह्म । तद्विजानीयामिति तच्छब्देन ''तदेतदिति मन्यंतेऽनिर्देश्यं परमं सुख''मिति प्रकृतसुखपरामर्शात् । न च ''हंत त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातन''मिति ब्रह्मप्रकरणादनिर्देश्यत्वलिङ्गाच्च तत्सुखं ब्रह्मेति वाच्यम् । प्रकरणाल्लिङ्गाच्च ''तदेत''दिति सर्वनामश्रुतेर्बलवत्त्वात् । तस्य च ''एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यंति धीरास्तेषां सुखं शाश्वतं नेतरेषा''मिति प्रकृतज्ञानिसुखपरत्वात् ।

न च तत्रेश्वरोऽपि प्रकृत इति वाच्यम् । तस्य पुल्लिङ्गेन प्रकृततया तत्परत्वे तदेतच्छब्दयोः पुल्लिङ्गतापातात् । पूर्वाधिकरणे ''तस्मिन्यदंत''रित्यत्र तच्छब्दस्य सन्निहिताकाशत्यागेन पुण्डरीकपरत्वायोगवदिहापि सन्निहितज्ञानिसुखत्यागेन व्यवहितेश्वरपरत्वायोगाच्च । तेषां सुखमिति सुखशब्देन प्रकृतज्ञानिसुखस्यैव ''परमं सुख''मित्यनेन प्रत्यभिज्ञानाच्च ।

न च पूर्वाधिकरणे विधेयात्मापेक्षयैतच्छब्दस्य पुल्लिङ्गतावदिहापि विधेयसुखापेक्षया नपुंसकलिङ्गत्वमिति युक्तम् । तदेतच्छब्दयोर्मध्य एकस्योद्देशकत्वावश्यंभावेन द्वयो-र्नपुंसकलिङ्गत्वायोगात् । अत एव टीकायां ''तदित्यादी''त्यादिशब्दः । यदनिर्देश्यं परमं सुखं तदेतत्परमात्मनो रूपमिति नपुंसकलिङ्गनिर्वाहे च रूपशब्दाध्याहारः स्यात् । अध्याहारेण लिङ्गनिर्वाहे च ''प्रास्मा अग्नि''मित्यत्र पशुशब्दाध्याहारेणा-स्मैशब्दस्य पुल्लिङ्गनिर्वाहान्न मेषीपरत्वं स्यात् । तच्च नेत्युक्तं नवमे । न चानुकृत्यादिहेतुभिरानुकूल्येन गृह्यमाणस्य ब्रह्मता । अनुकृतिवाक्यस्थस्य तमेवेति तच्छब्दस्य पुंल्लिङ्गत्वेनेश्वरपरतयाऽऽनुकूल्येन गृह्यमाणपरत्वाभावात् । तदेतदभि-प्रेत्योक्तं न्यायविवरणे ''तदेतदिति मन्यंते । कथं नु तद्विजानीयामिति । तेषां सुखं शाश्वतमित्युक्तज्ञानिसुखपरामर्श'' इति । भाष्ये च ''परमात्मैवानिर्देश्यसुखरूप'' इति । तस्मात्तदेतदित्यादौ तत्पदं सन्निहितपरप्रातिपदिकानुरोधात्प्रत्ययार्थभूतलिङ्गा-नुसारात्समभिव्याहृतसुखपदानुसाराच्च सन्निहितज्ञानिसुखपरमिति आनुकूल्येन गृह्यमाणत्वमपि तस्यैवेति ।

प्रकाशिका – पूर्वपक्षटीकायां यथा भाष्यं ''तद्विजानीया''मिति तच्छब्दस्य प्रकृतसुख-परत्वमनुक्त्वा ''तदेत''दिति वाक्यस्य प्रकृतज्ञानिसुखपरत्वसमर्थनात् ''तदेत''दित्यादि-वक्ष्यमाणन्यायविवरणरीत्या ''तद्विजानीया''मिति तच्छब्दस्य प्रकृतसुखपरत्वोक्तिपूर्वं तां विवृणोति ॥ इदमित्यादिना ॥ आद्यचिन्ताहेतुव्यक्तिपूर्वं द्वितीयचिन्तां प्रपञ्चयन् ''न च सुखश्रुतिर्विष्णावपि सावकाशे''त्यादि टीकां सोपपत्तिकं व्यनक्ति ॥ न चेति ॥ ते वक्ष्यामीति नचिकेतसं प्रति यमवाक्यम् । यथाऽत्तेत्यत्र ''नैवेह किंचनाग्र आसी''दिति ब्रह्मप्रकरणा-त्सर्वात्तृत्वलिङ्गाच्चादितिर्ब्रह्म तद्वदिति भावः । श्रुतेरिति जात्येकवचनम् । श्रुत्योरित्यर्थः । शब्दादेवेत्यत्र वक्ष्यमाणदिशा जात्या प्राबल्यादित्यर्थः । अस्तु श्रुतिरीश्वरपरेत्यत आह ॥ तस्य चेति ॥ सर्वनाम्न इत्यर्थः । एकं रूपमित्याद्यंशोक्तिः । सावकाशत्वशङ्कोत्थानाय ॥ ज्ञानिसुखपरत्वादिति ॥ एतेन ''तदेत''दित्यस्य ज्ञानिसुखपरत्वेऽपि तद्वाक्योक्तमपरामृश्य ''तद्विजानीया''मिति तच्छब्दः प्राकरणिकब्रह्मपर एव किं न स्यादिति चोद्यं प्रत्युक्तम् । दुर्बलात्प्रकरणात्सर्वनामश्रुतेस्सन्निहितपरत्वस्वारस्यभङ्गायोगादिति । ननु श्रुतिस्सावकाशा

चेल्लिङ्गप्रकरणाभ्यां बाधार्हैवादित्यादिश्रुतिरिवेत्यतस्सर्वनामश्रुतिसावकाशत्वशङ्कानिरासपरां ''न च वाच्यं भगवतोऽपी''त्यादिटीकां व्यनक्ति ॥ न च तत्रेति ॥

''नपुंसकसुखशब्देनाप्रकृतस्य तदित्यादिपरामर्शायोगा''दिति टीकायां नपुंसकेत्युक्तिसूचितां पुल्लिङ्गत्वापातादिति युक्तिमुक्त्वा ''सम्भवत्समीपे''ति वाक्योक्तयुक्तिमाह ॥ पूर्वाधिकरण इति ॥ एतेन पूर्वाधिकरणन्यायेनेति पूर्वोक्तं विवृतं बोध्यम् । ईश्वरोऽपि नित्यो नित्यानामिति सन्निहित इति प्रत्युक्तं चिन्ताव्याख्यानप्रस्तावे । टीकास्थसुखपदसूचितां युक्तिमाह ॥ तेषामिति ॥ टीकायां ''तदित्यादिपरामर्शायोगा''दित्यादिपदोक्तिस्वारस्यं शङ्कापूर्वं व्यनक्ति ॥ न च पूर्वेति ॥ एतेन पूर्ववैषम्येण वेति प्रागुक्तं विवृतं बोध्यम् । सिद्धांत्यभिमतलिङ्गनिर्वाहमाशङ्क्य निराह ॥ यदिति ॥ प्रास्मा अग्निमिति ॥ विवृतमधिकरणशरीरमाकाशाधिकरणे । तथा च यदि रूपशब्दाध्याहारेण नपुंसकलिङ्गनिर्वाहस्तदा ''प्रास्मा अग्निं भरते''ति वाक्ये पशुशब्दाध्याहारेण प्रास्मै पशव इति मेष्यामपि लिङ्गनिर्वाह- सम्भवेनाध्याहारनिरासपराधानेष्ट्यधिकरणसिद्धान्तहानिः स्यादित्यर्थः । निरवकाशलिङ्गबलेन श्रुतेस्सन्निहितपरत्वत्यागो युक्त इत्याशङ्कानिरासाय द्वितीयचिन्ताहेतुत्वं व्यंजयंस्तृतीयचिन्तां सिद्धान्तहेत्वाशङ्कासमाधानाभ्यां विशदयति ॥ न चेति ॥ ईश्वरपरतयेति ॥ अत एव सिद्धान्तटीकायां ''न च मन्तव्य''मित्यादिनैतदाशङ्क्य समाधीयत इति भावः । तमेवेति तच्छब्दस्येश्वरपरत्वे तत्र तस्येति तच्छब्दयोरपि तथात्वमिति भावेन तमेवेति तच्छब्दस्येश्वरपरतयेत्युक्तम् । भाष्यविवरणपरापि टीकान्यायविवरणपरापीति भावेनाह ॥ तदेतदिति ॥ भाष्ये चेति ॥ सिद्धान्तीयभाष्य इत्यर्थः । तथा च तत्प्रतिभटपूर्वपक्षे ज्ञानिसुखमेवानिर्देश्यसुखमिति वक्तव्यमिति भावः । अतो ज्ञानिसुखस्यैवेत्याद्युपसंहारटीकां व्यनक्ति ॥ तस्मादिति ॥ बाधकाभावादित्यर्थः । एतेन चिंतास्थपूर्वपक्षकोटीनां हेतुहेतुमद्भावोप्युपसंहारेण विवृतः ।

**पाण्डुरङ्गि** – न च तत्रेति ॥ एकं रूपं बहुधा यः करोति । तमित्यनेनेश्वरः प्रकृत इत्यर्थः । पूर्वाधिकरणन्यायेन पूर्वपक्षादित्युक्तम् । तदुपपादयति ॥ पूर्वाधिकरण इति ॥ तेषां सुखमिति ॥ यद्यप्यत्र तेषां सुखं नेतरेषामिति प्रकृतज्ञानिसुखापेक्षयापि नित्यो नित्यानामितीश्वरस्यैव सन्निहितत्वेन सन्निहितसुखपरामर्श इत्यनुपपन्नम् । तथापि नित्यो नित्यानामित्येतदपि परस्मिन्

तमात्मस्थं येऽनुपश्यंति धीरास्तेषां सुखं शाश्वतं नेतरेषामित्यत्र प्रकृतज्ञानफलेन शांतिशब्दार्थेन सुखेन तदेतदिति मन्यंते निर्देश्यं परमं सुखमित्यनेन प्रत्यभिज्ञानादित्यत्रैव तात्पर्यान्न दोषः । वैषम्येण पूर्वपक्षं दर्शयितुं साम्यं शङ्कते ॥ न चेति ॥ न चानुकृत्यादिहेतुभिरिति ॥ सूर्यादिप्रकाशनियामकत्वमनुकृतिशब्दार्थः । आदिपदेन सर्वजगत्प्रकाशकत्वसूर्याद्यप्रकाश्यत्वयोर्ग्रहः । सन्निहितपरप्रातिपदिकानुरोधात् तदेतदित्यादौ सन्निहितपरतच्छब्दप्रातिपदिकानुरोधादित्यर्थः ॥ प्रत्ययार्थेति ॥ प्रत्ययार्थभूतनपुंसकलिङ्गानुसारादित्यर्थः ।

## तात्पर्यचन्द्रिका

सिद्धान्तस्तु । उपसंहारे ''न तत्र सूर्यो भाति न चन्द्रतारक''मिति सूर्याद्यप्रकाश्यत्वं ''तमेव भांतमनुभाति सर्व''मिति सूर्यादिप्रकाशहेतुत्वं ''तस्य भासा सर्वमिदं विभाती''ति सर्वजगत्प्रकाशकत्वं चोक्तम् । तानि च भाष्योक्तश्रुत्यादिभिर्ब्रह्मण एव । ''न तत्र सूर्य'' इत्यादिना च ''कथं नु तद्विजानीया''मित्यादिसन्निहितवाक्यप्रकृतमानुकूल्येन गृह्यमाणमेवोच्यत इत्त्यानुकूल्येन गृह्यमाणत्वं ब्रह्मण एव । ननु यद्यपि ''नित्योनित्याना''मित्यादिकमीश्वरवाक्यं ''न तत्र सूर्यो भाती''त्यस्य व्यवहितम् । ''कथं नु तद्विजानीया''मित्यादिकं तु सन्निहितम् । तथापि ''तमेव भांत''मित्यत्र तमिति शब्दस्तावत्पुल्लिङ्गत्वात्प्रकृतेश्वरपर एवेति तदेकार्थत्वाय ''न तत्र सूर्यः तस्य भासे''त्यादिकमपि तत्परमेवेति सूर्यादिप्रकाशहेतुत्वादिकं नानुकूल्येन गृह्यमाणगतमिति चेन्न । ''किमु भाति न भाति वे''त्यत्रोक्तस्य दुर्ज्ञेयस्यैव ''न तत्र सूर्यो भाती''त्यत्र प्रत्यभिज्ञानात् । गुणभूतप्रत्ययार्थलिङ्गानुग्रहाय प्रधानभूतानां तत्र तमेव तस्येत्यनेकेषां प्रातिपदिकानां स्वतः प्राप्तसन्निहितपरत्वत्यागायोगाच्च । पाशमन्त्रादौ हि प्रातिपदिकानुसारेण प्रत्ययास्वारस्यमाश्रितम् । तथा ''प्रयाजशेषेण हवींष्यभिघारये''दित्यादौ प्रयाजशेषप्रातिपदिकस्वारस्याय तृतीयाव्यत्ययेन द्वितीयार्थो स्वीकृता । न तु तृतीयानुसारेण प्रातिपदिकस्य लक्षणा । एवं च-

**प्रयाजशेषेणेतिवत् प्रकृत्यर्थानुसारतः ।**
**प्रत्ययस्य स्वरसताभङ्ग एवात्र युज्यते ॥ १ ॥**

**उपपत्स्येते च सिद्धांतरीत्या ''तदेत''दित्यादेः ''कथं नु तदि''त्यादेश्चेश्वर-रूपैकार्थपरत्वे तमित्यस्य पुल्लिङ्गत्वसन्निहितपरत्वे ।**

**प्रकाशिका** – अनुकृतेस्तस्य चेति सूत्रोपात्तश्रौतोपसंहारस्थलिङ्गैश्श्रौतोपसंहारस्थाने-कतच्छब्दप्रातिपदिकस्वारस्यानुरोधेन चानुकूल्येन गृह्यमाणो विष्णुरेवेति तदेतदिति सर्वनाम्नो व्यवहितेश्वरपरत्वं न्याय्यमिति भावेन सिद्धान्तटीकां विवृण्वन् ''तमेव भांतमनुभाति सर्वमिति वाक्यशेष'' इत्यादिटीकां तावद्विवृणोति ॥ उपसंहार इति ॥ टीकायामाद्यसूत्रे यथाभाष्यं लिङ्गद्वयमात्रोपादानेऽपि द्वितीयसूत्रे ''किंचन तत्र सूर्यो भाती''त्याद्युक्तेर्बाधसौकर्याय लिङ्गत्रयमप्येकत्रैवोक्तम् । श्रुत्यादिभिरिति ॥ ''अहं तत्तेजोरश्मीत्,न तद्भासयते सूर्यः, यदादित्यगतं तेज'' इत्यादिभिरित्यर्थः । श्रुतौ तेजः सर्वजगत्प्रकाशकम् । रश्मीत् रश्मिप्रेरकमिति सर्वजगत्प्रकाशकत्वसूर्यादिप्रकाशहेतुत्वयोरुक्त्या तयोश्श्रुत्यंतरसिद्धत्वेऽपि सूर्याद्यप्रकाश्यत्वस्य श्रुत्यंतरसिद्धत्वं भाष्येऽनुक्तत्वादूह्यम् । स्मृतौ ''मामक''मित्यस्य मदधीनं मदीयं चेति व्याख्यानेन लिङ्गद्वयस्य स्मृतिसिद्धब्रह्मधर्मत्वं, ''न तद्भासयत'' इत्यनेन च सूर्याद्यप्रकाश्यत्वस्य स्मृतिसिद्धं तथात्वमिति ध्येयम् । ननूक्तं नैतान्यानुकूल्येन गृह्यमाण-निष्ठानीति । तत्राह ॥ न तत्रेति ॥ ''न च मंतव्य''मित्यादिटीकां विवृण्वन्पूर्वो-क्तपुल्लिङ्गविरोधशङ्कां विस्तरेणानूद्यापाकरोति ॥ नन्विति ॥ नन्वियं शङ्का पूर्वपक्षावसर एव कुतो न सम्यगुपपादितेति चेन्मैवम् । न तत्रेत्यादेस्सन्निहितपरत्वानवकाशत्वयोरुक्त्यै-तद्बाधकत्वेनोपपादनस्यात्रैव सङ्गतत्वात् अनेक प्रातिपदिकभङ्गादिरूपदूषणस्य सुखबोधत्वाच्चा-त्रोपपादितेति । टीकोक्तं दुर्ज्ञेयत्वप्रत्यभिज्ञानमुपलक्षणमिति भावेनाह ॥ गुणेति ॥ न्यायसिद्धोऽयमर्थ इत्याह ॥ पाशेति ॥ उक्तं पाशाधिकरणशरीरं गुहामित्यत्र । अत्र यद्यपि प्रधानभूतकर्मकारकरूपप्रत्ययार्थानुग्रहाय संख्यानादरो न प्रातिपदिकस्वारस्यानुग्रहायेत्यपि सुवचम् । तथापि -

प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणः ।
उभयोः प्रकृते भावान्नोत्कर्षोऽस्यावकल्पते ॥

इत्युक्तत्वादेवमुक्तम् । अत एवोदाहरणांतरं ।। तथेति ।। चतुर्थे ''अभिघारणे विप्रकर्षादनुयाजवत्पात्रभेदस्स्यात्'' इत्याद्यपादीयत्रयोदशाधिकरणे ''प्रयाजशेषेण हवींष्यभिघारयती''ति वाजपेयगतं वाक्यमुदाहृत्य किं हविस्संस्कारार्थमभिघारणमुत प्रयाजशेषप्रतिपत्तिरिति संशये उपयोक्ष्यमाणसंस्कारस्योपयुक्तसंस्कारापेक्षयाऽभ्यर्हि- तत्वाद्द्वितीयातृतीयाभ्यां प्रधानोपसर्जनभावावगमाच्च न्यायतश्शब्दतश्च हविस्संस्कारार्थमिति प्राप्ते शेषस्य प्रतिपत्त्यपेक्षत्वात्तादर्थ्यादभिघारणं दृष्टार्थम् । हविस्संस्कारोऽनपेक्षितोऽदृष्टः कल्प्येत । न च दृष्टे सत्यदृष्टकल्पनं न्याय्यमिति प्रयाजशेषं हविष्षु क्षारयेदिति वाक्यार्थवर्णनेन प्रतिपत्तिरिति सिद्धांतितम् । तत्र यथा प्रातिपदिकस्वारस्यानुग्रहाय प्रत्ययस्वारस्यत्यागः तथाऽत्रापीत्यर्थः । अत्र वक्तव्यो विशेषो ''न संख्योपसंग्रहा''दित्यत्र वक्ष्यते । उक्तं संगृह्णाति ।। एवं चेति ।। अत्रेति ।। तमिति शब्द इत्यर्थः । अभ्युपेत्येदमुक्तम् । वस्तुतस्तु ''यस्यैवं सुखं रूपं तत्रेति वाक्ययोजनोपपत्तेश्चे''ति टीकोक्तरीत्या प्रत्ययार्थास्वारस्यमपि नेत्याह ।। उपपत्स्येते चेति ।। पुल्लिङ्गत्वेति ।। रूपशब्दापेक्षया मध्ये तदित्यादेर्नपुंसकत्वेऽपि ''एको वशी''त्यादिना सर्वत्रेश्वरस्य पुल्लिङ्गशब्दैः प्रकृतत्वेन तत्परामर्शितया पुंस्त्वमानुकूल्येन गृह्यमाणपरत्वाच्च सन्निहितपरत्वं चेत्यर्थः । स्यादेवं यदि तदित्यादेरीश्वरपरत्वमेव भवेत्तदा टीकारीत्या यस्येश्वरस्यैवं सुखं रूपं तत्र तमित्यादौ पुल्लिङ्गत्वोपपत्तिः तदेवायुक्तम् । व्यवहितत्वान्नपुंसकलिङ्गविरोधात्सुखश्रुतिकृतप्रत्यभिज्ञाविरोधाच्चेति ।

**पाण्डुरङ्गि** – प्रथमसूत्रसूचितान् हेतूनाह ।। सिद्धान्तस्त्विति ।। यद्यप्यत्र सूत्रे प्रथमत उक्तत्वात्सूर्यादिप्रकाशनियामकत्वस्यैव वक्तव्यत्वाच्चशब्दोक्तस्य सूर्याद्यप्रकाश्यत्वस्य प्रथममुक्तिरनुपपन्ना । तथापि विषयवाक्ये सूर्याद्यप्रकाश्यत्वस्य प्रथममुक्तत्वात्तत्प्रतिपादकवाक्योदाहरणं युक्तमेवेति ।। भाष्योक्तश्रुत्यादिभिरिति ।। अहं तत्तेजोरश्मीतु,यदादित्यगतं तेजः, न तद्भासयते सूर्य इत्यादिश्रुतिस्मृतिभिरित्यर्थः । गुणभूतप्रत्ययार्थलिङ्गानुग्रहाय प्रधानभूतस्य तत्रेत्यादिप्रातिपदिकस्य स्वतः प्राप्तसन्निहितपरत्वत्यागे बाधकमाह ।। पाशमन्त्रादाविति ।। अन्यथा अदितिः पाशानित्यत्रापि प्रत्ययार्थभूतबहुत्वानुसारेण पाशप्रातिपदिकस्यास्वारस्यं स्यादिति भावः ।। तथेति ।। प्रयाजशेषेणेत्यत्र तृतीयया प्रयाजशेषस्य करणत्वस्य बोधितत्वेन प्रत्ययार्थभूतकरणत्वानुसरणे प्रातिपदिकस्य लक्षणापत्त्या तस्याश्चानङ्गीकृतत्वेन प्रयाजशब्द-

प्रातिपदिकस्वारस्यार्थं तृतीयाया व्यत्ययेन द्वितीयार्थत्वं वदतां मीमांसकानामपि पातिपदिकस्वारस्यार्थं प्रत्ययास्वारस्यं सम्प्रतिपन्नमित्यर्थः ।

## तात्पर्यचन्द्रिका

एवं च ''कथं नु तदि''त्यादेः सन्निहितज्ञानिसुखपरत्वाय ''तमेव भांत''मित्यादेर्व्यवहितेश्वरपरत्वं वा ''तमेव भांत''मित्यादेः सन्निहितानुकूलगृह्यमाणपरत्वाय ''कथं नु त''दित्यादेर्व्यवहितेश्वरपरत्वं वेति विषये यद्यप्याद्यपक्षे तदित्यादेः सन्निहितपरत्वं नपुंसकलिङ्गत्वं तमित्यस्य पुल्लिङ्गत्वं च युज्यते । तथापि द्वितीयपक्ष एव युक्तः । यतः -

बलवानुपसंहारस्तद्वश्यातदिति श्रुतिः ।
कथं पश्येत्तद्विरुद्धपूर्ववाक्यावबोधितम् ॥ १ ॥

न हि ''तदेत''दित्यादिश्रुतेर्बलवदुपसंहारस्थाभिः तत्र तमेव तस्येत्यनेकप्रातिपदिकश्रुतिभिर्गृहीतायास्तदविरुद्धपूर्वप्रकृतेश्वरपरत्वे सम्भवति तद्विरुद्धपूर्वप्रकृतज्ञानिसुखपरत्वं युक्तम् । किञ्च ''न तत्रे''त्यस्य ''एकं रूपं बहुधा यः करोती''त्येतदतिदूरस्थम् । तदेतदित्यस्य तु किंचिद्दूरस्थम् । तत्र तदेतदित्यस्य किंचिद्दूरस्थपरत्वाद्बिभ्यतो न तत्रेत्यादेरतिव्यवहितपरत्वात्कथं न भीतिः । न चेश्वरपरत्वे तदेतदिति नपुंसकलिङ्गायोगः । व्यत्ययादिनापि तत्सम्भवात् । अपि च विनैव व्यत्ययादिकं लिङ्गं युक्तम् । ''यतो वाचो निवर्तंते एषोऽस्य परम आनन्द'' इत्यादौ प्रसिद्धं यदनिर्देश्यं परमं सुखं तदेतद्ब्रह्मणो रूपमिति तच्छब्दस्य सुखपरत्वात् । एतच्छब्दस्य च ''एकं रूपं बहुधा यः करोती''ति प्रकृतेश्वररूपपरत्वात् । एवं च यथा ''तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे''त्यत्र ''सर्वनाम्ना परामर्शस्तस्यैवातोऽवकल्पते'' इत्युक्तत्वेन तच्छब्दस्य पयः परामर्शकत्वेऽप्यामिक्षाशब्दसामानाधिकरण्यात्स्त्रीलिङ्गता तथेहाप्येतच्छब्दस्येश्वरपरामर्शकत्वेऽपि रूपशब्द-

**सामानाधिकरण्यान्नपुंसकलिङ्गता । तदुक्तं न्यायविवरणे ''यद्ब्रह्मानिर्देश्यं सुखमिति वदन्ति तदेतत्स्वरूपमिति मन्यंत'' इति । काठकभाष्ये तु ''तदेतदेव भगवद्रूपं परमं सुख''मिति सुखं विधेयमित्युक्तम् । तत्र तत् गुह्यं ब्रह्मसनातनमित्युपक्रांतमेतत् एकं रूपमिति मध्ये उक्तं ब्रह्मणो रूपं परमं सुखमिति तदेतच्छब्दयोर्ब्रह्मपरत्वान्नपुंसकतेति द्रष्टव्यम् ।**

**प्रकाशिका –** तथा तमित्यस्य व्यवहितेश्वरपरत्वे पुंस्त्वोपपत्तेश्चोक्तत्वादित्यतो ''न च वक्तव्यं समीपस्थपरामर्शं विहाय कथंचिदेव दूरस्थग्रहणे कारणाभाव इती''त्यादिटीकोक्तमेव विचारपूर्वं साधयति ।। एवं चेति ।। यत इत्यस्य श्लोकेनान्वयः । कथमित्याक्षेपः । यतस्तद्विरुद्धं न पश्यति ततो युक्त इति पूर्वेणान्वयः । उपसंहारबलवत्त्वं तद्बीजं च समन्वयसूत्र एव प्रतिपादितम् । आश्रितं च तत्प्राबल्यं ''प्रथमेऽश्रवणा''दित्यत्र तृतीयाद्यपाद इति भावः । श्लोकं व्याचष्टे ।। न हीति ।। गृहीताया इति ।। ताश्च भगवद्धर्माणां सूर्याद्यप्रकाश्यत्वादीनां धर्मिसमर्पिका इति भावः । दूरोक्तग्रहणे बिभ्यतोऽतिदूरोक्तग्रहणे कथं न भीति''रिति टीकोक्तं युक्त्यंतरमिति भावेन तद्व्यनक्ति ।। किञ्चेति ।। ननूक्तं तदित्यादेरीश्वरपरत्वे नपुंसकलिङ्गविरोधः व्यवहितपरामर्शः सुखश्रुतिप्रत्यभिज्ञाविरोधश्चेत्यतस्सर्वं क्रमेण परिजिहीर्षुः ''न च परमात्मनो नपुंसकसुखशब्देनाप्रकृतत्वात्तदेतदिति परामर्शायोग'' इति शङ्काटीकार्थं तावदनूद्य स्वयमेकं समाधिं तावदाह ।। न चेश्वरपरत्व- इति ।। व्यत्ययादिनेति ।। तमेतमिति वक्तव्ये तदेतदिति छान्दसो लिङ्गव्यत्ययो वा ''सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल'' इति सूत्रेण तमेतमित्यत्र सुपो लुकि सति तमेतमिति पदयोः प्रातिपदिकनिर्देशमात्रं वा स्त्रीलिङ्गपुल्लिङ्गानुगतं सामान्यमेव नपुंसकलिङ्गमिति वैयाकरणोक्तमर्यादया पुल्लिङ्गनिर्दिष्टस्यापि नपुंसकलिङ्गेन परामर्शो युक्त इति वा तत्सम्भवादित्यर्थः । व्यत्ययादिकल्पकस्य निरवकाशवाक्य-शेषस्थलिङ्गबहुत्वस्य सत्त्वादित्यर्थः । उक्तं च ''नपुंसकमनपुंसकेनैकवच्चे''ति सूत्रकैयटे ''स्थितिर्नपुंसकं सा च सर्वत्र विद्यत इति स्थितिरूपत्वेनैव स्त्रीपुंसयोर्विवक्षायां सिद्धस्त्रीपुंसयोर्नपुंसकप्रयोग'' इति । इदानीं ''यदनिर्देश्यं परमं सुख''मित्यादिटीकोक्तमेव समाधिं व्यनक्ति ।। अपि चेति ।। ''यतो वाचो निवर्तते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वा''नित्यादितैत्तिरीये सुखस्य वागाद्यगोचरत्वेनानिर्देश्यत्वं श्रूयते । वाजसनेये ''एष

ब्रह्मलोकस्सम्राडिति होवाचे''ति प्रकृत्य ''एष परम आनन्दः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती''ति ब्रह्मानन्दस्य परमत्वं सिद्धमिति तदनुवादो यदनिर्देश्यमिति टीकायां दर्शित इत्यर्थः । ''अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद्ब्रह्मे-त्याचक्षत'' इत्यादिरादिपदार्थः । तद्दृष्टान्तेनोपपादयति ॥ एवं च यथेति ॥ चतुर्थेऽध्याये ''एकनिष्पत्तेस्सर्वं समं स्या''दित्याद्यपादीयाष्टमाधिकरणे ''तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षावाजिभ्यो वाजिन''मित्युदाहृत्य किमामिक्षायागेनैव दध्यानयनं युज्यतेऽथ वाजिनयागेनापीति संशये वैश्वदेवयागस्यामिक्षाद्रव्यकत्वात् तस्याश्च घनीभावात् रूपभेदेन मधुराम्लादिरसभेदेन च क्षीरादन्यत्वात् तथा च दध्यानयनस्यासंयुक्तस्यैव विधानेन केवलं सामर्थ्यलिङ्गेनामिक्षार्थताया वक्तव्यत्वात् तादृशसामर्थ्यस्य वाजिनेऽपि सत्त्वादुभयप्रयुक्त-मानयनमिति प्राप्ते आस्तां तावदामिक्षापदम् । सा वैश्वदेवीति तच्छब्दपरामृष्टस्य हविष्ट्वात्पूर्ववाक्य आनयतेर्द्विकर्मकत्वेन प्रथमेन कर्मणा दध्ना, द्वितीयकर्मणः पयसो व्याप्यमानत्वेन प्रधानतया पयस एव तच्छब्दपरामृष्टत्वात्पय एव देवतासम्बन्धाद्धविः । तथा च मन्त्रः जुषतां युज्यं पय इति पय एव घनीभूतमामिक्षेति आमिक्षापदं नित्यानुवादः । तत्सामानाधिकरण्यात्सेति स्त्रीलिङ्गम् । रसभेदादिकमन्यप्रयुक्तमिति वैश्वदेवयागप्रयुक्तं दध्यानयनमिति सिद्धान्तितम् । अत्रत्येन न्यायेनाष्टमस्य द्वितीये पादे ''आमिक्षोभय-भाव्यत्वादुभयविकारस्स्या''दिति चतुर्थेऽधिकरणे

पयसस्तु प्रधानत्वं तत्र कर्मसमाप्तितः ।
दध्ना हि नीयमानेन तदेव व्याप्तते पयः ।
कर्मतोऽपि प्रधानत्वं तस्य स्यात्संप्रदानवत् ।
सर्वनाम्ना परामर्शस्तस्यैवातोऽवकल्पते ॥

इत्युक्तं शास्त्रदीपिकायाम् । तथा च तत्र यथा पयः परत्वेऽपि स्त्रीलिङ्गता तद्वदत्रा-पीत्यर्थः । नन्वेवमुद्देश्यविधेयव्यत्ययेन लिङ्गसमर्थनं भाष्यानुक्तम् । काठकभाष्यविरुद्धं च । तत्र ''तदेतदेव भगवद्रूपं परमं सुखम् । ज्ञानिसुखं तु विप्लुण्मात्र''मित्युक्तेरित्यतो योजनांतर-मेतदिति भावेन टीकोक्तयोजन(नाया)स्य मूलमाह ॥ तदुक्तमिति ॥ काठकभाष्योक्तयोजनायां तदेतच्छब्दयोरर्थं वदन्नेव नपुंसकोपपत्तिमाह ॥ काठकभाष्ये त्विति ।

पाण्डुरङ्गि – दूरोक्तग्रहणे बिभ्यतोऽतिदूरोक्तग्रहणे कथं न भीतिरिति टीकावाक्यमप्रतीतेर्व्याचष्टे ।। किं चेति ।। अस्मिन्पक्षे लिङ्गव्यत्ययो भवतीतीममेवास्वरसं दृष्ट्वा पक्षांतरमाह ।। अपि चेति ।। अनेन तदेतच्छब्दयोर्द्वयोर्मध्ये एकस्योद्देश्यत्वावश्यंभावेन द्वयोर्नपुंसकलिङ्गत्वायोग इति परिहृतं भवति । नन्वेवमपि रूपशब्दाध्याहारो दोष इत्यत आह ।। एकं रूपं बहुधा यः करोतीति प्रकृतेश्वररूपपरत्वादिति ।।

## तात्पर्यचन्द्रिका

नापि व्यवहितपरत्वम् । तेषां सुखमिति वाक्यादुत्तरस्मिन् । ''नित्यो नित्यानां चेतनश्चेतनाना''मिति वाक्य ईश्वरस्य सन्निहितत्वात् । अस्तु वा ''तेषां सुख''मिति वाक्यात्पूर्वस्मिन् ''एको वशी''त्यादिव्यवहितवाक्ये प्रकृतेश्वरपरामर्शः । तथापि न दोषः ।

सन्निकृष्टमयोग्यं चेद्योग्यं दूरेऽपि संस्थितम् ।
गृह्यते सन्निधानाद्धि योग्यतैव बलीयसी ।। १ ।।

उक्तं हि जैमिनिसूत्रे ''आनन्तर्यमचोदने''ति । वार्तिके च

यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ।। इति ।

अयोग्यं च ज्ञानिसुखमनिर्देश्यत्वनिरूपपदपरमत्वसूर्यप्रकाशहेतुत्वादिनाऽन्वेतुम् । टीकायामपि ''व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवे''दिति व्यवधानोक्तिरभ्युपेत्यवादेन । अत एव ''चेतनश्चेतनानामित्यादौ परमात्मनोऽपि प्रकृतत्वा''दिति टीकायां सन्निहितवाक्य एव प्रकृततोक्ता । यद्वा ''नित्यो नित्याना''मित्यस्मादपि परस्मिन् ''तमात्मस्थं येऽनुपश्यंति धीरास्तेषां शान्तिः शाश्वती नेतरेषा''मित्यत्र प्रकृतेन ज्ञानफलेन शान्तिशब्दार्थेन सुखेन ''नित्यो नित्याना''मिति

**वाक्योक्तस्याप्यात्मनो व्यवहितत्वाट्टीकायां सन्निधानाद्योग्यताया बलीयस्त्वोक्तिः । एतेनैव सुखशब्दैकत्वनिमित्ता प्रत्यभिज्ञाऽपि निरस्ता । अस्य सुखस्यानिर्देश्यत्वादिभिर्ज्ञानिसुखाद्भेदस्यैव भानात् । प्रत्युत ब्रह्मपक्ष एव ''तमात्मस्थं तदेत''दिति तच्छब्दैक्यकृता प्रत्यभिज्ञाऽस्तीति ।**

**प्रकाशिका** – तदेतदित्यादेर्व्यवहितपरामर्शित्वदोषं द्वेधा परिहरति ।। नापीत्यादिना ।। सन्निहितत्वादिति ।। एतेन ''चेतनश्चेतनानामित्यादौ परमात्मनोऽपि प्रकृतत्वा''दिति टीकायां प्रकृतत्वात्सन्निहितत्वादित्यर्थो दर्शितः । ''दूरोक्तस्यापि समीपोक्तपरित्यागेन ग्रहण''मिति टीकावाक्यानुरोधेन पक्षान्तरमाह ।। अस्तु वेति ।। कुत इत्यत ''एतदुभयस्य ज्ञानिसुखेऽसम्भवात्परमात्मनि सम्भवाद्दूरोक्तस्यापी''त्यादिटीकार्थं सङ्गृह्य हेतुमाह ।। सन्निकृष्टमिति ।। श्लोके हिशब्दो हेतौ । यस्मात्तस्मान्न दोष इत्यर्थः । सन्निधितो योग्यताबलवत्त्वं मीमांसकसंमत्या द्रढयति ।। उक्तं हीति ।। तृतीयस्याद्यपादे ''आनन्तर्यमचोदने''त्युपांत्याधिकरणे हस्ताववनेनिक्ते । उलपराजिंस्तृणाती''ति दर्शपूर्णमासगतं ''मुष्टीकरोति । वाचं यच्छति । दीक्षितमावेदयती''ति ज्योतिष्टोमगतं च वाक्यमुदाहृत्य चिन्तितम् । हस्तावनेजनं हस्तसंस्कारार्थम् । मुष्टीकरणवाग्यमने मनःप्रणिधानार्थे । तेन त्रयमपि तावत्सामर्थ्यरूपाल्लिङ्गात् करिष्यमाणकर्माङ्गम् । तत्किमनंतरयोरुलपराज्यास्तरणदीक्षितावेदनयोरेवांगमुत सर्वकर्माङ्गमिति संशये तत्रानन्तर्यादेकवाक्यत्वादवांतरप्रकरणाद्वा तन्मात्रांगत्वे प्राप्ते लिङ्गप्रकरणाभ्यां प्राकरणिकसर्वकर्मार्थत्वप्रतीतेरानन्तर्यशब्दितपाठसन्निधिरूपक्रमस्य दुर्बलत्वात्सर्वकर्माङ्गतेति सिद्धांत इति । वेद्यामास्तरितुं सम्पादिततृणविशेषा उलपराजयः । दीक्षितावेदनप्रकारश्चैवं श्रुतः । ''अदीक्षिष्टायं ब्राह्मण इति त्रिरुपांश्वाह देवेभ्य एवैनं प्राह । त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राहे''ति ।।

सूत्रार्थस्तु आनन्तर्यं सन्निधानम् । अचोदना निमित्तं न भवतीति योग्यताबलवत्त्वस्य सूत्रेऽप्रतीतेराह ।। वार्तिके चेति ।। अस्त्वेवं ततः किमित्यत आह ।। अयोग्यं चेति ।। टीकायां ''एतदुभयस्य ज्ञानिसुखेऽसम्भवा''दिति वाक्यशेषस्थलिङ्गद्वयमात्रासम्भवोक्तावपि ''अनिर्देश्यत्वाद्ययोगाच्चे''त्युत्तर ग्रन्थपर्यालोचनयाऽभिप्रेताननेकहेतूनाह ।। अनिर्देश्यत्वेति ।। आदिपदेन सूर्याद्यप्रकाश्यत्वजगत्प्रकाशकत्वयोर्ग्रहः । आद्यपक्षे पूर्वोत्तरटीकावाक्ययोर्विरोधमा-

शङ्क्योत्तरवाक्यस्य गतिमाह ॥ टीकायामपीति ॥ टीकायामिति ॥ पूर्वमिति योज्यम् । अस्तु वेत्युक्तद्वितीयपक्ष एव टीकाभिमत इति भावेन टीकास्थपूर्ववाक्यविरोधं निराकर्तुं तेन सन्निध्यलाभप्रकारमाह ॥ यद्वा नित्यो नित्यानामिति ॥ एतेन टीकायां ''चेतनश्चेतनानामित्यादौ परमात्मनोऽपि प्रकृतत्वा''दित्युक्तिस्तु प्रकृतत्वमात्राभिप्राया । न तु सन्निहितत्वाभिप्रायेत्युक्तं भवति । एवं चेश्वरस्य व्यवहितत्वमुपेत्य दूरस्थस्यापि योग्यतया परामर्श इत्युपरितनटीकावाक्यं न विरुद्धम् । नाप्यभ्युपगमवादेन नेतव्यमिति तात्पर्यम् । व्यवहितत्वादित्येतदेव प्राचीनपक्षेऽस्वारस्यबीजं ध्येयम् । यदपि सुखश्रुतिकृतप्रत्यभिज्ञाविरोध इति तदपि ''अनिर्देश्यत्वाद्ययोगाच्चे''ति टीकया निरस्तमिति भावेनाह ॥ एतेनेति ॥ एतच्छब्दार्थं व्यनक्ति ॥ अस्येति ॥

**पाण्डुरङ्गि** – ननु च कथं ज्ञानिसुखापेक्षयेश्वरस्य सन्निहितत्वम् । नित्यो नित्यानामित्येतस्मादुपरितने ''तेषां शान्तिः शाश्वती नेतरेषामि''ति वाक्ये शान्तिशब्दार्थभूतसुखस्यैव सन्निहितत्वादित्यस्वरसादाह ॥ अस्तु वेति ॥ अत एवेति ॥ टीकायां व्यवधानेनोक्तेरभ्युपेत्यवादत्वादेवेत्यर्थः । अस्मिन्पक्षे सन्निधानाद्योग्यतायाः बलीयस्त्वोक्तेरमुख्यत्वं भवतीत्यतः पक्षांतरमाह ॥ यद्वेति ॥ एतेनेत्यनेनैव परामृष्टं हेतुं दर्शयति ॥ अस्य सुखस्येति ॥

## तात्पर्यचन्द्रिका

**अत्र चाद्यसूत्रे तस्येत्यनेन समन्वेतव्यमानुकूल्येन गृह्यमाणमुच्यते । तस्य भासेति वाक्यं च प्रतीकेनोपादीयते । तथा च तस्य आनुकूल्येन गृह्यमाणस्य । अनुकृतेः सूर्यादितेजोभिरनुकरणात् । सूर्यादितेजसां तदधीनप्रकाशत्वात् । तस्य भासेति वाक्येन सर्वस्य जगतस्तत्प्रभाप्रकाश्यत्वेनोक्तेश्चेति सूत्रार्थः । अत एव टीकायां ''एतदधीनप्रकाशे''ति ''तस्य भासे''ति चोक्तम् । सूत्रे चशब्दस्तु द्वितीयसूत्रस्याद्यव्याख्याने सूर्याद्यप्रकाश्यत्वरूपानुक्तहेतुसमुच्चये । द्वितीयव्याख्याने सर्वजगत्प्रकाशकत्वरूपोक्त हेतुसमुच्चये । तेनास्याधिकरणान्तरत्वे चशब्दायोग इति यत्कैश्चिदुक्तं तन्निरस्तम् ।**

यद्यप्यत्र ''अनुभाती''ति श्रुत्यनुसारात्सूत्रेऽप्यनुभानादिति वक्तव्यम् । तथापि यदन्यदपि सूर्यादिकृतं प्रतपनादि तदपीशाधीनमिति दर्शयितुमनुकृतेरित्युक्तम् । उक्तं हि भारते

तापिनी पाचिनी चैव शोषिणी च प्रकाशिनी ।
नैव राजन्रवेः शक्तिः शक्तिर्नारायणस्य सा ।। इति ।

द्वितीये आद्यसूत्रोक्तहेतूनां विष्ण्वेकनिष्ठत्वे श्रुतिस्मृती उक्ते । तत्र च ''अहं तत्तेज'' इत्यादिश्रुतौ ''यदादित्यगत''मित्यादिस्मृताविव विवक्षितार्थो न स्पष्टः । यत्र तु ''न तत्र सूर्यो भाती''त्याथर्वणश्रुतौ स्पष्टः, तत्र विष्णुविषयत्वमद्याप्य-सिद्धमिति स्मृतिश्चशब्देनोक्ता । श्रुतिस्त्वपिशब्देन समुचिता । यद्यपि चात्रानुकूल्येन गृह्यमाणस्य विष्णुत्वरूपे प्रधानसाध्ये ''तदेतत्प्रेयः प्रियो हि ज्ञानिनोऽत्यर्थ-मह''मित्यादिश्रुतिस्मृत्युक्तिपरत्वेनेदं सूत्रं व्याख्यातुं शक्यम् । तथापि ''प्रियो ही''त्यादौ ज्ञानार्थं प्रार्थितत्वरूपस्यानुकूल्येन गृह्यमाणत्वस्यास्फुटत्वादाद्यसूत्रो-क्तहेतूनां विष्ण्वेकनिष्ठत्वस्यावश्यसाध्यत्वाच्च तत्परतयैव भाष्यकृता व्याख्यातम् ।।

**प्रकाशिका** – सूत्रार्थस्य भाष्यादावस्फुटत्वात्समन्वेतव्याप्रतीतेश्च सूत्रार्थं वदन् क्रमं च सूचयति ।। अत्रेति ।। वाक्यं चेति ।। तंत्रावृत्त्योरन्यतराश्रयणेनेति भावः । एतेन यदुक्तं श्रुतप्रकाशे ''तस्येत्यस्य प्रतीकत्वे यदेव विद्ययेति हीतिवदिति शब्दस्स्या''दिति । तन्निरस्तम् । समन्वेतव्यपरत्वस्यापि सत्त्वेनेति शब्दाभावोपपत्तेः । ''अवस्थितिवैशेष्यादिति चेन्नाभ्युप-गमाद्धृदि हि । अस्यैव चोपपत्तेरूष्मेत्यादौ तदभावाच्चेति । आद्यपक्षेऽन्वयपूर्वमर्थमाह ।। तथा चेति ।। किमिदं सूर्यादिभिस्तदनुकरणमित्यतस्तात्पर्यमाह ।। सूर्यादीति ।। तमेव भांतमनुभाति सर्वमिति वाक्यशेषे सर्वं सूर्यादितेजोजातं कर्तृ, तं भांतमनु तदिच्छानुरोधेन भाति न तु स्वातंत्र्येणेत्युक्त्या सूर्यादितेजसां तदधीनप्रकाशत्वं लब्धमित्यर्थः । प्रतीकग्रहणपक्षेऽर्थमाह ।। तस्येति ।। सर्वं जगत्तस्य भासा भातीत्युक्त्या तत्प्रकाश्यत्वं सर्वस्योक्तमिति सूत्रे तस्येति प्रतीकेन तदर्थो हेतुत्वेनोक्त इत्युक्तं भवति ।। अत एवेति ।। तस्येत्यस्य समन्वेतव्यपरत्वस्यापि सत्त्वादेव टीकायां ''तमेव भांतमनुभाति सर्वमिति वाक्यशेषे सूर्यादीनामेतदधीनप्रकाशश्रवणा''

दित्येतच्छब्दप्रयोगः । ''तस्य भासेति सर्वजगतस्तत्प्रकाश्यत्वप्रतीतेश्चे''त्युक्तमित्यर्थः । तस्य चेति चशब्दार्थं व्यनक्ति ॥ सूत्र इति ॥ ''अपि स्मर्यत'' इत्यस्य ''यदादित्यगतं तेज'' इति स्मृतौ प्रागुक्तं लिङ्गद्वयं विष्णुनिष्ठतया स्मर्यतेऽपीत्येका व्याख्या । मामकमित्यस्य मदधीनं मदीयं चेत्यर्थान्मत्तेज एवादित्यादिस्थितं तत्तेजः प्रेरकत्वेनाखिलं भासयतीति व्याख्यानात् । तथा ''न तत्र सूर्यो भाती''त्यनेन यदानुकूल्येन गृह्यमाणस्य सूर्याद्यप्रकाश्यत्वमुक्तं तच्च विष्णोरेव स्मर्यत इत्यपरा व्याख्या । तत्राद्यव्याख्यान इत्यर्थः ॥ सर्वजगदिति ॥ तस्येति प्रतीकग्रहणेन लब्धहेतोः कण्ठोक्तानुकृतिरूपहेतुना समुच्चयार्थ इत्यर्थः ॥ कैश्चिदिति ॥ पूर्वाधिकरणशेषत्वं वदद्भिरित्यर्थः । ''अन्यकृतीनामप्युपसङ्ग्रहार्थमनुकृतेरित्युक्त''मिति तत्वप्रदीपानुरोधेन परिहारमाह ॥ तथापीति ॥ ''भानश्रुत्यापि कृतिरुपसङ्गृहीता । भानपूर्वकत्वात्कृते''रिति तत्वप्रदीपोक्त्या श्रुतावपि भानमुपलक्षणमिति भावः । ऐतरेयभाष्योदाहृतं वाक्यमाह ॥ उक्तं हि भारत इति ॥ श्रुतिस्मृती इति ॥ न केवलं श्रूयते किंतु स्मर्यतेऽपीति व्याख्यानादिति भावः । सूत्रे स्मृतेरेव प्रतीत्या कथं द्वयोरुक्तिरित्यतस्तद्विशदयन्नेवं विन्यासे हेतुं चाह ॥ तत्र चेति ॥ अहं तत्तेजोरश्मीदिति श्रुतावित्यर्थः । व्याख्यानांतरमाशङ्क्य भाष्यकृतव्याख्याने बीजमाह ॥ यद्यपीति ॥ इदं द्वितीयसूत्रम् । एतेनाद्यसूत्रे लिङ्गोक्तिः । द्वितीये तत्समर्थनमिति क्रमोऽप्युक्तो भवति ।

**पाण्डुरङ्गि** – आद्यव्याख्यान इति ॥ न केवलं सूर्यादिप्रकाशनियामकत्वं सर्वजगत्प्रकाशकत्वं च लिङ्गं श्रूयते किंतु स्मर्यतेऽपीत्याद्यव्याख्यान इत्यर्थः ॥ आद्यसूत्रोक्तहेतूनामिति ॥ सूर्यादिप्रकाशनियामकत्वसर्वजगत्प्रकाशकत्वसूर्याद्यप्रकाश्यत्वरूपहेतूनामित्यर्थः । न चैतल्लिङ्गद्वयस्य विष्णुनिष्ठत्वमिति टीकाविरोध इति वाच्यम् । द्वितीयसूत्रस्य द्वितीयव्याख्यानानुसारेण तदुपपत्तेः । अत्र चाद्ययोजनाभिप्रायेण हेतूनामित्युक्तत्वादित्यदोषः ॥

## तात्पर्यचन्द्रिका

**अन्ये तु आथर्वणस्थं ''न तत्र सूर्य'' इत्यादिकं विषयवाक्यमित्याहुः । तन्न । त्वया हि ''यत्तदद्रेश्य''मित्यादिप्रकरणस्य ब्रह्मपरत्वसाधकेनादृश्यत्वाद्यधिकरणेनैव तत्प्रकरणस्थस्य ''यस्मिन्द्यौ'' रित्यादेरपि तत्परत्वे सिद्धे द्युभ्वाद्यधिकरणं व्यर्थमिति**

शङ्कित्वा ‘‘यत्तदद्रेश्य’’मित्यादिप्रकरणे ‘‘यस्मिन्द्यौरित्यादिवाक्यं नास्तीति कृत्वा चिन्तया द्युभ्वाद्यधिकरणमित्युक्तम् । आथर्वणस्थं च ‘‘न तत्रे’’त्यादिवाक्यं ‘‘यत्तदद्रेश्य’’मित्यादिप्रकरणे द्युभ्वादिसूत्रस्थित्यदनसूत्रविषयभूतयोः ‘‘यस्मिन्द्यौः अनश्नन्न्य’’ इति वाक्ययोर्मध्ये च वर्तते । तथा चास्याधिकरणस्याद्दश्यत्वाधिकरण-द्युभ्वाद्यधिकरणाभ्यामगतार्थत्वाय ‘‘न तत्रे’’त्यादिवाक्यं ‘‘यत्तदद्रेश्य’’मित्यादि-प्रकरणे ‘‘यस्मिन्द्यौ’’रित्यादिवाक्यद्वयमध्ये च नास्तीति कृत्वा चिन्तयेदमधि-करणमिति वाच्यम् । न च तद्युक्तम् । यतः

एकत्रापि च नास्तीति कृत्वा चिन्ता न युज्यते ।
अनेकस्मिन्न युक्तेति किमु गत्यंतरे सति ॥ १ ॥

अस्ति हि काठकवाक्यरूपं गत्यंतरम् । अन्यथा ‘‘अत एव प्राणः’’ इत्यस्य ‘‘प्राणबन्धनं हि सोम्य मंनः’’ इति वाक्यं ब्रह्मप्रकरणस्थत्वेनासन्दिग्धत्वान्न विषयः । किन्तु ‘‘प्राण इति होवाचे’’ति वाक्यमेवेति प्राणाधिकरणे यत्त्वयोक्तं तदयुक्तं स्यात् । तद्वाक्यं तत्प्रकरणे नास्तीति कृत्वा चिन्तया तत्संभवात् । किं चाथर्वणे पूर्वत्र ‘‘विरजं ब्रह्मनिष्कल’’मित्यादीनां परत्र च ‘‘ब्रह्मैवेदममृतं पुरस्तात्’’ इत्यादीनां ब्रह्मश्रुतिलिङ्गादीनां स्पष्टत्वादस्माकं पक्ष इव दृढपूर्वपक्षहेत्वभावाच्च न तत्र संशयः । अपि च परपक्षे ब्रह्मणो भानमात्रतया ‘‘भांत’’मिति शत्रंतशब्दः ‘‘तस्य भासे’’ति षष्ठी चायुक्ता । किं च प्रपञ्चे ब्रह्मभानान्यभानाभावेनानुशब्दायोगः । ‘‘धावंतमनुधावती’’त्यादौ हि धावनभेदे सत्येवानुशब्दो दृष्टः । न च श्रौतो व्यपदेशो ‘‘वह्निं दहंतमयोऽनुदहती’’त्यादिवदारोपितभेदनिमित्तको युक्तः । किं च ‘‘अपि स्मर्यत’’ इति सूत्रविषयत्वेन त्वयोदाहृते ‘‘न तद्भासयते यदादित्यगत’’मित्यादि-वाक्ये ब्रह्मणः सूर्याद्यभास्यत्वस्य सूर्यादितेजसोऽपि भगवदधीनत्वस्य चैवोक्तत्वेन त्वदभिप्रेतस्य ब्रह्मज्ञानांतरावेद्यमित्यस्यास्मदादिसम्बन्धिघटादिज्ञानं ब्रह्मरूपमित्यस्य चासिद्धिः ।

**प्रकाशिका** – अन्ये त्विति ॥ तेषामिदमधिकरणशरीरम् । न तत्र सूर्यो भाति न चन्द्रतारकमित्यादौ सूर्याद्यप्रकाश्यत्वादिनाऽवगतं किं तेजोंऽतरमुत ब्रह्मेति संशये तत्रेति सतिसप्तम्या तस्मिन्सति सूर्यादिकं न भातीत्युक्त्या तत्रेत्यनेन सूर्यादितेजोभिभावकस्य वस्तुनः प्रतीतेस्सूर्यादेश्चंद्रतारादितेजोंतराभिभावकत्वदृष्ट्या प्रकृतेऽपि तत्रेत्यनेन तेजोंतरस्यैव सूर्याद्यभिभावकस्य ग्राह्यत्वात् ''तमेव भांतमनुभाती''ति वाक्ये चानुकारावगमादनुकारस्य च सजातीय एव ''धावंतमनुधावती''त्यादौ दर्शनात्तस्य भासेति वाक्ये सर्वभासकत्वावगमाच्च तुल्यरूपमप्रकृतमपि तेजोंतरमेवात्रोपास्यत्वेनोच्यते । ''तेन रक्तं रागात् तस्यापत्य''मित्यादावप्रकृतेऽपि तच्छब्ददर्शनात् । तदुक्तं भामत्यां –

अभानं तेजसो दृष्टं सति तेजोंऽतरे यतः ।
तेजो धात्वंतरं तस्मादनुकाराच्च गम्यते ॥ इति ।

एवं तस्य वाक्यस्य ''यस्मिन्द्यौ''रित्यादिब्रह्मप्रकरणगतत्वेऽप्यसम्भवानुकारसामर्थ्यलक्षणेन लिङ्गेन प्रकरणबाध इति प्राप्ते ''तमेव भांत''मित्यादौ ''भारूपस्सत्यसङ्कल्प'' इति श्रुतिसिद्धभारूपब्रह्मार्थत्वसम्भवेऽलौकिकतेजोंतरकल्पनायोगात् ''तत्रे''त्यस्य विषयसप्तम्यंततया तद्वाक्योक्तसूर्याद्यप्रकाश्यत्वस्य ब्रह्मलिङ्गत्वात् ''तस्य भासे''त्युक्तसर्वजगद्विषयकभानवत्त्वस्य ब्रह्मण्येवोपपत्तेः ''अग्निं दहंतमयःपिण्डोऽनुदहति । वायुं गच्छंतं रजोऽनुगच्छती''त्यादौ विसदृशेऽप्यनुकारदर्शनेन ''तमेवे''ति वाक्ये विसदृशेऽप्यनुकारसम्भवाद्ब्रह्मैवात्रोच्यते । उक्तं च भामत्यां

ब्रह्मण्येव हि तल्लिंगं न तु तेजस्यलौकिके ।
तस्मान्न तदुपास्यं किं ब्रह्म ज्ञेयं तु गम्यते ॥ इति ।

तत्र विषयसंशयपूर्वपक्षादिबीजानि क्रमेण निराह ॥ तन्नेत्यादिना ॥ इत्युक्तमिति ॥ विवृतमेतत्तत्रैव ॥ इति वाच्यमिति ॥ अन्यथा व्यर्थतापत्तेः । लिङ्गेन प्रकरणबाध इति भामत्युक्तं तु दृढपूर्वपक्षहेत्वभावाच्चेत्यग्रे निरसिष्याम इति भावः । यत इत्यस्य श्लोकेनान्वयः । इति यतस्ततो न युक्तमिति । गत्यंतरमसिद्धमित्यत आह ॥ अस्ति हीति ॥ अन्यथा गत्यंतरे सत्येवमाश्रयणे । ननु नकृत्वाचिंतयेदमारभ्यते । किं तर्ह्यनुकारसामर्थ्यरूपलिङ्गेन प्रकरणबाधया

पूर्वपक्षे तत्समाधानार्थम् । तथैव भामत्युक्तेरित्यत आह ।। किं चेति ।। सत्यमेवं सति तु तादृशलिङ्गे । तदेव नास्ति । अनुकारस्य विसदृशेऽपि दर्शनेन सावकाशतयानेकपूर्वोत्तरगत-श्रुतिलिङ्गबाधकत्वायोगात् । तत्रेति सतिसप्तमीत्यत्रासाधारणहेत्वभावे तस्यापि सावकाशत्वात् । तस्य भासेत्यपि सावकाशमेव । शब्दानुशासनपरे सूत्रे तच्छब्दस्य पूर्वाप्रकृतपरत्वदर्शनेऽप्येकार्थप्रतिपादनपरवाक्येषु क्वापि सर्वनाम्नोऽप्रकृतपरत्वादर्शनाच्चेति भावेनोक्तं दृढपूर्वपक्ष-हेत्वभावाच्चेति । सिद्धांतोऽप्ययुक्तः । श्रुत्यननुसारादित्याह ।। अपि चेति ।। ''लः कर्मणि च भावे चाकर्मकेभ्य'' इति भा दीप्तावित्यस्य कर्तरि लट्प्रत्यये ''लटश्शतृशानचाव-प्रथमासमानाधिकरण'' इति विहितलडादेशशतृप्रत्ययस्य कर्तृवाचित्वेन भांतमित्युक्तभानकर्तृत्वं न चैतन्ये युक्तमित्यर्थः । तस्येति षष्ठ्यर्थस्य भेदघटितत्वादिति भावः ।

ननु ''वह्निं दहंतमयोऽनुदहतीत्यत्र क्रियाभेदाभावेऽपि द्रव्यभेदेन क्रियाभेदं कल्पयित्वा क्रियासादृश्यं व्याख्येय''मिति भामत्युक्तत्वादिहापि तथा स्यादित्यत आह ।। न चेति ।। अप्रामाण्यापत्तेरिति भावः । एतेनानुकृतेरनुभानात्तस्येति प्रतीकग्रहणेन तस्य भासेति सर्वस्य तद्धेतुकभानोक्तेर्न तत्रेति सूर्याद्यप्रकाश्यं ब्रह्मेत्याद्यसूत्रार्थः प्रत्युक्तः । द्वितीयसूत्रार्थमपि प्रत्याह ।। किञ्चेति ।।

**पाण्डुरङ्गि** – अन्यथेति ।। यत्तदद्रेश्यमित्यादिप्रकरणे यस्मिन्द्यौः अनश्नन्नन्य इति वाक्यद्वयमध्ये च नास्तीति कृत्वाचिंतयैतदधिकरणारंभ इत्यर्थः । ननु धावंतमनुधावतीत्यादौ धावनभेदेऽनुशब्दप्रयोगवद्वह्निं दहंतमयोऽनुदहतीत्यत्र दहनभेदाभावेऽप्यनुशब्दप्रयोगदर्शनात् प्रकृतजगति ब्रह्मभानान्यभानाभावेन भानभेदाभावेऽप्यनुशब्दप्रयोगः किं न स्यादित्यत आह ।। न चेति ।। श्रौत इति हेतुगर्भं विशेषणम् । अन्यथा श्रुतेरारोपितविषयकत्वेनाप्रामाण्यं स्यादित्यर्थः ।

## तात्पर्यचन्द्रिका

**केचित्तु छान्दोग्य उत्तरस्मिन्प्रजापतिवाक्येऽपहतपाप्मत्वादिरूपेण जीव उच्यते । तत्र कर्मादिनातिरोहितस्यापहतपाप्मत्वादिगुणस्याविर्भावोक्तेः। पूर्वस्मिन्दहरवाक्ये तु ब्रह्म । तत्रातिरोहितस्य स्वाभाविकस्यैव तस्योक्तेरित्येवंपरतया ''उत्तराच्चेदाविर्भूत-**

स्वरूपस्तु'' इति सूत्रं व्याचक्षाणाः ''अनुकृते''रित्यादिसूत्रद्वयं तस्य ब्रह्मणोऽनुकृतेः सादृश्यात् ''मम साधर्म्यमागता'' इति स्मृतेश्च प्रजापतिवाक्योक्तो जीवो दहर-वाक्योक्तं तु ब्रह्मेति पूर्वाधिकरणशेषतया व्याचक्षते । तन्न । प्रजापतिवाक्येऽपि दहरवाक्य इव ''य आत्माऽपहतपाप्मा विजरो विमृत्यु''रित्यादेरेव श्रवणेन तत्राप्यपहतपाप्मत्वादिप्रादुर्भावोक्त्यभावात् । ''स्वेन रूपेणाभिनिष्पद्यत'' इति वाक्यशेषस्तूभयत्राप्यस्ति । दहरवाक्ये जीवस्याभिनिष्पत्त्युक्तिर्जीवस्वरूपाभि-निष्पादकत्वरूपब्रह्मगुणोक्त्यर्था चेत् । प्रजापतिवाक्येऽपि तदर्थाऽस्तु ।

किञ्च अपहतपाप्मत्वादिगुणक आत्मनींद्रेण पुनः पुनः पृष्टे प्रजापतिः ''य एषोंऽतरक्षिणि पुरुषो दृश्यत एष आत्मे''ति ''य एष स्वप्ने महीयमानश्चरत्येष आत्मे''ति ''यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मे''ति ''तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठान''मित्यसकृदुपदिदेश । तत्र चाक्षिवाक्यं तावद्ब्रह्मविषयम् । ''अंतरस्तद्धर्मोपदेशात् । अंतर उपपत्ते''रित्यत्र च निर्णीतब्रह्मत्वस्य ''य एषोंऽतरक्षिणि पुरुषो दृश्यते'' इति श्रुत्यंतरोक्तस्यैवेह प्रत्यभिज्ञानात् । जीवस्य हृत्स्थत्वेनाक्षिस्थत्वाभावाच्च ।

स्वप्नवाक्यमपि तथा । ''स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीती''ति श्रुत्यंतरात् । अत्रापि महीयमानत्वलिङ्गाच्च । सुप्तवाक्यमपि तथा । ''प्राज्ञेनात्मना सम्परिष्वक्त'' इत्यादिश्रुत्यंतरात् । अत्रापि ''यत्र सुप्त'' इति यच्छब्दोक्तस्य समस्तसुप्ताधारस्यैव ''एष आत्मे''त्येतच्छब्देन परामर्शाच्च ।

अशरीरवाक्यमपि तथा । अशरीरशब्देन निरपेक्षस्य सार्वकालिकस्य च शरीरराहित्यस्य स्वरसतः प्रतीतेः । तस्य चेश्वर एव सम्भवात् । किं चाक्ष्यादिवाक्येषु प्रतिवाक्यं ''एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे''ति श्रवणात्कथं तेषां जीव-विषयता । किं च प्रजापतिवाक्ये ''य आत्माऽपहतपाप्मे''ति प्रसिद्धार्थेन प्रकृतपरामर्शिना च य इति सर्वनाम्ना ''एष आत्माऽपहतपाप्मे''ति प्रस्तुतदहरवाक्ये

**प्रसिद्धेश्वरपरामर्श एव युक्तः । अपि च ''तेषां सर्वेषु लोकेषु कामचारो भवती''ति दहरवाक्ये यन्मोक्षाख्यं फलं तस्यैव ''तेषां सर्वेलोका आप्ता'' इति प्रजापतिवाक्येऽपि श्रुतत्वात् तथा दहरवाक्ये ''तस्मिन्यदंतस्तदन्वेष्टव्य''मिति यदन्वेष्टव्यत्वादिकमुक्तं तस्यैव प्रजापतिवाक्ये ''सोऽन्वेष्टव्यः स विजिज्ञासितव्य'' इति श्रवणात् ''इन्द्रो विरोचनश्चैव श्रुत्वा तं ब्रह्मणोऽक्षिगम् । विष्णुमानन्दरूपे त''मित्यादिस्मृतेश्च न तयोर्भिन्नार्थतेति दिक् ।**

**अनुकृतेरित्यादिसूत्रद्वये च किं मुक्तस्यापहतपामत्वादिरूपेणेश्वरसाम्यं साध्यं किं वाऽन्यत्रप्रसिद्धेन तेन दहरप्रजापतिवाक्योक्तयोर्ब्रत्वजीवत्वे साध्ये । नाद्यः । तस्य त्वन्मते चतुर्थे ''सम्पद्ये''त्यादावेव सिद्धेः । समन्वयाध्यायासङ्गतेश्च । सूत्रेऽनुकृतेरिति साम्यस्य हेतुत्वोक्तेश्च । नांत्यः । अनुकृतिमात्रेण पूर्वोक्तं ब्रह्म पश्चादुक्तस्तु जीव इत्यस्यासिद्धेः ।**

**प्रकाशिका** – केचित्त्विति ।। इति व्याचक्षाणाः पूर्वाधिकरणशेषतया व्याचक्षत इत्यन्वयः । अयमर्थः । ''इतरपरामर्शात्स इति चेन्नासम्भवा''दित्यत्र ''एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाये''ति जीवपरामर्शात्स एव दहराकाश इति चेन्न । तस्मिन्पूर्वोक्तापहतपाप्मत्वादेरसम्भवादित्युक्ते उत्तरस्मात् ''य आत्माऽपहतपाप्मेत्यादि प्राजापत्यवाक्याज्जीवस्यैवापहतपाप्मत्वादिगुणयोगो निश्चीयत इत्याशङ्क्य प्राजापत्यवाक्ये न स्वाभाविकापहतपाप्मत्वादिगुणक उच्यते । अपि तु प्राक्तिरोहितस्वरूपस्सन् ''परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत'' इति भगवत्प्रसादाविर्भूतगुणक एव । अत उत्तरवाक्यं जीवपरमिति युक्तम् । पूर्वत्र दहरवाक्ये त्वपहतपाप्मत्वादयस्स्वाभाविका एव श्रूयन्ते । तेच जीवेन युक्ता इति दहराकाशो न जीवः । किं तु तथोच्यमानः परमात्मैवेत्यत्र हेत्वंतरमत्रोच्यते । तस्य दहराकाशस्य परमात्मनोऽनुकृतेरनुकारात् ''परमं साम्यमुपैती''त्युक्तसाम्यापत्तेश्चेति यावत् । अतोऽनुकृत्या प्रजापतिवाक्ये तादृशगुणवत्त्वेन निर्दिष्टो जीवः अनुकार्यं ब्रह्म दहराकाश इति ''इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः'' इति संसारिणो मुक्त्यवस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारस्स्मर्यतेऽपीति पूर्वाधिकरणशेषतया व्याचक्षत इति । पूर्वोत्तरवाक्ययोः

परोक्तं वैलक्षण्यमसिद्धमिति भावेनाह ॥ तन्नेति ॥ ननु ''य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपि पासस्सत्यकामस्सत्यसंकल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाती''ति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्याऽन्वेष्टव्यात्मस्वरूपजिज्ञासया प्रजापतिमुपसेदुषे मघवते प्रजापतिर्जागरितस्वप्रसुषुप्त्यवस्थजीवात्मानमशरीरं क्रमेण शुश्रूषुयोग्यतापरिचिक्षिषयोपदिश्य तत्र परिशुद्धात्मस्वरूपोपदेशयोग्याय मघवते ''मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्याधिष्ठान''मिति शरीरस्याधिष्ठानतामात्मनश्चाधिष्ठातृतामशरीरस्यामृतस्वरूपतां चोक्त्वा ''न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव संतं न प्रियाप्रिये स्पृशत'' इति कर्मारब्धशरीरयोगिनस्तदनुगुणसुखदुःखभाक्त्वरूपानर्थं तद्विमोक्षे च तदभावमभिधाय ''एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत'' इति जीवात्मनस्स्वरूपमेव शरीरवियुक्तमुपदिदेश । ''स उत्तमः पुरुषः । स तत्र पर्येति जक्षन्क्रीड''न्नित्यादिना प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वं निवृत्ततिरोधानस्य परंज्योतिरुपसंपन्नस्य प्रत्यगात्मनो ब्रह्मलोके यथेष्टभोगावास्त्यादिकमभिधाय ''स यथा प्रायोग्य आचरणे युक्त एवमस्मिन् शरीरे प्राणो युक्त'' इति यथोक्तस्वरूपस्यैव संसारदशायां कर्मतंत्रं शरीरयोगं युग्यशकटयोगदृष्टांतेनाभिधाय ''यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राण''मित्यादिना चक्षुरादीनां करणत्वं रूपादीनां ज्ञेयत्वमस्य च ज्ञातृत्वं प्रदर्श्य तत एव शरीरेन्द्रियेभ्यो व्यतिरेकमुपपाद्य ''स वा एष एतेन दैवेन चक्षुषा मनसैतान्कामान् पश्यन्रमते य एते ब्रह्मलोक'' इति तस्यैव विधूतकर्मनिमित्तशरीरेन्द्रियमनश्शब्दाभिहितेन दिव्येन स्वाभाविकेन ज्ञानेन सर्वकामानुभवमुक्त्वा ''तं वा एतं देवा आत्मानमुपासते । तस्मात्तेषां सर्वे च लोका आप्तास्सर्वे च कामा'' इत्येवंविधमात्मानं ज्ञानिनो जानंतीत्यभिधाय ''सर्वांश्च लोकानवाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति हि प्रजापतिरुवाचेत्येवंविधमात्मानं विदुषस्सर्वलोकसर्वकामावाप्त्युपलक्षितं ब्रह्मानुभवं फलमभिधायोपसंहृत''मित्यंतेन तदीयभाष्येण प्रजापतिवाक्यजातस्य सर्वस्यापि जीवपरत्वमुक्तम् । तत्कथमुच्यते दहरवाक्याद्वैलक्षण्यं नेतीत्यतो जागरितस्वप्नसुषुप्ताशरीरवाक्यानि प्रकरणचतुष्टयगतानि तावत्क्रमेणोदाहृत्य तेषां ब्रह्मपरत्वं साधयति ॥ किं

चेत्यादिना ॥ उपदिदेश प्रजापतिरिंद्रायेत्यर्थः । अंतरिति तन्मतरीत्योपन्यासः । तत्रत्यविषयवाक्यं य एषोंऽतरिति ॥ हृत्स्थत्वेनेति ॥ ''अवस्थिति- वैशेष्यादिति चेन्नाभ्युपगमाद्धृदि ही''ति सूत्रे ''एष आत्मे''ति श्रुतौ च सिद्धत्वादिति भावः । ''हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यती'' त्यादित्वदभिमानातिशयाभिप्रायम् । यथा चैतत्तथावोचामांतराधिकरणे ॥ तथेति ॥ ब्रह्मविषयमित्यर्थः । ''शारीरं जीवमभिप्रहत्यसंयोज्ये''ति वाजसनेयवाक्यादित्यर्थः । न च तत्रापि विवादः । ''शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एकहंस'' इति वाक्यशेषे जीवमादाय गच्छतीति श्रवणात्पूर्वोक्तार्थे श्लोकत्वेनोदाहरणाच्चेति भावः । महीयमानत्वं च जीवस्य तदा न युक्तम् । भयादेरप्युपलम्भात् । न च कदाचिन्महीयमानत्वम् । नित्यवच्छ्रवणविरोधात् । ''प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नांतर''मिति वाजसनेये सुप्तौ भगवत्परिष्वंगेनैव बाह्याद्यज्ञानश्रवणेन तत्समाख्ययाऽत्रापि तथात्वमित्यर्थः । ''मर्त्यं वा इदं शरीरं तदस्यामृतस्याधिष्ठान''मिति वाक्यमपि ब्रह्मपरमित्याह ॥ अशरीरेति ॥ तस्य चेति ॥ ''अरूपवदेवे''त्यत्र वक्ष्यमाणत्वादिति भावः । अक्षिस्वप्नसुप्तिवाक्येषु त्रिषु ब्रह्मपरत्वे युक्त्यंतरं चाह ॥ किं चेति ॥ ननूपक्रमे ''य आत्माऽपहतपाप्मे''त्यादिना जीवस्योपक्रांतत्वात्तत्परत्वं सर्वस्य वाच्यमित्यतस्तदपि न जीवविषयमित्याह ॥ किं च प्रजापतीति ॥ प्रकारांतरेण दहरवाक्यवैलक्षण्यमाह ॥ अपि चेति ॥ विष्णुमानन्दरूपे तं सम्यग्ज्ञानविपर्ययौ । आप तु''रित्यादिछान्दोग्यभाष्योदाहृतस्मृतेरित्यर्थः ।

एवं वाक्यांतराण्यपि ब्रह्मपरतया साधनीयानीत्याह ॥ दिगिति ॥ तथा हि ॥ ''प्रायोग्य आचारणे युक्त एवमस्मिन् शरीरे प्राणो युक्त'' इत्यत्र प्राणशब्दस्य ''अत एव प्राण'' इत्यादौ परब्रह्मण्येव प्रसिद्धत्वात् ''आकाशमनुविषण्णं चक्षु''रित्यादिवाक्यस्य ''इदं पश्यामि जिघ्राणी''त्यत्रापि ''जीवा न वै विदुः । द्रव्याणामपि चाज्ञानाद्वेदासौ पुरुषोत्तम'' इत्यादिस्मृत्या विष्णुपरत्वात् । ''एतं देवा आत्मानमुपासत'' इति देवोपास्यत्वश्रवणाच्च । तदुक्तं भगवत्पादैः ''न हि जीवमात्रं देवा उपासते । ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासत इति हि श्रुति''रिति । अन्यस्तु क्षुद्रोपद्रवोऽग्रे निरसिष्यते । सूत्रार्थं च पराचष्टे ॥ अनुकृतेरिति ॥ तेन ईश्वरसाम्येन । ''सम्पद्याविहाय स्वेन शब्दा''दित्यत्रेत्यर्थः । एतेन प्रायो

रामानुजरीतिमनुसरतः कस्यचिच्छैवस्य मतमपि प्रत्युक्तं बोध्यम् । तदत्र शिवार्कमणिदीपिकायां चन्द्रिकोक्तरीत्याक्ष्यादिवाक्यानां ब्रह्मपरत्वमाशंक्य समाधानमुक्तं स्वप्नवाक्ये स्वप्नप्रयोजकत्वेन सुषुप्तिवाक्ये सुषुप्त्याधारत्वेन ब्रह्मणि संभवन्स्वप्नसुप्तिसम्बन्धो नोच्यते । येन समाख्यादिबलाद्ब्रह्म स्यात् । किन्तु स्वप्न सुप्त्यवस्थावत्त्वमेव । स्वप्नसम्बन्ध्यात्मोपदेशानंतरं ''घ्नंतित्वेवैनं विच्छाययंति वे''त्यादिनेंद्रेण तस्य हन्यमानत्वादिप्रतिभासतो दुष्टत्वस्य सुप्तिसम्बंध्यात्मोपदेशानंतरं ''नाहं खल्वयमेवं संप्रत्यात्मानं जानातीत्ययमहमस्मीति नो एवैमानि भूतानि विनाशमेवापीतो भवती''ति तस्य ज्ञानशून्यतया विनष्टप्रायत्वस्योक्तत्वात् । अक्षिवाक्ये ''एतदमृतमभय''मित्यादि तु मुक्त्यवस्थायां भाविरूपापेक्षयोपपद्यत इति । तदसारम् । स्वप्नादिवाक्यशेषे ''घ्नंतीवे''त्यादिश्रवणेऽपि इन्द्रः ''एष स्वप्ने महीयमान'' इति प्रजापतिनोक्तस्वप्नप्रदर्शकं ब्रह्मैवेति जानन्नप्यसुरमोहाय जीवविवक्षया घ्नंतीत्यादिदोषान्वक्ती-त्युपपत्तेः । उक्तं च -

पुनः पुनश्च मोहाय गत्वा गत्वा निवर्तते ।
कथंचिदेव विज्ञातं मयेत्यज्ञान्विमोहितुम् ।

तद्योग्यान्येव वाक्यानि ब्रह्माप्याह पुनः पुनः ॥ इति । ''दर्शयन्नासुरीं बुद्धिं स्वप्नदृश्यविवक्षया । घ्नंतीवैनमदंतीवे''त्यादि च । यदप्यमृतत्वादिकं मुक्त्यवस्थाभिप्रायेणेति तन्न। तथात्वेंऽतराद्यधिकरणेऽपि तथात्वापत्त्या तत्रत्यसिद्धांतहान्यापत्तेः । महीयमानत्वस्य दुरुपपादत्वाच्च । अक्षिस्थत्वायोगस्मृतिविरोधादेरनुद्धृतत्वाच्च यत्किंचिदेतत् । यच्चोक्तं सूत्रे तस्येति कर्तृषष्ठ्यंतेन जीवः परामृश्यते । दहरपदं कर्मणि षष्ठ्यंततया विपरिणामेन दहरस्येतीहानुवर्तते । तथा च जीवस्य दहरानुकृतेरनुकर्त्रनुकार्ययोर्भेदाद्दहरो न जीव इति सूत्रार्थ इति तन्न । अनुवृत्तिविपरिमणामप्रथमांतावृत्तीनां क्लिष्टत्वात् । अस्मद्रीत्याऽनुकृतेस्सा-क्षात्साध्यान्वयसम्भवे तया भेदं प्रसाध्य तस्य साध्यान्वयोक्तेरयुक्तत्वात् । ''गगनं गगनाकारं सागरस्सागरोपम'' इत्यादावभेदेऽप्यनुकर्त्रनुकार्यभावनिर्देशाच्चेति ।

**पाण्डुरङ्गि** – स्वप्नवाक्यमपि तथेति ॥ एष स्वप्ने महीयमान इति स्वप्नवाक्यमपि ब्रह्मविषयकमित्यर्थः ॥ सुप्तवाक्यमपीति ॥ तद्यत्रैतत्सुप्तस्समस्तं संपन्न इति सुप्तवाक्यमपि

ब्रह्मविषयकमित्यर्थः ॥ अशरीरवाक्यमपीति ॥ तदस्यामृतस्याधिष्ठानमित्यशरीरवाक्यमपि ब्रह्मविषयमित्यर्थः । तेन अनुकरणेनेत्यर्थः ॥ तस्येति ॥ साम्यस्येत्यर्थः । तथा च तेन पौनरुक्त्यमित्यर्थः ॥ साम्यस्य हेतुत्वोक्तेश्चेति ॥ तथा च साम्यस्य साध्यत्वे सूत्रविरोध इत्यर्थः ॥ असिद्धेरिति ॥ विशिष्टसाध्ये हेतोरप्रयोजकत्वादिति भावः ।

## तात्पर्यचन्द्रिका

टीकाक्षरार्थस्तु । ''न हि ज्ञानिसुख''मिति भाष्ये सर्वशब्दस्तेजःपर इत्याह ॥ सर्वसूर्यादीति ॥ ''न च तद्भासे''ति भाष्ये जगत् भाति इति पदद्वयमध्याहार्यमित्याह ॥ जगद्भातीति शेष इति ॥ रश्मीदिति सूर्यादितेजसां नारायणाधीनत्वमुच्यत इति । अग्नीच्छब्दस्याग्निसमिंधकत्वमिव रश्मीच्छब्दस्य रश्मिसमिंधकत्वमर्थ इति भावः ॥ ''नारायणभासा ही''ति भाष्यस्य सूर्यादितेजसां नारायणाधीनप्रकाशत्वं नारायणस्य सर्वजगत्प्रकाशकत्वं चार्थ इत्यभिप्रेत्य तदनुगुणतया नारायणभासेति पदं सर्वपदं भातिपदं चार्थद्वयपरतया व्याचष्टे ॥ तदधीनभासेत्यादिना ॥ युक्तिसमुच्चयेऽपिपदमिति ॥ यद्यप्याद्यव्याख्याने सौत्रोऽपिशब्दः आद्यसूत्रे आनुकूल्येन गृह्यमाणस्य ब्रह्मत्वरूपप्रधानसाध्ये हेतूकृतानुकृत्यादेर्ब्रह्मधर्मत्वसाधकश्रुतिसमुच्चयार्थः । तथापि द्वितीयव्याख्याने प्रधानसाध्य एव हेतोः सूर्याद्यप्रकाश्यत्वरूपयुक्तेः समुच्चयार्थ इत्यर्थः ॥ अनुकृत्यधिकरणम् ॥ ६ ॥

**प्रकाशिका** – ''सर्वं सूर्यादिजगद्भातीति शेष'' इति टीकायां सर्वशब्दस्यैवसूर्यादिजगदित्यर्थ इति प्रतीयते । भातीत्यस्य क्वान्वय इत्यपि न ज्ञायते । नारायणभासा हि सर्वमित्यत्रत्यसर्वशब्दार्थ इति वा प्रतीयते । अत आह ॥ न हीति ॥ तत्तेजोरश्मीदिति रश्मीच्छब्देनायमर्थः कथं लब्ध इत्यत आह ॥ अग्नीदिति ॥ यथाग्निशब्दोपपदात् ञि इंधीदीप्तावित्यस्मात्क्विपि ''अनिदितां हल उपधायाः क्ङिती''ति नलोपे रूपमिति ''अग्नीदग्नीन्विहरे''त्यादौ वह्निदीपकत्वमर्थः तथेहापि रश्मिपदोपपदादिंधेःक्विपि रूपमित्युक्तं भवति । ''नारायणभासा तदधीनभासा तदीयभासाच । सर्वं सूर्यादिजगच्च भाति प्रकाशते

प्रकाश्यते चे''ति टीकायास्सम्यगर्थाप्रतीतेरुद्धाष्यत्वप्रतीतेश्चाह ॥ नारायणेति ॥ ''अपिस्मर्यते'' इत्यत्र ''युक्तिसमुच्चयेऽपिपद''मिति वाक्यमाक्षिप्य समाधत्ते ॥ यद्यपीत्यादिना ॥ अनुकृत्यधिकरणम् ॥ ६ ॥

**पाण्डुरङ्गि** – न तत्र सूर्यो भातीत्यादिश्रुतौ सूर्यादिप्रकाशनियामकत्वस्यैवोक्तत्वेन तस्यैव प्रकृत उपयुक्तत्वेन भाष्यकारेणापि न हि ज्ञानसुखमनुभाति सूर्यादिकमिति सूर्यादिप्रकाशनियामकत्वमेव वक्तव्यम् । सर्वप्रकाशकत्वकथनमसंगतमित्यभिप्रेत्य टीकाकारेण सर्वं सूर्यादीति व्याख्यानमित्यभिप्रेत्याह ॥ न हि ज्ञानसुखमिति भाष्य इति ॥ न च तद्भासेत्यस्य सापेक्षत्वात् पूर्ववाक्यात्सर्वशब्दस्यानुषंगे तस्य सूर्यपरतयोक्तत्वेनात्रापि सूर्यपरत्वापातेन सूर्यादिपरत्वे चानेनापि सूर्यादिप्रकाशनियामकत्वमेव लभ्यते । तच्च पूर्वमेवोक्तमिति पौनरुक्त्यं स्यात् । अतो जगद्भातीति पदद्वयं शेषं संपूर्य टीकाकारो व्याख्यातीत्याह ॥ न च तद्भासेति भाष्य इति ॥ नारायणस्य सूर्यादिप्रकाशनियामकत्वे अहं तत्तेजोरश्मीदिति वाक्यं प्रमाणीकृतम् । तत्र चोक्तार्थाप्रतीतेरसंगतिशंकायां टीकाकारैः रश्मीदित्यनेन सूर्यादितेजसो भगवदधीनत्वमुच्यत इत्युक्तम् । तत्रापि रश्मीदित्यनेनापि सूर्यादितेजसां भगवदधीनत्वं न प्रतीयते । अतो रश्मीनिंध इति व्युत्पत्तिमाश्रित्य तद्वाक्यं व्याख्याति ॥ अग्नीच्छब्दस्येत्यादिना ॥ अन्यत् स्पष्टम् ॥ अनुकृत्यधिकरणम् ॥ ६ ॥

## वामनाधिकरणम्

**ॐ शब्दादेव प्रमितः ॐ ॥ यद्यप्यत्रेशानपदप्रवृत्तिनिमित्तप्रेरकत्वमसंकुचितं न वायौ । सङ्कुचितं तु जीवांतरेऽपि । रुद्रेत्वीशानशब्दप्रसिद्धिरप्यधिका । तथापि तस्य वायौ किंचित्संकुचितत्वादन्यत्र त्वत्यंतसंकुचितत्वादीशानत्वसहचरितप्राणादिव्यवस्थापकत्वस्यान्यत्रात्यंतासम्भवाच्चेशानशब्दो विष्णुवायुसाधारण इति ज्ञेयम् । ''तमात्मस्थं येऽनुपश्यंति धीरास्तेषां सुखं शाश्वत''मिति पूर्वत्र विष्णुज्ञानादेव मोक्ष इत्युक्तम् । तदयुक्तं ''विश्वेदेवा उपासत'' इत्यन्यस्यैव देवोपास्यत्वप्रतीतेः । प्राप्तसमस्तैश्वर्याणां च देवानां मोक्षादन्यार्थमुपासनायोगात् । अन्योपासनया च**

विष्णुज्ञानायोगादिति पूर्वाधिकरणाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः । अत्र ''ईशानो भूतभव्यस्ये''ति काठकोक्त ईशानः किं वायुरुत विष्णुरिति चिन्ता । तदर्थं किं ''ऊर्ध्वं प्राणमुन्नयती''ति प्राणव्यवस्थापकत्वादिलिङ्गानुसारेण ''मध्ये वामन'' मिति वामनश्रुतिर्नेया किं वा विपरीतमिति । तदर्थं किमनेकानि लिंगानि प्रबलानि किं वैकापि श्रुतिः प्रबलेति । तदर्थं किं लिंगानि निरवकाशानि श्रुतिस्तु सावकाशोत विपरीतमिति ॥

**प्रकाशिका –** ॐ शब्दादेव प्रमितः ॐ ॥ अत्र टीकायां ''प्रेरकत्वसाम्येन भगवति वायौ च साधारणस्येशाननाम्न'' इत्यादिना सङ्गतिग्रन्थे प्रेरकत्वसाधारण्येनेशानशब्दस्योभयत्र प्रसिद्धिरुक्ता । सा न युक्तेव । व्यधिकरणत्वात् । किं च प्रेरकत्वमसङ्कुचितं सङ्कुचितं वा । नोभयथापि पूर्वोत्तरकोटिद्वयमात्रसाधारण्यं लभ्यत इत्याक्षिप्य समाधत्ते ॥ यद्यपीति ॥ अक्षरशब्दस्येव प्रवृत्तिनिमित्तसाधारण्यादुभयत्र प्रसिद्धिरिति न वैयधिकरण्यमिति भावः ॥ प्रसिद्धिरपीति ॥ ''ईश्वरश्शर्व ईशानश्शंकर'' इत्युक्ते रूढिरपीत्यर्थः । वायुमात्रप्रसिद्ध-लिङ्गसाहित्येन रुद्रादित्यागे च द्वयमात्रसाधारण्यमित्याह ॥ ईशानत्वेति ॥ अन्यत्र विष्णुवायुभ्याम् । यद्यपि नायं नियमः । यथोक्तमक्षरनये ''अन्यसाधारण्येऽपि संशयकोटि-साधारण्यमात्रेण तत्सिद्धे''रिति । तथापि सति संभवे त्यागायोगादेवमुक्तम् । एतेन ''ईशानशब्दस्य रुद्रे प्रसिद्धावपी''त्यादि टीका विवृता । ''विष्णुरेव जिज्ञास्य'' इत्युक्तमिति भाष्यादि तु फलप्रदर्शनपरमिति भावेन पूर्वानंतर्ये हेतुमाह ॥ तमिति ॥ ऐश्वर्यार्थमुपासनं कुतो नेत्यत आह ॥ प्राप्तेति ॥ विष्णुज्ञानार्थमेव देवानामन्योपासनमस्त्वित्यत आह ॥ अन्येति ॥

एतेन यदुक्तं कल्पतरौ ''प्राक् सतिविषये च साधारणी सप्तमी न तद्भासयत इति विषयत्वनिषेधास्मृत्याविषये व्यवस्थापिता । तद्वत्परिमाणमपि जैवं पारमेश्वरं वेति विशये अङ्गुष्ठमात्रं निश्चकर्षेति निर्णीतस्मृत्या जैवमिति प्रत्यवस्थानात्सङ्गति''रिति । तन्निरस्तम् । असंकुचितेशानत्वरूपब्रह्मधर्मसंदष्टत्वेन संशयस्यैवायोगात् । यदपि ''अल्पश्रुतेरिति चे''दित्यत्राल्पपरिमाणत्वं भगवत उक्तम् । अथाल्पपरिमाणविशेषः परमात्मव्यतिरिक्तस्य दृश्यत इति संगतिरिति श्रुतप्रकाशोक्तं तदप्यनेन निरस्तम् । न्यायभेदादिना ''अनुकृते''रिति योगद्वयस्याधिकरणांतरत्वेऽवश्यंभाविनि व्यवहितेन संगत्युक्तेरयुक्तत्वात् । विषयसंशयटीकां

व्यनक्ति ॥ अत्रेति ॥ काठके चतुर्थवल्ल्यां ''अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद्वैतत् । अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वैतत्'' । इत्याद्युक्त्वा पश्चात् ''ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वेदेवा उपासत'' इत्याम्नायते । तत्रेशानो विषय इत्यर्थः । एतेन ''स ईशानोऽत्र विषय'' इति टीकास्थैतच्छब्दपरामर्शो दर्शितः ॥ प्राणेति ॥ प्राणव्यवस्थापकत्वमध्यमत्वसर्वदेवोपास्यत्वलिंगानुसारेणेत्यादिपदार्थः । यदि लिंगानि निरवकाशानि तदा तैर्वामनश्रुतेर्बाधाद्वायुरेवेशान इति पूर्वपक्षे फलम् । यदि सावकाशानि तदा श्रुत्यैव लिंगानां बाधाद्विष्णुरेवेशान इति सिद्धांते फलमिति स्पष्टः फलफलिभाव इति भावः । अत्र यद्यपि श्रुतिः प्रबलेति चिंतानंतरं किमनेकत्वप्रयुक्तप्राबल्यं बलवदुत श्रुतित्वप्रयुक्तप्राबल्यं बलवदित्येव चिन्ता वाच्या । श्रुतिस्वभावप्राबल्यस्यैवात्र समर्थनात् । न तु निरवकाशत्वादिचिन्ता । तथापि सा पूर्वत्रैकानेकपदप्रयोगादेव सूचितेति सौत्रैवकारप्रमितशब्दाभ्यां श्रुतित्वनिरवकाशत्वोभयप्रयुक्तप्राबल्यस्य सूचितत्वात् न्यायविवरणानुसारेणाभ्युच्चयत्वेन सावकाशत्वादिचिन्ता प्रदर्शिता ।

**पाण्डुरङ्गि** – ॐ शब्दादेव प्रमितः ॐ ॥ टीकोक्तमीशानशब्दस्य प्रेरकत्वसाम्येन विष्णुवायुसाधारणत्वं तत्रानुपपत्तिप्रदर्शनतत्परिहारपूर्वकमुपपादयति ॥ यद्यप्यत्रेत्यादिना ॥ विपरीतमिति ॥ वामनश्रुत्यनुसारेण प्राणव्यवस्थापकत्वादिलिङ्गं नेयमिति विपरीतमित्यर्थः ।

## तात्पर्यचन्द्रिका

**पूर्वपक्षस्तु ॥ अयमीशानो वायुरेव । ईशाने ''ऊर्ध्वं प्राण उन्नयती''ति प्राणव्यवस्थापकत्वस्य ''मध्ये वामनमासीन''मिति मध्यमत्वस्य ''विश्वेदेवा उपासत'' इति सर्वदेवोपास्यत्वस्य च श्रवणात् । तेषां च ''एवमेवैष प्राणः योऽयं मध्यमः प्राणः कुविदंगे''ति भाष्योक्तश्रुतिभिर्वायुधर्मत्वात् । ''एवमेवे''त्यत्र च प्राणशब्दो मुख्यप्राणपरः । ''आत्मत एष प्राणो जायत'' इति पूर्ववाक्ये तस्यैव प्रकृतत्वात् । विष्णुलिङ्गाभावाच्च । अत एव ''कुविदङ्गे''ति ऋच्यपि वायुशब्दो न**

**च ऋचि देवोपास्यत्वमात्रमिहतु सर्वदेवोपास्यत्वमिति भेदः । ऋच्यपि बहुत्वस्यासङ्कोचाय कात्स्न्र्येऽपि पर्यवसानात् । त्रित्वे पर्यवसाने द्धेः । न हि ''नरेन्द्रं चराः सेवंत'' इत्यादौ त्रित्वे पर्यवसानम् । पिंजला''नित्यत्र तु त्रित्वापर्यवसाने सर्वकपिंजलालम्भनस्याशक्या- षदुष्टविकल्पापातात् । ''न हिंस्या''दिति शास्त्रस्यासङ्कोचसम्भवे त्रित्वे पर्यवसानम् ।**

– उत्तरोत्तरचिंताफलत्वं पूर्वपूर्वचिंतायाः प्रदर्शयन् लिङ्गानेकत्वव्यक्तिपूर्वं थनेन पूर्वपक्षयन् ''स ईशानो वायुरेवे''त्यादिटीकां विवृणोति ॥ ना ॥ अत्र त्रयः पूर्वपक्षप्रापकाः । एकस्तावल्लिङ्गानामनेकत्वाद्भामनश्रुतेरे- बाध इत्यनेकत्वरूपस्सौत्रावधारणसूचितः । अयं च स्पष्टत्वाद्भाष्यटीकयोर्न द्वितीयस्तु सौत्रप्रमितपदसूचितो निरवकाशत्वादिरूपः । सत्वस्पष्ट इति यादौ टीकायां प्रपञ्चितः । तं व्यनक्ति ॥ तेषामित्यादिना ॥ तृतीयस्तु ऽगुष्ठमात्रत्वरूपोऽग्रे स्पष्ट इति ध्येयम् । ''यथा सम्राडेवाधिकृतान् विनियुङ्क्ते ङ्स्वैतान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव षट्प्रश्ने प्राणव्यवस्थापकत्वस्य ''अथेममेव नाप्रोद्योयं मध्यमः प्राण'' इति त्वस्य ''कुविदंगनमसा ये वृधासः पुरा देवा अनवद्यास आसन् । तेवायवे ासयन्नुषसं सूर्येणे''त्यस्यामृचि देवोपास्यत्वस्य वायुधर्मत्वेन सिद्धत्वा- तु ''अङ्गेति सम्बोधनम् । ये देवा वायोर्नमस्कारादिना ज्ञानादिगुणपूर्णा ाश्च पुराऽऽसन् ते कचिद्रहस्यस्थाने सूर्येण साकं ज्ञानिने रणं प्राप्ताय वायवे बुद्धिमवासयन् । तद्विषयामकुर्वन्'' इति टीकायां व्यक्तः ।

ायुपरत्वं टीकायामस्पष्टमिति स्वयं साधयति ॥ एवमेवेत्यादिना ॥ ननु '' इति न्यायेनोपक्रमबाधेन प्राणशब्दो विष्णुपरः स्यादित्यत आह ॥ त एव विष्णुलिङ्गाभावादेव । ननु कथं तर्हि कपिंजलाधिकरणे त्रित्वे त आह ॥ वसंतायेति ॥ एकादशाध्याये ''बहुवचनेन ा''दित्याद्यपादीयाष्टमाधिकरणे ''वसंताय कपिंजलानालभते'' इत्यत्र किं

त्रयाणामेव
शास्त्रार्थत्व
पादानमिति
त्रयाणामात
''नहिंस्या
बहुवचनार्थे
सर्वेति ॥
प्रामाण्यस्वं
अन्यस्योपा
स्य तु प्र
अष्टौ दो
व्यतिरिक्तत

**पाण्डुर**

सम्राडित्या
अत एव
टीकामुपपा
प्राणाधिकर
विष्णुलिङ्गा
त्वाभावादेवे
कपिंजलाधि
सर्वकपिंजल
विकल्पोपीत
व्रीहियवश्या
आश्रीयते व्र

त्रयाणामेवालम्भ उत त्रिप्रभृतीनामिति संशये बहुवचनस्य सर्वत्रप्रवृत्तेस्सर्वसंख्यानां शास्त्रार्थत्वाच्छास्त्रीयाच्च प्रयासगौरवात् फलभूयस्त्वमिति यावदुत्साहं विकल्पेन नानासंख्योपादानमिति प्राप्ते बहुत्वमात्रस्यैव शास्त्रार्थत्वात् त्रीननालभ्य चतुर्थालम्भासम्भवादवश्यं त्रयाणामालंभे तावतैव शास्त्रार्थसिद्धेर्नाधिकालंभं शास्त्रं कारयतीति निवृत्तव्यापारे विधौ ''नहिंस्या''दिति निषेधशास्त्रप्रवृत्तेरष्टदोषदुष्टविकल्पापाताच्च त्रयाणामेवालम्भ इत्युक्तम् । बहुवचनार्थो मुख्य उपादीयते अथ यथोत्साहं कदाचित्किंचित्संकुचितः । आद्ये दोषमाह ॥ सर्वेति ॥ द्वितीये दोषमाह ॥ अष्टदोषेति ॥ एकस्योपादाने तस्याप्रामाण्यत्यागः प्रामाण्यस्वीकारोऽन्यस्य प्रामाण्यत्यागोऽप्रामाण्यस्वीकार इति चत्वारो दोषाः । अन्यस्योपादानदशायां तस्य पूर्वक्लृप्ताप्रामाण्यत्यागस्त्यक्तप्रामाण्यस्वीकारस्तत्प्रतियोगिनोऽन्यस्य तु प्राक् क्लृप्तप्रामाण्यत्यागस्त्यक्ताप्रामाण्यस्वीकारश्चेति चत्वारो दोषा इति मिलित्वा अष्टौ दोषा ध्येयाः ॥ असङ्कोचेति ॥त्रित्वव्यतिरिक्ते प्रवृत्तिसंभवे सर्वकपिंजलव्यतिरिक्तत्वरूपसंकोच इत्यर्थः ।

**पाण्डुरङ्गि –** प्राणव्यवस्थापकत्वेन कुत ईशानस्य वायुतेति शङ्कानिरासाय टीकायां यथा सम्राडित्यादिना प्राणव्यवस्थापकत्वस्य वायुधर्मत्वादित्युक्तम् । तदयुक्तम् । तत्रापि प्राणशब्दस्य अत एव प्राण इत्यधिकरणन्यायेन विष्णुपरत्वे तद्बलेन वायोरीशानत्वालाभादित्यतस्तां टीकामुपपादयति ॥ एवमेवेत्यत्रेति ॥ किंच विष्णुलिङ्गे सति तच्छब्दानां विष्णुपरत्वमिति हि प्राणाधिकरणन्यायः । न चात्र विष्णुलिङ्गमस्तीति न प्राणाधिकरणन्यायविषयतेत्याह ॥ विष्णुलिङ्गाभावाच्चेति ॥ अत एवेति ॥ ऋचि विष्णुलिङ्गाभावेन प्राणाधिकन्यायविषयत्वाभावादेवेत्यर्थः । कुविदंगेत्यस्य सर्वदेवोपास्यत्वमुपपादयितुं तावच्छंकते ॥ न च ऋचीति ॥ कपिंजलाधिकरणन्यायविरोधं परिहरति ॥ वसंताय कपिंजलानिति ॥ ननु नैकदा सर्वकपिंजलालंभ उच्यते । किं तु कदाचित्कस्यचित् । अत उक्तं विकल्पापातादिति । अस्तु विकल्पोपीत्यत उक्तं अष्टदोषेति । आग्नेयोष्टाकपाल इत्यादिवाक्यनिर्दिष्टपुरोडाशाक्षेपादेव व्रीहियवश्यामाकादिषु प्राप्तेषु द्रव्यांतरप्रसक्तिनिमित्तनियमनिरासाय व्रीह्यादिशब्दैर्नियम आश्रीयते व्रीहिभिरेव यवैरेवेति । तथा च व्रीहिपुरोडाशप्रयोगे यवशास्त्रे प्रतीतप्रामाण्यत्यागः ।

निर्दोषवेदे दोषजन्यसंशयविपर्ययरूपाप्रामाण्यायोगात् । प्रामाण्योपलम्भे सत्यपि प्रामाण्यानुपलम्भरूपानुपलब्धिगम्यप्रामाण्याभावरूपाप्रामाण्यस्वीकारः । यवपुरोडाशप्रयोगेषु पूर्वकल्पिताप्रामाण्यस्य पूर्वत्यक्तप्रामाण्यस्य च यवशास्त्रस्याप्रामाण्यस्वीकारौ विना तदर्थानुष्ठा-नायोगाद्यवशास्त्रे त्यक्तप्रामाण्यस्वीकारोऽङ्गीकृतप्रामाण्यपरित्याग इति च दोषद्वयम् । एवं च यवशास्त्रे दोषचतुष्टयम् । एवं यवपुरोडाशप्रयोगे व्रीहिशास्त्रे दोषद्वयं पुनर्व्रीह्युपादाने दोषद्वयमिति व्रीहियवशास्त्रेऽपि दोषचतुष्टयमित्यष्टदोषदुष्टो विकल्पः । एवं ग्रहणाग्रहणवाक्ययोरपि योजनीयम् । तदुक्तं वार्तिके -

प्रमाणस्याप्रमाणत्वकल्पनाच्च द्विदोषभाक् ।
प्रमाणत्वं प्रतीतं यदुज्ज्वलं तदपह्नुतम् ॥
एकस्तावदयं दोषः प्रमाणार्थविपर्ययात् ।
तथा तदप्रमाणत्वं यदभावप्रमाणकम् ॥
भावेपि सत्यभावेन विनैव परिकल्पितम् ।
सोऽपि स्यादपरो दोषः प्रमाणार्थविपर्ययात् ॥
अङ्गीकृत्यापि तौ दोषौ पूर्वं केनापि हेतुना ।
प्रयोगांतरकाले च पुनर्दोषद्वयं भवेत् ॥
यदभावे प्रमाणत्वं पूर्वमेतस्य कल्पितम् ।
संप्रत्यपह्नुवानस्य दोष एकोहि जायते ॥
प्रत्यक्षं दृढरूपं च यत्पुरस्तान्निराकृतम् ।
उपजायेत दोषोऽन्यस्तदुज्जीवयतः पुनः ॥
एवमेकत्र चत्वारो दोषा वाक्ये प्रदर्शिताः ।
तत एव प्रसज्येरन् द्वितीयेऽपि प्रकल्पिते ॥
एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः ।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यत ॥ इति ।

अस्यार्थः -

द्विदोषभागित्युक्तदोषद्वयमुपपादयति । प्रमाणत्वमिति । प्रमाणत्वापह्नवस्य दोषत्वमुपपादयति । प्रतीतमिति । प्रतीतप्रमाणत्वापह्नवः प्रतीतिविरोधादेव दोष इत्यर्थः । प्रतीताप्रामाण्यकल्पनं द्वितीयो दोष इत्याह । तथेति । तस्य प्रमाणस्य सतोऽप्रमाणत्वकल्पनमित्यर्थः । अभावेति । प्रामाण्यानुपलम्भरूपाभावप्रमाणकमित्यर्थः । सन्देहविपर्ययोर्दोषजन्यत्वान्निर्दोषवेदे च दोषाभावात्प्रामाण्याभावरूपमेवाप्रामाण्यं वाच्यम् । तस्मिंश्च प्रामाण्योपलम्भाभावः प्रमाणं वाच्यम् । स च न सम्भवति । प्रामाण्योपलम्भस्य भावे सत्त्वे सत्यपीत्यर्थः । प्रमाणेति । प्रमाणस्योपलम्भाभावस्यार्थस्य प्रमेयस्याप्रामाण्यस्य विपर्ययात् विरोधादित्यर्थः । अभावेति । प्रामाण्योपलम्भाभावप्रमाणकत्वं एतस्याप्रमाणत्वस्येत्यर्थः । इदमप्रामाण्यं स्वीकृतं पूर्वं तस्य त्यागस्तृतीयो दोषः । प्रत्यक्षमिति । यत्प्रामाण्यं पूर्वं निराकृतं तस्योज्जीवनं स्वीकारश्चतुर्थो दोषः । सङ्ग्रहश्च -

व्रीहेरेते यवस्योक्तेर्मात्वस्य त्यागकल्पने ।
यवे नैवं चेति दोषा व्रीहेश्चैवं द्वयेऽष्टता ॥ इति ।

व्रीहिमये पुरोडाशे कृते यवस्योक्तेर्यववाक्यस्य द्वौ दोषौ । यवमये पुरोडाशे कृतेऽपि यववाक्यस्य द्वौ दोषौ । एवं यववाक्ये चत्वारो दोषाः । एवं मिलित्वोक्तेर्द्वये ते दोषा अष्टौ ।

## तात्पर्यचन्द्रिका

**एतेन विश्वदेवशब्दो गणविशेषपर इति निरस्तम् । गुणातिशयासिद्धेः । भूतभव्येशानत्वानानुगुण्याच्च । ''योयं मध्यमः प्राण'' इति श्रुत्यंतरोक्तं मध्यमत्वं तु न परस्मिन् शक्यशङ्कम् । ''अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्य प्राणः स्थूणे''त्युत्तरवाक्ये तस्य शिशुत्वब्रह्माश्रितत्वाद्युक्तेः ।**

**अवांतरेश्वरत्वेन तस्येश्वरवचो भवेत् ।**
**अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः ॥ इति स्मृतेश्च ।**

तत्समाख्यानादिहापि ''मध्ये वामनमासीन''मिति सर्वोत्तमत्वरूपकाष्ठात्व-विरोधिमध्यस्थत्वमेवोच्यते । ''तदंतरेण सर्वा अन्यादेवता'' इतिवत् । नतु मध्यदेशस्थत्वम् । यद्यपि विष्णोरपि ''अंतर्यामी''त्यत्र सर्वनियामकता ''दहर'' इत्यत्र सर्वजिज्ञास्यत्वरूपसर्वोपास्यता चोक्ता । न च तत्रोक्तजिज्ञास्यत्वमिह पूर्वपक्ष आक्षिप्यत इति शङ्क्यम् । उपास्यत्वस्य वाय्वेकनिष्ठत्वस्याद्याप्यसिद्ध्याऽन्योन्याश्रयात् । तथापि वायोर्यत् श्रुत्यंतरसिद्धं प्राणनियामकत्वं देवोपास्यत्वं च तदेवेह भाति । न तु ब्रह्मधर्मभूतं सर्वनियामकत्वं सर्वोपास्यत्वं च । न हि ''आग्नेयं चतुर्धा करोती''त्यादावाग्नेयादिशब्दैरैन्द्राग्नादिधीः । न च ब्रह्मणः सर्वोपास्यत्वाङ्गीकारे तदाक्षेपायोगः । मुमुक्षुभिर्ब्रह्मैव जिज्ञास्यमित्यवधारणस्यैवाक्षेपात् । अत एव टीकायां ''किं विष्णुजिज्ञासानियमेने''त्युक्तम् । तदेतदभिप्रेत्योक्तं न्यायविवरणे ''ऊर्ध्वं प्राणमुन्नयतीत्यादिलिङ्गानां प्राणादन्यत्रावकाशराहित्य''मिति । वामनशब्दस्तु वायावेव युक्तः । न तु ब्रह्मणि । तत्राल्पमात्रपरिमाणत्वादिरूपवामनत्वायोगात् । ''अन्यभावव्यावृत्ते''रित्यादौ सर्वगतस्यापि ब्रह्मणोऽणुत्वाद्युक्तावपि ''अङ्गुष्ठमात्र'' इतीशाने श्रुतस्य मात्रशब्दार्थस्याधिकपरिमाणराहित्यस्यायोगाच्चेति ।

**प्रकाशिका** – एतेनेत्युक्तं विशदयति ।। गुणेति ।। गणपरत्वं नेत्यत्र युक्त्यंतरमाह ।। भूतेति ।। क्रममुल्लंघ्य प्रसङ्गादागतमृचो वायुपरत्वं लिङ्गैक्यं च समर्थ्य ''योयं मध्यमः प्राण'' इत्येतदपि वायुपरमिति साधयति ।। योयमिति ।। वाजसनेये तृतीयेध्याये ''अथातो व्रतमीमांसे''त्युपक्रम्याधीते पञ्चमे ब्राह्मणेऽभिहितस्यैव ''अथेममेव नाप्नोद्योयं मध्यमः प्राण'' इत्यस्य चतुर्थाध्यायद्वितीयब्राह्मणे ''योहवै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि । अयं वाव शिशुर्योयं मध्यमः प्राणस्तस्येदमेवाधानमिदं प्रत्याधानं प्राणः स्थूणाऽन्नं दामे''त्यत्र शिशुत्वप्राणशब्दितविष्ण्वाश्रयत्वोक्तेरित्यर्थः ।। स्मृतेश्चेति ।। ''चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्य'' इत्यत्र भाष्योक्तस्मृतेरित्यर्थः ।। तदन्तरेणेति ।। बह्वृचब्राह्मणे ''अग्निर्वैदेवानामवमोविष्णुः परमस्तदंतरेण सर्वाअन्यादेवता'' इत्यत्र यथान्यदेवतानामग्राविष्णुमध्यत्वं तथेहापीत्यर्थः । ननु नैतानि निरवकाशानि । विष्णावपि सम्भवादित्याक्षिप्य समाधत्ते ।। यद्यपीति ।। अन्योन्येति ।। वाय्वेकनिष्ठत्वे सिद्धे प्राक्तनमपि तस्यैवेति सिध्यति

प्रागुक्तं न विष्णोः किं तु वायोरेवेति सिद्धौ तस्य वाय्वेकनिष्ठत्वसिद्धिरित्यर्थः ।। तदेवेहेति ।। विश्वशब्दस्य श्रुत्यंतरानुरोधेन योग्यसर्वपरत्वादिति भावः ।

प्राणादिनियामकत्वादिधीरित्येतद्दृष्टांतेनोपपादयति ।। नह्याग्नेयमिति ।। तृतीयस्याद्यपादे ''शेषस्तु गुणसंयुक्तस्साधारणः प्रतीयेत मिथस्तेषामसम्बन्धा''दित्यंतिमाधिकरणे दार्शपौर्णमासिकेष्वाग्नेयाग्नीषोमीयैंद्राग्रपुरोडाशेषु ''आग्नेयं चतुर्धाकरोती''त्युदाहृत्य किमाग्नेयस्यैव चतुर्धाकरणमुत सर्वेषामिति विशये अग्नेश्चतुर्धाकरणविषयद्रव्योपलक्षणमात्रत्वेन स्वयं कार्ययोगित्वाभावात्सम्बन्धमात्रेणोपलक्षणत्वसम्भवे देवतात्वाकारानपेक्षणात् सर्वत्र ''अग्निकलिभ्यां ढग्वक्तव्य'' इति स्मरणादग्नेरिदमिति सम्बन्धमात्रेप्याग्नेयशब्दनिष्पत्तेः अग्निसम्बन्धस्य चाविशिष्टत्वात्सर्वत्र चतुर्धाकरणमिति प्राप्ते देवताभूतस्तावदिहाग्निशब्दस्तद्धितेनोपलक्षणमुपादीयते । सम्भवति तु तस्य यथाश्रुत्यैवोपलक्षणत्वं केवलाग्नेयस्यापि सत्त्वात् । अतो न शब्दानवगतेन सम्बन्धमात्रेणोपलक्षणत्वं युक्तम् । विनाकारणेन श्रुतबाधप्रसङ्गात् । अग्नीषोमीयादौ च समासादुत्पन्नस्तद्धितो द्वयोः सापेक्षयोर्देवतात्वमाह । तेन तत्रान्यसापेक्षस्याग्नेर्देवतात्वम् । न च सापेक्षितस्य तद्धितेन सामर्थ्यमस्ति । तेनाग्नेयशब्दो न शक्नोत्यग्नीषोमीयादिकमभिवदितुम् । यद्यपि सम्बन्धमात्रेऽप्यविरुद्धस्तद्धितः । तथापीह देवतार्थतैव । उपलक्षणार्थत्वात् । प्रसिद्धसम्बन्धं हि लक्षणं भवति । प्रसिद्धश्च देवतासम्बन्ध एव न सम्बन्धमात्रम् । अतो देवतात्वमेवोपलक्षणम् । तच्चाग्नीषोमीयादौ नास्तीत्याग्नेयस्यैव चतुर्धाकरणमिति सिद्धांतितम् । तत्र यथाग्नेयशब्देनैंद्राग्नादिधीर्न भवति तथेत्यर्थः । नन्वेवं भाष्योक्तजिज्ञासासूत्राक्षेपो न युक्तस्स्यादित्याशङ्क्य तदाक्षेपप्रकारमाह ।। न चेति ।। लिङ्गानामनवकाशत्वमुक्त्वा श्रुतिविरोधं निराह ।। वामनेति ।। द्वितीयसूत्रव्यावर्त्यहेतुमाह ।। अन्यभावेति ।। आदिपदेन ''अल्पश्रुतेः अर्भकौकस्त्वा''दित्येतद्गृह्यते ।। मात्र इतीति ।। एतेन वायोरपि ''अणुश्चे''त्यणुत्वस्य वक्ष्यमाणत्वादतिसूक्ष्मे तस्मिन्नंगुष्ठमितत्वमयुक्तमिति निरस्तम् । अधिकपरिमाणराहित्यपरत्वेन तत्परिमाणविधावतात्पर्यादिति । पञ्चम्यंतहेतूनामीशानो वायुरेवेति साध्येनान्वयः ।

**पाण्डुरङ्गि** – मध्यमत्वस्येशानस्य वायुत्वसाधकत्वं टीकायामुक्तम् ।। मध्यमदेशस्थत्वरूपस्य मध्यमत्वस्य सर्वगते विष्णावपि सम्भवादयुक्तम् । अतस्तदुपपादयति ।। योयं मध्यमः प्राण इति ।। अन्योन्याश्रयादिति ।। उपास्यत्वस्य वाय्वेकनिष्ठत्वे सिद्धे

जिज्ञास्यत्वादेराक्षेपसिद्धिः तदाक्षेपसिद्धौ चोपास्यत्वस्य वाय्वेकनिष्ठत्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः । ननु देवोपास्यत्वाभावे सर्वदेवोपास्यत्वमपि भासत एवेत्यत आह ।। न हीति ।। अत एवेति ।। मुमुक्षुभिर्ब्रह्मैव जिज्ञास्यमित्यवधारणाक्षेपस्य टीकाभिप्रेतत्वादेवेत्यर्थः । सिद्धांतसाधकवामनश्रुतेः सावकाशत्वमाह ।। वामनशब्दस्त्विति ।

## तात्पर्यचन्द्रिका

सिद्धांतस्तु ।।

सहस्रादपि लिङ्गानां श्रुतिर्बलवती स्वतः ।
अवकाशोज्झिता सावकाशात्तु किमु लिङ्गतः ।। १ ।।

वामनश्रुतिर्हिनिरवकाशा । ''एष उ एव वामनिरेष हि सर्वाणि वामानि नयती''ति श्रुत्यंतरेऽवधारणात् । ''उपेन्द्रो वामनः प्रांशु''रिति स्मृतेः । आर्यप्रसिद्धेश्च । वामनवामनिशब्दयोश्च लोकवेदाधिकरणन्यायेन वर्णविकारादिनैकदेशस्यान्यथात्वेपि देवासः देवाः इत्यादाविव लाघवेन प्रत्यभिज्ञयैकत्वे सम्भवति भेदकल्पनायोगात् । नहि ''न किरिन्द्र'' इत्यादौ किरित्यस्य लोकप्रसिद्धात्क इत्यस्माद्भेदः । तदुक्तं वार्तिके -

आकृतीनामभिव्यक्तिर्या कथंचिन्निरूपिता ।
नासाववयवाधिक्यविनाशेषु विनश्यति ।। इति ।

एवं च यथा ''यद्योन्यांतदुत्तरयोर्गायती''त्यत्रोत्तराशब्द उत्तराग्रंथे संज्ञारूपो निरपेक्ष इति तत्पर एव । न तु योनिऋग्रूपप्रतियोगसापेक्षोत्तरऋक्परः तथा वामनशब्दोपि रूढ्या विष्णुपरः । न तु दीर्घप्रतियोगिह्रस्वपरः । तदेतदभिप्रेत्योक्तं न्यायविवरणे ''वामनश्रुतेरेवानवकाश'' इति । लिङ्गानि तु सावकाशानि । सर्वनियामकत्वादिमति प्राणादिनियामकत्वादेः प्रासादवासिन्यायेन सम्भवात् । ऐन्द्राग्नादौ तु देवतात्वं व्यासज्यवृत्तीत्यग्नेः प्रत्येकं तत्र देवतात्वाभावान्नाग्नेयता ।

**नियमनं तु न व्यासज्यवृत्तिः । ''यः पृथिवीमंतरो यमयती''त्यारभ्य ''यः प्राणमन्तरो यमयती''ति प्रत्येकं नियमनश्रवणात् । ''यद्देवान्प्राणयो नव । देवा उपासांचक्रिरे'' इत्यादिश्रुतिषु ब्रह्मणो विशिष्य प्राणनियामकत्वादिश्रवणाच्च । ''एवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते पायूपस्थेऽपानं चक्षुः श्रोत्रे मुखनासिकाभ्या''मिति श्रुत्यंतरे मुख्यप्राण उक्तस्य सर्वप्राणनियामकत्वस्य ''ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यती''त्यनेनाप्रतीतेश्च ।**

**प्रकाशिका** – सौत्रैवकारप्रमितशब्दाभ्यां श्रुतेर्जात्याऽनवकाशत्वेन च प्राबल्य-सूचनादेकयापि श्रुत्याऽनेकेषां सावकाशलिङ्गानां बाधो युक्त एवेति भावेन ''विष्णुरेवेशान'' इत्यादि टीकां विवृण्वन् सूत्राद्युक्तन्यायं सङ्गृह्याह ॥ सहस्रादिति ॥ स्वतोऽनवकाश-त्वादिकमनपेक्ष्य स्वभावप्राबल्यमग्रे प्रतिपिपादयिषुरादौ ''तस्याश्च विष्णौ महायोगरूढिसिद्धा-यास्तत्प्रमापकत्वा''दिति टीकोक्तयोगरूढी विवृण्वन्नुत्तरार्धोक्तं निरवकाशत्वं तावद्व्यनक्ति ॥ वामनेति ॥ अत्रैवं क्रमः । ईशानो विष्णुरेव । ''मध्येवामन''मिति वामनश्रुतेः । ननु सावकाशा श्रुतिरित्युक्तमिति चेदत्रेदमुपतिष्ठते वामनश्रुतिर्हीति । योगमाह ॥ एष इति ॥ श्रुत्यंतरे छांदोग्ये । रूढिमाह ॥ उपेंद्र इति ॥ ''उपेन्द्रो वामनः प्रांशुरमोघश्शुचिरूर्जित'' इति सहस्रनामसु ॥ आर्येति ॥ वृद्धानां वामनशब्दस्य विष्णावेव प्रयोगादित्यर्थः । ननु वामनिशब्दनिर्वचनेपि वामनशब्दस्य किमायातमित्यत आह ॥ वामनेति ॥ आद्यस्याध्यायस्य तृतीयपादे ''प्रयोगचोदनाभावादर्थैकत्वमविभागा''दित्यंतिमाधिकरणे प्रथमवर्णके लोकवेदयोः पदपदार्थानामन्यत्वमुतानन्यत्वमिति संशये सत्यपि वर्णाभेदे स्वरछांदसवर्णागमलोपविकार-विपर्ययाध्यायानध्यायादिधर्मभेदेन जराराजपदयोरिव क्रमभेदेन व्यपदेशभेदात्स्पष्टः पदानां भेदः । पदान्यत्वादेवार्थभेदोऽपीति प्राप्ते प्रत्यक्षप्रत्यभिज्ञानाद्वर्णाभेदे तदात्मकत्वात्पदानां यत्किंञ्चिद्धर्मभेदेऽप्यर्थभेदापादकधर्मभेदस्यैव पदान्यत्वे प्रयोजकत्वाद्यत्किंचिद्धर्मभेदेनाप्यर्थ-भेदाभावात्पदानामनन्यत्वम् । तदभेदादर्थानामप्यनन्यत्वमिति सिद्धांतितम् । अत्रोक्तन्यायेन यथा देवास इत्यादौ ''आज्जसेरसु''गिति जसेः प्रत्ययस्यासुगागमेनैकदेशस्याधिक्येपि देवा इति पदादनन्यत्वं तथेत्यर्थः । आदिपदेन रुद्रेभिः रुद्रैः इत्यादि गृह्यते । उक्तं च महाभाष्ये ''एकदेशविकृतमनन्यवद्भवति ॥ श्वा पुच्छे च्छिन्ने नाश्वो नगर्दभ'' इति । तदेव

प्रयोगदर्शनेनाह ।। नहीति ।। ''न किरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रह''न्नित्यत्र किरित्यस्य क इत्यस्य चाभेदस्तथेहापीत्यर्थः । कथंचिन्निरूपिताया देवतात्वाद्याकृत्यभिव्यक्ति-रसाववयवाधिक्यविनाशमात्रेण न नश्यतीति तंत्रवार्तिकार्थः । ननूक्तमल्पमात्रपरिमाणवत्त्वरूपं वामनत्वं कथं ब्रह्मणि युक्तमित्यतो नायमत्रान्यसापेक्षशब्दः किं तु रूढ इति सदृष्टांतमाह ।। एवं चेति ।।

नवमस्य द्वितीये पादे ''नैमित्तिकं तूत्तरात्वमानंतर्यात्प्रतीयेत'' इति षष्ठाधिकरणे ''यद्यो-न्यांतदुत्तरयोर्गायती'' त्यत्र किं योनिनामकऋगपेक्षयोत्तरदेशेऽधीतयोर्ऋचोर्गानमुतोत्तरा-संज्ञकग्रन्थविशेषाधीतयोरिति संशये उत्तराशब्दस्य संबन्धिशब्दत्वाद्यैव योनेः परत्र पठिता सैवोत्तरा । ततश्च योनिपदापेक्षया रथंतरयोनेः परतो बृहद्योनेः पठितत्वात्तस्यां गानम् । उत्तराग्रन्थे तु रथंरयोनेः परतो ''नत्वावाँ अन्योदिव्य'' इत्यस्याः पठितत्वात्तस्यां गानम् । अतोपि विकल्पः । द्वयोरपि रथंतरयोन्युत्तरत्वादिति प्राप्ते यद्यप्ययं सम्बन्धिशब्दो लोके तथाप्युत्तराग्रन्थे संज्ञारूपेण प्रसिद्धः । तत्र संज्ञाशब्दस्यानपेक्षवृत्तित्वात्सापेक्षवृत्तेस्संबन्धि-शब्दाद्बलीयस्त्वम् । प्रकरणपाठाच्चोत्तराग्रन्थः क्रत्वंगम् । तस्मादुत्तराग्रन्थाधीतास्वेव गानमिति सिद्धांतितम् । अत्र यथोत्तराशब्दः प्रतियोगिनिरपेक्षार्थस्तथा वामनशब्दोपीत्यर्थः । ननूक्तं लिङ्गान्यप्यनवकाशानीत्यतो न्यायविवरणोक्तं सावकाशत्वं ''तच्च लिङ्गं विष्णोरेवे''ति भाष्यादौ किंचिद्विवृतं प्रपञ्चयति ।। लिङ्गानि त्विति ।। प्राणादिनियंतृत्वं विष्णावाह ।। सर्वेति ।। प्रासादेति ।। केचित्प्रासादवासिनः केचिद्भूमिवासिनः केचिदुभयवासिनः । तत्र यथोभयवासिनः प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च गृह्यंते तथेहापिं प्राणादिनियामक-ग्रहणेन प्राणतदितरसर्वनियामको ग्रहीतुं शक्य इत्यर्थः । विवृतश्चायं प्रासादवासिन्यायो महाभाष्ये प्रथमपादे ''मुखनासिकावचनोऽनुनासिक'' इत्यत्र । प्रागुक्तैंद्राग्नादिवैषम्यमाह ।। ऐन्द्रेति ।। ''ऐन्द्राग्नमेकादशकपाल''मित्यादाविन्द्राग्नीदेवता अस्येति विगृह्य ''सास्यदेवते''-त्यणप्रत्ययस्योभाभ्यां परत उत्पादितत्वेन द्वयोरन्योन्यसापेक्षयोरेकमेव देवतात्वं व्यासज्यवृत्तिः । अन्यथा प्रत्येकं देवतात्वे ''समर्थः पदविधि''रिति सूत्रात्समर्थानुवृत्तेस्तद्धितेपि भावेन प्रत्येकं देवताकारकात्तद्धितोत्पत्तेरैन्द्रमाग्नेयमिति पृथङ्निर्देशस्स्यात् । आग्नेयमित्यत्र त्वितरनिरपेक्षाग्नेरेव देवतात्वस्य तद्धितेन बोधितत्वात्तदाऽत्र तस्यैव ग्रहणं नान्यस्येत्यर्थः ।। प्रत्येकमिति ।। अन्यथा

पृथिव्यप्तेजोवाय्वादीन् यमयतीति श्रूयेतेति भावः । यद्देवानिति । तद्दैत्वं प्राणोऽभवः । महान् भोगः प्रजापतेः । भुजः करिष्यमाणः । यद्देवा''निति तैत्तिरीयवाक्यस्य वैष्णवत्वं च ''अत एव प्राण'' इत्यत्र सिद्धमिति भावः । उक्तं च भाष्ये ''तस्यैव प्राणत्वोक्तेस्तद्दैत्वं प्राणोऽभव इती''ति । ''तं भूतिरिति देवा उपासांचक्रिर'' इत्यैतरेये ''प्राणस्तथे''त्यत्रोक्तरीत्या विष्णोरेव सर्वदेवतोपास्यत्वश्रवणादित्यर्थः । श्रुत्यंतरे षट्प्रश्ने । प्राणशब्दितसर्वेन्द्रियाभिमानिनियामकत्वश्रवणेऽपीह प्राणापाननियामकत्वस्यैव श्रुतत्वेन वायुलिङ्गाप्रतीतेरित्यर्थः ।

**पाण्डुरङ्गि** – ननु वामनिशब्दस्य एष उ एव वामनिरित्यादिश्रुत्यादिभिर्ब्रह्मनिष्ठत्वेऽपि वामनशब्दस्य न युक्तः तयोर्भिन्नविषयत्वादित्यत आह ॥ वामनवामनिशब्दयोश्चेति ॥ लोकवेदाधिकरणन्यायेनेति ॥ य एव लौकिकास्तएव वैदिका इति लोकवेदाधिकरणन्यायेनेत्यर्थः । ननु ब्रह्मणि वामनशब्दो न युज्यते । तत्राल्पमात्रपरिमाणत्वादिरूपवामनत्वायोगादित्यत आह ॥ एवं चेति ॥ ननु परमात्मनः सर्वनियामकत्वाद्विशेषाकारेण प्राणादिनियामकत्वव्यपदेशोऽनुपपन्न इत्यत आह ॥ सर्वनियामकत्वादिमतीति ॥ प्रासादवासिन्यायेनेति ॥ प्रासादाधो वसति ऊर्ध्वं च वसत्यपि कदाचित्प्रासादवासित्वस्यापि सत्त्वात्प्रासादवासित्वव्यपदेशवदित्यर्थः । नन्वेवमाग्नेयं चतुर्धा करोतीत्युक्त ऐन्द्राग्नस्यापि धीः स्यादित्यत आह ॥ ऐन्द्राग्नादौ त्विति ॥ परोक्तं समाख्यानं दूषयति ॥ एवमेवैषप्राण इति ॥ प्रतीतेश्चेति ॥ अप्रतीतेर्वाक्यद्वये प्राणस्य स्थानभेदोक्तिरिति भावः ।

## तात्पर्यचन्द्रिका

**मध्ये वामनमित्यत्र च मध्यशब्दो देशवाची । ''ऊर्ध्वं प्राण''मिति देशवाचकोर्ध्वशब्दसाहचर्यात् । ऊर्ध्वत्वप्रतियोगित्वाच्च । एवं च यथा ''त्रिःप्रथमामन्वाहे''त्यत्र प्रथमाशब्दो या ऋक् यत्र प्रकृतौ विकृतौ वा प्रथमस्थानस्था तत्पर एव । न तु प्रकृतौ प्रथमस्थानस्थप्रवोवाजीयऋग्विशेषमात्रपरः । एवं मध्यशब्दोऽपीह ''ऊर्ध्वं प्राण''मिति प्राणस्य स्थानांतरनिर्देशात्तत्त्यागेन मध्यमस्थानस्थब्रह्मपरः । न तु श्रुत्यंतरे मध्यमशब्दोक्तप्राणपरः । तस्माल्लिङ्गानि सावकाशानि । तदुक्तं**

न्यायविवरणे ''लिङ्गानां परमात्मन्यवकाशो विद्यत एवे''ति । अङ्गुष्ठमात्रत्वं च मूर्तिविशेषस्य व्यक्त्यात्मनांऽगुष्ठमात्रत्वाद्वा स्थानहृदयगतस्य स्थानिनि ब्रह्मण्युपचाराद्वा युक्तम् । ननु परिमाणार्थकमात्रच्प्रत्ययोऽयं न त्ववधारणार्थो मात्रशब्दः । ''देहांगुष्ठमितो देहे जीवांगुष्ठमितो हृदी''ति स्मृतौ मित इति परिमाणस्यैवोक्तेः । अङ्गुष्ठपरिमाणत्वं च सर्वगतस्यापि व्योमवदित्युक्तमित्येव सूत्रे कस्मान्न समाहितमिति चेत् तथात्वे अङ्गुष्ठमात्रवाक्ये ''मध्य आत्मनी''त्यस्य हृदीत्यस्य च वैयर्थ्यापातात् । ''अङ्गुष्ठमात्रः पुरुषोंऽगुष्ठं च समाश्रित'' इति श्रुत्यंतरे चाङ्गुष्ठमात्रहृदयगतत्वेनाङ्गुष्ठमात्रत्वोक्तेः । स्मृतावपि हृदीत्यादेरवैयर्थ्यायावधारणस्य विवक्षणीयत्वाच्च । प्राण्यंतरस्यांगुष्ठाभावेपि शास्त्रस्य मनुष्याधिकारिकत्वात् । मनुष्याणां चांगुष्ठस्य सत्त्वेनादोषत्वात् ।

प्रमितग्रहणेनात्र श्रुतेर्निरवकाशताम् ।
एवकारेण लिङ्गेभ्यः प्राबल्यं सूत्रकृज्जगौ ॥ १ ॥

**प्रकाशिका** – एवं लिङ्गद्वयं विष्णावुपपाद्य मध्यमत्वमपि सावकाशयति ॥ मध्य इति ॥ साहचर्यादिति ॥ यथा ''वत्समालभेते''ति श्रुतवत्सालंभस्य गोदोहनादिगुणकर्मसाहचर्येण गुणकर्मत्वं तथेति भावः । ऊर्ध्वेति ॥ ऊर्ध्वशब्दस्य पूर्वसापेक्षत्वेन तत्प्रतियोगिसमर्पकत्वाच्च मध्यदेशवाचीत्यर्थः । अस्त्वेवं किं तत इत्यतो दृष्टांतपूर्वं सङ्गमयति ॥ एवं चेति ॥ नवमस्याद्यपादे ''अभ्यासस्सामिधेनीनां प्राथम्यात् स्थानधर्मस्स्या''दिति नवमेऽधिकरणे दर्शपूर्णमासयोः पञ्चदशसामिधेनीर्विधायैकादशर्चः पठित्वा ''त्रिःप्रथमामन्वाह । त्रिरुत्तमाम् । ताःपञ्चदश सम्पद्यंत'' इति श्रुतं वाक्यमुदाहृत्य त्रिरभ्यासः किं प्राथम्योपलक्षिताया ऋचः प्रवोवाजीयाया धर्मः । तथाच यत्र तत्रस्थप्रवोवाजीया त्रिरभ्यसितव्या उत प्रथमस्थानधर्मः । ततश्च प्रवोवाजीयाया अन्यापि या विकृतिषु प्रथममुच्यते साप्यूहेन त्रिरभ्यसितव्येति विशये प्रथमामिति स्त्रीलिङ्गनिर्देशात्तस्या एवर्चः त्रिरभ्यास इति प्राप्ते प्रथमाशब्देनैव श्रुत्या प्राथम्याभिधानात् ऋचस्तु लक्षणीयत्वाद्यत्प्रथममुच्यतेऽतत्त्रिरिति प्राथम्यैकार्थसमवेतत्रिरभ्यासस्य विधिः । स्त्रीलिङ्गं तु प्राथम्यस्य ऋगाश्रयत्वेनैव प्राप्तत्वाद्गुणवाचिनामाश्रयलिङ्गवचन-

त्वान्नित्यानुवादः । तस्मात्प्रथमस्थानधर्म एव त्रिरभ्यास इति सिद्धांतितम् । तत्र यथा प्रथमाशब्दः प्रथमस्थानस्थऋङ्मात्रपरो न तु विशेषपरः । एवमिहापि मध्यस्थानस्थपरो न तु तत्रस्थप्राणरूपविशेषपरः । तस्य स्थलान्तरे निर्देशात् । तथाच मध्यस्थं ब्रह्मैवेति तत्पर इति सिध्यतीत्यर्थः ।

एवं प्रथमसूत्रोक्ते श्रुतिलिङ्गयोर्निरवकाशत्वसावकाशत्वे समर्थ्येदानीं पूर्वपक्ष्युक्तांगुष्ठमात्रत्वस्यापि ''हृद्यपेक्षयात्वि''ति द्वितीयसूत्रोक्तं सावकाशत्वं हृदि विद्यमानावकाशापेक्षयेत्यादिटीकायां द्वेधाऽभिप्रेतमिति भावेन टीकां विवृण्वन्नाह ।। अङ्गुष्ठेति ।। एतेन टीकावाक्यं वाशब्दसंयोजनेन योज्यमित्युक्तं भवति । टीकायां क्वचिद्वाशब्देनापि पाठः । सौत्रं समाधानमाक्षिप्य समाधत्ते ।। नन्विति ।। ''प्रमाणे द्वयसज्दघ्नञ्मात्रच'' इति सूत्रादंगुष्ठशब्दान्मात्रच्प्रत्यये ''जानुमात्रं जल''मितिवदंगुष्ठपरिमाण इत्यर्थो लभ्यते । ततश्च किमित्यत आह ।। अङ्गुष्ठेति ।। वैयर्थ्येति ।। अङ्गुष्ठपरिमितत्वस्य स्थानसापेक्षत्वाभावादिति भावः । नन्विदं समाधानं पश्वादीनामङ्गुष्ठाभावेन तदन्तर्गतविष्णावसम्भवीत्यतो मनुष्याधिकारत्वादिति सूत्रशेषतात्पर्यं भाष्यटीकयोरुक्तमाह ।। प्राणीति ।। अत्राद्यसूत्रस्य हेतूक्तिपरत्वाद्वितीयस्य बाधकनिरसनपरत्वात्पौर्वापर्यसङ्गतिः स्पष्टेत्युपेक्ष्योक्तन्यायस्य सूत्राक्षरारूढतां टीकोक्तामेव सङ्गृह्य दर्शयति ।। प्रमितेति ।। अत्र आद्यसूत्रे ।

**पाण्डुरङ्गि** – मध्ये वामनमासीनमिति सर्वोत्तमत्वरूपकाष्ठात्वविरोधिमध्यस्थमुच्यमानं वायावेवोपपद्यते । नतु विष्णाविति कथं तस्य सावकाशत्वमित्यत आह ।। मध्येवामनमित्यत्र चेति ।। अङ्गुष्ठमात्रवाक्य इति ।। अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठतीत्यंगुष्ठमात्रवाक्ये मध्य आत्मनीत्यस्य देहांगुष्ठमितो देहे जीवांगुष्ठमितो हृदीत्यत्र हृदीत्यस्य च वैयर्थ्यापातादिति भावः ।। स्मृतावपीति ।। देहांगुष्ठमितो देहे जीवांगुष्ठमितो हृदीति स्मृतावपीत्यर्थः ।

## तात्पर्यचन्द्रिका

**अन्येतु ''अङ्गुष्ठमात्रः पुरुष'' इति श्रुतोंऽगुष्ठमात्रो जीवः । परिच्छिन्ने तत्र तन्मात्रत्वसम्भवात् । ''ईशानो भूतभव्यस्ये''ति चरमश्रुतमीशानत्वं तु**

प्रथमश्रुतांगुष्ठमात्रत्वानुरोधात्सङ्कोचयितव्यम् । न च ''अल्पश्रुते''रिति न्यायेनेश्वरेऽप्यङ्गुष्ठमात्रत्वम् । तत्र हृत्पुण्डरीकस्येवेह स्थानविशेषस्यानिर्देशादिति प्राप्ते ब्रह्मप्रश्नोत्तरत्वादस्येशानत्वमसङ्कुचितमेव । अङ्गुष्ठमात्रत्वोक्तिस्तु ब्रह्मणो जीवैक्याभिप्रायेति सिद्धान्त इत्याहुः । तत्र तावत्पूर्वपक्ष एवायुक्तः । ''ईशानो भूतभव्यस्ये''त्यस्यांगुष्ठवाक्याच्चरमत्वेपि ''ईशानं भूतभव्यस्ये''त्यस्य प्रथमत्वेनांगुष्ठवाक्यस्येशानश्रुतिभ्यां सन्दष्टत्वात् । ''अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवे''ति वाक्यद्वये स्थानस्यानिर्देशेपि ''अङ्गुष्ठमात्रः पुरुषोंऽतरात्मा सदा जनानां हृदये सन्निविष्ट'' इति तृतीयवाक्ये स्थाननिर्देशाच्च ।

सिद्धान्तोऽप्ययुक्तः । तत्पक्षे ''अन्यत्र धर्मादन्यत्राधर्मा''दित्यत्र ब्रह्मण इव ''येयं प्रेते विचिकित्सा मनुष्य'' इत्यत्र जीवस्यापि पृष्टत्वेनांगुष्ठवाक्यस्य जीवपरत्वेप्यदोषात् । किं च निर्विशेषं ब्रह्मैवैतत्पादार्थः । न च तस्य किंचिदपि प्रतीशितृत्वमस्ति । जीवस्य तु स्वनियम्यं देहादिकं प्रत्यस्ति । एवं च -

ईशानो जीव एव स्यात्स्वदेहादेर्नियामकः ।
निर्विशेषं तु नेशानमेकस्याप्यनियामकम् ॥ १ ॥

ऐक्याभिप्रायत्वमपि न तावन्मुख्यार्थत्वाय कल्प्यम् । वाच्यार्थयोरैक्यानङ्गीकारात् । नापि प्रामाण्याय । भेदेप्यंगुष्ठमात्रहृदयनिष्ठत्वेन गौणांगुष्ठमात्रत्वसम्भवात् । युक्तं चाभेदायांगुष्ठमात्रादिश्रुतीनामीशानादिश्रुतीनां चामुख्यार्थत्वादप्यंगुष्ठमात्रत्वश्रुतिमात्रस्य भेदेन गौणार्थत्वम् । किं च त्वत्पक्षे जीवस्यापि न स्वतोंऽगुष्ठमात्रत्वम् । किन्तु हृत्कमलकोशोंऽगुष्ठमात्रो मनश्च प्रायेण तत्स्थं तदवच्छिन्नश्च जीव इत्येवमौपाधिकम् । एवं चेश्वरस्य जीवाभेदं विनैव दहराधिकरणोक्तांगुष्ठमात्रहृत्कमलकोशस्थत्वादंगुष्ठमात्रत्वोपपत्तौ किं जीवाभेदकल्पनया । किं च पूर्वत्र ''आत्मानं जीवमन्तिका''दिति ''तं देवाः सर्वेऽर्पिता'' इति उत्तरत्र च ''अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठती''ति ''तादृगेव भवती''ति इतरेण तु जीवन्ती''ति ''सुप्तेषु

**जागर्ती''ति ''नित्योनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामा''निति ''तमात्मस्थ''मिति ''भयादस्याग्निस्तपती''ति भेदस्यैव श्रुतेः कथमभेदपरत्वम्। किं चाङ्गुष्ठमात्रे श्रुतं सर्वदेवोपास्यत्वं न पूर्वपक्षस्यानुगुणम्। जीवमात्रस्य सर्वदेवोपास्यत्वायोगात्। नापि सिद्धान्तस्य। ज्ञेये निर्विशेषे ब्रह्मण्युपास्यत्वायोगादिति।**

**प्रकाशिका** – अन्येत्विति ॥ तत्र भामत्यां -

नांजसा मानभेदोस्ति परस्मिन् मानवर्जिते।
भूतभव्येशता जीवे नांजसा तेन संशयः ॥

इत्यादिना संशयपूर्वोत्तरपक्षा उक्ताः। तथाहि। किमंगुष्ठमात्रश्रुत्यनुग्रहाय जीवोपासनपरमेतद्वाक्यमस्तु तदनुरोधेनेशानश्रुतिः कथंचिन्नीयतामाहोस्विदीशानश्रुत्यनुग्रहाय ब्रह्मपरमेतदस्तु तदनुरोधेनाङ्गुष्ठमात्रश्रुतिः कथंचिन्नीयताम्। तत्रान्यतरस्यान्यतरानुरोधविशये भामत्युक्तरीत्यैव पूर्वोत्तरपक्षावनुवदति ॥ अङ्गुष्ठेति ॥ तत्र जीवे। तस्यांतःकरणाद्युपाधिकल्पितब्रह्मभागत्वात् अन्तःकरणस्य च प्रायो हृत्कमलकोशस्थानत्वात् हृत्कमलकोशस्य च मनुष्याणामङ्गुष्ठपरिमितत्वात्तदवच्छिन्नो जीवोपि तथा। नभ इव वंशपर्वावच्छिन्नमरत्निमात्रमित्यर्थः। न तु ब्रह्मणि। अपरिच्छिन्नत्वादिति भावः। किञ्च ''अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बला''दिति स्मृत्याच जीव एवांगुष्ठमात्रः। सर्वेश्वरस्य यमेन समाकर्षायोगादित्यपि बोध्यम्। ननु कथं जीवे भूतभव्येशानत्वं युक्तमित्यत आह ॥ ईशान इति ॥ दहराधिकरणपौनरुक्त्या शङ्कोत्तरे अनुवदति ॥ न चेति ॥ युक्तं हृत्पुण्डरीकदहरस्थानत्वं परब्रह्मणः। तदुपलब्धिस्थानविशेषस्य हृत्पुण्डरीकस्य तत्र निर्देशात्। इह तदभावात्। न च ''मध्य आत्मनी''त्यत्रापि स्थानभेदो निर्दिष्ट इति शङ्क्यम्। आत्मशब्दस्य स्वभावब्रह्मजीवसाधारणतया स्वभावस्य स्वभवित्रधीननिरूपणतया स्वस्य च भवितुरनिर्दिष्टतया कस्य मध्ये इत्यज्ञानाज्जीवपरयोश्चांजस्येन मध्यासम्भवान्नात्रस्थाननिर्देशस्स्पष्ट इति भावः ॥ ब्रह्मेति ॥ ''अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे''ति प्राग्ब्रह्मणः पृष्टत्वादुत्तरग्रन्थसन्दर्भस्य तत्प्रतिवचनत्वमेव युक्तमिति भूतभव्येशानत्वं निरंकुशमेव। न सङ्कोचनीयमित्यर्थः ॥ जीवैक्येति ॥ यथा ''तत्वमसी''ति जीवस्य त्वंपदार्थस्य तदिति परमात्मना

विरुद्धांशत्यागेनैकत्वमुच्यते तथेहाप्यंगुष्ठपरिमितस्यापि जीवस्येशानश्रुत्या ब्रह्माभेदः प्रतिपाद्यत इत्यर्थः । तदुक्तं भामत्यां -

प्रश्नोत्तरत्वादीशानश्रवणस्याविशेषतः ।
जीवस्य ब्रह्मरूपत्वप्रत्यायनपरं वचः ॥ इति ॥

यत्तावदुक्तं प्रथमश्रुतांगुष्ठमात्रत्वानुरोधेन चरमेशानत्वं नेयमिति तत्तावन्नेत्याह ॥ ईशान इति ॥ यदपि दहराधिकरण वैषम्यं तदपि नेत्याह ॥ अङ्गुष्ठेति ॥ अभ्युपेत्येदमुदितम् । वस्तुतस्तु ''मध्यआत्मनी''त्यत्र देहादिमध्यरूपस्थाननिर्देशोऽस्ति । तथा तृतीयवाक्येपि हृदय इति स्पष्टः स्थाननिर्देशोस्तीत्यपि ध्येयम् । यदपीशानत्वमसङ्कुचितं ब्रह्मणीति तदपि नेत्याह ॥ किञ्चेति ॥ यदप्यंगुष्ठमात्रोक्तिरैक्याभिप्रायेति तत्किं वाक्यस्य मुख्यार्थतालाभाय कल्प्यत उत प्रामाण्याय । न द्वयमपि युक्तमित्याह ॥ ऐक्येति ॥ सम्भवादिति ॥ ब्रह्मण इति भावः । ननु को विशेष इत्यत आह ॥ युक्तं चेति ॥ प्रकारान्तरेणान्यथोपपत्तिं वदन्नाभेदकल्पनं युक्तमित्याह ॥ किंचेति ॥ अत्र तथा स्थाननिर्देशो नेति तु प्रत्युक्तमिति ध्येयम् । कल्पकाभावमुक्त्वा तत्प्रकरणगतपूर्वोत्तरबहुवाक्यविरोधमाह ॥ किञ्च पूर्वत्रेति ॥ ''य इदं मध्वदं वेद आत्मानं जीवमन्तिका''दिति जीवस्य समीपस्थमात्मानं वेदेति वाक्ये अन्तिकशब्देन भेदप्रतीतेः ''तं देवास्सर्वेऽर्पितास्तदु नात्येति कश्चने''ति वाक्ये अर्पिताः प्राप्ता इति प्राप्तृप्राप्यभावेन भेदः । आत्मनि जीव इत्याधारसप्तम्या भेदसिद्धिः । यथोदकं शुद्धेऽशुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ॥ इति सादृश्यवाचिना तादृक्शब्देन भेदसिद्धिः ।

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवंति यस्मिन्नेतावुपाश्रितौ ॥

इत्यत्रोपजीव्योपजीवकभावेन ''य एष सुप्ते''ष्वित्यादौ स्पष्टो भेदः । व्यावहारिकभेदपराण्येतानीति प्रत्युक्तमन्तर्यामिनये । ज्ञेय इति हेतुगर्भं ।

**पाण्डुरङ्गि** – किं चाल्पश्रुतेरित्युक्तन्यायेनेश्वरेंऽगुष्ठमात्रत्वं सम्भवत्येवेति तेनैव गतार्थता । न च तत्र हृत्पुण्डरीकस्येवेह स्थानविशेषस्यानिर्देशान्नांगुष्ठमात्रत्वमीश्वरस्येत्युक्तम् । तत्राह ॥

अङ्गुष्ठमात्र इति ॥ यद्यप्यत्र मध्य आत्मनीत्यनेनापि स्थाननिर्देशाद्वाक्यद्वये स्थाननिर्देशाभावोक्तिरयुक्ता । तथापि स्पष्टमधिष्ठानस्यानुक्तत्वाभिप्रायेणेयमुक्तिरिति बोध्यम् । यदुक्तमङ्गुष्ठमात्रत्वोक्तिस्तु जीवैक्याभिप्रायेति तत्रैक्याभिप्रायार्थत्वं किं मुख्यार्थत्वाय कल्प्यं किं वा प्रामाण्याय । नाद्य इत्याह ॥ न तावदिति ॥ ननु च मत्पक्षे लक्षणावत्, भवत्पक्षेंऽगुष्ठमात्रत्वस्य गौणत्वं भवतीत्यविशेषात्कुतो भवन्मतमेव प्रामाणिकमित्यतो लक्षणापेक्षया गौण्या मुख्यत्वादिति परिहारे सत्येव परिहारांतरमाह ॥ युक्तं चेति ॥ ज्ञेय इति ॥ तत्पादप्रतिपाद्य इत्यर्थः । यद्वा ज्ञेये ज्ञानविषय इत्यर्थः । उपासनाया अविद्यमानविषयकत्वाद्ब्रह्मविषयत्वं न सम्भवति । ब्रह्मणो ज्ञानविषयत्वेन ज्ञानस्य च परमार्थसत्कर्मत्वेन तत्कर्मभूतब्रह्मणः परमार्थसत्त्वेनारोपितत्वाभावादित्यर्थः । नाममात्रेण निर्देशः श्रुतिरिति टीकायां श्रुतिलक्षणमुक्तम् । तदयुक्तम् । तथात्वे मात्रशब्देन योगमात्रस्य व्यावर्तितत्वेन योगरूढानां वामनादिशब्दानां यौगिकत्वस्यापि विद्यमानत्वेन नाममात्रेण निर्देशत्वाभावेन श्रुतित्वं न स्यात् ।

## तात्पर्यचन्द्रिका

**केचित्तु ''प्राणाधिपः संचरति स्वकर्मभिरंगुष्ठमात्र'' इति श्रुत्यंतरे जीवस्यांगुष्ठमात्रत्वश्रवणादीश्वरस्य च क्वापि तदश्रवणादिहांगुष्ठमात्रो जीव एवेति प्राप्ते अन्यत्राश्रुतमप्यंगुष्ठमात्रत्वमिहेश्वरस्यैव । ईशानशब्दादिति सिद्धांत इत्याहुः । तन्न । ''अङ्गुष्ठमात्रः पुरुषोंऽतरात्मा सदा जनानां हृदये सन्निविष्टः । हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ती''ति श्वेताश्वतरे,**

**अङ्गुष्ठमात्रः पुरुषोंऽगुष्ठं च समाश्रितः ।**
**ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥**

**इति तैत्तिरीये चान्यत्रेश्वरस्यापि तच्छ्रवणात् । ईश्वरस्यान्यत्र तच्छ्रवणं नास्तीति कृत्वाचिन्ता त्वस्मदुक्ते गत्यंतरे सति न युक्ता । यदि च श्वेताश्वेताश्वतरादेरीश्वरविषयत्वे पूर्वपक्षिणो विप्रतिपत्तिस्तर्हि ''प्राणाधिपः संचरती''त्यादेर्जीवविषयत्वे सिद्धांतिनोऽपि सा किं न स्यादिति दिक् ।**

**प्रकाशिका –** ।। केचित्त्विति ।। ''अङ्गुष्ठमात्रः पुरुष'' इति वाक्यत्रये श्रुतोंऽगुष्ठमात्रः प्रत्यगात्मोत परमात्मेति विशये तृतीये ''हृदय'' इति स्थाननिर्देशेन परोक्तरीतिरयुक्तेत्यन्यथाऽधिकरणशरीरं वर्णितम् । तदनुवदति ''प्राणाधिपस्संचरति स्वकर्मभिरङ्गुष्ठमात्रोरवितुल्यरूपः । सङ्कल्पाहंकारसमन्वितोय'' इति वाक्यस्य कर्मवशत्वादिना जीवपरत्वं सिद्धमिति भावः ।। जीव एवेति ।। ईशानत्वं तु प्रथमांगुष्ठमात्रत्वानुरोधेन शरीरेन्द्रियभोग्यभोगोपकरणापेक्षया नेयमिति भावः ।। ईशानेति ।। भूतभव्यस्य सर्वस्येशितृत्वं जीवेऽयुक्तमितीशानत्वं निरवकाशम् । अङ्गुष्ठमात्रत्वं तूपासनार्थम् । उपासकहृदयेऽङ्गुष्ठमात्रे वर्तमानत्वात्तदपेक्षया युक्तमिति भावः ।। ईश्वरस्यापीति ।। अन्तरात्मत्वमोक्षप्रदत्वसर्वजगदीशानत्वानामीश्वरलिङ्गानामन्यत्र श्रवणादिति भावः ।

ननु श्रुतप्रकाश एवैतदाशंक्य ''कृत्वाचिन्तेयम् । परमात्मनोऽन्यत्रांगुष्ठमितत्वश्रवणाभावमुपेत्यानेन वाक्येनांगुष्ठमितत्वं सिध्यति नेति विचार्यत'' इत्यादिना समाहितमित्यत आह ।। ईश्वरस्येति ।। ''यदामन्त्रगतं ब्रह्मलिङ्गं क्लिष्टं कृत्वा तावपि मन्त्रौ विवादास्पदीकृतौ तदानीं न कृत्वाचिन्तेय''मिति श्रुतप्रकाशोक्तं पक्षान्तरमप्यपाकरोति ।। यदि चेति ।। ननु तत्र कर्मवशत्वादिकं जीवलिङ्गं श्रुतं चेदिहाप्यंतरात्मत्वादिब्रह्मलिङ्गानि श्रुतानीति समम् । एतेषां जीवेपि क्लेशेन नयने तेषामपि कथंचिद्ब्रह्मणि नेतुं शक्यत्वादिति समम् । किं च वाक्यद्वयक्लेशापेक्षया ''प्राणाधिप'' इत्येकस्यैवान्यथानयनमुचितम् । अपि च कृत्वाचिन्तात्वपक्षे ''हृदयेसन्निविष्ट'' इति वाक्ये हृदय इति स्थाननिर्देशो नास्तीत्येव कृत्वाचिन्तासम्भवे किं पररीतिमवधीर्य वाक्यान्तरान्वेषणक्लेशेन । अपि च जीवस्याप्यारागमात्रस्यांगुष्ठमात्रत्वममुख्यमित्युपासनार्थं तदिति निर्वाह्यम् । तत्परमात्मपरत्वेऽपि सम्भवति । उपासनार्थमल्पपरिमाणत्वस्य परस्मिन्नुक्तदिशा श्रवणात् । अन्यथा जीवेप्यश्रवणात् । यदपि जीवो ब्रह्मवेति विचारे नेश्वरसम्बन्धिलिङ्गान्निर्णयः । किं त्वीश्वरत्ववाचिशब्दादेवेति वा पूर्वपक्ष्याशङ्किताया ईशानशब्दान्यथासिद्धेर्निरासार्थो वेति सौत्रैवकारार्थकथनं तदपि ''स्वशब्दा''दित्यादाविवावधारणेन विनाऽप्युपपत्तेरतिशयार्थालाभाच्चापेशलम् । तदेतदभिप्रेत्योक्तं दिगिति ।। एतेन यत्केनचिदुक्तमङ्गुष्ठमात्रो जीवः शिवो वेति संशये रामानुजरीत्या पूर्वपक्षयित्वा ''सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्च शम्भुराकाशमध्य'' इति श्रुत्या भूतभव्येशितृत्वस्य

शिवलिङ्गत्वादीशानश्रुतेस्तत्र रूढत्वाच्च शिव एवांगुष्ठमात्र इति तन्निरस्तम् । पूर्वपक्षे तन्मतोक्तदोषग्रासात् । यद्त्रोक्तं "अङ्गुष्ठं च समाश्रित" इत्यादिमन्त्रोऽप्यङ्गुष्ठमात्रत्वश्रवणादेव जीवपर इत्यत्राक्षिप्यते । अतो न दोष इति तन्न । अङ्गुष्ठमात्रत्वस्याद्यापि जीवमात्रधर्मत्वा-सिद्धेः । प्राणाधिप इति श्रुतेरपि जीवपरत्वे विवादादित्युक्तत्वात् ।

अथ सत्यवतः कायात्पाशबन्धवशं गतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥

इति स्मार्तवचसोपि तैत्तिरीयाद्यनेकवाक्यबाधकत्वासामर्थ्यात् । किं चाङ्गुष्ठमात्रे श्रुतस्य सर्वदेवोपास्यत्वस्य जीवमात्रेऽनुपपत्तिश्च । सिद्धान्तोप्ययुक्तः । "न ते विष्णो जायमानो न जातः सहि सर्वाधिपतिस्सहि सर्वपालस्स ईशस्सविष्णुः सप्तार्धगर्भाभुवनस्य रेत" इत्यादिश्रुतिभिः

सर्वेशो विष्णुरेवैको नान्योस्ति जगतःपतिः ।
ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ॥

इत्यादिस्मृतिभिस्सर्वेशितृत्वस्य विष्ण्वेकनिष्ठत्वात् । विष्णौ निरूढवामनश्रुतिविरोधाच्च । ईशानशब्दस्य यौगिकार्थप्रतिसम्बन्धिभूतभव्याद्युपादाने रूढ्यनुन्मेषाच्च । "ईशानः प्राणदः प्राण" इति विष्णौ प्रयोगाच्चेति ।

## तात्पर्यचन्द्रिका

**अत्र "श्रुतिर्लिङ्ग"मित्यादिभाष्ये श्रुत्यादौ पूर्वबलीयस्त्वमुक्तम् । तदुपपादयितुं टीकायां -**

**श्रुतिर्नाम समुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतम् ।**
**पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा ।**
**एकस्य प्रतिपत्त्यंगवचनं स्थानमुच्यते ।**

अन्यत्र तत्समोक्तिस्तु समाख्यास्थानमेव च ।।
अध्यायादिप्रबन्धास्तु प्रभेदा आगमस्यतु ।

इति तत्वप्रदीपोदाहृतवचनानुसारेण श्रुत्यादिलक्षणमुक्त्वा तद्बलाबलबीजमुक्तम् । तत्रायं भावः । वाचक(रूढः)शब्दश्श्रुतिः । ''नाममात्रेणे''ति टीकायां मात्रशब्देन शुद्धो योगो व्यावर्त्यः । न तु रूढिसहितः । तेन योगरूढानां वामनादिशब्दानां न श्रुतित्वहानिः । असाधारणधर्मार्पकः शब्दोवा तदर्पितोऽसाधारणधर्मो वा इह लिङ्गम् ।

न हीहानुमानमात्रं लक्ष्यम् । तस्य वाक्याद्दुर्बलत्वात् । किं तु श्रुतितो दुर्बलं वाक्याच्च प्रबलं वैदिकं लिङ्गम् । तच्च द्विविधम् । एकपदात्मकमनेकपदात्मकं चेति । तत्राद्यं यथा । तल्लिङ्गादित्यादावनंत इत्यादि । द्वितीयं यथा । ''अत एव प्राण'' इत्यादौ ''श्रीश्चते लक्ष्मीश्च पत्न्या''वित्यादि । तत्राग्निशब्दादिरूपायाः श्रुतेरग्न्यादिरूपे स्वार्थे साक्षाद्धीहेतुत्वात्सर्वतः प्राबल्यम् । धूमशब्दादिरूपस्य लिङ्गस्य तु स्वार्थे व्याप्ये श्रुतिरूपत्वेपि व्यापकेऽग्न्यादौ व्याप्यधीद्वारा धीहेतुत्वात् श्रुतितो दौर्बल्यम् । यथाऽत्रैव व्याप्यार्पकस्य ''ऊर्ध्वं प्राणमुन्नयती''त्यस्य वामनश्रुतितः ।

स्वस्मिन्नेव पूर्णाकांक्षत्वेनान्यत्र निराकाङ्क्षपदसन्दर्भरूपवाक्यस्य तु स्वार्थे शब्दप्रमाणत्वेपि स्वान्तर्गतपदार्थनिर्णये वा समभिव्याहृतवाक्यांतरार्थनिर्णये वा कार्येऽनुमापकत्वमेव । तत्राद्यं यथा । तत्त्वमसीति वाक्ये तत्साद्दश्यं तच्छब्दार्थ इत्यत्र तत्पदेन सह त्वमसीति पदसमभिव्याहारस्य । वाक्यान्तरार्थनिर्णायकत्वमपि तन्निर्णायकश्रुत्यादियुक्तत्वेन वा प्रश्नोत्तरादिभावेन समभिव्याहारमात्रेण वा । तत्राप्याद्यं यथा । आकाश इति होवाचेति वाक्ये ब्रह्माकाशशब्दार्थ इत्यत्र आकाशः परायण''मिति वाक्यस्य । द्वितीयं यथा । हृद्यंतर्ज्योतिरिति वाक्ये ब्रह्मैव ज्योतिश्शब्दार्थ इत्यत्र प्रसिद्धजीवपरत्वेऽनुपपन्नस्य ''कतम आत्मे''ति प्रश्नवाक्यस्य । ततश्च वाक्यस्य लिङ्गवत्साक्षाद्व्याप्यभूतैकार्थासमर्पकत्वादव्याप्यभूता-नेकपदार्थकथनद्वारा प्रश्नोत्तरादिभावेन समभिव्याहृतस्वार्थान्वययोग्य एव वाक्यान्त-

**रार्थ इत्यनुमापकत्वाल्लिङ्गाद्दुर्बलत्वम् । यथा ''दहर'' इत्यत्र ''किं तदत्र विद्यते यदन्वेष्टव्य''मित्यादिवाक्यस्यापहतपाप्मत्वादिलिङ्गात् ।**

**प्रकाशिका** – टीकोक्तश्रुत्यादिलक्षणस्य प्रकृतोपयोगं वदंस्तन्मूलप्रमाणमाह ।। अत्रेति ।। टीकायामुक्तमित्यन्वयः । अस्पष्टत्वादाह ।। तत्रायं भाव इति ।। टीकायां ''नाममात्रेण निर्देशश्श्रुति''रित्युक्तम् । तत्र यानि रूढानि तानि नामानीत्युक्त्या रूढशब्दस्यैव श्रुतित्वापत्त्या योगरूढे वामनादिशब्देऽव्याप्तिरित्यतो भावमाह ।। वाचकेति ।। रूढ्या योगरूढ्यावेत्यर्थः । योगरूढस्यापि नामत्वस्य प्रागेवोक्तेरिति भावः । नन्वेवं तल्लिङ्गादित्यत्रोक्तानंतत्वोद्गीथत्वादिलिङ्गवाचिशब्देऽतिव्याप्तिः । तस्यापि योगरूढिभ्यां विष्णुवाचित्वादिति चेन्न । यौगिकत्वेनैव तत्र लिङ्गत्वोक्तेः । ''अन्तवद्वै किल ते सामे''त्यादौ पूर्वत्रांतवत्त्वमुक्त्वाऽऽकाशप्रकरणेऽनंत इत्युक्त्या यौगिकत्वस्यैव प्रतीतेः । अत एवोक्तं तत्र अन्तत्रयोज्झिते विष्णा''वित्यादि । यद्वा अनन्तशब्दस्य श्रुतित्वेपि तत्र पूर्वोक्तन्यायातिदेशार्थं यौगिकत्वमात्राश्रयणेन लिङ्गत्वोक्तिः ।

यद्वा ''नाममात्रेण निर्देश'' इत्यत्र रूढशब्देनैव निर्देश इति प्रतीतेस्सर्वस्यापि शब्दस्यौणादिकप्रत्ययांतत्वेन यौगिकत्वादप्रसिद्धिरित्यतो ''वाचकशब्दः श्रुति''रित्यभिप्राय उक्तः । न चैवमनन्तादिलिङ्गेऽतिव्याप्तिः । तत्र स्वार्थे श्रुतित्वस्यापि सत्त्वात् । निर्णेयार्थे च व्याप्यार्पकत्वेनानुमापकतया वाचकत्वाभावात् । न चैवं वामनशब्दोपि वामनेतृत्वादिव्याप्यार्पकतया निर्णेयार्थेऽनुमापक इति न श्रुतिः स्यादिति वाच्यम् । आपततोपि व्याप्यार्पकस्यैव लिङ्गत्वेनाभिमततया वामनशब्दे तदभावात् । तस्य द्विरूपत्वेपि लिङ्गत्वानाश्रयणेनापाततो रूढ्याश्रयणेन श्रुतित्वाभिधानाद्वा । नन्वेवं यत्तदादिसाधारणशब्दानां सर्ववाचकतया विष्णोरपि वाचकत्वात्तच्छ्रुतित्वापत्तिरिति चेन्न । श्रुतित्वसामान्यस्येष्टत्वात् । विष्णुश्रुतित्वेप्यनिष्टाभावात् । न च तन्निर्णायकतापत्तिप्रसङ्गोऽनिष्टः । श्रुतिमात्रस्यानिर्णायकत्वेऽपि श्रुतित्वानपायात् । असाधारण्येन वाचकश्शब्दश्श्रुतिरित्यप्याहुः । नन्वेवमप्यन्विताभिधानेऽन्वयरूपवाक्यार्थे पदस्यैव वाचकतया तत्र श्रुतित्वं स्यादिति चेदिष्टत्वात् । न च वाक्यप्रमाणकत्वव्यवहारविरोधः । सामान्यान्वये श्रुतित्वेपि विशेषान्वये पदान्तरसमभिव्याहारसापेक्षत्वेन तदुपपत्तेः । तदुक्तं तर्कताण्डवे ''तत्तद्विशेषणोपस्थापनेन पदान्तरसार्थक्या''दिति ।

यद्वा ''नाममात्रेण''इत्यत्र नामपदस्य सुबन्तपद एव प्रसिद्ध्या प्रातिपदिकप्रत्ययपदरूपश्रुतित्रयपरिग्रहाय वाचकश्शब्दश्श्रुतिरित्यर्थ उक्तः । एवं च ''अत्ताचराचरे''त्यादावादित्यादिप्रातिपदिकस्य गुहानये ''ऋतं पिबन्ता'' विति द्विवचनस्य पिबत्प्रातिपदिकस्य च ''ब्रह्मजिज्ञासे''त्यादौ ब्रह्मपदादेश्श्रुतित्वव्यवहारष्टीकादौ युक्तः । अत एव प्रकृतिप्रत्ययसमभिव्याहारेण जीवान्यगुणपूर्णवस्तुनः कर्मत्वप्रतीत्या विषयसिद्धिरुच्यते जिज्ञासासूत्रे । नन्वेवं ''न तु श्रुतेस्स्वतोभेद'' इति तर्कताण्डववाक्यविरोध इति चेन्मैवम् । मीमांसकोक्तविधायकत्वविनियोजकत्वादिभेदनिषेध एव तात्पर्यात् । यद्वा ''श्रुतिश्शब्दोऽनपेक्षस्स्याद्विध्युक्तिविनियोगकृ''दित्यादिना मीमांसकैर्विधायकाभिधायकविनियोजकभेदेन श्रुतित्रैविध्यमुक्तम् । तदयुक्तं । सर्वासां श्रुतीनामभिधायकत्वेन ततो विधांतराभावादिति परमतनिरासमभिप्रेत्य ''नाममात्रेणे''त्यादि टीकाप्रवृत्तेत्यभिप्रेत्य ''वाचकश्शब्दश्श्रुति''रित्यर्थ उक्तः । यथोक्तं तर्कताण्डवे ''सर्वापि श्रुतिरभिधात्र्येव । ज्ञापक एव हि शब्दो न तु कारकः । परं त्विन्द्रादिश्रुतिरिन्द्रमभिधत्ते । लिङ्गादिश्रुतिस्तु विधि''मित्यादि । ''असाधारणधर्मोलिङ्ग''मिति टीका न युक्तेव । तल्लिङ्गादित्यादेरसिद्ध्यापत्तेः ।

स एषोनन्त इत्यादौ तादृशधर्मवाचिन एव सत्त्वेन धर्मस्याभावादित्यत आह ॥ असाधारणेति ॥ असाधारणधर्मवाचको लिङ्गमित्युक्तेऽनेकपदात्मकलिङ्गेऽव्याप्तिरतस्तदर्पक इत्युक्तम् । तदर्पितः शब्दार्पितः । अस्मिन् पक्षे ''तल्लिङ्गा''दित्युक्तिस्तदर्थस्य लिङ्गत्वात्तस्य लिङ्गत्वमभिप्रेत्येति भावः । अव्याप्तिं निरस्यति ॥ न हीति ॥ तस्य स्वतन्त्रस्य । एवं श्रुतिलिङ्गयोर्लक्षणटीकां विवृत्येदानीं ''श्रुतेस्साक्षादर्थधीजनकत्वात्सर्वतः प्राबल्यम् । लिङ्गस्यानुमापकतयाऽर्थबोधकत्वात्तदानन्तर्य''मिति बलाबलोक्तिपरां टीकां विवृणोति ॥ तत्रेति ॥ दौर्बल्यमिति ॥ विलंबितप्रतीतेर्हेतुत्वादिति भावः । इत्यस्य प्राणव्यवस्थापकत्वबोधकशब्दस्य । यावदयं शब्दस्स्वार्थं व्याप्यमुपस्थाप्येशानशब्दाद्यर्थतया वायुं बोधयित्वा वाक्यस्य तत्परत्वं बोधयति ततः प्रागेव वामनश्रुतिर्झटिति स्वार्थमीशानपदाभिमतं बोधयतीति तस्य दौर्बल्यमित्यर्थः । निराकाङ्क्षपदानि वाक्यमिति टीका ''गौरश्वःपुरुष'' इत्यादावतिव्याप्तेरन्योन्याकाङ्क्षावत्पदकदंबकवाक्ये सम्भवाच्चायुक्तेत्यतस्तदाशयव्यक्तिपूर्वं ''वाक्यस्यानेकार्थकथनद्वाराऽर्थानुमापकत्वात्ततोपि दौर्बल्य''मिति टीकावाक्ये चानुमापकत्वोक्तिरयुक्ता ।

तस्य शब्दप्रमाणत्वादित्यतस्तत्साधयंस्तदवान्तरविभागमाह ॥ स्वस्मिन्नेवेति ॥ स्वार्थे संसर्गरूपे ॥ स्वांतरिति ॥ अनेन वाक्यं स्वांतस्स्थपदार्थनिर्णायकं समभिव्याहर्तव्यवाक्यार्थ-निर्णायकं चेति द्विविधमित्युक्तं भवति । द्वितीयमपि द्विविधमित्याह ॥ वाक्यान्तरेति ॥ इदानीं "वाक्यस्यानेकार्थकथनद्वारे"ति वाक्यं व्याख्याति ॥ ततश्चेति ॥ उक्तदिशाऽनुमापकत्वे सतीत्यर्थः । कथं तर्ह्यनुमापकत्वमित्यत आह ॥ प्रश्नोत्तरेति ॥ आदिपदेन श्रुतिलिङ्गयोर्ग्रहः ।

**पाण्डुरङ्गि** –किंचाग्न्यादिश्रुत्या पूर्वपक्ष इति पूर्वोक्तम् । तदयुक्तम् । तत्राग्न्यादिशब्दानां यौगिकत्वस्यापि सत्वेन नाममात्रेण निर्देशत्वाभावादित्यत आह ॥ रूढश्शब्दः श्रुतिरिति ॥ असाधारणधर्मो लिङ्गमिति टीकायामुक्तम् । तदयुक्तम् । तथात्वे गन्धवत्त्वधूमादेरप्य-साधारणधर्मत्वेन लिङ्गत्वं स्यात् । न चेष्टापत्तिः । वाक्यापेक्षया प्रबलस्य श्रुत्यपेक्षया दुर्बलस्य लिङ्गस्यैव लक्षणीयत्वादित्यतो व्याचष्टे ॥ असाधारणेति ॥ निराकांक्षपदानि वाक्यमित्यत्र सर्वथाकांक्षाशून्यत्वं वाऽन्यदीयाकांक्षाशून्यत्वं वा । नाद्यः । गौरश्वः पुरुषो हस्तीत्यादेरप्या-कांक्षाशून्यत्वेन वाक्यत्वप्रसङ्गात् । न द्वितीयः । कुण्डं तिष्ठति अजा तिष्ठतीत्यस्याप्य-न्यदीयाकाङ्क्षाशून्यत्वेन वाक्यत्वापत्तेरित्यतो व्याचष्टे ॥ स्वस्मिन्नेवेति ॥ पदानीत्यत्र बहुत्वं न विवक्षितमिति भावेनोक्तं पदसन्दर्भरूपस्येति ॥ स्वार्थ इति ॥ अन्वितशक्तेः सत्त्वात्संसर्ग-रूपवाक्यार्थे वाक्यस्य शब्दप्रमाणत्वम् । तन्निर्णायकश्रुत्यादियुक्तत्वेनेत्यत्रादिपदेन लिङ्गपरिग्रहः । नन्वेकपदात्मकस्यानेकपदात्मकस्यापि लिङ्गत्वं चेदुच्यते तर्हि टीकाविरोधः । टीकायां लिङ्गस्य साक्षाद्व्याप्यभूतैकार्थसमर्पकत्वं वाक्यस्याव्याप्यभूतानेकपदार्थकथनद्वारा लिङ्गसमर्पकत्वं च लिङ्गवाक्ययोः साक्षादसाक्षात्त्वेन भेद इत्यनेनोक्त्वा तत्रैव गोत्रभिदं प्रवक्षणा इति दृष्टान्तस्योक्तत्वेन तत्रानेकपदात्मकस्य वाक्यत्वस्यैवाभिप्रेतत्वात् ।

## तात्पर्यचन्द्रिका

**विवृतं चैतत्तत्रैव । अत एव तत्र टीका "वाक्यान्वयानुपपत्ते"रिति । अत्रापि "लिङ्गवाक्ययोः साक्षादसाक्षात्त्वेन भेद" इति टीकायामिदमेवाभिप्रेतम् । "गोत्रभिदं प्रवक्षणा अभिनत्पर्वतानां" इतीमे अपि लिङ्गे एवोक्तरूपयोर्लिङ्गवाक्ययोः**

**साक्षादसाक्षात्त्वेन भेदे दृष्टान्तिते । न तु लिङ्गवाक्ये । अत एव ''इत्यादिव''दिति-वत्करणम् । उक्तं ह्यनेकपदार्पितस्याप्यसाधारणधर्मस्य लिङ्गत्वं ''अन्तस्तद्धर्मो-पदेशात् , अत एव प्राणः, जीवमुख्यप्राणलिङ्गात् तथाहि दृष्टं लिङ्गं चे''त्यादिसूत्रेषु । तद्व्याख्यानेषु भाष्यानुव्याख्याननन्यायविवरणेषु तट्टीकासुच । यद्यपि ''अस्तंगतः सविते''त्यादिवाक्यं संध्यामुपास्स्वेत्याद्यर्थे तथा ''अयं दण्ड इयंगौ''रित्यादि-वाक्यमपि दण्डेन गामानयेत्याद्यर्थे लिङ्गम् ।**

**प्रकाशिका –** ।। विवृतमिति ।। ''यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मि-न्नंतराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्य''मिति पूर्ववाक्यं ''किं तदत्र विद्यत'' इत्यादिप्रश्नप्रति-वचनपरवाक्यानुरोधेनाकाशस्य प्रसिद्धाकाशत्वमुपेत्य तद्वारा द्यावापृथिव्यादेर्हृत्पद्म-स्थत्वादिपरमुत ''एष आत्माऽपहतपाप्मे''त्यादिलिङ्गानुसाराद्ब्रह्मणस्तथात्वपरमिति विशये आकाशस्य दहरवाक्ये हृत्पद्मस्थतामुक्त्वाऽन्वेष्टव्यवाक्ये दहराकाशांतस्स्थस्यान्वेष्टव्यत्व उक्ते ''किं तदत्र विद्यत'' इत्यनेनान्वेष्टव्य आधेये पृष्टे ''यावान्वा'' इत्यादिना पूर्वोक्तमा-धारमाकाशमनूद्य तच्च पृथिव्याद्याश्रयत्वयोग्यत्वाय बाह्याकाशतुल्यतया विशिष्य ''उभे अस्मि''न्नित्यादिना द्यावापृथिव्यादेरन्वेष्टव्यत्वोक्तेरन्वितत्वेन ''किं तदत्रे''त्यादिवाक्यानु-रोधात् द्यावापृथिव्यादेरेव तथात्वपरमिति प्राप्ते पापाद्यप्रसक्त्या जडेऽपहतपाप्मत्वादेर-योगात्सजातीये जीवे तत्प्रसक्तिमात्रेण ब्रह्मणि तत्सम्भवात्तदनुरोधेन वाक्यस्यापि कथंचिद्ब्रह्मणि नेयत्वात्पूर्ववाक्यं ब्रह्मण एव सर्वाधारतया हृत्पद्मस्थत्वादिपरमिति ।

यद्वा ''यावान्वा अयमाकाश'' इत्येतद्वाक्यं प्रसिद्धाकाशपरमुत ब्रह्मपरमिति विशये प्रसिद्धाकाशस्य दहरवाक्ये हृत्पद्मस्थतामुक्त्वेत्यादि द्रष्टव्यम् । पूर्ववाक्यमित्यत्राप्युत्तरं वाक्यं ब्रह्मपरमित्यपि ध्येयम् । तत्र यावत् ''किं तदत्रे''त्यादिवाक्यं तदाद्यनेकपदार्थसंसर्गरूपस्वार्थं बोधयित्वा समभिव्याहृतपूर्ववाक्यमन्यार्थकमिति बोधयति ततःप्रागेव तत्समानाधिकरण-मपहतपाप्मत्वादिशब्दरूपं लिङ्गं व्याप्यं स्वार्थमुपस्थाप्य हृत्पद्मस्थं ब्रह्मेति निश्चाययतीति द्वितीयायामेव कक्ष्यायां निर्णीतत्वेन तृतीयकक्ष्यायां प्रवर्तमानं वाक्यं न तत्र पराक्रमत इत्यर्थः । इदं च ''समभिव्याहारमात्रेण वा ''इत्यस्योदाहरणम् । श्रुतियुक्तस्य तु यथाऽत्रैव ''मध्ये वामनमासीनं विश्वेदेवा उपासत'' इति वाक्यं ''ईशानो भूतभव्यस्ये''त्यादिवाक्यार्थ-

निर्णायकम्। यथा वा ''तमेवैकं जानथ आत्मान''मिति वाक्यं ''यस्मिन्द्यौ''रित्यादिपूर्व-वाक्यार्थनिर्णायकमित्यादि। लिङ्गयुक्तं तु ''स एष परोवरीया''नित्यादिवाक्यं पूर्ववाक्यार्थ-निर्णायकम्। यथा वा ''तदैक्षत बहुस्यां प्रजायेये''ति वाक्यं ''सदेव सोम्ये''त्यादिवाक्यार्थ-निर्णायकम्। स्वांतर्गतपदार्थनिर्णायकं तु ''गामानये''त्यादौ गोशब्दस्य पृथिव्यादिपरत्व-निरासेन पश्वर्थत्वनिर्णायकम्। यथा वा ''शब्दविशेषा''दित्यत्र ''एतमेव ब्रह्मेत्याचक्षत'' इति वाक्यं चतुर्मुखाद्यर्थत्वनिरासेन ब्रह्मशब्दस्य विष्ण्वर्थत्वनिर्णायकम्। यथा वा ''यं पृथिवी नवेदे''त्यादिवाक्यं पृथिव्यादिशब्दस्य चेतनार्थत्वनिर्णायकं ध्येयमिति भावः। यद्यपि स्वांतर्गतपदार्थनिर्णायकमपि वाक्यं तन्निर्णायकश्रुतिलिङ्गोपेतत्वेन वाऽऽकांक्षादिमत्पदसमभि-व्याहारमात्रेण वेत्यत्रापि द्वैविध्यं सम्भवति। ''अन्योंतर आत्माऽऽनंदमय'' इत्यादिवाक्यमा-नन्दमयादिपदार्थनिर्णायकात्मश्रुत्युपेतत्वेन ''यो वै भूमा तत्सुख''मित्यादिवाक्यं भूम्नो विष्णुत्वनिर्णायकपूर्णसुखोपेतत्वेन। समभिव्याहारमात्रेण तु ''गामानय एतमेव ब्रह्मेत्याचक्षेत'' इत्यादि। तथापि स्पष्टत्वात्स्वयमेवोहितुं शक्यमिति विशेषाभावाद्वा तन्नोक्तमिति ध्येयम्॥

नन्वनेकपदात्मके वाक्ये समभिव्याहृतानि पदान्येव स्वार्थविशिष्टसंसर्गं वा संसर्ग-विशिटस्वार्थानेव वा युगपद्बोधयन्ति। न तु पदार्थान् प्रतिपाद्यानंतरं तत्संसर्गं वाक्यार्थं बोधयन्ति। विरम्य व्यापारानुपपत्तेः। तथाच वाक्यमनेकपदार्थविशिष्टसंसर्गरूपं स्वार्थं बोधयित्वा तदन्वययोग्यं वाक्यान्तरार्थमनुमापयतीति लिङ्गवदेवाविप्रकर्षात्कथं ततो दौर्बल्यम्। न च पदैः पदार्थस्मृतौ जातायामनंतरं वाक्यार्थबोधस्ततस्तदन्वययोग्यवाक्यांतरार्थानुमितिरिति विप्रकर्ष इति वाच्यम्। पदकदम्बश्रवणवाक्यार्थबोधयोर्मध्ये पदार्थस्मृतेरेवानङ्गीकारात्। उक्तं च तर्कताण्डवे ''वाक्यस्थपदज्ञानान्वयानुभवयोर्मध्ये पदार्थस्मृतिरेव नास्ती''ति। उक्तं च सुधायामपि ''पदनिचयश्रवणवाक्यार्थबोधावांतरार्थस्मृतीनामेवानभ्युपगमा''दिति। न च पदनिचयरूपवाक्यश्रवणानंतरं सङ्केतस्मरणे सति पदार्थविशिष्टसंसर्गबोध इति विलम्बः। लिङ्गेऽपि सङ्केतस्मरणानन्तरमेव व्याप्यरूपस्वार्थबोध इति साम्यात्। किं चैकपदात्मकलिङ्गे झटिति स्वार्थबोधेऽप्यनेकपदात्मकलिङ्गेऽनेकपदार्थकथनद्वारा व्याप्यस्वरूपस्वार्थबोधेन विलम्बाद्वाक्यादविशेषः। एकपदात्मकेऽप्यवयवसमभिव्याहारसापेक्षत्वेन विलम्बाच्चेति

चेदुच्यते। वाक्यं स्वार्थं बोधयित्वा तस्याव्याप्यत्वाज्झटितिवाक्यान्तरार्थनिर्णयेऽसमर्थं तत्, स्वार्थान्वयायोग्यार्थपरत्वे समभिव्याहारानुपपत्तेरित्यन्यथानुपपत्तिसध्रीचीनमेव वाक्यांतरार्थं निर्णाययति । लिङ्गं तु नैवमिति विप्रकर्षसन्निकर्षौ । वाक्यद्वयानुसन्धानसापेक्षत्वाद्वाक्यस्य विप्रकर्षः । अनेकपदार्थकथनद्वारेत्युक्तिस्तु विशेषान्वयबोधेऽर्थविशेषोपस्थापकपदान्तरसमभिव्याहारसापेक्षत्वमात्रेण वा ''युक्तं चैकार्थत्वे''त्यादिवक्ष्यमाणरीत्या पदनिचयश्रवणविलम्बेनार्थप्रतीतेर्विलम्बितत्वाद्वा संसर्गज्ञानस्यानेकपदार्थपूर्वकत्वाद्वेति ॥ इदमेवेति ॥ ततश्च वाक्यस्येत्यादिनोक्तमेव बीजमित्यर्थः । ननु टीकायां ''लिङ्गवाक्ययोस्साक्षादसाक्षात्त्वेन भेदः । गोत्रभिदं प्रवक्षणा अभिनत्पर्वतानामित्यादिव''दिति पर्वतपक्षभेदकत्वरूपव्याप्यार्थकस्यैव वाक्यतयोदाहृतत्वात्कथमेतदेवाभिप्रेतमित्युक्तमित्यत आह ॥ गोत्रेति ॥ यथा लिङ्गयोरैकपदानेकपदात्मकयोस्साक्षात्त्वादिना भेदस्तथा लिङ्गवाक्ययोरपि व्याप्याव्याप्यार्पकत्वादिना भेदो ज्ञेयः । उदाहरणं तु किं तदत्रेत्यादिकमेवेति द्रष्टव्यमिति तात्पर्यमुक्तं भवति ॥

अत एवेति ॥ अन्यथा तद्यथेत्येवावक्ष्यदिति भावः । कुत एवं लिङ्गवाक्ये एवैते । वदित्यपि तद्यथेत्यर्थे व्याख्यायतामित्यत आह ॥ उक्तं हीति ॥ उत्तरत्रान्वयः ॥ अन्तरिति ॥ ''अंतस्समुद्रे मनसा चरन्तं यस्यांडकोशं शुष्ममाहु''रिति समुद्रस्थत्वब्रह्माण्डवीर्यत्वादिलिङ्गादित्युक्तेः । ''अत एवप्राण'' इत्यत्र ''श्रीश्चते लक्ष्मीश्च पत्न्या''विति श्रीलक्ष्मीपतित्वस्य, ''जीवमुख्यप्राणे''त्यत्र ''तावंति शतसंवत्सरस्याह्नां सहस्राणी''ति शतायुष्ट्वस्य, ''ता अहिंसंताहमुक्थमस्म्यहमुक्थमस्मी''त्यादिप्राणसंवादादिलिङ्गस्य, ''तथाहि दृष्टं लिङ्गं चे''त्यत्र ''अरश्च हवै ण्यश्चार्णवौ ब्रह्मलोक'' इति सुधासमुद्राश्रयलोकवत्त्वादिलिङ्गस्य चोक्तेरिति भावः । नन्वेवमपि लोकेऽऽर्थान्तरानुमापकव्याप्यार्पकमपि वाक्यमुपलभ्यत इत्यव्याप्यभूतानेकार्थानुमापकत्वेन वाक्याप्राबल्योक्तिरयुक्तेत्याशंक्याह ॥ यद्यपीति ॥ विप्रस्य संध्यामुपास्स्वेति चोरस्य स्तेयार्थमुद्युङ्क्ष्वेति पांथस्य पंथानं न व्रजेति कामिन्याः कांतप्रलोभने प्रवर्तस्वेत्यादिरादिपदार्थः । सवित्रस्तमयस्य तद्व्याप्यत्वादिति भावः ।

**पाण्डुरङ्गि** – भवद्भिश्चानेकपदात्मकस्यापि लिङ्गत्वाभिधानादित्यत आह ॥ अत्रापीति ॥ अनेकपदात्मकस्यापि लिङ्गत्वे टीकाकारीयं ज्ञापकमाह ॥ अत एवेति ॥ ननु

तद्यथेत्यादिवद्वत्करणस्योदाहरणार्थत्वस्यापि संभवेन कथमेतदित्यतोऽनेकपदात्मकस्यापि लिङ्गत्वे ज्ञापकमाह ।। उक्तं हीति ।। एकप्रमेयप्रतिपादकेति प्रकरणलक्षणम् ।

## तात्पर्यचन्द्रिका

उक्तं हि सुधायां ''वाक्यलिङ्गानुमाहिसे''ति । तथापि वाक्यांतरार्थावसितावलिङ्गत्वान्न तदिहोदाहरणम् । उक्तं ह्यनुव्याख्याने-

आगमार्थावसित्यर्था नियतव्याप्तयोऽखिलाः ।
वाक्यं प्रकरणं स्थानं समाख्याच तथाविधा ।। इति ।

एकार्थतात्पर्ययुक्तानेकवाक्यसन्दर्भरूपप्रकरणस्य तु बह्वर्थपरत्वेनानेकावान्तरवाक्यार्थधीपूर्वकमिदं प्रकरणमेतत्परमिति यज्ज्ञानं तत्पूर्वकं प्रकरणान्तर्गतविप्रतिपन्नवाक्यस्यापि प्रकरणानुगुण एवार्थ इत्यनेकवाक्यार्थधीद्वारा लिङ्गत्वाद्वाक्याद्दुर्बलत्वम् । यथा ''ज्योतिर्दर्शना''दित्यत्र ''किं ज्योतिरयं पुरुषः आदित्येनैवायंज्योतिषाऽऽस्त'' इत्यादिजीवप्रकरणस्य प्रसिद्धजीवपरत्वेऽनुपपन्नात् ''कतम आत्मे''त्यादि प्रश्नवाक्यात् । अत एव तत्र टीका ''कतम आत्मेति प्रश्नायोगा''दिति ।

यद्वाऽत्र टीकायां वत्करणस्य तद्यथेत्यादिवदुदाहरणार्थत्वाट्टीकास्वारस्यानुसारेण व्याप्यार्पकं पदं लिङ्गं तदर्पकाणिनिराकांक्षपदानि वाक्यम् । युक्तं चैकार्थत्वेऽपि एकः कर्ता वर्तमाने काले स्वार्थं पाकक्रियां निर्वर्तयति पचते इत्यनयोर्मध्ये एक इत्यादिवाक्यात्पचत इति पदस्येव झटिति बोधकस्य लिङ्गस्य वाक्यात्प्राबल्यम् । यथा ''तल्लिङ्गा''दित्यत्र वाय्वादिभूतकारणत्वरूपभूताकाशलिङ्गार्पकात् ''सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्त'' इति वाक्यादनन्तत्वलिङ्गस्य । अस्मिन्पक्षे वाक्यस्य प्रकरणात्प्राबल्ये ''ज्योतिश्चरणे''त्यत्राग्निसूक्तात् ''विमे कर्णा पतयत'' इत्यादिवाक्यमुदाहार्यम् । सूत्रादौ वाक्योक्तेऽपि व्याप्ये लिङ्गत्वोक्तिस्तु बोधकस्य शब्दस्य वाक्यत्वेपि बोध्यस्य समुद्रशायित्वलक्ष्मीपतित्वादेर्व्याप्यत्वमभिप्रेत्यावान्तर-

भेदाविवक्षया युक्ता । एकार्थपरानेकप्रकरणसन्दर्भरूपस्थानस्य तु अतिबह्वर्थकथकत्वेनानेकप्रकरणार्थधीपूर्वकमिदं स्थानमेतत्परमिति यज्ज्ञानं तत्पूर्वकं स्थानान्तर्गतविप्रतिपन्नवाक्यस्यापि स्थानानुगुण एवार्थ इत्यनेकप्रकरणार्थधीद्वारा लिङ्गत्वात् प्रकरणाद्दुर्बलत्वम् । यथा षट्प्रश्नोपनिषद्रूपस्येश्वरपरस्य स्थानस्य ''भगवन्कुत एष प्राणोऽजायत'' इत्यादिखण्डरूपान्मुख्यप्राणप्रकरणात् । अत एव तत्खण्डमध्यस्थं ''एवमेवैष प्राण'' इत्यादिकं स्थानबाधेन प्रकरणान्मुख्यप्राणपरम् । अत एवात्र तत्रोक्तप्राणव्यवस्थापकत्वादीनां मुख्यप्राणलिङ्गत्वमुपेत्य श्रुत्या बाध उक्तः । यथाचाकांक्षादिमद्वाक्यसंघरूपप्रकरणस्य वाक्याद्भेदः तथाऽकांक्षादिमत्प्रकरणसङ्घरूपस्य स्थानस्यापि प्रकरणाद्भेदः ।

निर्णीतस्थले समानोक्तिः समाख्या । साचार्थतः शब्दतश्चेति द्वेधा । तत्राद्या वैश्वानरस्य विष्णुत्वे पुरुषसूक्तसमाख्या । द्वितीया विश्वकर्मसूक्तोक्तस्याजस्य विष्णुत्वे अम्भ्रणीसूक्तसमाख्या । अस्याः स्वार्थे शब्दरूपत्वेऽप्यत्रोक्तमेव स्थलान्तरस्थविप्रतिपन्नवाक्येनापि बोध्यमित्यत्र स्थलद्वयानुसन्धानपूर्वकं तत्सदृशत्वादिदं तदर्थपरमित्येवं सादृश्यमात्रेण लिङ्गत्वात्स्थानाद्दुर्बलता । यथा ''सैषा भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिते''ति श्रुत्या ब्रह्मपरानेकप्रकरणसन्दर्भरूपभृगुवल्लीस्थानात् ''अन्नमयप्राणमयमनोमय विज्ञानमयानन्दमया मे शुध्यंता''मिति कोशपरसमाख्यायाः ।

**प्रकाशिका** – उक्तं हीति ॥ आनुमानिकपादे शब्दवृत्तिचिन्ताप्रस्तावे ''व्यञ्जनं नाम परावृत्तिरस्तीति चेन्न । अनुमानत्वेन शब्दशक्तित्वानङ्गीकारात् । यथोक्तम् । वचनलिङ्गानुमा हि सेती''ति कर्मनिर्णयवाक्यमुदाहृत्यानुमानत्वमुक्तमित्यर्थः ॥ वाक्यान्तरेति ॥ वाक्यान्तरार्थावसायकवाक्यमिहाभिप्रेतम् । तच्चोक्तरूपमेवेति न दोष इति भावः ॥ उक्तं हीति ॥ भक्तिपादे ''संध्ये सृष्टिराहहि'' इत्यधिकरणव्याख्यावसर उक्तमित्यर्थः । अखिला उपक्रमादयः नियतव्याप्तयः यो यत्रोपक्रम्यते स तत्र प्रतिपाद्यत इत्यादिरूपां व्याप्तिमपेक्षमाणा आगमार्थावसित्यर्था इत्यर्थः । तथाविधा व्याप्तिमपेक्ष्यागमावसित्यर्थेत्यर्थः । एवं वाक्यस्य दौर्बल्यं तद्बीजं चोपपाद्येदानीं ''एकप्रमेयप्रतिपादकानेकवाक्यानि प्रकरण''मिति टीकाविवरणपूर्वं ''प्रकरणस्य

बह्वर्थपरत्वेनार्थानुमितिहेतुत्वात्तदवमते''ति टीकावाक्यं च व्यनक्ति ॥ एकेति ॥ भिन्नतात्पर्यकवाक्यसन्दर्भेऽतिव्याप्तिवारणायैतद्विशेषणम् । बह्वर्थपरत्वेन निमित्तेन यान्यनेकान्यवान्तरवाक्यानि तदर्थधीपूर्वकमित्यर्थः ॥ यथेति ॥ वक्ष्यते चैतदधिकरणशरीरम् । तत्र ''किं ज्योतिरयं पुरुष'' इति प्रकरणं ''यावदुभौ लोकावनुसंचरति इमं लोकमभिक्रामत्युत्क्रमिष्यन् म्रियमाण'' इत्यादिजीवसाधारणलिङ्गप्रतिपादकानेकावान्तरवाक्यार्थधीमतः प्रकरणमेतज्जीवपरमिति जानतः ''योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योति''रिति वाक्यस्य जीवपरत्वं बोधयति ततःप्रागेव ''कतम आत्मे''ति ''आत्मनैव ज्योतिषाऽऽस्त'' इति पूर्वोक्तात्मस्वरूपप्रश्नवाक्यं स्वार्थप्रतिपादनद्वारा समभिव्याहारेण तद्वाक्यं विष्णुपरमिति बोधयतीति द्वितीयकक्ष्यायामेव वाक्यार्थनिर्णायकतृतीयकक्ष्यायां प्रवर्तमानं प्रकरणं न कल्पयितुं क्षमत इति वाक्याद्दुर्बलत्वं तस्येत्यर्थः । यद्यपि महाप्रकरणमवान्तरप्रकरणमिति च प्रकरणेऽपि द्वैविध्यं भाति । यथा ''नैवेह किंचनाग्र आसी''दिति विष्णुपरे महाप्रकरणे ''स एष प्राणस्त्रेधा विहित'' इति प्राणावान्तरप्रकरणेन ''तस्य प्राची दिक्शिर'' इत्यादिनोच्यमानं कूर्मरूपं प्राणस्येत्युच्यते । वाक्ये तु महावाक्यमवान्तरवाक्यमिति विधा न सम्भवति । महावाक्यस्यानेकवाक्यसन्दर्भरूपतया प्रकरण एवान्तर्भाव सम्भवात् ।

न चैवं महाप्रकरणं स्थानमेवेति वाच्यम् । अनेकप्रकरणसन्दर्भशून्येऽपि ब्रह्मप्रकरणेऽन्यावान्तरप्रकरणसत्त्वात् । तथा च तयोर्विरोधे सन्निकर्षादिसम्भवादवान्तरप्रकरणं बलवदित्यपि वक्तुं शक्यम् । तथापि स्पष्टत्वान्नोक्तमित्याहुः । यत्तु वाक्य इव प्रकरणेऽपि स्वान्तर्गतपदार्थनिर्णायकं तादृशवाक्यार्थनिर्णायकं चेत्यपि विधा सम्भवति । आद्यं यथा ''अदितेरदितित्व''मित्यदितिपदार्थनिर्णायकं ''नैवेह किं चने''ति ब्रह्मप्रकरणम् । द्वितीयं तु ''यस्मिन्द्यौ''रित्यादिवाक्यार्थनिर्णायकं ''द्वे विद्ये वेदितव्ये'' इत्यादि । प्रकरणं समभिव्याहृतप्रकरणान्तरार्थनिर्णायकमिति तु विधा न सम्भवति । प्रकरणस्य प्रकरणान्तरार्थानिर्णायकत्वादिति । तन्न । वाक्यार्थनिर्णयेनैव तस्य लाभात् । न हि पदार्थनिर्णयं विना वाक्यार्थनिर्णयस्समस्ति । एवं स्थानेपि द्रष्टव्यम् । एवं लिङ्गवाक्ययोर्बलाबलत्वे टीकास्वारस्यानुरोधेन बीजान्तरं वक्तुं प्रकारान्तरेण तत्स्वरूपमाह ॥ यद्वेति ॥ ननूभयोरपि व्याप्यार्पकत्वे कथं प्राबल्यादीत्यत आह ॥ युक्तं चेति ॥ एक इत्येकवचनार्थः । कर्तेति

लकारार्थः । वर्तमानेति लडर्थः । एकस्यैव लकारत्वलट्त्वरूपधर्मभेदेनार्थभेदात् । स्वार्थमित्यात्मनेपदार्थः । पाकेति प्रकृत्यर्थः । निर्वर्तयतीत्याख्यातार्थः । नन्वेवं ''कतम आत्मे''ति प्रश्नवाक्यस्य व्याप्यार्पकत्वाभावाद्वाक्यप्राबल्येनेदमुदाहरणमित्यत आह ॥ अस्मिन्निति ॥ सूक्तस्याग्निप्रकरणत्वात् ''विमे कर्णे''ति वाक्यस्य कर्णादिविदूरत्वरूप-व्याप्यार्पकत्वादिति भावः । एतेनायं पक्षः प्रागेव तत्प्रस्तावे कस्मान्नावतारित इति निरस्तम् । प्रकरणदौर्बल्यज्ञानेऽपि वाक्यस्वरूपस्य ज्ञातव्यत्वादिति । प्रागुदाहृतसूत्रभाष्यादौ लिङ्गत्वोक्तेर्गतिमाह ॥ सूत्रेति ॥ ''अनेकप्रमेयप्रतिपादकमेकार्थे तात्पर्ययुक्तं स्थान''मिति लक्षणटीकां विवृण्वन् ''स्थानस्यातिबह्वर्थकथनेनाभिप्रायतोऽर्थानुमितिजनकस्य ततोऽपि दौर्बल्य''मिति टीकावाक्योक्तं दौर्बल्यबीजं व्यनक्ति ॥ एकार्थेति ॥ प्रकरणार्थधीपूर्वकमिति ॥ तदभावे स्थानस्य तत्परत्वबुद्धेरयोगादिति भावः ॥

यथेति ॥ उपनिषद्रूपं स्थानं यावत्'' ''प्रजाकामो ह वै प्रजापति''रित्यादिस्रष्टृत्वादि-भगवन्महिमप्रतिपादकान्यनेकप्रकरणानि तदन्तस्स्थविष्णुलिङ्गबोधकनानावाक्यार्थालोचनपूर्वं ब्रह्मपराणीति विज्ञाय ''सुकेशा भारद्वाजः प्रजाकाम'' इत्यारभ्य ''नमः परमऋषिभ्य'' इत्यंतं स्थानं विष्णुपरमिति जानत ''एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्त'' इति तृतीयप्रश्नस्थं वाक्यं स्थानानुगुणतया विष्णुपरमिति बोधं जनयति ततः प्रागेव ''आत्मत एष प्राणो जायते । यथेषा पुरुषेच्छाया एतंस्मिन्नेतदाततं''मित्यारभ्य

उत्पत्तिमायतिं स्थानं विभुत्वं चैवपञ्चधा ।
अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते ॥

इत्यंतं प्रकरणं विष्णुजत्वादिलिङ्गप्राणश्रुत्युपेतावांतरनानावाक्यार्थधीपूर्वं प्रकरणं वायुपरमिति जानतः तदनुगुणतया ''एवमेवैषप्राण'' इति वाक्यं वायुपरमिति बुद्धिमुत्पाद-यतीति तृतीयकक्ष्यायामेव प्रकरणेन निर्णये चतुर्थकक्ष्यायां प्रवर्तमानं स्थानं निराकांक्षत्वान्न प्रभवति निर्णाययितुमित्यर्थः । लिङ्गवाक्ययोर्व्याप्यार्पकत्वाविशेषेऽपि टीकोक्तं भेदमुपपाद्य तदुपलक्षणमिति भावेन स्थानप्रकरणयोरपि स्वयमाह ॥ यथाचेति ॥ अनुवादमहिम्ना वाक्यप्रकरणयोरपि भेदस्स्पष्ट इत्युक्तं भवति । उक्तरीत्या सन्निकर्षविप्रकर्षयोरानु-भाविकत्वादिति भावः । ''समानोक्तिस्समाख्ये''ति टीकोक्तेः पक्षसमेऽतिव्याप्तिवारणाय

तदाशयव्यक्तिपूर्वं तदवान्तरविभागमाह ।। निर्णीतेति ।। तत्राद्येति ।। ''शब्दादिभ्योंतः प्रतिष्ठाना''दिति सूत्रे ''पुरुषविधमपि चैनमधीयत'' इत्यनेन यः पुरुषाख्यो विष्णुःपुरुषसूक्ते ''शीर्ष्णो द्यौस्समवर्तत, चक्षोस्सूर्यो अजायत, प्राणाद्वायुरजायत, पद्भ्यांभूमि''रित्यादिना वाक्येन द्व्यादिजनकशीर्षादिमानभिहितः तद्विधमेवात्र वैश्वानरं चाधीयते छन्दोगाः ''मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा पृथिव्येव पादा''वित्यादिना वाक्येनेत्युक्तत्वेन तत्र शब्दतस्साम्याभावेऽप्यर्थतः समानत्वात्समाख्यात्वं युक्तमित्यर्थः ।। द्वितीयेति ।। ''परोदिवा पर एना पृथिव्यापरोदेवेभिरसुरैर्यदस्ती''त्यनेन विश्वकर्मसूक्तोक्तेन सूक्तांतरे ''परोदिवापर एना पृथिव्यै तावती महिना सम्बभूवे''ति समाख्यानाच्च विष्णुरेव विश्वकर्मसूक्तोक्त इत्याद्यसूत्रे भाष्यादावुक्तत्वेन शब्दत एव तत्र साम्यस्य सत्त्वादित्यर्थः । ''समाख्यायास्स्थानान्तर-गतायास्साहश्यमात्रेणार्थानुमापकत्वात्ततोपि दुर्बलत्व''मिति वाक्यं सैषेति । श्रुत्यैव परमे व्योम्नि ब्रह्मणि इयं विद्या प्रतिष्ठितेत्युक्तत्वादित्यर्थः । एतेन ब्रह्मवल्लीस्थानादिति वक्तव्ये भृगुवल्लीस्थानादित्युक्तिः किमर्था । तत्रान्नमयादेस्स्पष्टमुक्तेः । सुधायां तत्रैवान्नमयप्राण-मयमनोमयविज्ञानमयानन्दमया मे शुध्यंतामिति श्रुत्यंतरानुगुण्यं स्यादित्युक्तेरिति चोद्यं निरस्तम् । अस्येव तस्य ब्रह्मणि विनियोजकवाक्यस्याभावेन ब्रह्मपरत्वस्यास्पष्टत्वादिति । केचित्तु ब्रह्मवल्ल्युक्तान्नमयादयो भृगुवल्लीस्थानाद् ब्रह्मपरा उत कोशसमाख्यानात्कोशपरा वेति सन्देहे समाख्यातः प्रबलाद्भृगुवल्लीस्थानाद्ब्रह्मपरा इत्यर्थ इत्याहुः । तच्चिंत्यम् । स्थानस्य स्वांतर्गतवाक्यार्थनिर्णायकत्वेन स्थानांतरगतानिर्णायकत्वात् । अत एव प्राक् स्वांतर्गतेत्युक्तम् । अन्यथा स्थानद्वयानुसन्धानविलम्बाविशेषात्समाख्यातः प्राबल्यहानिस्स्यात् । स्थानांतर-स्थनिर्णये बीजाभावाच्चेति ।

**पाण्डुरङ्गि** – अत्रैकप्रमेयप्रतिपादकत्वे पर्यायत्वापत्त्या व्याख्याति ।। एकार्थेति ।। अत एवेति ।। वाक्यात्प्रकरणस्य दौर्बल्यस्य टीकायामभिप्रेतत्वादेवेत्यर्थः । नन्वेवमनेक-पदात्मकस्यापि लिङ्गत्वेऽनेकपदात्मकस्य लिङ्गस्याप्यव्याप्यभूतानेकार्थकथनद्वारा व्याप्य-समर्पकत्वाविशेषात्ताद्दशवाक्यस्य ताद्दशलिङ्गाद्दौर्बल्यं स्यादित्यरुचेराह ।। यद्वेति ।। व्याप्यार्पकमिति ।। अव्यवधानेनेति शेषः ।। तदर्पकाणीति ।। व्यवधानेनेति शेषः ।

नन्वेवमुभयोरपि व्याप्यार्पकत्वाविशेषे लिङ्गस्याव्यवधानेन वाक्यस्य व्यवधानेन व्याप्यार्पकत्वमिति कथमुच्यत इत्यत आह ॥ युक्तं चेति ॥ अस्मिन्पक्षे वाक्यापेक्षया लिङ्गस्य प्राबल्ये किं तदत्र विद्यत इति वाक्यस्यापि हृत्पद्मस्थत्वादिलिङ्गापेक्षया दौर्बल्यमित्युदाहरणं युज्यते । तस्य व्याप्यार्पकत्वाभावेन वाक्यत्वाभावादत उदाहरणान्तरमाह ॥ यथेति ॥ व्याप्यार्पकाणि निराकाङ्क्षपदानि वाक्यमित्यस्मिन्पक्षे वाक्यस्य प्रकरणापेक्षया प्राबल्य उदाहरणतयोक्तं किं ज्योतिरयं पुरुष इत्यादि जीवप्रकरणात् आत्मत एष प्राण इति वाक्यस्य प्राबल्यम् । तन्नोपपद्यते । आत्मत एष प्राणो जायत इत्युदाहृतस्य व्याप्यार्पकत्वाभावादित्यत आह ॥ अस्मिन्पक्ष इति ॥ नन्वेवमनेकपदात्मकस्य लिङ्गत्वाभावे श्रीलक्ष्मीपतित्वादेरनेकपदात्मकत्वेन लिङ्गत्वाभावापत्त्या लिङ्गत्वेन सूत्रोक्तिरयुक्तेत्यत आह ॥ सूत्रादाविति ॥ स्थानप्रकरणयोर्भेदमुपपादयति ॥ यथाचेति ॥ समानोक्तिस्समाख्येति टीकायामुक्तम् । तत्र सन्दिग्धसमानोक्तेः समाख्यात्वं स्यादतो व्याचष्टे ॥ निर्णीतेति ॥ श्रुतित्वेन चेत्यत्रैवकारेण श्रुतेर्लिङ्गत्वस्य न व्यावृत्तिः । किं तु लिङ्गान्तरसमर्पकत्वमेव व्यावर्त्यत इति बोध्यं श्रुतिलिङ्गवाक्यानां साक्षाद्विप्रतिपन्नार्थनिष्ठत्वे श्रुत्यादित्वेनैव ज्ञापकत्वमिति टीकायामुक्तम् । तत्रोदाहरणं दर्शयितुमनुवदति ॥ तत्रेत्यादि ॥

## तात्पर्यचन्द्रिका

**अत्र च श्रुतिः स्वनिर्णये श्रुतित्वेनैव निर्णायिका । वाक्यादितु अनुमानत्वेन । अत एव ''वाक्यं प्रकरणं स्थानं समाख्याच तथाविधे''त्यनुव्याख्याने ''समाख्यावाक्यप्रकरणस्थानानि चोपपत्तिविशेषा'' इति प्रमाणलक्षणे च वाक्यादीनामेव लिङ्गतोक्ता । न तु श्रुतेः । लिङ्गस्य त्वनुमानत्वमविप्रतिपन्नमिति न लिङ्गं तत्रोक्तम् । तत्र श्रुतिलिङ्गवाक्यानां साक्षाद्विप्रतिपन्नार्थनिष्ठत्वे श्रुत्यादित्वेनैव ज्ञापकत्वम् । यथाऽत्रैव सर्वदेवोपास्यरूपविप्रतिपन्नार्थनिष्ठवामनश्रुतेः । यथा च विप्रतिपन्नाकाशनिष्ठस्यानंतत्वादिलिङ्गस्य । यथा च विप्रतिपन्नांतर्यामिनिष्ठस्य ''यं पृथिवी न वेदे''त्यादिवाक्यस्य । श्रुत्यादेर्विप्रतिपन्नार्थनिष्ठत्वं विनोपक्रमोपसंहारयोः श्रुतत्वे**

तन्निश्चायकतया लिङ्गत्वम् । यथा ''वैश्वानर'' इत्यत्र ''को न आत्मा किं ब्रह्मे''त्युपक्रमस्थब्रह्मश्रुत्यादेः । यथा च ''प्रथमेऽश्रवणादिति चेन्नता एव ह्युपपत्ते''रित्यत्र ''इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती''त्युपसंहारस्थात् श्रुत्यादेः । साक्षाद्विप्रतिपन्नार्थनिष्ठत्वं विनोपक्रमोपसंहाराभ्यामन्यत्र श्रुतत्वे तु प्रकरणनिश्चायकतया लिङ्गत्वम् । यथा ''प्राणस्तथे''त्यत्र ''ब्रह्मेमं पुरुष''मिति ब्रह्मश्रुत्यादेः । उपक्रमोपसंहारावपि श्रुत्यादिनाऽर्थे निर्णीते तात्पर्यातिशयलिङ्गे । यथा ''अत्ता चराचरे''त्यत्रात्तुर्ब्रह्मत्वे सर्वात्तृत्वादिना निर्णीते ''नैवेह किंचनाग्र आसी''दित्युपक्रमः । यथा च ''सर्वत्र प्रसिद्धे''त्यत्र सर्वगतस्य ब्रह्मत्वे ब्रह्मशब्दादिना निर्णीते ''स योऽतोऽश्रुत'' इत्याद्युपसंहारः । अन्यथा तु प्रकरणनिश्चायकौ । यथा द्युभ्वाद्यधिकरणे ''प्रकरणा''दित्यत्र ''द्वे विद्ये वेदितव्ये'' इति परमेश्वरोपक्रमः ''अन्यमीश''मित्यत्रापि तस्यैव प्रकृतत्वनिश्चायकः । यथा चानुमानिकाधिकरणे ''प्रकरणा''दित्यत्र ''तद्विष्णोःपरमं पद''मित्युपसंहारः ''अनाद्यनंतं महतःपर''मित्यादेर्विष्णुप्रकरणत्वनिश्चायकः ।

समाख्यापि साक्षाद्विप्रतिपन्नार्थनिष्ठा समाख्यात्वेनैव लिङ्गम् । यथा ''पुरुषविधमपि चैन''मित्यत्र ''शीर्ष्णो द्यौः समवर्तत चक्षोःसूर्यो अजायते''ति पुरुषसूक्तोक्तिसमानायाः साक्षाद्विप्रतिपन्नवैश्वानरनिष्ठायाः वैश्वानरस्य ''मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः'' इत्याद्युक्तेः । अन्यथा प्रकरणनिश्चायकत्वेन । यथा ''परोदिवापर एनापृथिव्यैतावती''त्यंभ्रणीसूक्तोक्तिसमानायाः ''अजस्य नाभा''विति विप्रतिपन्नाजे साक्षादश्रुतायाः ''परोदिवा पर एना पृथिव्या परो देवेभि''रित्याद्युक्तेरिति । मीमांसकोक्तं श्रुत्यादिलक्षणं तद्बलाबलबीजं चान्यत्र निरस्तम् ॥ टीकाक्षरार्थस्तु ॥ कथनवैयर्थ्यादिति ॥ अङ्गुष्ठवद्व्यक्तिविशेषनिर्धारणं विना यत्किंचिदङ्गुष्ठमात्रत्वेनोपासनाया असम्भवात्कथनं व्यर्थमित्यर्थः ॥ असम्भवाच्चेति ॥ पिपीलिकाहृदयस्थे अङ्गुष्ठमात्रत्वसामान्यस्यैवासम्भवादित्यर्थः । पूर्वं सौत्रस्तुशब्दो ''हृद्यवकाशापेक्षये''ति भाष्यानुसारादेवार्थो व्याख्यातः । इदानीं

''अङ्गुष्ठाभावेपी''ति भाष्यानुसारादप्यर्थतया व्याचष्टे तुशब्दोऽपिशब्दार्थ इति ॥ वामनाधिकरणम् ॥ ७ ॥

**प्रकाशिका** – ''श्रुतिलिङ्गवाक्यानां साक्षाद्विप्रतिपन्नार्थनिष्ठत्वे श्रुत्यादित्वेनैव ज्ञापकत्व'' मित्यादिटीकां विवरिष्यञ्छ्रुत्यादेर्वैलक्षण्यमाह ॥ अत्रचेति ॥ तत्रोक्तमिति ॥ अनुव्याख्यानादावुक्तमित्यर्थः । इदानीं टीकां विवृणोति ॥ तत्रेति ॥ क्रमेण त्रयाणामुदाहरणमाह ॥ यथेति ॥ श्रुतेरित्यादेर्ज्ञापकत्वमिति योज्यम् । इत्यादिवाक्यस्येति ॥ एतच्च व्याप्यार्पकं पदं लिङ्गं तदर्पकाणि निराकाङ्क्षाणि पदानि वाक्यमिति पक्षे । तेन तत्र टीकादौ लिङ्गत्वोक्तिविरोधो न शङ्क्यः । प्रागुक्तसमाधानादिति ध्येयम् । उपक्रमोपसंहार-योश्श्रुतत्वे तन्निश्चायकतया लिङ्गत्वमिति टीकावाक्यं सोदाहरणं व्यनक्ति ॥ श्रुत्यादेरिति ॥ उपक्रमनिश्चायकमुदाहरति ॥ यथेति ॥ ''तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयत'' इति गुणसूत्रे ''को न आत्मा किं ब्रह्मेत्यारम्भाच्चान्येषामसम्भवाद्विष्णुरेव वैश्वानर'' इति भाष्यादावसम्भवशब्दव्याख्यायां तथोक्तत्वादिति भावः । उपसंहरन्निश्चायक-मुदाहरति ॥ यथाचेति ॥ वैराग्यपादे पञ्चमेऽधिकरणे भूतानि किं जीवेन सह गच्छन्ति नवेति सन्देहे वाजसनेयेऽष्टमेऽध्याये ''तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती''त्युक्त्वा तस्य श्रद्धयेष्टवतश्श्रद्धासहितस्यैव व्याख्ये प्रथमाग्नौ होमश्रवणाद्भूतानामपि सहगतौ तथोक्तिप्रसङ्गान्न सह गच्छन्तीति प्राप्ते उपसंहारे ''इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती''त्यापां जीवेन सह गतिश्रवणात्तदनुसारेणोपक्रमे श्रद्धाशब्दस्याजहल्लक्षणया श्रद्धयाद्भिश्च युक्तो जीवोऽर्थ इति कल्पनोपपत्तेस्सह गच्छन्तीति सिद्धान्तितमिति तत्रोपसंहारस्याप्यरत्वमपृश्रुत्या सिद्धमित्यर्थः । अन्यत्र चेत्प्रकरणनिश्चायकत्वेनेति टीकावाक्यं व्यनक्ति ॥ साक्षादिति ॥ यथेति ॥ अत एव तत्र तच्छ्रुतिलिङ्गानामस्मिन् प्रकरणे बहुस्थलेष्वनुगमादित्यवादिष्मेति भावः ।

''उपक्रमोप संहारावपि श्रुत्यादिना सत्यामर्थसिद्धौ तात्पर्यलिङ्गे । अन्यथा प्रकरण-निश्चायका''विति टीकां विवृणोति ॥ उपक्रमेति ॥ क्रमेण द्वयमप्युदाहरति ॥ यथेति ॥ व्यक्तमेतत्तत्रैव ''प्रकरणाच्चे''ति गुणसूत्रे ॥ यथाचेति ॥ व्यक्तमेतत् ''विवक्षितगुणोप-पत्तेश्चे''ति गुणसूत्रे । विवक्षितत्वं वक्ष्यमाणत्वमिति स्वयं व्याख्यानात् । द्वयोरपि क्रमेणोदाहरणमाह ॥ यथाद्युभ्वादीति ॥ अन्यमीशमिति ॥ ''भेदव्यपदेशा''दिति

पूर्वसूत्रोदाहरण इत्यर्थः । अत एव तत्र टीकायां नन्वत्र जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते न परमात्मन इति शङ्कानिरासकत्वेन प्रकरणादिति सूत्रमवतारितमिति भावः ।। यथा चेति ।। वक्ष्यति चैतत्तत्रैव । ''समाख्यापि साक्षाद्विप्रतिपन्नार्थनिष्ठा समाख्यात्वेनैव लिङ्गमन्यथा प्रकरणनिश्चायकत्वेने''ति टीकां व्यनक्ति ।। समाख्यापीति ।। अन्यत्रेति ।। तर्कताण्डवे द्वितीयपरिच्छेदान्ते । तथा च न तद्विरोधः शङ्क्यः । तस्य दुष्टत्वादिति भावः । हृदीति गुणसूत्रे टीकायामङ्गुष्ठमात्रत्वं ''किं तत्तदङ्गुष्ठमात्रत्वं वा यत्किंचिदङ्गुष्ठमात्रत्वं वा । न द्वितीयः । कथनवैयर्थ्यादसम्भवाच्चे''त्युक्तम् । तद्दुर्गमत्वाद्व्यनक्ति ।। कथनेति ।। ''तुशब्दः परिच्छिन्नतयाङ्गुष्ठमात्रत्वनिवृत्त्यर्थमेवार्थ'' इत्यस्य, ''तुशब्दोऽपिशब्दार्थ'' इत्यस्य च विरोधं परिहरति ।। पूर्वमिति ।। वामनाधिकरणम् ।। ७ ।।

**पाण्डुरङ्गि** – उपक्रमोपसंहारयोः श्रुतत्वे तन्निश्चायकतया लिङ्गत्वमिति टीकायां यत्र साक्षाद्विप्रतिपन्नार्थनिष्ठत्वं वर्तते उपक्रमोपसंहारयोरपि श्रुतत्वं वर्तते तत्रापि श्रुतिलिङ्गवाक्यानामुपक्रमोप संहारनिश्चायकत्वमित्येव भातीत्यतस्तस्यां टीकायां साक्षाद्विप्रतिपन्नार्थनिष्ठत्वं विनेति शेषं सम्पूर्य तत्रोदाहरणं दर्शयितुमाह ।। श्रुत्यादेरिति ।। अन्यत्र चेत्प्रकरणनिश्चायकत्वेनेत्यत्रान्यत्रेत्येतन्न सङ्कोचनीयमित्याह ।। साक्षाद्विप्रतिपन्नार्थनिष्ठत्वं विनेति ।। उपक्रमोपसंहारावपीत्यादि टीकायामुक्तम् । तच्चोदाहरणपूर्वकमनुवदति ।। उपक्रमेत्यादि ।। अन्यथा प्रकरणनिश्चायकावित्येतत्सोदाहरणमाह ।। अन्यथेत्यादि ।। समाख्यापीत्यादि टीकायामुक्तम् । तत्सोदाहरणं प्रदर्शयति ।। समाख्यापीत्यादि ।। अन्यथा प्रकरणे निश्चायकत्वेनेति टीकायामुक्तम् । तत्कुत्रेति न प्रतीयते । अत उदाहरणमाह ।। अन्यथेत्यादि ।। वामनाधिकरणम् ।। ७ ।।

## देवताधिकरणम्

**ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ ।। यद्यपि तृतीयेऽध्याये ''असार्वत्रिकी'' त्यादावधिकारचिन्ताऽस्ति । तथापि पूर्वाधिकरणस्थमनुष्यग्रहणस्य विशिष्टबुद्ध्यादिहीनं तिर्यगाद्येव व्यावर्त्यं न तु देवादीत्यनेन रूपेणेयं चिन्ता न तृतीये सङ्गता । किं**

त्वत्रैव । यथा पश्वेकत्वादिशेषत्वचिन्ता शेषत्वरूपेण तृतीये सङ्गताप्यौपादानिकत्वरूपेण चतुर्थ एव सङ्गता । यथा च ''भोक्त्रापत्ते''रिति मुक्तेशयोर्भेदसमर्थनं फलविचाररूपेण चतुर्थे सङ्गतमपि युक्तिविरोधपरिहाररूपेण द्वितीये सङ्गतं तद्वत् । न चेह तृतीयेऽधिकारः प्रतिपाद्यः । येन साक्षादध्यायसङ्गतिलोभादियं चिन्ता तत्र स्यात् । किं त्वत्र समन्वय इव तत्रापि साधनमेव प्रतिपाद्यमिति प्रसङ्गादत्रैव युक्ता । अवान्तरसङ्गतिस्तु पूर्वोक्तस्य मनुष्यपदस्येह व्यावर्त्योक्तेर्वा सर्वदेवोपास्यत्वस्याक्षेपेण पूर्वपक्षोत्थानाद्वा । ननु देवादीनामधिकारोक्तिस्तावन्नास्मदादीनां प्रवृत्तावुपयुक्ता । नापि देवादीनाम् । तैः स्वगतस्य विग्रहादिमत्त्वस्य तत्प्रयुक्तस्य सामर्थ्यादिरूपाधिकारिविशेषणस्य च सिद्धान्तन्यायनिरपेक्षमेव निश्चितत्वात् । तस्मादफलेयं चिन्तेति चेत्सत्यम् । देवादीनां विग्रहाद्यभावादनधिकार इति पूर्वपक्षयतां परेषामयं दोषः । अस्माकं तु देवादिपदानां नित्यत्वात्तेषां मुमुक्षा न युक्तेति पूर्वपक्षयतां न दोषः । पूर्वपक्षन्यायेन देवानां स्वपदनित्यत्वाशङ्कया मुमुक्षाभावोपपत्तेः । अस्मदादीनां सर्वदेवोपास्यत्वप्रकारेण ब्रह्मज्ञानाभावापाताच्च । ''विश्वेदेवा उपासत'' इति श्रुत्यप्रामाण्यापातस्य टीकायामेवोक्तत्वाच्च । न चाप्रामाण्येन पूर्वपक्षो द्वितीयाध्याय एव युक्त इति वाच्यम् । विश्वजिदधिकरणपूर्वपक्षस्याप्रामाण्यपर्यन्तस्यापि षष्ठ इवास्य विचारस्यावान्तरसङ्गतिलोभेनात्रापि युक्तत्वाच्च । अत्र देवानां किं ब्रह्मविद्याधिकारो नास्त्युतास्तीति चिन्ता । तदर्थं तेषां किं मोक्षेऽर्थिता नास्त्युतास्तीति । तदर्थं तत्तत्पदविशिष्टादेवाः किमनादिनित्याः किं वाऽऽद्यंतवंत इति । तदर्थं किमाद्यंतवत्त्वे कर्मशब्दौ विरुध्येते नवेति ।

**प्रकाशिका** – ॐ तदुपर्यपि बादरायणस्सम्भवात् ॐ ॥ ननु कथमस्याधिकारचिन्तापरस्य समन्वयाध्यायादौ सङ्गतिः । न च ''प्रासङ्गिकत्वान्नाध्यायादिसङ्गतिर्गवेषणीये''ति टीकोक्तेः प्रासङ्गिकीति वाच्यम् । तथात्वे ज्ञानपादे ''असार्वत्रिकी''ति द्वितीयाधिकरणे ब्रह्मज्ञाने सर्वेषामधिकारोऽस्ति न वेति सन्देहे ज्ञानफले मोक्षे सर्वेषामर्थित्वादेरधिकारप्रयोजकस्य सत्त्वेनास्त्यधिकार इति प्राप्ते अर्थित्वादिमात्रस्याधिकाराप्रयोजकतया विष्णुभक्त्यादिपूर्वकाध्यायनादिमत्त्वस्यापि प्रयोजकतया सर्वेषां तथात्वायोगेन न सर्वेषामधिकार इति

वक्ष्यमाणत्वेन तत्रैव निवेशप्रसङ्गात् । तथात्वे साक्षात्सङ्गतिसम्भवाच्चेत्याशङ्क्य प्रसंजकोक्तिपूर्वमत्रैव निवेशं साधयति ॥ यद्यपीति विशिष्टेति ॥ हिताहितप्राप्तिपरिहारोपायविषयेत्यर्थः । तत्र पूर्वोत्तरमीमांसासिद्धे उदाहरणे आह ॥ यथेति ॥ पश्वेकत्वाधिकरणमुक्तं प्राक् छन्दोधिकरणे । यथा गुरुमते चतुर्थे उपादानाख्यप्रमाणविचारादौपादानिकस्य पश्वेकत्वादिशेषत्वस्य शेषत्वरूपेण तृतीये सङ्गतस्यापि चतुर्थे सङ्गतिस्तथेत्यर्थः । गुरुमते हि श्रुत्यादिप्रमाणषट्कसिद्धशेषत्वचिन्ता तृतीये औपादानिकशेषत्वचिन्ता चतुर्थे विधिव्यापारमुपादानाभिधानं सप्तमं विनियोजकं प्रमाणमिति हि गुरुमतम् । तदुक्तं नयविवेकवरदराजीये ''औपादानिकक्रतुशेषत्वचिन्तारूपतयाऽध्याये पेटिकायां च पूर्वत्रोपादानतो विधिकल्पने वाऽत्रापि तस्य कल्पनायुक्तेत्युक्तेरवान्तरसङ्गति''रिति ॥ यथा चेति ॥ युक्तिपादे ''भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकव''दिति पञ्चमेऽधिकरणे विष्णोर्विश्वकर्तृत्वं युक्तं न वेति सन्देहे ''परेऽव्यये सर्व एकीभवन्ती''ति श्रुत्या मुक्तावीश्वरस्य जीवैक्योक्त्या संसारेप्यैक्यस्यावश्यकत्वाज्जीवाभिन्नस्य विश्वकर्तृत्वायोगान्न युक्तमिति प्राप्ते एकीभवन्तीत्यस्य स्थानैक्यादिनोपपत्त्या मुक्तौ जीवैक्यस्यैवासिद्ध्या प्रागपि तदभावेन जीवभिन्नस्य विष्णोर्युक्तं जगत्कर्तृत्वमिति वक्ष्यमाणतया तस्य यथा जीवाभिन्नत्वादिति युक्तिविरोधपरिहाररूपेण सङ्गतिस्तद्वदित्यर्थः । उक्तं च तत्र भाष्ये ''फलत्वेपि युक्तिविरोधेंऽतर्भावादत्रोक्त''मिति । यदपि तृतीये निवेशे साक्षात्सङ्गतिरिति तदपि नेत्याह ॥ न चेति ॥ इहेति पूर्वतन्त्रव्युदासाय । अध्यायपादान्तर्भावं टीकोक्तं प्रासङ्गिकमुपपाद्यानन्तरसङ्गतिमाह ॥ अवान्तरेति ॥ आद्या ''मनुष्यपदं तिर्यगादिव्यावृत्त्यर्थं प्रयुक्त''मिति टीकासूचिता । द्वितीयातु ''स च यदि न देवानां स्यात्तदा विश्वेदेवा उपासत इत्यादिश्रुत्यप्रामाण्यं प्रसज्येते''ति टीकयेति भावः । ननु प्रासङ्गिकमपि फले सत्येव चिन्तनीयम् । अन्यथाऽतिप्रसङ्गात् । इह च फलं नास्तीत्याक्षिपति ॥ नन्विति ॥ नास्मदिति ॥ तदज्ञानेपि स्वगतार्थित्वादिज्ञानेनैव प्रवृत्त्युपपत्तेरिति भावः ।

निश्चितत्वादिति ॥ प्रत्यक्षेणैवेति भावः ॥ परेषामिति ॥ एतेन यदुक्तं कल्पतरौ ''अधिकारचिन्तेयं यद्यपि न देवादिप्रवृत्त्यर्था तथापि क्रममुक्तिफलोपास्तिषु भोगद्वारा मोक्षकाममनुष्यप्रवृत्त्यर्थे''ति तन्निरस्तम् । उपास्तीनां क्रममुक्तिफलकत्वं नाम देवतापदप्राप्तिद्वारा मुक्तिपर्यंतत्वम् । तच्च विग्रहादिमच्चेतनरूपदेवतासद्भावसमर्थनमात्रेण सिध्यतीत्यधि-

कारसद्भावपर्यन्तचिन्ताया व्यर्थत्वात् । एतेनैव देवतानां सिद्धावन्तरादित्यादिविद्यादिष्वादित्यदेवतांतर्वृत्तित्वेन ब्रह्मोपासनं न तु ज्योतिर्मण्डलान्तर्वर्तित्वेनेत्यादिप्रयोजनं परिमळग्रन्थोक्तमपि प्रत्युक्तं ध्येयम् । अधिकारपर्यंतचिन्तायाः कृत्याभावात् । अभिमानिसूत्र एव विग्रहादिमद्देवतायास्सिद्धत्वाच्च । देवादीनां प्रवृत्तावुपयुक्तेयमधिकारिचिन्तेति भावेनाह ॥ पूर्वपक्षन्यायेनेति ॥ टीकोक्तपूर्वपक्षे फलेऽनुपपत्तिमाशङ्क्य समाधत्ते ॥ न चेति ॥ विश्वजिदिति ॥ उक्तमधिकरणशरीरं प्राग्जिज्ञासाधिकरणे । तस्य पूर्वपक्षे पुरुषार्थभाव्यकत्वानङ्गीकाराद्विध्यानर्थक्येन शास्त्राप्रामाण्यमुक्तम् । तथाच तस्याद्याध्याये निवेश्यत्वेऽप्यन्यत्र निवेशस्तथाऽत्रापीत्यर्थः । ननु विश्वजिद्वाक्यं चतुर्थे "चोदनायां फलाश्रुतेः कर्ममात्रं प्रतीयेत नह्यशब्दं प्रतीयत" इति तृतीयपादीयपञ्चमाधिकरणे विचारितमित्यवादि । तथाच कथं षष्ठ इत्युक्तिः । सत्यम् । अनेकोदाहरणसूचनायैवमुक्तिः । तथाहि । विश्वजिदित्युक्त्या तस्य यथा चतुर्थे निवेश इति लभ्यते । षष्ठ इत्युक्त्या स्वर्गकामाधिकरणस्य तादृशस्यापीति लभ्यते । यद्वा षष्ठगतस्वर्गकामाधिकरणे चतुर्थाध्यायोक्तन्यायसिद्धस्वर्गपदोपेतस्य विश्वजिदादेरप्युदाहरणत्वात्तदभिप्रायेण विश्वजिदित्युक्तमिति । गुरुपादास्तु चतुर्थ इति वक्तव्ये षष्ठ इति पाठो लेखकदोषमूल इत्याहुः ॥ अवान्तरेति ॥ पयोव्रतं ब्राह्मणस्येत्यस्य फलाश्रवणादपुरुषार्थत्वमिति पूर्वाधिकरणोक्तरीत्या विश्वजिदादीनामपि फलाश्रवणादपुरुषार्थत्वमित्यादिरूपावान्तरसङ्गतिलाभेन फले सत्येव विधेः प्रयोजकत्वं नान्यथेति प्रयोजकत्वौपयिकत्वरूपावान्तरसङ्गतिलोभाद्वा यथाप्रयुक्त्यध्यायादौ निवेशस्तथेहाप्युक्तसङ्गतिलोभेनात्र निवेश इत्यर्थः । उक्तं च तन्त्ररत्ने -

यथाऽश्रुतफलत्वेन व्रतस्यापुरुषार्थता ।
तथा विश्वजिदादीनां नह्येष्वपि फलं श्रुतम् ॥
न च क्रत्वर्थता तेषामध्वश्रुत्याद्यभावतः ।
अतो निष्फलता यातेत्येवं प्रकृतसङ्गतिः ॥
विधेः प्रयोजकत्वं च फले सत्येव कल्प्यते ।
फलं चैतेषु नास्तीति स्पष्टैवाध्यायसङ्गतिः ॥ इति ॥

विषयसंशयटीकां व्यनक्ति ॥ अत्रेति ॥ मोक्ष इति ॥ विद्यासाध्यतया तत्फलरूपमोक्ष इत्यर्थः ॥ अर्थितेति ॥ अर्थी समर्थो विद्वानधिक्रियत इति न्यायेन फलेऽर्थितादेस्तद्धेतु-

विद्याधिकारप्रयोजकत्वेनोक्तेरिति भावः ॥ अनादीति ॥ स्वपदानामनादिनित्यत्वे आत्मनो मोक्षाभावनिश्चयेन तत्रार्थित्वादेरयोगादिति भावः । स्वरूपेऽविवादात्तत्तत्पदेत्युक्तम् । इयं चिन्ता तदुपर्यपीत्यनेन सूचिता ॥ कर्मेति ॥ इन्द्रादिपदप्राप्तेः पूर्वं पश्चाच्चेन्द्रादिदेवताभावेन तदुद्देशेन द्रव्यत्यागात्मकयागायोगरूपकर्मविरोधः अनादेश्शब्दस्य साद्यर्थसम्बन्धायोग-रूपशब्दविरोध इत्यर्थः । इयं द्वितीयादिसूत्रत्रयसूचिता । तथा तदर्थमिन्द्रादिदेवव्यक्तयः किमेकैका उतानेकाः । अनेकत्वेऽपि ता नानानामरूपा उत समाननामरूपा इति चिन्ता समानसूत्रसूचिता स्पष्टत्वान्नोक्ता । यदि वक्ष्यमाणादिशा कर्मशब्दौ विरुध्येते तदा तन्निरासाय तेऽनादिनित्या एवोपेया इति तेषां तादृशानां मोक्षे वक्ष्यमाणदिशाऽर्थितादेरयोगान्नास्ति ब्रह्मविद्यायामधिकार इति पूर्वपक्षे फलम् । यदात्विन्द्रादिव्यक्तीनामाद्यंतवत्त्वेपि तत्प्रवाहस्या-नादिनित्यतया कर्मशब्दविरोधोनास्ति तदा बाधकाभावेन तेषामाद्यंतवत्वयोगेन नित्यफले मोक्षेऽर्थितादेस्सम्भवेनास्ति तद्धेतुब्रह्मविद्यायामधिकार इति सिद्धान्ते फलमिति स्पष्टत्वात्फलफलिभावो नोक्तः ।

**पाण्डुरङ्गि** – ॐ तदुपर्यपि बादरायणस्सम्भवात् ॐ ॥ श्रुत्यादिप्रमाणषट्कसिद्ध-शेषत्वचिन्ता तृतीये । औपादानिकशेषत्वचिन्ता चतुर्थे । पूर्वोत्तरमीमांसोदाहरणे दर्शयति ॥ यथेति ॥ पश्वेकत्वाधिकरणं छन्दोधिकरणेऽनुक्रान्तम् । यथा गुरुमते चतुर्थ उपादानाख्यप्रमाण-विचारादौपादानिकस्य पश्वेकत्वादिशेषत्वस्य शेषत्वरूपेण तृतीये सङ्गतस्यापि चतुर्थे सङ्गतिस्तथेत्यर्थः ॥ व्यावर्त्योक्तेरिति ॥ अनेन प्रपञ्च्यप्रपञ्चकभावसङ्गतिरुक्ता भवति ।

## तात्पर्यचन्द्रिका

**पूर्वपक्षस्तु ॥ न देवादीनां ब्रह्मोपासनाधिकारः । तथाहि । तत्तत्पदविशिष्टा देवाः किमुत्पत्तिविनाशवन्तः किं वाऽनादिनित्याः । नाद्यः । इन्द्रादिपदप्राप्तेः पूर्वं पश्चाच्चेन्द्रादिदेवताभावेन तदुद्देशेन द्रव्यत्यागात्मकयागादिरूपकर्मविरोधात् । न चेन्द्रादिपदोपलक्षित आत्मोद्देश्यः । स च पूर्वं पश्चाच्चास्तीति युक्तम् । भविष्य-दिन्द्रादिपदानां मनुष्यादिशरीराणामप्युद्देश्यत्वापातात् । ऐन्द्रादियागशेषार्थवादे**

तन्मन्त्रे च तत्तत्पदतत्तद्विग्रहादिविशिष्टस्यैवेन्द्रादेस्तत्तद्यागादिना प्रीत्याद्युक्तेश्च । न च चतुर्थ्यंतः शब्द एव देवता । स चानादिनित्य इति वाच्यम् । मन्त्रार्थवादेतिहासपुराणादिना विग्रहादिमद्देवतासिद्धेरभिमान्यधिकरणे वक्ष्यमाणत्वात् । शब्दस्याचेतनत्वेन सुतरामनधिकाराच्च । न चेन्द्रादीनामनित्यत्वेऽपि सर्वकर्मसु ब्रह्मैवोद्देश्यमिति युक्तम् । मनुष्यादिभिरिन्द्राद्यधिष्ठानस्यैव ब्रह्मण उद्देष्टव्यत्वात् । अन्यथा बहुविप्लवापातात् । नन्वेतदिन्द्रोत्पत्तेः पूर्वमिन्द्रान्तरस्य सत्त्वेन तदुद्देश इति चेन्नैवम् । द्वितीयसूत्राशङ्कितकर्मविरोधोद्धारेऽपि तृतीयसूत्राशङ्कितशब्दविरोधानुद्धारात् । अत एव टीकायां ''कर्मादिविरोधा''दित्यादिशब्दः । ननु द्वितीयोक्तेन देवताप्रवाहस्यानादित्वेनैव कर्मविरोधवच्छब्दविरोधोऽप्युद्धृत एव । अनादेः शब्दस्य साद्यर्थसम्बन्धविरोधेप्यनाद्यर्थसम्बन्धाविरोधात् । तथाच तृतीये पुनः शब्दविरोधाशङ्का न युक्ता ।

न च द्वितीये प्रवाहस्यानादित्वमेवोक्तम् । नत्वनन्तत्वम् । तस्य तृतीये वक्ष्यमाणत्वात् । तथाचानन्तस्य शब्दस्यान्तवदर्थसम्बन्धो विरुद्ध इति शङ्का तृतीये युक्ता । अत एव भाष्ये द्वितीयसूत्रे ''तत्पूर्वं देवताभावा''दिति तृतीयसूत्रेतु ''देवानामनित्यत्वा''दित्युक्तमिति वाच्यम् । द्वितीयेऽपि सादित्वप्रयुक्तकर्मविरोधवत्तत्प्रयुक्तशब्दविरोधस्यापि तृतीये सान्तत्वप्रयुक्तशब्दविरोधस्येव तत्प्रयुक्तकर्मविरोधस्यापि परिहारेण द्वितीये कर्मपदस्य तृतीये शब्दपदस्य चायोगादिति चेन्न । उभयत्रोभयविरोधपरिहारेप्याद्यसूत्रे मनुष्याणां सतां कर्मादिना देवादित्वमिति तदुपरीत्यनेनोक्ते तर्हि येन कर्मणा देवादित्वं साध्यं तस्मिन् कर्मण्येव विरोधः । ततः पूर्वं साधनावस्थायां देवताभावादिति शङ्किते कर्मविरोधे द्वितीयसूत्रेण पूर्वपूर्वदेवताप्रवाहस्यानादित्वप्रतिपादकशब्दान्निरस्ते तर्हि तस्मिन् शब्द एव विरोध इति शङ्कितस्य शब्दविरोधस्य तृतीयेन निरासाद्द्वितीये कर्मशब्दस्य तृतीये शब्दशब्दस्य चोपपत्तेः । एतेनानादित्वश्रुतिवत् ''यथैव नियमः काल'' इति भाष्योदाहृतानंतत्वश्रुतिरपि द्वितीयसूत्रस्थेन ''दर्शना''दित्यनेन विवक्षितुं शक्येति पुनस्तृतीये सान्तत्वनिमित्तापि

**शब्दविरोधशङ्का निर्बीजेति निरस्तम् । उक्तरीत्याऽऽकाङ्क्षाक्रमेण द्वितीयेऽनादित्वस्यैव वक्तव्यत्वेन ''दर्शना''दित्यनेन तत्रैव शब्दोपन्यासात् ।**

**प्रकाशिका** – उत्तरोत्तरपूर्वपक्षकोटेः पूर्वपूर्वकोटिहेतुतां व्यंजयिष्यन्नंत्योपांत्ययोस्तां तावद्व्यंजयन् ''तथाही''त्यादिटीकां विवृणोति ॥ तत्तत्पदेति ॥ इन्द्रादीति ॥ एतेन ''अमराणा''मित्यादिटीकार्थ उक्तः ॥ द्रव्यत्यागात्मकेति ॥ ''यजति चोदनाद्रव्यदेवताक्रिय''मिति चतुर्थजैमिनिसूत्रोक्तेः ''यज्ञो देवतामुद्दिश्य द्रव्यत्याग'' इति नवमगीताभाष्योक्तेश्चेति भावः । आत्मा चेतनः । इष्टापत्तिमाशङ्क्याह ॥ ऐन्द्रेति ॥ ''यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा राधंतां वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावती''त्याद्यर्थवाद इत्यर्थः । मीमांसकमतमपाकरोति ॥ न च चतुर्थ्यंत इति ॥ मन्त्रेति ॥ वज्रहस्तःपुरन्दरः । तेनेन्द्रो वज्रमुदयच्छदित्यादिनेत्यर्थः । एतेन भामत्याद्युक्तजडदेवतापूर्वपक्षः प्रत्यूढः । सिद्धान्तमाशंक्याह ॥ न चेति ॥ ब्रह्मचानादिनित्यमिति भावः ॥ बहुविप्लवेति ॥ साक्षात्तस्यैवोद्देश्यत्वे सर्वस्य वैष्णवत्वेनैन्द्राग्नेयादिकर्मव्यवस्था नस्यादित्यर्थः । उक्तदोषपरिहारमाशंक्य दोषान्तरमाह ॥ नन्विति ॥ शब्देति ॥ अनादेश्शब्दस्याद्यंतवदर्थसम्बन्धेऽप्रामाण्याख्यविरोध इत्यर्थः । ''न च वाच्यं कर्मविरोधाभाववदयमपि परिहर्तव्य इती''ति टीकां विवरीतुं शब्दविरोधस्य पुनरुत्थानमाक्षिप्य द्वेधासमाधिमाह ॥ नन्वित्यादिना विरोधशङ्कासमाधाने युक्ते इत्यन्तेन ॥ संयुक्ततां हेतुभेदोपन्यासेनाशङ्क्य निराह ॥ न चेति ॥ इति वाच्यमित्यन्वयः । तृतीये सूत्रे अतः प्रभवादित्यंशेनेत्यर्थः । सूत्रार्थस्त्वग्रेस्पष्टः ।

अस्त्वेवं ततः किमित्यत आह ॥ तथाचेति ॥ द्वितीयसूत्रे इन्द्रादिदेवव्यक्तिसादित्वप्रयुक्तकर्मविरोधपरिहारेऽपि तेषामनित्यत्वेनोत्तरकाले देवतानामभावेन नित्यस्य शब्दस्य तत्सम्बन्धो विरुद्ध इति शङ्का युक्तेत्यर्थः । हेतुभेदे ज्ञापकमाह ॥ अत एवेति ॥ परिहारेणेति ॥ अन्यथा शब्दे देवसादित्वप्रयुक्तस्य कर्मणि देवतानित्यत्व प्रयुक्तस्य विरोधस्यान्यत्रापरिहृततयाऽनुद्धृतत्वापातात् । अत्रोद्धारन्यायस्योभयत्र साम्याच्चेति भावः । भाष्यं तूपलक्षणतया कथंचिन्नेयमिति शङ्कितुर्भावः । अत एव ''शब्द इति चे''दिति सूत्रांशविवरणटीकायां ''न च वाच्यं कर्मविरोधाभाववदयमपि विरोधः परिहर्तव्य इति । अतीतदेवताप्रवाहे प्रमाणसद्भावेनातीतकालविरोधस्यैव परिहर्तुं शक्यत्वात् । उत्तरकालेऽन्यदेवताभावनियमे

प्रमाणाभावेन विरोधस्य कर्मण्यपि साम्या''दित्युक्तमिति हृदयम् । उभयोरुभयत्र परिहारं टीकाभिमतमुक्त्वा तत्र यस्सूत्रविन्यासायोगश्शङ्कितस्तमुद्धरति ॥ उभयत्रेति ॥ कर्मादिनेति ॥ विद्ययेत्यादिशब्दार्थः ॥ शब्दादिति ॥ ''तेह नाकं महिमानस्सचन्ते''त्यादिशब्दादित्यर्थः ॥ तत्रैवेति ॥ अनादित्व एवेत्यर्थः । अयं च परिहारः ''अतीतदेवते''त्यादिटीकासूचितः ।

पाण्डुरङ्गि – अन्यथेति ॥ सर्वकर्मसु ब्रह्मण एवोद्देश्यत्वे कर्मभेदे वा सूक्तभेदे वा देवताभेदस्यैव प्रयोजकत्वेन देवतैक्ये यागव्यवस्था सूक्तव्यवस्था वा न स्यादित्यर्थः ।

## तात्पर्यचन्द्रिका

यद्वा यथाहि कर्माणि प्रवाहेणानाद्यनंतानि तथा देवता अपि । यथाच ताः स्वरूपेणानित्यास्तथा तान्यपीति देवताप्रवाहस्यानाद्यनन्तत्वेनातीतानागतकर्मविरोध एव परिहृतो न तु शब्दविरोधः । वेदरूपस्य शब्दस्य भाष्योक्तरीत्या स्वरूपेणैव नित्यत्वात् । प्रवाहनित्यतायाः पुराणादावपि सत्त्वात् । स्वरूपेण नित्यं चेन्द्रादिसूक्तं न प्रतिनियतैकेन्द्रादिपरम् । एकस्यैन्द्रादेः सदाऽभावात् । इन्द्राद्यंतरस्यासिद्ध्यापाताच्च । न च यदा य इन्द्रस्तदा तदुद्देशवद्यदा य इन्द्रस्तदा तत्परमिति वाच्यम् । कालभेदेन सूक्तादेस्तात्पर्यभेदायोगादिति कर्माविरोधमङ्गीकृत्यैव शब्दविरोधशङ्कोदयः । अत एव शङ्कानुसारेण तृतीयसूत्रस्थपरिहारभागस्यायं भावः । इन्द्रादिसूक्तस्येन्द्रादिपदस्थे तात्पर्यम् । पदस्थत्वोपाधिश्चामात्यत्वादिवदतीतानागतेष्वेक एवेति नानेकेषु तात्पर्यापात इति । तस्माद्द्वितीयसूत्रे कर्मविरोधे परिहृतेपि तृतीये शब्दविरोधाशङ्कासमाधाने युक्ते ।

समाहितेऽपि शब्दविरोधे न देवानामनित्यता । तथाहि । न तावत्पौरस्त्यानां पाश्चात्यानां चेन्द्रादीनां नामरूपाभ्यां साम्यम् । लोकेऽमात्यान्तरस्य पूर्वामात्येन नामादिसाम्यनियमादर्शनात् । मानाभावाच्च । ''सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पय''दित्यादिवाक्यं तु तामेव सूर्यादिव्यक्तिं पूर्वप्रकारेणाकल्पयदित्येवं

**सूर्यादिव्यक्त्यैक्यपरम् । न चैवं सूर्यादिसृष्टिवाक्यविरोधः । तस्यानित्यसंयोगद्वारा स्वाप्रामाण्यापादकदेवतोत्पत्तिपरत्वासम्भवेनान्यपरत्वात् । नाप्यसाम्यम् । इन्द्रादि-सूक्तस्थानामिन्द्रादिनाम्नां सहस्राक्षत्ववज्रबाहुत्वादिरूपाणां च विरोधात् । तस्मात्तत्तत्पदादिविशिष्टा देवा अनादिनित्या इति द्वितीय एवाङ्गीकार्यः । तथाच न देवानामधिकारः । स्वपदेभ्यो मोक्षस्यातिशयितत्वेपि स्वपदानां नित्यत्वेन स्वेषां मोक्षाभावनिश्चयेन तत्रार्थित्वायोगात् ।**

**किं च न तावद्देवानां सर्वविद्याधिकारः । वसुत्वादिफलकमधुविद्यादिषु वस्वादी-नामधिकारायोगात् । नापि मोक्षफलकासु । ''नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिता'' इत्यादिवाक्यैर्देवानां ब्रह्मज्ञानित्वात्तज्ज्ञानार्थं विचारेऽनधिकारादिति ।**

**प्रकाशिका –** ''अतीतदेवते''त्यादिटीकारीत्यैकं समाधिमुक्त्वा ''ननु कथं देवताप्रवाह-नित्यत्वे समाननामरूपत्वे नित्यवेदप्रामाण्योपपत्तिः । तद्वाचित्वेनेति चेन्न । तस्यैवासम्भवा'' दित्यादिटीकोक्तरीत्या पक्षान्तरमाह ॥ यद्वेति ॥ सूक्तादिकं किमेकेन्द्रपरमुतानेकेन्द्रपरम् । नाद्य इत्याह ॥ न प्रतिनियतेति ॥ एकस्येति ॥ सूर्याचन्द्रमसावित्याद्युत्पत्तिश्रुतिविरोधादिति भावः । द्वितीयमाशंक्याह ॥ न चेति ॥ टीकात्वभ्युपेत्यवादेन नेयेति भावः । ननु नैवं शङ्कायुक्ता । एतत्समाधानस्य भाष्यादावनुपलब्धेरित्यत आह ॥ अत एवेति ॥ पञ्चमसूत्रव्यावर्त्यशङ्कामाह ॥ समाहितेपीति ॥ किं नाम रूपादेस्साम्यमुतासाम्यमिति कल्पौ हृदि कृत्वाऽऽद्ये आह ॥ नेति ॥ मानमाशंक्य ''एतच्छ्रुतेस्तत्स्वरूपकल्पनानियमपरत्वमपि सम्भवती''ति टीकां विवृण्वन् तस्यान्यथासिद्धिमाह ॥ सूर्येति ॥ अन्यपरत्वात् अभिव्यक्तिपरत्वादित्यर्थः । न ह्यनुपपन्ने तात्पर्यमस्तीति भावः । द्वितीयं निराह ॥ नापीति ॥ देवा उत्पत्तिविनाशवन्त उतानादिनित्या इति विकल्पे आद्यमियता निराकृत्य द्वितीये पर्यवसाययति ॥ तस्मादिति ॥ नामादिभेदेन शब्दकर्मविरोधादित्यर्थः । अर्थित्वाभावे तस्य हेतुतां दर्शयति ॥ स्वपदेति ॥ मध्वादिसूत्राभिप्रेतपूर्वपक्षटीकां व्यनक्ति ॥ किंचेति ॥ द्विविधाहि वेदविद्याः । मुक्तिफलका-स्तदितरफलका इति । तत्र न क्वाप्यधिकार इत्याह ॥ नतावदित्यादिना ॥ ''सय एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेव दृष्ट्वा तृप्यती''त्यादिना मध्वादिविद्यासु वस्वादिपदानामुपासनाप्राप्यफलत्वश्रवणादिति भावः ।

**पाण्डुरङ्गि** – ननूक्तरीत्या सूत्रवैयर्थ्ये शङ्किते तत्सार्थक्यमकृत्वैवाकांक्षाक्रमेण सङ्गतिकथनमयुक्तम् । पुरुषोत्प्रेक्षानिबन्धनायाः सङ्गतेरन्यथापि कर्तुं शक्यत्वादित्यरुच्या पक्षान्तरमाह ॥ यद्वेति ॥ इन्द्रादिसूक्तादिकं किमेकमेवेन्द्रं सदा प्रतिपादयत्युत कदाचित्कंचित् । नाद्य इत्याह ॥ न प्रतिनियतैकेति ॥ ननु चैकस्य सर्वदाऽसत्त्वेपि सूक्तं तत्प्रतिपादकमेवेत्यत आह ॥ इन्द्राद्यंतरस्येति ॥ तच्च सिद्धांतिनोऽनिष्टम् । अनेकेषामिन्द्रपदप्राप्तेस्तेनाभ्युपगमात् । द्वितीयं शङ्कते ॥ न चेति ॥ नन्वेवमधिकाशङ्कया पूर्वपक्षश्चेत्कथं तन्निरासः । सूत्रे तन्निरासस्याप्रतीतेरित्यत आह ॥ अत एवेति ॥ एवमधिकाशंकया पूर्वपक्षस्य प्रवृत्तत्वादेवेत्यर्थः ॥ विरोधादिति ॥ तथाच सहस्राक्षत्वादिप्रतिपादकागमस्याप्रामाण्यमिति भावः ।

## तात्पर्यचन्द्रिका

**सिद्धान्तस्तु ॥**

न देवानामसामर्थ्यं वर्तते तिर्यगादिवत् ।
न चापि प्रतिषेधोऽस्ति शूद्रादेरिव कुत्रचित् ॥ १ ॥
स्वपदानामनित्यत्वात् मुक्तावस्त्यर्थिताऽपि च ।
प्रवाहानादिनित्याश्च तुल्यरूपादियोगिनः ॥ २ ॥
देवा न तेन देवानामधिकारेऽस्ति बाधकम् ।
श्रूयते चाधिकारोऽपि देवानां श्रुतिषु स्फुटम् ॥ ३ ॥

अतीतानागतानां देवानां समाननामरूपत्वं ''यथापूर्व''मित्यादिभाष्योदाहृतश्रुत्यादिसिद्धम् । न च तद्देवताव्यक्त्यैक्यपरम् । तत्सृष्टिवाक्यविरोधात् । तासां प्रवाहतोऽनादिनित्यतायाः समाननामरूपतायाश्चाङ्गीकारे सृष्टिवाक्यस्य स्वार्थपरत्वेपि नानित्यसंयोगाद्यापातः । अन्यथा ''यथापूर्व''मित्यादेर्व्यक्त्यैक्यपरत्वेसिद्धे देवतानां प्रवाहानादित्वसमाननामरूपत्वयोरभावः । तत्सिद्धौ चानित्य संयोगापत्या सृष्टिवाक्यस्य स्वार्थपरत्वाभावः । तत्सिद्धौ च सृष्टिवाक्यविरोधाभावात् यथापूर्वमित्यादेर्व्यक्त्यैक्यपरत्वसिद्धिरिति चक्रकाश्रयःस्यात् । ''एकशतं हवै वर्षाणि

**मघवान् प्रजापतौ ब्रह्मचर्यमुवासे'' त्यादिश्रुतिसिद्धश्च देवानामधिकारः । यद्यपि मधुविद्यादिफलं वसुत्वादिकं ब्रह्मज्ञानं च वस्वादीनामस्ति । तथापि ज्ञाने मोक्षे चातिशयार्थमुपासना युक्तेति ।**

**प्रकाशिका** – अधिकारप्रयोजकमर्थित्वादिकं देवेषु समर्थयमानस्तत्प्रयोजके देवानामाद्यंतवत्त्वे परोक्तकर्मविरोधादिबाधकं च परिहरन्नाद्यादिसूत्रभाष्यटीकोक्तं प्रमेयं सङ्गृह्याह ।। न देवानामिति ।। अयं च ''सम्भवा''दिति सूत्रांशभाष्याद्यर्थसङ्ग्रहः ।। तिर्यगादिवदिति ।। इदानींतनपशुपक्ष्यादेरिवेत्यर्थः । नन्वेतच्छूद्रे व्यभिचारीत्यतस्सूत्रांशतात्पर्यं भाष्याद्युक्तमाह ।। नचापीति ।। कुत्रचिदपीत्यपेरन्वयः । श्रुतौ स्मृतौ चेत्यर्थः । प्रतिषेधश्चेति चार्थः ।। शूद्रादेरिति ।। ब्रह्मबन्धुवर्णबाह्यादिरादिपदार्थः । शूद्रादेर्निषेधोऽग्रे स्पष्टः । ननु न सामर्थ्यमात्रं प्रयोजकम् । मुमुक्षोर्वात्स्यायनादावनधिकारात् । किन्तु यो यज्जन्यफलार्थी स तत्राधिकारीत्यर्थिताऽपि । साच न नित्यपदानां युक्तेत्युक्तमित्यतः ''तदुपरी''ति सूत्रांशभाष्याद्युक्तं हेतूकृत्य ''संभवा''दित्यंशोपात्तमर्थित्वं साधयति ।। स्वपदानामिति ।। चोऽवधारणे । अनित्यत्वादेवेत्यर्थः । ननूक्तं तथात्वे कर्मादिविरोध इत्यतः ''विरोधः कर्मणी''ति सूत्रभाष्याद्युक्तमाह ।। प्रवाहेति ।। ननूक्तमत्रैकरूपवेदप्रामाण्यविरोवध इत्यतस्समानसूत्रभाष्यटीकोक्तार्थमाह ।। तुल्येति ।। न देवानामधिकारेऽस्ति बाधकमित्युक्त्या सूत्रादिकं देवानामधिकारे बाधकनिरासपरमित्युक्तम् । तेन देवाः वेदविद्याधिकारिणः । अनिषिद्धत्वे सति सामर्थ्यादिमत्त्वात्संमतवदित्यनुमानमुक्तं भवति । तत्र मूलभूतश्रुतिरूपसूत्राद्यभिप्रेतं प्रमाणं चाह ।। श्रूयतेचेति ।। श्रुतिष्विति ।। तास्त्वग्रेव्यक्ताः । ननूक्तं तुल्यरूपादियोगित्वे मानाभाव इति । तत्राह ।। अतीतेति ।। ''अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । ऋषीणां नामधेयानियाश्च वेदेषु दृष्टयः । वेदशब्देभ्य एवासौनिर्ममे स महेश्वर'' इति स्मृत्यादिरादिपदार्थः । ननूक्तं श्रुतिरन्यथासिद्धेत्यतष्टीकायामनादिनिधनेति स्मृत्यैवान्यथासिद्धिनिरासेन युक्त्यनुक्तेस्स्वयं युक्तयाप्यन्यथासिद्धिं निराह ।। न चेति ।। तत्सृष्टीति ।। ''चक्षोस्सूर्यो अजायते''त्यादिवाक्यविरोधादित्यर्थः । न च तदन्यपरमिति वाच्यम् । बाधकाभावादिति भावेन प्रागुक्तं बाधकमुद्धरति ।। तासामिति ।। सूर्यादिव्यक्तीनामित्यर्थः । श्रूयते चेत्यर्धं व्यनक्ति ।। एकशतमिति ।। एतद्वाक्यं छान्दोग्याष्टमाध्यायगतम् । किंचेत्यादिनोक्तं ''भावं''त्विति

सूत्रभाष्याद्युक्तसमाधानेन निराह ॥ यद्यपीति ॥ ''यावत्सेवा परे तत्वे तावत्सुखविशेषते'' त्यादेरिति भावः ।

**पाण्डुरङ्गि** – श्रूयतेचाधिकारोऽपीत्युक्तम् । तदुपपादयति ॥ एकशतमिति ॥ तदुद्धारः शङ्काद्वयोद्धार इत्यर्थः ।

## तात्पर्यचन्द्रिका

अत्र चाद्ये सूत्रे न तावद्देवताजीवानां कदाप्यनधिकारः । तेषामेव पदप्राप्तेः पूर्वं मनुष्यशरीरित्वदशायामधिकारादिति तदुपरीत्यनेन सूचयित्वा नापि पदप्राप्त्यनन्तर-मनधिकारः । विशिष्टबुद्ध्यादिभावादिति ''सम्भवा''दित्यनेनोक्तम् । द्वितीये ''तदुपरी''त्यनेनोक्तदेवतापदस्य सादित्वे कर्मविरोधः शब्देन परिहृतः । तृतीये तस्मिन्नेव शब्दे विरोधो देवताप्रवाहनित्यत्वेनोद्धृतः । तत्र च प्रभवशब्दः प्रभव-नियमपर इति भाष्य एवोक्तम् । चतुर्थे देवताप्रवाहनित्यत्वं तद्वाचकवेदनित्यत्वेन साधितम् ।

ननु न वाचकस्य नित्यत्वेन वाच्यनित्यत्वसिद्धिः । शब्दगतशक्तिविषयस्य वाच्यस्य नाशेपि शक्तेस्तदाश्रयस्य शब्दस्य चानाशोपपत्तेः । न हि शक्यनाशे शक्तितदाश्रययोर्नाशनियमः । प्रलये वाच्यस्य देवतादेरभावेपि वाचकावस्थानाच्च । तदा भारतादिवदतीतविषयत्वे चान्यदापि तथास्त्विति ॥ मैवम् । प्रतिकल्पं वेदोक्तकर्माननुष्ठाने प्रतिकल्पं वेदोपदेशधारणादेर्वैयर्थ्यापातात् । अनुष्ठाने च कर्मकालप्रयुक्तानां ''इन्द्रागच्छे''त्यादीनां देवताह्वानाद्यर्थत्वात्तदा तदभावे चाह्वा-नाद्ययोगात् । प्रतिकल्पं कर्मानुष्ठानकाले च देवतासत्त्वस्य तत्प्रवाहानादिनित्यत्वं विनाऽयोगादिति दिक् ।

पञ्चमे धर्मिभूतदेवानित्यत्वहेतुकविरोधाभावेऽपि धर्मभूतरूपादिवैचित्र्यनिमित्तक-विरोधशङ्काया उद्धारः । तत्र च ''आवृत्ता''वित्यस्य प्राचीनानां पदस्थानां

**मुक्तावन्येषां तत्पदप्राप्तिः पुनस्तेषामपि मुक्तिरित्येवं मुक्तेरावृत्तावपीति वा प्राचीनानां मुक्तत्वेन स्वस्वपदादावृत्तावपीति वा स्वस्वपदेष्ववृत्तावपीति वार्थः । एवं ''मुक्त्या-वृतावपी''ति भाष्यमपि त्रेधा व्याख्येयम् । स्वस्वपदेष्ववृत्तावपीति टीकायां तु तत्प्रकारद्वयं स्फुटत्वान्नोक्तम् । षष्ठे मध्वाद्युपासनाविशेषफलस्य वसुत्वादेर्वस्वादिभिः प्राप्तत्वान्न तेषां तत्राधिकार इति शङ्का सप्तमेतु उपासनामात्रफलस्य ज्ञानस्य सर्वैरपि देवैः प्राप्तत्वान्न तेषां तत्राधिकार इति शङ्का तत्र च ज्योतिश्शब्दो ज्ञानपरः । ज्ञानस्य चाश्रयापेक्षायां ''तदुपरी''ति प्रस्तुतदेवतान्वयः । ज्योतिषीति सप्तमी च चैत्रस्य बुद्धौ शास्त्रार्थ इतिवत् । तथाच देवताज्ञाने सर्वस्य भावादिति सूत्राक्षरार्थः । अष्टमे तु तदुद्धार इति सूत्रक्रमः ।**

**प्रकाशिका** – भाष्याद्युक्तमर्थं सूत्रपदारूढं लेशतो दर्शयन् सूत्राणां क्रममाह ॥ अत्र चाद्य इति ॥ ''तदुपर्यपि बादरायणस्सम्भवा''दित्यत्र तच्छब्देन पूर्वप्रकृतयोग्यमनुष्यत्वं परामृश्यते । तस्मादुपरि तस्योपरीति वा विद्याकर्मभ्यां योग्यमनुष्याणां देवत्वप्राप्त्यनन्तरमप्यधिकारोऽस्तीति विभागविपरिणामाभ्यां पूर्वप्रकृताधिकारपदान्वयः । तेषामप्यधिकारोपयोगिनो विशिष्टबुद्ध्या-देस्सम्भवादित्यर्थः । बादरायणपदं विप्रतिपत्तिसूचनायेति टीकोक्तिः । देवानामधिकारे सन्देहाभावज्ञापनायेति तत्वप्रदीपोक्तिः । अत्र देवानामिति वक्तव्ये तदुपरीत्युक्तिरयुक्ता । अपिपदं च व्यर्थमित्यत आह ॥ न तावदिति ॥ प्रधानहेतूक्तिपरत्वादाद्यत्वमिति भावः । ननु तदुपरीति कथम् । ''पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेने''त्यव्ययेन समास-निषेधात् । न चाव्ययशब्देनोपरिशब्दो न ग्राह्यः । वृत्तावनुदाहृतत्वादिति वाच्यम् । अग्रहणे ज्ञापकस्य वाच्यत्वात् । तत्रैव मंजर्यां ''व्रजस्योपरीत्यप्युदाहर्तव्य''मित्युक्तेश्च । मैवम् । तत्र प्रकृतषष्ठीसमासस्यैव निषेधात् । इह च ''पञ्चमीभयेने''त्यत्र योगविभागेन पञ्चमीसमासा-श्रयणात् । पञ्चमी च ''अत ऊर्ध्वं प्रवक्ष्यामी''त्यादाविवावधित्वमात्रविवक्षया युक्ता । अत एव तत्वप्रदीपे ''मनुष्यत्वादुपरी''त्युक्तम् । षष्ठीसमासपक्षेपि ''पूरणगुणे''ति सूत्रेऽव्ययशब्देनो-परीत्यस्याग्रहणेन दोषाभावात् । उक्तं च दुर्घटवृत्तौ ''सता तव्येन च कृता पूर्वत्रोत्तरत्र च साहचर्यात्कृदन्ताव्ययस्यैव ग्रहणं तत्र । नत्वन्यस्य । तथाच तदुपरि मदुपरीत्यादिरपि साधु''रिति ॥ कश्चित्तु तदिति भिन्नं पदम् । षष्ठ्यर्थेऽव्ययं वाऽविभक्तिकं वा लुप्तविभक्तिकं

वेत्याह ।। एतेन तद्ब्रह्मोपासनमुपरि देवादिष्वपि सम्भवतीत्यर्थं वदता केनचिद्रामानुजीयेन षष्ठ्यंततच्छब्दस्याव्ययेन समासायोग इत्युक्तं दूषणं निरस्तं ध्येयम् । द्वितीये विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनादित्यत्र येन कर्मणा देवपदं प्राप्तं तस्मिन्नेव पूर्वकल्पे प्रवृत्तकर्मणि पूर्वं देवताभावेनोद्देश्याभावाद्वैयर्थ्याख्यविरोधापत्तेरिति चेन्न । एतद्देवानां पूर्वमभावेप्यनेकेषां योग्यमनुष्याणां देवतापदप्राप्तेः ''तेह नाकं महिमानस्सचन्ते''त्यादौ दर्शनादित्यर्थः । तथाचान्तरङ्गबाधकनिरासाद्वितीयताऽस्येति भावः । यदत्र केनचिदुक्तं मनुष्यप्रवाहस्यानादित्वे विवादाभावेन शङ्काया अनुत्थानाद्दर्शनशब्दस्य स्वार्थे सम्भवति तद्विषयश्रुतिपरत्वमस्वरसमिति तन्निरस्तम् । देवतापदं प्राप्तानामेव प्रवाहस्यानादित्वोक्त्या मनुष्यप्रवाहानादित्वानुक्तेः । तदुक्तं टीकायां ''एतद्देवानां पूर्वमभावेपि देवतांतरसद्भावा''दिति ।। दर्शनपदं चाग्रे ''दर्शनात्स्मृतेश्चे''त्यत्रेव श्रुतौ स्वरसम् । ''दृश्यते हि सौभरिप्रभृतीनां योगिनां युगपदनेकशरीरप्राप्तिः ।

आत्मनो वै शरीराणि बहूनि मनुजेश्वर ।
योगी कुर्याद्बलं प्राप्य तैश्च सर्वां महीं चरेत् ।।

इति भारतवचना''दिति त्वदुक्तरीत्या ममापि श्रुतौ दर्शनादित्यर्थोपपत्तेश्च । शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्यामिति तृतीये येन वेदरूपशब्देन देवानामादिमत्त्वेपि प्रवाहानादित्वमुपेत्य कर्मविरोधो निरस्तः तस्मिन्नेव वेदरूपे शब्दे ''वाचा विरूपनित्यये'' त्यादिना नित्येऽनित्यदेवार्थसम्बन्धायोगरूपविरोध इति चेन्न ।

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
यथैव नियमः काले सुरादिनियमस्तथा ।।

इत्यादिरूपात् अतः अस्माच्छब्दरूपप्रमाणाद्देवानां प्रतिकल्पं प्रभवात्प्रभवनियमावगमात् महतां प्रत्यक्षात् यथेदानीं तथोपर्यपि देवा भविष्यन्तीतीतरेषामनुमानाच्चेति स्वरूपनित्यत्वाभावेपि प्रवाहरूपेण नित्यत्वमुपेत्योद्धृतः । तथाचाकाङ्क्षाक्रमात्क्रम इत्यर्थः । अत्र नित्यत्वादिति वाच्ये प्रभवादित्युक्तिर्देवप्रवाहनित्यत्वद्योतनाय । नन्वत्रात इत्युक्तशब्दरूपमानेनैवालम् । किं प्रत्यक्षाद्युपन्यासेनेति चेत् श्रुतावुपचारेणाप्युक्तिरिति शङ्कानिरासार्थत्वात् । तर्हि

शब्दप्रत्यक्षानुमानेभ्यः प्रभवादिति सूत्रणीयम् । किं विभागेनेति चेन्न । शब्दस्यान्यानपेक्षप्रमाणत्वेन प्रधानत्वेनादौ पृथङ्निर्देशात् । महतां प्रत्यक्षमस्तीति ज्ञानस्य तत्प्रामाण्यज्ञानस्य च शब्दमूलत्वादनुमानस्यापि शब्दसंवादित्वेनैव प्रामाण्यात्तयोस्समासेन निर्देश इति । एतेन प्रत्यक्षानुमानाभ्यां चेति स्यादिति निरस्तम् । उत्तरसूत्रे युक्त्यंतरसमुच्चायकचशब्दोक्तेश्च । एतेनैव प्रत्यक्षं नोपन्यासार्हम् । विप्रतिपत्तेरिति केनचिदुक्तं निरस्तं बोध्यम् । चतुर्थे अत एव च नित्यत्वमित्यत्र । परोक्तशब्दनित्यत्वादेव वाच्यार्थस्य देवस्य प्रवाहतो नित्यत्वं सिध्यति । न हि वाच्यानित्यत्वे वाचकनित्यत्वं सिध्यतीत्यर्थापत्त्या देवप्रवाहनित्यत्वमत्र साध्यते । पूर्वोक्तश्रुत्याऽर्थापत्तेस्समुच्चयार्थश्चशब्दः । पूर्वं शब्दात्प्रभवनियमोक्तिः । अत्र नित्यत्वरूपतद्धर्मात्तदुक्तिरिति योगविभागः । ननु पूर्वत्र प्रभवशब्दस्य प्रभवनियमपरतया नित्यत्वार्थत्वस्येहानुवृत्त्याऽत एव च प्रभव इत्यन्वये सत्यत एव च नित्यत्वमित्यर्थस्य लाभान्नित्यत्वमित्यवक्तुं शक्यम् । मैवम् । तस्य पञ्चम्यंतत्वेनेह प्रथमान्ततयाऽनुवृत्तेर्दुर्बोधत्वात् । प्रभवशब्दस्य नित्यत्वार्थकत्वस्यास्पष्टत्वाच्च । अत एव चेत्यस्य प्राक्प्रकृतशब्दनित्यत्वपरामर्शद्योतनाय च नित्यत्वमिति पृथुगुपादानाच्चेति ।

"नापि भारतादिवदतीतविषयत्वेनोपपत्तिः । अनुपपत्तेरुक्तत्वा"दिति टीकां विवृण्वन्नर्थापत्तेरन्यथोपपत्तिमाशङ्क्य समाधत्ते ॥ नन्विति ॥ अर्थापत्तेरनुमानत्वेपि तद्विशेषत्वात्पृथगुक्तिः । ननु तद्वाच्यदेवतास्वरूपस्य नित्यत्वे सर्वमुपपन्नमिति चेन्न । "सूर्याचन्द्रमसा"वित्याद्युत्पत्तिविरोधात् । "अग्नौ सर्वेदेवा विलीयन्त" इति लयश्रुतिबाहुल्याच्च । "न च श्रुतीनामयथार्थत्वं बाधकाभावा"दित्यादिटीकोक्तं मनसि निधायाह ॥ दिगिति ॥ पञ्चमे समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्चेत्यत्र नियतैकपाठस्य वेदस्य नानाविधनामरूपवद्देववाचित्वेऽप्रामाण्यमाशङ्क्य प्राचां देवानां प्राप्तमुक्तित्वेन पुनस्स्वपदेष्ववृत्तावपि पुनस्तदन्येषां "यथापूर्व"मिति श्रुत्या "अनादिनिधना नित्ये"त्यादिस्मृत्याच प्राचीनसमाननामरूपत्वात्तत्प्रतिपादकैकविधस्यापि प्रामाण्योपपत्तिरित्युद्धारः कृत इत्यर्थः । एवं चावसरक्रम इति भावः । अपिरत्र यद्यप्यवृत्तिः तथाप्यविरोध इति शङ्काद्योतकः । टीकोक्तमुपलक्षणमिति भावेनाह ॥ तत्र चेति ॥ आद्योऽर्थस्स्वयमुत्प्रेक्षितः । द्वितीयस्तत्वप्रदीपोक्तः । तृतीयस्तु तत्र टीकायां चोक्त इति ध्येयम् । षष्ठे मध्वादिष्वसम्भवादनधिकारं जैमिनिरित्यत्र "वसूनामेवैको

भूत्वे''त्यादिना मध्वादिविद्यासु वस्वादिपदानामुपासनाप्राप्यफलत्वश्रवणाद्देवानां च प्राप्ततत्पदत्वेनार्थिताऽसम्भवात्तत्रानधिकारं जैमिनिर्मन्यत इत्युक्तेः । सप्तमे ज्योतिषि भावाच्चेत्यत्र ज्योतिषि सर्वज्ञत्वे सर्ववस्तूनां भावादन्तर्भावाद्देवानां सर्वज्ञतया सर्वविद्याज्ञानितया मोक्षहेतुज्ञानार्थमपि न तत्राधिकार इत्युक्तत्वाच्छङ्काद्वयं सूत्रद्वये कृतमित्यर्थः । विवक्षितार्थलाभप्रकारमाह ॥ तत्रचेति ॥ अष्टमे भावं तु बादरायणोस्ति हीत्यत्र । सर्वविद्यासु देवानामधिकारभावं बादरायणो मन्यते । अस्ति ह्यतिशय इत्युक्ततया ज्ञाने मोक्षे चातिशयाधायकतयाऽनधिकारशङ्काद्वयोद्धारः कृत इत्यर्थः ॥

## तात्पर्यचन्द्रिका

यत्तूक्तमुभाभ्यां मन्त्रार्थवादादेरनुष्ठेयप्रकाशनस्तुत्यादिपरत्वेन देवतानां विग्रहादि-राहित्येनार्थावच्छिन्नशब्दरूपतया शब्दावच्छिन्नार्थरूपतया वा जडत्वेनासामर्थ्या-दनधिकार इति प्राप्ते मन्त्रादिभिस्तासां विग्रहादिमच्चेतनत्वादस्त्यधिकार इत्याद्यसूत्रेण सिद्धान्त इति । तन्न । पूर्वसूत्रस्थमनुष्यपदेनेह तत्सजातीयचेतनांतर एवानधिकार-शङ्कोदयेनाचेतनानधिकारपूर्वपक्षस्यासङ्गतेः । अस्मद्रीत्या ''अभिमानी''ति सूत्रोक्त-न्यायेन मन्त्रादेः स्वार्थपरत्वेन विग्रहाद्यङ्गीकारेण पूर्वपक्षसम्भवे तदनङ्गीकारेण तस्य जघन्यत्वाच्च । किं च पूर्वपक्षे स्वार्थे मन्त्रादेरप्रामाण्येऽप्युपनिषदामपि स्वार्थे प्रामाण्यं नास्ति चेद्ब्रह्मैव च न सिध्येत् । अस्ति चेत् ''ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनायापिपासाभ्यामन्ववार्जत्ता एनमब्रुव'' न्निति ''तत एते व्यजायंत विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा'' इत्याद्युपनिषद्भिरेव विग्रहादिसिद्धिः । न हि ताः स्रष्टरि प्रमाणं सृज्ये तु नेति युक्तम् ।

किञ्च

देवताविग्रहादिश्चेत् श्रुतितात्पर्यगोचरः ।
बाध्यो न स्यान्न चेन्न स्याद्व्यावहारिकसन्नपि ॥ १ ॥

अन्यथा चितिमात्रं च बाध्येतैव कदाचन ।
यजमानप्रस्तरत्वमपि स्याद्व्यावहारिकम् ।। २ ।।

समर्थितं चैतत्प्राक् । यच्चोक्तं परैः देवतानां देवतांतराभावेन तदुद्देशेन हविस्त्यागायोगात् ऋषीणां च भृग्वादीनां भृग्वाद्यंतराभावेन तद्वरणायोगाद्यज्ञादिकर्मस्वनधिकारेऽपि ब्रह्मविद्यासु सोऽस्तीति । तन्न । देवतानामपि ''यज्ञेन यज्ञमयजन्त देवा'' इति ''देवा वै सत्रमासते''ति ''देवा यज्ञमतन्वते''ति ''देवा वै चतुर्होतृभिर्यज्ञमतन्वते''ति ''यद्विश्वदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्व''मिति ''प्रजापतिर्वा एतेनाग्रेऽयजते''ति ''इन्द्रोऽश्वमेधाञ्शतमिष्ट्वे''ति ''देवा वै वरुणमयाजयन्'' इत्यादिश्रुतिभिः,

ततस्तु देवताः सर्वा ब्रह्मा चैव महर्षयः ।
वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ।।

इत्यादिभारतादिवचनैश्च देवानामपि यज्ञादिसद्भावात् । शूद्रवच्च तेषामधिकारनिषेधाभावात् । देवताकर्तृकयज्ञेषु च -

योमे यथा कल्पितवान्भागमस्मिन्महाक्रतौ ।
स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः ।
मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् ।।

इति भारते देवादीन्प्रति भगवद्वचनादिभिरग्नीन्द्रादिशब्दमुख्यार्थो भगवानेवोद्देश्यः । अत एव ''इन्द्रो वा अकामयत ज्यैष्ठ्यं देवानामभिजयेयमिति । स एतमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं निरवप''दित्यादिश्रुतयः । भृग्वादिवरणं च मनुष्यविषयम् । यद्वा अनादौ संसारे पूर्वपूर्वभृग्वादिवरणमुत्तरोत्तरेषां युक्तम् ।

**प्रकाशिका** – मन्त्रेति ।। मन्त्रस्यानुष्ठेयद्रव्यदेवताप्रकाशनपरत्वेन अर्थवादस्यानुष्ठेयस्तुतिपरत्वेन आदिपदोक्तस्य विधेर्विधेयार्थविधानपरत्वेन देवताविग्रहादौ तात्पर्याभावादतात्पर्य-

विषयस्यासिद्धेरित्यर्थः । देवताभावे यागासिद्धिरित्यतो भामत्युक्तमाह ॥ अर्थेति ॥ चतुर्थ्यंतशब्दप्रतीतमात्रश्शब्दावच्छिन्नस्तादृगर्थनियमितः शब्दो वा देवतेत्यर्थः ॥ मन्त्रेति ॥ वज्रहस्तः पुरन्दरः । तेनेन्द्रो वज्रमुदयच्छदित्यादिभिरित्यर्थः । न च मन्त्रादीनामन्य-परत्वमुक्तमिति वाच्यम् । प्रकाशनस्तुत्यादिपरत्वेऽपि मानान्तराविरुद्धे स्वार्थेऽपि तात्पर्यात् । अन्यथा गुणिनिष्ठगुणाभिधानरूपस्तुत्यादेरनुन्मेषादिति भावः । गत्यन्तराभावादेवमाश्रीयत इत्यत आह ॥ अस्मदिति ॥ तस्य जडानधिकारपूर्वपक्षस्य । असिद्धं च विग्रहादिराहि-त्यमित्याह ॥ किञ्चेति ॥ ता एता इत्यैतरेयवाक्यम् । तत एत इत्यदृश्यत्वनये भाष्योक्त-श्रुतिरियम् ॥ न हीति ॥ नियामकाभावेन स्रष्टुस्सृज्यसापेक्षतया तत्राप्रामाण्ये स्रष्टर्यपि तथा स्यादित्यर्थः । एवं मतद्वये पूर्वपक्षं साधारणदोषेण निरस्याद्वैतमते सिद्धान्तोऽप्ययुक्त इत्याह ॥ किञ्चेति ॥ न स्यादिति ॥ ब्रह्मवदिति शेषः । न च श्रुतितात्पर्यगोचर इत्यनुषङ्गः । सन्नपि विग्रहादिरित्यन्वयः । यजमानप्रस्तरत्ववदिति भावः । विपक्षे बाधकाभावाद्व्याप्तिहीनौ द्वावपि तर्कावित्यत उभयत्र विपक्षे बाधकमाह ॥ अन्यथेति ॥ तात्पर्यगोचरस्यापि बाध्यत्व इत्यर्थः ॥ यजमानेति ॥ अन्यथेत्यनुषङ्गः । तात्पर्यगोचरस्यापि व्यावहारिकत्व इत्यर्थः ॥ प्रागिति ॥ जिज्ञासाधिकरणे ।

अद्वैत्युक्तमन्यदपि निराह ॥ यच्चेति ॥ पूर्वतन्त्रे हि षष्ठस्याद्यपादे ''फलार्थ-त्वात्कर्मणश्शास्त्रं सर्वाधिकारं स्यादि''ति द्वितीयेऽधिकरणे देवर्ष्यादीनामधिकारोऽस्ति न वेति विशये फलार्थित्वादिनाऽधिकारोऽस्तीति प्राप्ते देवानां देवतांतराभावेन तदुद्देशेन हविस्त्या-गायोगाद्भृगुप्रभृत्यृषीणां भृग्वाद्यंतराभावेनार्षेयवरणायोगादनधिकारः कर्मणि देवर्ष्यादीनामिति सिद्धान्तितम् । तदुक्तन्यायेन कर्मण्यधिकाराभावेऽपीत्यर्थः । प्राचां वस्वादिदेवानां भृग्वाद्यृषीणां च क्षीणाधिकारत्वेनेदानींदेवत्वऋषित्वयोरभावादिति भावः ॥ सोऽस्तीति ॥ तथेह बाधकाभावादिति भावः । यज्ञं विष्णुम् । यज्ञो वै विष्णुरिति श्रुतेः । अयजन्त आराधितवन्तः । एतत्पुरुषसूक्तगतं वाक्यम् । ''देवावै सत्रमासत ऋद्धिपरिमितं यशस्कामा'' इति तैत्तिरीये द्वितीयकाण्डे तृतीयप्रश्नादावारण्यके च वाक्यम् । ''देवा यज्ञमतन्वते''त्यपि पुरुषसूक्तस्थं वाक्यम् । ''देवा वै चतुर्होतृभि''रिति परातेद्वितीयकाण्डे द्वितीयप्रश्ने वाक्यम् । चतुर्होतृभिः चतुर्होतृनामकैः । अग्निर्होतेत्यादिमन्त्रैरित्यर्थः । ''यद्विश्वेदेवा'' इत्येतदपि पराते

प्रथमकाण्डे चतुर्थप्रश्ने वाक्यम् ॥ प्रजापतिर्वा इति ॥ एतेन ''प्रजापतिर्वाव ज्येष्ठः । स ह्येतेनाग्रेऽयजते''ति सप्तमकामकाण्डस्थं वाक्यमुपात्तमित्याहुः । अन्ये तु शाखान्तरस्थमिति । ''इन्द्रोऽश्वमेधा''निति तृतीये ''श्रुत्यादिबलीयस्त्वाच्च न बाध'' इत्यत्र भाष्योक्तश्रुतिः । देवा वा इति पराते द्वितीयकाण्डे द्वितीयप्रश्ने श्रुतम् । अत्र वाक्य आद्यंतयोश्श्रुतषष्ठचन्त-पदयोर्देवतानामपि देवानामिति विशेषणविशेष्यभावेनान्वयः । देवतानामपीत्यस्य ''साऽस्य देवते''त्यादाविव सम्प्रदानभूतस्वामिवाचित्वाद्देवतापदस्य यज्ञेष्वाराध्यानामपीत्यर्थः । तेन न पौनरुक्त्यदोषः । देवानामपीत्यपिशब्दो न केवलं मनुष्याणामिति समुच्चयार्थः । अर्थवादानां स्वार्थे तात्पर्यस्य परेषामप्यनुमतत्वादन्यथा देवतातद्विग्रहाद्यसिद्ध्यापत्तेरित्यग्रे वक्ष्याम इति भावः । नन्वबाधे स्वार्थे तात्पर्यम् । इह च बाधकान्न स्वार्थे तात्पर्यमस्तीति चेत् तत्किं शूद्रादिवन्निषेध उत देवतांतराभावादिरूपः प्रागुक्तः । आद्य आह ॥ शूद्रेति ॥ ''नाग्निर्न-यज्ञश्शूद्रस्य तथैवाध्ययनं कुत'' इति ''न च वर्णावरस्याप्यधिकार'' इतिवन्न देवानामधिकार इति निषेधाश्रवणादिति भावः । द्वितीय आह ॥ देवतेति ॥ वेदसूत्रे वेदार्थनिर्णायकसूत्रे । वज्रिणं वज्रशब्दवाच्यं माम् । वज्र्यन्तर्गतमिति वा । शक्रः प्रसिद्धेन्द्रः । यजतामिति द्वितीयार्थे षष्ठी । यजतः । अथवा ''यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपस्विनः । वयं हनामद्विषत'' इत्यादाविव यजतामिति लोडात्मनेपदम् । अत्र विष्णुविषयत्वाप्रतीतेराह ॥ भगवद्वचनादि-भिरिति ॥ अत एवेति ॥ भगवत एवोद्देश्यत्वादित्यर्थः । अभिजयेयं प्राप्नुयामित्यर्थः । इन्द्राय इन्द्रशब्दवाच्याय विष्णवे । इयं च श्रुतिः पराते तृतीयकाण्डे प्रथमप्रश्ने श्रूयते । एवं देवानामधिकारं समर्थ्य ऋषीणां तमाह ॥ भृग्विति ॥ अनेकमानविरोधेन सङ्कोचो न्याय्य इति भावः ॥ पूर्वपूर्वेति ॥ यदत्रोक्तं भामत्यां प्राचां भृग्वादीनां क्षीणाधिकारत्वेनेदा-नीमृषित्वाभावादिति तन्न । भृग्वादित्वानपायात् । उक्तं च तन्त्ररत्ने ''न च भृग्वादयो भृग्वादिसगोत्रा इति भाष्यमयुक्तम् । कुतः । अनादिर्हि कालोऽस्माकं भृगोरपि पूर्वं भृग्वन्तरसम्भवात् । ततः पूर्वमप्येवमेवेति सम्भवत्येव भृगोर्भार्गवत्वमित्यस्त्येवर्षीणामधिकार'' इति । ''ऋष्युदाहरणमनादरणीय''मिति शास्त्रदीपिकायामपि ऋष्युदाहरणानादरणमुक्तम् ।

**पाण्डुरङ्गि** – ननु ता एता इत्यादेस्सृज्येन तात्पर्यमिति चेत्तथात्वे स्रष्टर्यपि न स्यादविशेषादित्याह ॥ न हीति ॥ ननु श्रुतितात्पर्यगोचरस्यापि विग्रहादेर्ब्रह्मज्ञानेतर-

ज्ञानाबाध्यत्वाद्व्यावहारिकत्वम् । यजमानप्रस्तरत्वादेर्ब्रह्मज्ञानेतरज्ञानबाध्यत्वादव्यावहारिकत्व-मित्यत आह ॥ समर्थितं चेति ॥ श्रुतौ श्रद्धालुना त्वया श्रुतेस्तात्विकविषयत्वस्यैव वक्तव्यत्वात् । न चैतद्देवताशरीरादिकं प्रमाणान्तरप्राप्तम् । येन तद्वाक्यमनुवादकं सत्तत्रातात्पर्यादप्रमाणं न स्यादित्यादिनांऽतराद्यधिकरणेषु समर्थितमित्यर्थः । देवानां कर्मस्वनधिकारः किं साधकाभावात्किं वा निषेधसद्भावात्किं वाऽनुपपत्तिसद्भावादिति विकल्पान्मनसि निधायाद्यं दूषयति ॥ देवतानामपीति ॥ न द्वितीय इत्याह ॥ शूद्रवच्चेति ॥ तृतीये देवानां देवतांतरभावेन तदुद्देशेन हविस्त्यागायोगो बाधक इति तावन्निराकरोति । देवताकर्तृकयज्ञेष्विति ॥ वेदसूत्रेति ॥ सूचनात्सूत्रमित्यर्थः । ऋषीणां भृग्वादीनां भृग्वाद्यंतराभावेन तद्वरणायोगात्स्वेन स्ववरणस्य च कर्तुमशक्यत्वान्न कर्मण्यधिकार इत्यत आह ॥ भृग्वादीति ॥ भृग्वादिवरणस्य मनुष्यमात्रविषयत्वे गौणता भवतीत्यरुच्याऽह ॥ यद्वेति ॥

## तात्पर्यचन्द्रिका

ननु "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः शरदि वैश्य" इति "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं शरदि वैश्य"मिति च त्रैवर्णिकानामेवाधानोपनयने श्रुते इति अत्रैवर्णिकानां देवानां तदभावात्तत्साध्याग्निविद्ययोरभावान्न धर्माधिकार इति चेन्न । "देवा वै भद्राः सन्तोऽग्निमाधित्सन्ते"त्युपक्रम्य "ते पुनर्वस्वोरादधते"ति "देवावा अग्निमादधते"त्यादौ देवतानामप्याधानश्रवणात् । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति ब्रह्मणः, "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वण"मित्यादौ देवर्षीणां नारदादीनां चाध्ययनश्रवणाच्च ।

त्वत्प्रसादेन भगवन् ! स्वाध्यायतपसोर्मम ।
कुशलं चाव्ययं चैव सर्वस्य जगतस्तथा ॥

इति मोक्षधर्मे चतुर्मुखं प्रति रुद्रवचनाच्च । देवानां त्वन्मते कर्मानधिकारेऽपि वैदिकज्ञानाधिकारवदुपनयनाभावेऽप्यध्ययनोपपत्तेश्च । अध्ययनाभावेऽपि देवानां स्वयं प्रतिभातवेदत्वाच्च । "अथ पुमर्थसाधनान्यर्थो धर्मो ज्ञानमित्युत्तरोत्तरम् ।

**तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरोत्तर''मित्यादिश्रुतिसिद्धस्य देवानां कर्माधिकारस्यात्रैवर्णिकत्वादिनाऽपलापे तत एव तेषां ब्रह्मविद्यानधिकारापाताच्च । ''देवा एव ब्रह्मचारिण'' इति प्रक्रम्य ''सर्ववर्णाः सर्वाश्रमिणः सर्वं ह्येते कर्म कुर्वन्ति'' इत्यादिश्रुतेर्देवानामत्रैवर्णिकत्वाभावाच्च ''एतया निषादस्थपतिं याजये'' दित्यादिवचनादत्रैवर्णिकत्वेनानाहिताग्नीनामपि निषादस्थपत्यादीनां लौकिकाग्नौ वैदिककर्माधिकाराङ्गीकाराच्च । देवा वै सत्रमासतेत्याद्यर्थवादानां मानांतरप्राप्तिविरोधयोरभावेन देवताविग्रहाद्यर्थवादानामिव त्वन्मते स्वार्थे प्रामाण्याच्च । देवानामुपासनांगकर्मानधिकारे उपासनानधिकारापाताच्च ।**

**प्रकाशिका** – देवानामधिकारे बाधकान्तरमाशङ्क्य निराह ।। नन्विति ।। तत्साध्येति ।। आधानोपनयनसाध्ययोरग्निविद्ययोरित्यर्थः । अग्निराहवनीयादिः । विद्या त्वध्ययनसाध्यार्थज्ञानम् । आधित्सन्त आधातुमैच्छन् । ''देवा वै भद्रास्सन्तोऽग्निमाधित्सन्त तेषामनाहितोऽग्निरासीत् अथैभ्यो वामंवस्वपाक्रामत् ते पुनर्वस्वो''रित्यादिश्रवणात्तैत्तिरीयशाखायामित्यर्थः । तच्छब्दपरामर्शद्योतनाय ''इत्युपक्रम्ये''त्युक्तम् । अध्ययनमप्यस्तीत्याह ।। य इति ।। प्रहिणोति उपदिशति । भगवः भगवन् । ''मतुवसोरुसम्बुद्धौ छन्दसी''ति वसोरुः । ननूपनयनसंस्काराभावादध्ययनोक्तिरुपचरितार्थेत्यत आह ।। देवानामिति ।। ''विविदिषंति यज्ञेन दानेन तपसे''त्यादिश्रुत्या ''यज्ञादिश्रुतेरश्ववʼʼदिति सूत्रेण च कर्मणोऽपि विद्यांगत्वादिति भावः । उपनयनसाध्या यनाभावेऽपि विद्यासम्पत्तिमाह ।। अध्ययनेति ।। ननु बाधकात्कर्मानधिकारेऽपि ''मघवान्प्रजापतौ ब्रह्मचर्यमुवासे''त्यादिश्रुतिसिद्धत्वाद्ब्रह्मविद्यायां सोऽङ्गीकार्य इति चेत्तुल्यं कर्मण्यपि । अन्यथा तत्रापि न स्यादिति श्रुत्युदाहरणपूर्वमाह ।। अथ पुमर्थेति ।। श्रुतीति ।। ज्ञानपादे ''नाविशेषा''दित्यत्र भाष्योक्तश्रुतिसिद्धेत्यर्थः । तत एव अत्रैवर्णिकत्वादेवेत्यर्थः । तदधिकारस्याप्युपनयनसापेक्षत्वादिति भावः ।

अत्रैवर्णिकत्वमभ्युपेत्योक्तम् । वस्तुतस्तु तदेव नेत्याह ।। देवा इति ।। श्रुतेरिति ।। ज्ञानपादे ''मौनवदितरेषामप्युपदेशा''दिति सूत्रे ''देवा एव ब्रह्मचारिणो, देवा एव गृहस्था, देवा एव वनस्था यथा ह्येते मुनय एवं सर्ववर्णा'' इति भाष्योक्तकौठरव्यश्रुतेरित्यर्थः । एवं देवानामग्निविद्ये तत्प्रयोजकत्रैवर्णिकत्वं च प्रसाध्येदानीमग्नेरभावेऽप्यधिकारं न्यायेनोपपादयति ।।

एतयेति ।। षष्ठस्याद्यपादे ''स्थपतिर्निषादःस्याच्छब्दसामर्थ्या''दित्यंतिमेऽधिकरणे ''वास्तुम
चरुं निर्वपे''दिति प्रकृत्य ''एतया निषादस्थपतिं याजये''दिति श्रुतम् । तत्र यो द्विजाति
निषादानामाधिपत्यं करोति तस्याधिकार उत यो निषाद एव स्थपतिस्तस्येति संशये पक्षद्वयेऽ
शब्दस्य यौगिकत्वात्षष्ठीसमासाश्रयणेऽग्निविद्यावतामेवाधिकारलाभाद्विजानामेवाधिकार इ
प्राप्ते षष्ठीसमासाश्रयणे निषादपदस्य तत्सम्बन्धिनि लक्षणाप्रसङ्गात्कर्मधारये तदभावाच्छुत्यर्थ
लाभायाविदुषो निषादस्यैवाधिकार इति सिद्धान्तितम् । तथा च सिद्धेऽधिकारे ''स्थपतीष्टि
प्रयाजवदग्न्याधेयं प्रयोजये''दित्यष्टमपादीयतृतीयाधिकरणे ''एतये''ति श्रुतस्थपतीष्टि
किमाहवनीयादिषु स्यादुत लौकिकाग्नाविति संशये प्रकृतित आहवनीयादिप्राप्तेस्तस
चाधानाधीनत्वादसत्यपि स्थपतेराधानविधाविष्टिरेवेयमाधानं प्रयोजयेदिति प्राप्ते वसन्तादि
वाक्यविहिताधानजन्याग्निगतसंस्कार- वाचित्वादाहवनीयादिशब्दस्य स्थपतिकृतेन चाधानेना
विहितेन संस्कारासिद्धेर्नाधानाक्षेप इति लौकिकाग्नावेवेष्टिस्स्यादित्युक्तं तद्वद्देवानाम
धिकारस्स्यादित्यर्थः ।

ननु विषमोऽयमुपन्यासः । स्थपतेरिष्टिविधानबलेनैतस्य सर्वस्य कल्पनेऽपि प्रकृतेऽपि
देवानां विशिष्य कर्मविध्यभावात् । प्रागुदाहृतवचनानां चार्थवादत्वेन सत्रादिप्रशंसापरत्वेन
स्वार्थे तात्पर्याभावात् । अन्यथा ''वायुर्वै क्षेपिष्ठा देवता, अग्निर्हिमस्य भेषजं, को हि तद्वेद
यद्यमुष्मिंल्लोकेऽस्ति वा न वेति आदित्यो यूपो भवती''त्यादेरपि स्वार्थपरता स्यादित्यत आह
।। देवा वा इति ।। मीमांसकमते तथात्वेऽपि न त्वन्मते तथात्वं युक्तम् । अन्यथा देवता-
विग्रहाद्यसिद्ध्यैतदधिकरणसिद्धांतानुन्मेषस्स्यादित्यर्थः । तदुक्तं भामत्यां ''मन्त्रादिपद-
समन्वयात् प्रतीयमानोऽर्थः प्रमाणान्तराविरोधे सत्यभ्युपेतव्यः । न तु विरोध'' इति ।।
उपासनांगेति ।। यद्यपि नित्ये कर्मण्यंगानधिकारेऽपि प्रधानेऽधिकारश्शक्यांगोपसंहारेण
समर्थितः ''सर्वशक्तौ प्रवृत्तिस्स्यात्तथा भूतोपदेशा''दिति षष्ठतृतीयपादीयाद्यनये ।
तथाप्युपासनायाः फलार्थतया विधानेन काम्यत्वाद्वा कर्मणां शक्यत्वेन वा तद्वैषम्यं ध्येयम् ।
एतेन कर्माङ्गविद्याधानानधिकारिणोऽपि स्थपतेः कर्माधिकारोऽस्तीति निरस्तम् ।
''नाग्निर्नयज्ञश्शूद्रस्य तथैवाध्ययनं कुत'' इति स्थपतेस्तत्राधिकारनिषेधस्येव देवानां
कर्माधिकारनिषेधाभावात् ।

**पाण्डुरङ्गि** – ननु देवाः कर्माधिकारिणो न अत्रैवर्णिकत्वादित्यनुमानविरोधाद्देवानामनधिकारितेत्याशङ्क्य तर्हि देवाः न ब्रह्मविद्याधिकारिणोऽत्रैवर्णिकत्वाच्छूद्रवदित्यनुमानविरोधाद्ब्रह्मविद्याधिकारोऽपि न स्यादित्याह ॥ अथ पुमर्थसाधनानीति ॥ यदि च ब्रह्मविद्यानधिकारसाधकमत्रैवर्णिकत्वानुमानं देवानां ब्रह्मविद्याधिकारप्रतिपादकश्रुतिविरोधादप्रमाणम् । तर्हि कर्मानधिकारसाधकमप्यनुमानं तत्प्रतिपादकश्रुतिविरोधादमानमिति समानम् । तदेतदाह ॥ इत्यादिश्रुतिसिद्धस्येति ॥ ननु तथापि न देवानां कर्मण्यधिकारः । तत्प्रतिपादकवाक्यस्य मानान्तरप्राप्तितद्विरोधाभ्यां तत्रातात्पर्यादित्यत उक्तं मानान्तरेत्यादि ॥

## तात्पर्यचन्द्रिका

**यच्चोक्तमुभाभ्यां तिर्यगादीनामसामर्थ्यात्कर्मब्रह्मविद्ययोरनधिकार इति तन्न ।**

**एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् ।**
**तुष्टाव प्रांजलिर्भूत्वा यत्तच्छृणु नराधिप ॥**

**इत्यादिना भारते जरितारिसारिसृक्वस्तंबमित्रद्रोणाख्यानां चतुर्णां पक्षिणां "अयमग्ने जरिते"त्याग्नेयसूक्तेनाग्निस्तावकत्वोक्तेः । तत्रैव "स्तम्बमित्रस्तपः कुर्याद्द्रोणो ब्रह्मविदुत्तम" इति द्रोणादेर्ब्रह्मवित्त्वाद्युक्तेश्च । "ऋषीनस्मान्बालकान्पालयस्वे"ति ऋषिशब्देन चतुर्णामपि मन्त्रद्रष्टृत्वोक्तेश्च । "ऋषिर्द्रोण त्वमसि वै ब्रह्मैतद्व्याहृतं त्वये"ति द्रोणस्य वेदव्याहर्तृत्वोक्तेश्च । "अयमष्टौव्यृचाः शार्ङ्जरिताद्रोणसारिसृक्वस्तंबमित्राश्चे"त्यनुक्रमणिकायां "अयमग्ने जरिते"त्यादि सूक्ते द्रोणादीनां पक्षिणामृषित्वोक्तेश्च । रामायणादौ हनुमदादीनां वेदवित्त्वाद्युक्तेश्च । शूद्रादिवत्तिर्यगादीनामधिकारनिषेधाभावाच्च । अर्वाचीनानां तिर्यगादीनामस्माभिरप्यधिकारानङ्गीकाराच्च । अर्वाचीनदृष्टान्तेनेतरेषामप्यसामर्थ्यानुमानेऽतिप्रसङ्गाच्च ।**

**यच्चोक्तमुभाभ्यामिन्द्रादीनां विग्रहवत्त्वे ऋत्विगादिवत्सन्निधानेन कर्माङ्गत्वं स्यात् । तच्च विरुद्धम् । बहुषु यागेषु युगपदेकस्येन्द्रादेः सन्निधानायोगादिति चेन्न ।**

एकस्या अपि देवताया अनेकशरीरप्रतिपत्तेरिति द्वितीयार्थ इति । तन्न । देवताया विग्रहवत्त्वेऽपि स्वस्थानस्थिताया एकस्या एव बहुभिरुद्देष्टुं शक्यत्वेन कर्मणि विरोधशङ्कानुदयात् । ब्रह्मविद्याधिकारे हि सामर्थ्याद्यर्थं विग्रहादिकमेवापेक्षितम् । न त्वृत्विगादिवत्सन्निधानमपि । ननु "इन्द्रागच्छ हरिवआगच्छे"त्यादिनाऽऽह्वानात्सन्निधानसिद्धेर्विरोधशङ्कोदय इति चेत् यद्याह्वानमागमनार्थं तर्हि सिद्धं विग्रहवत्त्वम् । यदि त्वदृष्टार्थं न तर्हि सन्निधानसिद्धिः । एतेन "कस्य वा देवा यज्ञमागच्छन्ती"त्यादिवाक्यात्सन्निधानसिद्धेः शङ्कोदय इति निरस्तम् । अनेन वाक्येन देवतानामागमनसिद्धौ तत एव विग्रहवत्त्वसिद्धेः । असिद्धौ च कर्मणि विरोधशङ्कानुदयात् । एवं सूत्रान्तरेऽप्यनुपपत्तिरूह्या ॥

**प्रकाशिका** – एवं देवादीनामधिकारं समर्थ्य तिरश्चामपि केषांचित्साधयितुं परोक्तमनूद्यापाकरोति ॥ यच्चेति ॥ तिरश्चामनधिकारः किमश्रुतत्वात्किं वा शूद्रस्येव निषिद्धत्वाद्विशिष्टबुद्ध्याद्यभावाद्वा । आद्यं प्रत्याह ॥ एवमुक्त इति ॥ भारत आदिपर्वणि खाण्डवदाहसमये द्रोणादेः पक्षिण इत्यर्थः । हे द्रोण त्वमपि ऋषिर्वै यतः त्वया एतद्ब्रह्म वेदरूपं व्याहृतमिति योजना । हनुमदिति ॥ तस्य कपित्वेन तिर्यक्त्वमिति भावः । एतेन तृतीयोऽपि निरस्तो बोध्यः । द्वितीयं निरस्यति । शूद्रेति ॥ ननु किं तिरश्चामद्यतनानामधिकारोऽथ केषांचिद्विशिष्टानाम् । नाद्यः । बाधात् । नान्त्यः । विमतास्तिर्यंचो नाधिकारिणः । तिर्यक्त्वात् । अर्वाचीनतिर्यग्वदित्यनुमानविरोधादित्यतो द्वयं क्रमेण निराह ॥ अर्वाचीनानामिति ॥ अतिप्रसङ्गादिति ॥ अद्यतनपुरुषेषु सामर्थ्यादर्शनेन देवानामपि विश्वधारणादिसामर्थ्याभावानुमानं स्यात् । श्रुत्यादिबाधस्तूभयत्र सम इति भावः । एतेन "तिर्यगाद्यपेक्षया मनुष्यत्वविशेषणमुक्त"मिति भाष्यादिकं त्वर्वाचीनतिर्यगाद्यपेक्षयेति व्याख्येयमित्युक्तं भवति । एतेन "तेषामप्ययमग्रे जरितेत्यादावधिकारदर्शना"दित्युत्तरनयस्थटीकावाक्यं विवृतं ध्येयम् ।

एवं विद्याधिकारसमर्थनादेव तदङ्गकर्माधिकारोऽपि सिद्ध इति स पृथङ्न समर्थित इति ध्येयम् । एवं मतद्वयेऽप्याद्यसूत्राभिप्रेतं सिद्धान्तं निरस्य द्वितीयसूत्रार्थमप्यनूद्य निराह ॥ यच्चेति ॥ "इन्द्रागच्छ हरिव आगच्छे"त्यादिनाऽऽहूतस्य सन्निधानानुपपत्तेरिति रामानुजभाष्यमाशङ्कते ॥ इन्द्रेति ॥ तर्हि सिद्धमिति ॥ एवं च विरोधशङ्कया विग्रहाद्यभावापादनं

व्याहतमित्यर्थः । रामानुजभाष्योक्तमेवान्यदपि शङ्काबीजमाशंक्याह ।। एतेनेति ।। ''कस्य वा देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानां यो वै देवताः पूर्वः परिगृह्णाति स एनाः श्वो भूते यजत'' इत्यादिनाऽग्न्यादेस्तत्र तत्रागमनसिद्धेरित्यर्थः । एतच्छब्दार्थं व्यनक्ति ।। अनेनेति ।। एवमिति ।। तथा हि । विग्रहादिमत्त्वेऽङ्गीक्रियमाणे कर्मणि विरोधाभावेऽपि वैदिकेन्द्रादिशब्देऽनित्यार्थसंयोगरूपविरोधस्स्यादेव । विग्रहवत्त्वे जनिमृतियोगेन जनेः पूर्वं नाशादूर्ध्वमिंद्रादिशब्दानामर्थशून्यत्वमनित्यत्वं वा स्यादिति चेन्न । अतो वैदिकादेवेन्द्रादिशब्दादिन्द्रादेः प्रभवादुत्पत्तेरिति तृतीयसूत्रार्थमुभावप्याहतुः । स न युक्तः । इन्द्रादिजगद्धेतुत्वस्योपादानत्वरूपस्य ब्रह्मधर्मत्वेन शब्देऽभावात् । दण्डचक्रादिवन्निमित्तत्वरूपस्य चायोगात् । अथ मतं इन्द्रादिशब्दस्य न साक्षादिन्द्रादिजगदुत्पत्तौ हेतुत्वम् । किन्तु यथा कुलालो घटादिशब्दान्मनसि निधाय वर्तमानात्तदाकारं स्मृत्वा घटादिकं तद्वाच्यं सृजति तथा पूर्वस्मिन्निंद्रादौ नष्टे वैदिकादिन्द्रादिशब्दाद्ब्रह्मा पूर्वेंद्राद्याकृतिविशेषं स्मृत्वा तदाकारमपरमिन्द्रादिकं सृजतीति बुद्धिस्थितार्थस्मारकतयेति । तन्न । सर्वज्ञस्य शब्दाधीनार्थस्मरणेन सृष्ट्ययोगेन शब्दादित्यर्थकस्यात इत्यस्य वैयर्थ्यात् । चतुर्मुखस्य मुख्यस्रष्टृत्वाभावेन ''धाता यथा पूर्वमकल्पय''दित्यादेः परब्रह्मपरत्वात् । योऽपि प्रत्यक्षानुमानाभ्यामित्यस्य घटादिनिर्माणस्य शब्दपूर्वकत्वस्य प्रत्यक्षसिद्धत्वाज्जगत्सृष्टावप्येवमेवानुमानादिति परैरर्थ उक्तः स न युक्तः । तथा सति तयोस्समुच्चित्य हेतुत्वानुपपत्तेः । जगत्सृष्टेश्शब्दपूर्वकत्वेऽनुमानस्यैव साक्षात्प्रवृत्तेः प्रत्यक्षस्य व्याप्तिग्रहौपयिकत्वेन तच्छेषत्वात्प्रत्यक्षानुमानाभ्यामिति द्विवचनस्य क्लिष्टत्वात् । दण्डपरशुभ्यां वृक्षश्छिद्यत इति व्यपदेशाभावात् । कैश्चिच्छ्रुतिस्मृतिभ्यामित्यर्थ उक्तः । सोऽपि न साधुः । रूढार्थत्यागापत्तेः । अत इत्यनेनैव श्रुतिस्मृतिरूपशब्दस्य ग्रहणसम्भवेन तस्य वैयर्थ्याच्च । यच्चोक्तं परैः इन्द्रादिजगत इन्द्रादिवेदशब्दजन्यत्वादेव वेदस्य नित्यत्वमिति चतुर्थस्यार्थ इति तन्न । तत्समर्थनस्य प्रकृतानुपयोगात् । चशब्दानुपपत्तेश्चेत्यादिरूपेण ध्येयम् । ग्रन्थगौरवभयादुपरम्यते ।

यत्कश्चिदाह ''ततो देवा रुद्रं नापश्यन् । ते देवा रुद्रं ध्यायन्ती''त्यत्रोक्तो देवानामुपासनाधिकारो न युक्तोऽथ युक्त इति संशये पूर्वोक्तरीत्या विग्रहाभावेन सामर्थ्याभावात् ''देवाह वै स्वर्गं लोकमगमन् । तेदेवारुद्रमपृच्छ''न्निति देवलोकस्य परब्रह्मपदस्य

चैकार्थत्वावगमेनार्थित्वायोगादुपनयनाभावेन वैदुष्यायोगाज्जडत्वेनानधिकार इति प्राप्ते विग्रहलोकभेदस्वयंप्रतिभातवेदत्वाभ्युपगमेनास्त्यधिकार इति सिद्धांत इति तदनेनैव निरस्तम् । प्रागुक्तदोषात् । देवलोकपरब्रह्मलोकयोर्भेदस्य ''कर्मचितो लोकः क्षीयते । अक्षय्यं पद''मित्याद्यनेकमानमितत्वेनास्मद्रीत्यैवार्थित्वाभावस्योपपादनीयत्वाच्च । ''ताभिरेनं रुद्रोऽन्वायत्त'' इति ''रुद्रेणैव मुखेने''ति ''तद्रुद्रा उपजीवन्ती''त्यादिना रुद्रस्याप्युपासनाधिकारिवर्गप्रविष्टत्वेन तस्योपास्यकोटिप्रवेशायोगाच्च । यच्चाद्यसूत्रे तदिति भिन्नं पदं लुप्तषष्ठीकम् । पूरणगुणेति समासनिषेधादिति । तन्न । निर्वाहस्योक्तत्वात् । द्वितीयादिसूत्रार्थोऽपि प्राग्वन्निरसनीयः । यदत्रोक्तं शिवार्कमणिदीपिकायां पूर्वसूत्रे तदुपरीत्यनेनेन्द्रादेर्हविर्भोक्तृत्वमर्थादुक्तम् । तन्न सम्भवति । युगपदनुष्ठीयमानानेकक्रतुषु सन्निधानेन भोक्तृत्वायोगादिति विरोधशङ्कोदय इति तन्न । ब्रह्मविद्याधिकारोपयोगिविग्रहादावेव विरोधशङ्कासमाधानौचित्येन तदनुपयुक्तभोक्तृत्वे विरोधशङ्कादेरसङ्गतत्वात् । अग्नौ प्रक्षिप्तस्य तदैव भस्मसाज्जातस्यानेककायसाधारणेनापि तद्भोक्तृत्वस्य बाधाच्च । तद्द्वारा भोक्तृत्वेन च स्वस्थाने स्थितस्याग्निना नीतहविर्भोक्तृत्वसम्भवात् । अत एवाग्नेर्देवदूतत्वप्रसिद्धिरपीत्यास्ताम् ।

**पाण्डुरङ्गि** – नन्वधिकारप्रयोजकस्य विशिष्टबुद्ध्यादेस्तिर्यङ्मात्रनिष्ठत्वाभावात्कथं तिरश्चामधिकार इत्यत आह ।। अर्वाचीनानामिति ।। ननु विप्रतिपन्नास्तिर्यंचो नाधिकारिणः । तिर्यक्त्वात् । अर्वाचीनवदित्यनुमानविरोधात्कथं तिर्यगादीनामधिकार इत्यत आह ।। अर्वाचीनेति ।। अतिप्रसङ्गादिति ।। अर्वाचीनानां शूद्रादीनां ब्रह्मविद्यानधिकारदर्शनेन देवानामपि ब्रह्मविद्यायामनधिकारानुमानमपि स्यादित्यतिप्रसङ्गादित्यर्थः ।

## तात्पर्यचन्द्रिका

**टीकाक्षरार्थस्तु ।। नाध्यायादिसङ्गतिर्गवेषणीयेति ।। मुखतो व्युत्पाद्येऽधिकारे न साक्षादध्यायसङ्गतिर्गवेषणीयेत्यर्थः । प्रासङ्गिकसङ्गतेस्तत्रापि सत्त्वात् । फलिते देवतोपास्यत्वलिङ्गसमन्वये साक्षात्सङ्गतेरपि सत्त्वाच्च । पर्वतेतरत्वादीनामपि व्याप्तिरस्ति न वा । आद्यं निरस्यति ।। का नो हानिः पर्वतेतरत्वादीनामपि**

निर्वचनस्य प्रकरणविशेषस्थत्वात्प्रकरणविशेषस्थेनाज्यैः स्तुवत इत्यादिनैवाज्यशब्देनान्वयवत् वर्जनाद्वज्रमुख्यत इति निर्वचनं यत्प्रकरणविशेषस्थं तत्प्रकरणस्थवज्रशब्देनैवान्वेतीति कथं वज्रशब्दस्य सर्वत्र भगवत्परत्वमित्यत आह ।। वर्जनादिति ।। वज्रबाहुरित्यादिव्यावृत्त्यर्थं योग्येति ।। अनारभ्याधीतत्वात् अन्यप्रकरणेऽपठितत्वादित्यर्थः । अनारभ्याधीतत्वेऽपि कथं वैदिकशब्दमात्रेणान्वय इत्यतस्तत्र पूर्वतन्त्रीयं दृष्टान्तमाह ।। यथेति ।।

ननु च वर्जनाद्वज्रमुच्यत इत्यादिस्मृतेर्वज्रश्रुत्यपेक्षया दुर्बलत्वान्न श्रुते रूढित्यागापादकत्वमित्यत आह ।। यद्यपीति ।। बाध्यबाधकभावे न प्राबल्यदौर्बल्यमात्रं प्रयोजकम् । किन्तु विरोधविशिष्टम् । प्रकृते च विरोधाभावान्न बाध्यबाधकभाव इत्याह ।। तथापीति ।। ज्योतिरधिकरणे ज्योतिरुपक्रमादित्यधिकरणे । उदाहरिष्यमाणं एष इमं लोकमभ्यार्चदित्युदाहरिष्यमाणम् । एवं वज्रशब्दस्यान्यत्र रूढिमभ्युपेत्य स्मृत्युक्तं योगमङ्गीकृत्य वज्रश्रुतिविरोधः परिहृतः । इदानीं च वज्रशब्दस्य भगवत्येव रूढत्वात्तत्परत्वेन रूढित्यागोऽपीऽत्याह ।। न चेति ।। नापीत्यर्थः । ननु यदि क्लृप्तरूढिपरित्यागेन योगकल्पना तर्हि यस्य कस्यापि शब्दस्य यत्र कचनार्थे योगस्य सुवचत्वादर्थव्यवस्था न स्यात् । तथाच कंपकत्वादिब्रह्मलिङ्गान्यपि कथंचिदिन्द्रायुधे स्युरित्यत आह ।। एतेनेति ।। एतेनेत्यनेन परामृष्टं हेतुमाह ।। स्मृत्यादेरिति ।। ननूद्यतत्वं न ब्रह्मणि युक्तम् । तस्य लोके उद्यतायुधदोर्दण्डा इति स्मृतौ तेनेन्द्रो वज्रमुदयच्छदित्यादिश्रुतौ चायुधे प्रसिद्धत्वादित्यत आह ।। उद्यतत्वं चेति ।। नन्वेवं वज्रशब्दस्य भगवति मुख्यत्वोपपादने काठकभाष्यविरोधः । तत्र वज्रशब्दस्य भगवति गौणत्वोक्तेरित्यत आह ।। यत्त्विति ।। योग एवेत्यनेन न विद्वद्रूढिनिरासः । किं तु गौणत्वस्येति बोध्यम् ।। कम्पनाधिकरणम् ।। १० ।।

## तात्पर्यचन्द्रिका

**अन्येतु ।। प्राण एजतीति वाक्यस्थ प्राणः प्रसिद्धेर्वायुरिति प्राप्ते ब्रह्मैवेति सिद्धान्त इत्याहुः । तन्न । प्रागनुक्तसमन्वय उद्यतत्वरूपपूर्वपक्षबीजरूपयुक्ते च वज्रशब्दे सति असकृदुक्तसमन्वयस्य बीजशून्यस्य च प्राणशब्दस्य समन्वयोक्त्ययोगात् । किं च**

ब्रह्मलिङ्गत्वेन सूत्रोक्तं कम्पकत्वं त्वदुक्तममृतत्वहेतुवेदनत्वं च भयंकरत्वेनोक्ते ''य एतद्विदु''रिति नपुंसकलिङ्गनिर्दिष्टे च वज्र एवेति तत्रैव चिन्ता युक्ता । केचित्तु ॥ ''शब्दादेव प्रमित'' इत्यत्र ब्रह्मपरत्वेन निर्णीतयोः ''अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । अङ्गुष्ठमात्रः पुरुषोंऽतरात्मा सदा जनाना''मिति वाक्ययोर्मध्यस्थे ''यदिदं किञ्चे''ति वाक्येऽन्यपरत्वशङ्काऽयोगान्नेदं सूत्रमधिकरणान्तरम् । किंत्वंगुष्ठमात्रस्य ब्रह्मत्वे हेत्वंतरं सत् ''शब्दादेव प्रमित'' इत्येतदधिकरणशेष इत्याहुः । तन्न । श्रुत्यादिना प्रकरणबाधेन पूर्वपक्षोदयस्योक्तत्वात् । अङ्गुष्ठवाक्यद्वयमध्य एव ''ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातन'' इति प्रपञ्चवाक्यदर्शनाच्च । ''शब्दादेवे''त्येतदानन्तर्यस्य च शब्दस्य च प्रसङ्गाच्च । सूत्रे हेतुमात्रोक्तावपि ''अभिव्यक्ते''रित्यादाविव योग्यस्य साध्यस्याध्याहारसम्भवाच्च ॥ टीकाक्षरार्थस्तु स्पष्टः ॥ कम्पनाधिकरणम् ॥ १० ॥

**प्रकाशिका** – अन्येत्विति ॥ ''यदिदं किंच जगत्सर्वं प्राण एजति निस्सृत''मित्यत्र सप्तम्यंतः प्राणशब्दः किं वायुरुत ब्रह्मेति संशये पञ्चवृत्तिराध्यात्मिको वायुरेव । तत्र प्राणशब्दस्य प्रसिद्धेः । वज्रशब्दस्य चाशनौ प्रसिद्धत्वादशनेश्च धूमज्योतिस्सलिलसंवलितबाह्यवायुरूपत्वाद्बाह्यवायुर्वाऽत्र प्राणशब्दार्थः । अमृतत्वहेतुवित्तिविषयत्वं चापेक्षिकत्वादिना कथंचिन्नेयमिति प्राणवज्रश्रुत्यनुरोधाद्वायुरेव । ''तदेव शुक्रं तद्ब्रह्मे''ति ''भयादस्याग्निस्तपती''ति च प्राचीनपराचीनवचनसंदष्टतया प्रतीयमानं तदेकवाक्यत्वं ''अन्यत्र धर्मादन्यत्राधर्मा''दिति ब्रह्मप्रकरणं च प्राणवज्रश्रुतिबलाद्बाध्यत इति प्राप्ते सवायुकस्य जगतः ''एजती''ति कंपनात् कम्पयितृत्वश्रवणात् अमृतत्वहेतुज्ञानविषयत्वाच्च तयोर्ब्रह्मलिङ्गत्वाद्ब्रह्मैव प्राणः । वज्रशब्दश्च शासकत्वेन भयहेतौ ब्रह्मणि गौणवृत्त्योपपन्न इति न पूर्वापरवाक्यैकवाक्यत्वप्रकरणे बाधनीये । अत एव ''जगत्सर्व''मिति सर्वशब्दसंकोचोऽप्ययुक्त इति सिद्धान्तः । सूत्रार्थस्तु ''शब्दादेवे''ति सूत्रात् मण्डूकप्लुत्या शब्दात् प्रमित इति पदद्वयमनुकृष्यते । तथाच कम्पनात् जगत्सर्वमेजतीति कृत्स्नकम्पयितृत्वश्रवणात् । सर्वशब्दादत्र परमात्मैव प्रमित इति । विषयानौचित्येन दूषयति ॥ प्रागिति ॥ असकृदुक्तेति ॥ तथाच ब्रह्मण्यपि प्रसिद्धिरस्तीति प्राणवज्रश्रुतिबलाद्वाक्यं प्रकरणं च भङ्क्त्वा वायुः

पञ्चवृत्तिराध्यात्मिको बाह्यवायुश्चात्र प्रतिपाद्यत इति भामत्युक्तिरयुक्तेति भावः । प्राणशब्दस्य विषयत्वं निरस्य वज्रशब्दे तु तद्युक्तमित्याह ॥ किञ्चेति ॥ सूत्रार्थोऽप्ययुक्तः । हेतूक्त्या समन्वीयमानस्योक्तदिशा सद्बीजस्य शब्दविशेषस्याध्याहारेण वज्रं ब्रह्म कम्पनादित्यन्वयसम्भवे क्लेशायोगात् । सर्वशब्दस्य साक्षाद्ब्रह्मप्रापकत्वाभावेनास्वारस्याच्चेति भावः ॥ केचित्त्विति ॥ श्रुतप्रकाशोक्तमनुवदति ॥ शब्दादेवेति ॥ नन्वेवं परमात्मपरत्वस्य प्रागेव निश्चयात्सूत्रवैयर्थ्य-मित्याशङ्क्याह ॥ हेत्वंतरमिति ॥ प्रपञ्चेति ॥ तथाच तद्वदेव ''यदिदं किञ्चे''ति वाक्यं तन्मध्यस्थमप्यन्यपरमिति पूर्वपक्षोऽयुक्त इति भावः ॥ चशब्दस्येति ॥

ननु सूत्रे चशब्दाभावोऽनन्तरपूर्वाधिकरणशेषत्वभ्रमानुदयार्थः । नत्वधिकरणान्तरत्वादिति श्रुतप्रकाश एव समाधानमुक्तमिति चेन्न । चशब्दाभावेपि व्यवहितशेषत्वापेक्षया सन्निहितशेष-त्वस्यैव प्रथमप्रतीतेः । अर्थानन्वयादनंतरशेषत्वाभावे चावश्यकचशब्दप्रयोगेपि तत एव तच्छेषत्वप्रतीतेरभावोपपत्तेरिति भावः । ननु सूत्रे समन्वीयमानशब्दानुक्तेः कथमधिकरणान्तर-त्वमित्यत आह ॥ सूत्र इति ॥ यथात्वन्मतेऽभिव्यक्तेरुपासकानामभिव्यक्त्यर्थप्रादेशमात्रत्वं परमात्मन इति साध्यमध्याह्रियते तथाऽत्रापि वज्रं ब्रह्मेति साध्यमध्याहार्यमित्यर्थः ॥ साध्यस्येति ॥ परमतरीत्या साध्यधर्मविशिष्टस्य पक्षस्येत्यर्थः । स्वमते तु साध्यबोधकस्य तत्पदस्य सर्वत्रानुवर्तनाद्वज्रमिति पक्षस्याध्याहार इति ध्येयम् । एतेन भामतीरीतिमनुसरतः कस्यचिच्छैवस्य मतमपि प्रत्युक्तं बोध्यम् । ''नभस्वतोऽपि सर्वाः स्युश्चेष्टाभगवतो हरे''रिति ''वर्जनाद्वज्र''मित्यादिस्मृतिविरोधेन शिव इति सिद्धान्तस्यायुक्तत्वाच्चेति ॥ कम्पनाधिकरणम् ॥ १० ॥

## ज्योतिरधिकरणम्

**ॐ ज्योतिर्दर्शनात् ॐ ॥ ज्योतिश्शब्दस्याग्न्यादौ लोकतः प्रसिद्धत्वेऽपि संशय-कोट्योर्जीवेशयोर्ज्ञानरूपत्वेन प्रवृत्तिनिमित्तप्रकाशत्वस्य साम्यादुभयत्र प्रसिद्धता । यद्यपि ज्ञानकारणप्रश्नोत्तरे ''आदित्येनैवायं ज्योतिषाऽऽस्ते वाचैवायं ज्योति-षाऽऽस्त'' इत्यादौ ज्योतिश्शब्दो न ज्ञानपरः । तथापि ''कतम आत्मे''त्यात्म-प्रश्नोत्तरे ''योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योति''रित्यत्र तत्परः । अत एव भाष्ये**

''योय''मित्यादि वाक्यमेवोदाहृतम् । तस्मात्पादसङ्गतिः । पूर्वसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेरनंतरसङ्गतिः । यद्वा ''शब्दादेवे''त्यत्र प्राणव्यवस्थापकत्वादिलिङ्गमात्रात् पूर्वःपक्षः । ''कम्पना''दित्यत्र तु वज्रश्रुत्युद्यत्वलिङ्गाभ्यां सः । अत्र तु निरवकाश-बहुलिङ्गैः स इत्यवांतरसङ्गतिः ।

तत्र ''हृद्यंतज्योंति''रित्यात्मप्रश्नोत्तरस्थं ज्योतिः किं जीवः किं वा ब्रह्मेति चिन्ता । तदर्थं ''कतम आत्मा''इत्यात्मप्रश्ने ततः पूर्वस्मिन् ''आत्मैवास्य ज्योतिः''इति वाक्ये च श्रुत आत्मशब्दः किमस्येति निर्दिष्टजीवस्वरूपपरः किं वा परमात्मपर इति । तदर्थं ''अत्रायं पुरुषः स्वयं ज्योति''रित्यात्मप्रश्नोत्तरोपसंहार-स्थपुरुषादिशब्दाः किं ''किं ज्योतिरयं पुरुष'' इति ज्ञानप्रश्नोपक्रमपुरुषादिशब्दैनैकार्था उत भिन्नार्था इति । तदर्थमुपसंहारस्थपुरुषादिशब्दानां किमुपक्रमप्रकृतपरत्वाद्यर्थं ब्रह्मरूपमुख्यार्थत्याग उत मुख्यार्थत्वाय प्रकृतपरत्वादित्याग इति । यद्याद्यस्तदा जीवपरोपक्रमोपसंहारमध्यस्थात्मशब्दस्य जीवपरत्वाज्जायमानत्वादिलिङ्गाच्चात्मप्रश्नो-त्तरस्थं ज्योतिर्जीव एव । यदि तु द्वितीयस्तदोपसंहारानुसारेणात्मशब्दस्य मुख्यार्थ-भूतपरमात्मपरत्वाद्ब्रह्मपरवाक्यमध्यस्थानां जायमानादिशब्दानामन्तर्भावितण्यंतत्वेन ब्रह्मण्यपि सम्भवाज्ज्योतिश्शब्दस्य ब्रह्मणि मुख्यत्वाच्च ज्योतिर्ब्रह्मैव ।

**प्रकाशिका** – ।। ॐ ज्योतिर्दर्शनात् ॐ ।। अस्य नामपादे निवेशशङ्कां निरस्यन् ''जीवेशयोर्ज्ञानरूपत्वेन हृदयाहितत्वेन च साधारण्यस्ये''त्यादिटीकोक्तां पादसङ्गतिं समर्थयते ।। ज्योतिरिति ।। अग्र्यादाविति ।। अन्यत्रप्रसिद्धत्वं नाम न ब्रह्मणोन्यत्र यत्र क्वचित्प्रसिद्धत्वम् । किन्तु पूर्वपक्ष्यभिमतेऽन्यत्र । न चाग्निसूर्यादिरत्र पूर्वपक्ष्यभिमतः । प्रबलतत्प्रापकाभावात् । अग्र्यादित्यादिज्योतिषामस्तमयमुक्त्वा ''आत्मैवास्य ज्योति''रित्याद्युक्तेश्च । प्रसिद्धजीवलिङ्ग-बाहुल्याच्च । येन नामपादे निवेशस्स्यादिति भावः ।। संशयेति ।। पूर्वोत्तरपक्ष्यभिमतयोरित्यर्थः ।

ननु जीवेशयोर्ज्ञानरूपत्वेऽपि कुतो ज्योतिर्नाम्नस्साधारण्यमित्यतष्टीकाभिप्रायमाह ।। प्रवृत्तीति ।। ननु तमोविरोधित्वं ज्योतिष्ट्वम् । तच्च तमसा सह स्थिते व्याप्ते हरावयुक्तमित्यत

उक्तं प्रकाशत्वस्येति ।। ज्ञानत्वरूपस्येत्यर्थः । इदमेवात्र प्रकरणेऽभिमतं ज्योतिष्ट्वम् । नत्वन्यत्। अतः क्वाप्येवंरूपसाधारण्यस्य मूलकृदनुक्तत्वेऽपि टीकायामुक्तिर्भाष्योक्तविषय-वाक्यमूलेति भावेनाह ।। यद्यपीत्यादिना ।। ज्ञानत्वरूपप्रकाशत्वस्य वृत्तिरूपज्ञाने सत्त्वेऽपि पूर्वत्र मुख्यप्रेरकत्वस्य प्राणेशमात्रसाधारण्यमिवानादिनित्ये स्वरूपज्ञाने मुख्यं प्रकाशत्वमिति वा अन्यसाधारण्येऽप्यदोष इति वा तात्पर्यं बोध्यम् । पूर्वत्रेव प्रयोगसाम्येन तथात्वं तु नोक्तम् । सम्प्रतिपन्नप्रयोगाभावात् । प्रयोगान्वेषणापेक्षयास्यांतरङ्गत्वाच्च । पूर्वोक्त्यन्यत्रप्रसिद्धिभ्यां तथात्वं तु न सम्भवति । पूर्वोक्तेराक्षेपात् । अन्यत्र जीवे प्रसिद्ध्यभावाच्च । उत्तरनये तु पूर्वोक्तेरनाक्षेपात्तथात्वं युक्तमिति भावः ।

एवं पादसङ्गतिपरटीकां विवृत्येदानीं ''ज्योतिश्चरणाभिधाना''दित्यादिटीका फलोक्ति-परेति भावेन ''ज्योतिर्विष्णुश्चेदुभयलोकसंचरणलिङ्गविरोध'' इति टीकया सूचितामापवादिकीं सङ्गतिमाह ।। पूर्वसिद्धान्तेति ।। ''बहुताद्दक्त्व''मिति न्यायविवरणमनुरुध्य ''इत्यादि जीवलिङ्गाच्चे''ति टीकायां निरवकाशबहुजीवलिङ्गोक्त्या सूचितां सोपानारोहणक्रमरूप-सङ्गतिमाह ।। यद्वेति ।। मध्येऽधिकारतद्धानिविचारौ प्रासङ्गिकाविति भावः । विषयसंशयटीकां व्यनक्ति ।। तत्रेति ।। एवं सङ्गतौ सत्यामित्यर्थः । यद्वा ''आदित्येनैव ज्योतिषास्त'' इत्यादिना श्रुतज्योतिश्शब्देषु मध्य इत्यर्थः । एतेन ''तज्योति''रिति टीकास्थ तच्छब्दार्थो विवृतः । वाजसनेये षष्ठेऽध्याये ज्योतिर्ब्राह्मणे ''याज्ञवल्क्य किं ज्योतिरयं पुरुष'' इत्यादिजनकप्रश्नं प्रत्यादित्यचन्द्राग्निवाग्रूपेषु ज्योतिषु पूर्वपूर्वास्तमय उत्तरोत्तरं पुरुषस्य ज्ञानकारणशब्दितं ज्योतिरभिधाय ''अस्तमित आदित्ये , याज्ञवल्क्य चन्द्रमस्यस्तमिते, शान्तेऽग्नौ, शान्तायां वाचि, किं ज्योतिरेवायं पुरुष'' इति प्रश्ने ''आत्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योति-षाऽऽस्ते पल्ययते कर्म कुरुते विपल्येती''त्यात्मनो ज्योतिष्ट्वमुक्त्वोपपाद्य च ''कतम आत्मे''ति पुनः प्रश्ने कृते परिहरति याज्ञवल्क्यः ''योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुषस्ससमानस्सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि । स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिस्संसृज्यते स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति । तस्य वा एतस्य पुरुषस्य द्वे एव

स्थाने भवन इदं च परलोकस्थानं च संध्यं तृतीयं स्वप्नस्थानं तस्मिन्संध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च । अथ यथाक्रमोऽयं परलोकस्थाने भवति तमतिक्रममाक्रम्योभयान्पाप्मन आनन्दांश्च पश्यति सयत्र प्रस्वपिति । अस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवती''त्युक्त्वा ''न तत्र रथा'' इत्यादिना स्वाप्नपदार्थसृष्टिं चाभिधाय ''तदेतेश्लोका'' इत्यादिनोक्तार्थे श्लोकानुदाहृत्यान्ते ''यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषस्स्वयं ज्योति''रित्याद्याह ॥ तत्र बीजयुक्तं विषयमाह ॥ हृदीति ॥ आत्मप्रश्नं प्रति परिहारवाक्यस्थमित्यर्थः । वाक्यांतरस्थं तु विषय इत्येतन्निरसिष्यत इति भावः । ततः कतम इति वाक्यात् ॥ आत्मेति ॥ कतम इत्यात्मप्रश्नस्य यदुत्तरं तदुपसंहारस्थमित्यर्थः ॥ ज्ञानेति ॥ ज्ञानकारणप्रश्नोपक्रमस्थेत्यर्थः ॥ उपक्रमेति ॥ उपक्रमे प्रकृतं यज्जीवरूपं तत्परत्वार्थमित्यर्थः । एतेन चिन्ताद्वयं सूचितम् । भिन्नार्था इति चिन्तानन्तरं किमुपसंहारस्थाः पुरुषादिशब्दा उपक्रमप्रकृतपरा उत ब्रह्मपराः । तदर्थं प्रकृतपरत्वानुग्रहाय मुख्यार्थत्याग उत मुख्यार्थानुग्रहाय प्रकृतपरत्वत्याग इति चिन्ताचतुष्टयस्य फलफलिभावमस्फुटत्वाद्व्यनक्ति ॥ यद्वाद्य इति ॥ उपक्रमोपसंहारयोरेकार्थत्वपक्ष इत्यर्थः । ननूपक्रमादिवशादवगतमप्येकवाक्यत्वं श्रुतिबलाद्भंजनीयमित्यत आह ॥ जायमानत्वेति ॥ तत्तु निरवकाशमिति भावः । ननु वाक्येन कथं लिङ्गबाध इत्यतस्सावकाशत्वादिति भावेनाह ॥ अन्तर्भावितेति ॥ वैपरीत्यं किं न स्यादित्यत आह ॥ ज्योतिरिति ॥

**पाण्डुरङ्गि** – ॥ ॐ ज्योतिर्दर्शनात् ॐ ॥ टीकोक्तं ज्ञानरूपत्वेन ज्योतिश्शब्दस्य साधारण्यमयुक्तम् । तस्य लोकतोऽग्न्यादौ प्रसिद्धत्वेनान्यत्र प्रसिद्धत्वात् । अन्यथा ज्योतिश्चरणाभिधानादित्यत्रापि ज्योतिश्शब्दस्योभयत्र प्रसिद्धत्वं स्यादित्यतष्टीकोक्तं ज्ञानरूपत्वेन साधारण्यमुपपादयति ॥ ज्योतिश्शब्दस्येति ॥ अत एवेति ॥ अंतर्ज्योतिरित्यत्र ज्योतिश्शब्दस्य ज्ञानपरतया भाष्यकृदभिप्रेतत्वादेवेत्यर्थः ॥ पूर्वसिद्धान्तन्यायेनेति ॥ निरवकाश लिङ्गबलादेव विष्णुरेव ज्योतिरित्यादिश्रुतिसिद्धार्थत्याग इति न्यायेनेत्यर्थः ।

## तात्पर्यचन्द्रिका

पूर्वपक्षस्तु ॥ पूर्वत्र यथा निरवकाशलिङ्गबलाद्ब्रह्मश्रुतेर्लोकप्रसिद्धार्थत्यागस्तथेहापि ''स समानःसन्नुभौ लोकावनुसंचरति । सवा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः संसृज्यते । स उत्क्रामन्म्रियमाणः पाप्नोविजहाती''त्यादिजीवलिङ्गबलादेव ''विष्णुरेवज्येति''रित्यदिश्रुतिप्रसिद्धार्थत्यागः । यद्यपि जायमानत्वं द्युभ्वाद्यधिकरणन्यायेन उत्क्रमणं च भूमाधिकरणन्यायेन सावकाशम् । तथापि म्रियमाणत्वादिकं निरवकाशम् । भाष्य उभयलोकसंचरणोक्तिस्तु कर्माधीनलोकद्वयसंचरणं न ब्रह्मणि युक्तमित्यभिप्राया । नतु संचरणमेवायुक्तमित्यभिप्राया । अत एवोक्तं टीकायां ''जीवस्यहि कर्मवशादुभयलोकसंचरणं न ब्रह्मणि युक्तमित्यभिप्राया। न तु संचरणमेवायुक्तमित्यभिप्राया । अत एवोक्तं टीकायां ''जीवस्यहि कर्मवशादुभयलोकसंचरणं युक्त''मिति ।

किञ्च ''किंज्योतिरयंपुरुष'' इति प्रश्ने ''आदित्यज्योतिरादित्येनैवायं ज्योतिषाऽऽस्त'' इत्यादिना यस्य जागरण आदित्यादिज्योतिष्ट्वमुक्तं स तावज्जीवः । नह्यादित्यादिज्योतिष्ट्वं विष्णोर्युक्तम् । ''न तत्र सूर्योभाती''त्यादेः । तदुक्तं न्यायविवरणे ''आदित्यादिज्योतिष्ट्वमुभयलोकसंचरणमादित्येनैवायं ज्योतिषास्त इत्यवधारणमित्यादीनां परमात्मन्यवकाशाभाव'' इति । तस्यैव च जीवस्य ''आत्मैवास्यज्योति''रिति वाक्ये स्वप्नादौ स्वप्रकाशत्वरूपमात्मज्योतिष्ट्वमुक्तम् । अस्येतीदंशब्दस्य प्रकृतजीवपरत्वात् । आत्मशब्दस्य च स्वरूपार्थत्वात् । ज्योतिश्शब्दस्य च ज्ञानार्थत्वात् । अस्मिंश्चात्मनि ''कतमआत्मा''इति पृष्टे उच्यमानमिदं ज्योतिर्जीव एव । अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यापातात् । ननु यस्यादित्यादिज्योतिष्ट्वमुक्तं सजीव एवास्तु । आत्मैवास्येति वाक्य इदंशब्दोऽपि जीवपर एवास्तु । आत्मशब्दस्तु ''गौणश्चेन्नात्मशब्दा''दित्यादिन्यायेनपरमात्मपरः । ज्योतिश्शब्दश्च ''वाचैवायं ज्योतिषाऽऽस्त'' इत्यादिपूर्ववाक्य इव ज्ञानहेतुपरः । तथाचास्य जीवस्य परमात्माज्ञानहेतुरित्युक्ते स एव परमात्मा ''कतम आत्मे''ति पृष्ट इति न वैयधिकरण्यम् । न

च वाच्यं ब्रह्मणो जागरणेऽपि जीवज्ञानहेतुत्वेन तदादित्येनैवेत्याद्यवधारणं, स्वप्नादौ विशिष्यब्रह्मणो ज्ञानहेतुत्वोक्तिश्चायुक्तेति । जीवपक्षेऽपि साम्यात् । जीवस्यापि स्वगतज्ञानहेतुत्वेनावधारणायोगात् । जागरणेऽपि स्वप्रकाशत्वेन विशिष्योक्त्ययोगाच्च । तस्माद्ब्रह्मैव ज्योतिरिरिति चेदुच्यते । किं ज्योतिरयं पुरुष इति ज्ञानसाधनपश्नोपक्रमस्थस्य जीवस्यात्र ''अयं पुरुषः स्वयं ज्योति''रित्यात्मप्रश्नोत्तरोपसंहारे पुरुषादिशब्दैः प्रत्यभिज्ञानात्तन्मध्यस्थं ''आत्मैवास्य ज्योति''रित्येतदपि जीवपरमेव ।

अत एवोपसंहारवाक्यस्यायं पुरुषः परमात्माऽस्य जीवस्य स्वयमेव ज्योतिरित्यर्थ इति निरस्तम् । पुरुषादिशब्दानां तैःप्रकृतजीवपरत्वत्यागेन तैरप्रकृतब्रह्मपरत्वायोगात् । अस्येत्यस्याध्याहारापाताच्च । किंच उपसंहारस्थस्वयंशाब्दानुसारात् ''आत्मैवास्ये''त्यत्राप्यात्मशब्दःस्वरूपपरः । न तु ब्रह्मपरः । तस्मादात्मप्रश्नोत्तरे अपि जीवविषये एवेति जीवएवेदं ज्योतिः । यद्यप्यत्रानन्दमयाधिकरणे दहराधिकरणे च ब्रह्मपरत्वेन निर्णीतं विज्ञानमयत्वं हृद्गतत्वं चास्ति तथापि पूर्वपक्षेऽतीतज्योतिरधिकरणस्येव तयोरप्याक्षेपात्पूर्वपक्षोदयः ॥

**प्रकाशिका** – अंतिमचिंतास्थपूर्वकोटिं विवृण्वन् ''जीव एवेदं ज्योति''रित्यादिपूर्वपक्षटीकां व्यनक्ति ॥ पूर्वत्रेति ॥ एतेन पूर्वसिद्धान्तन्यायेनेत्येतद्विवृतम् ॥ प्रसिद्धेति ॥ ज्योतिरादिशब्दस्येति शेषः । विष्ण्वर्थत्वत्याग इत्यर्थः । केन प्रसिद्धेत्यत उक्तं विष्णुरेवेति ॥ एतेन ''विष्णुरेव ज्योति''रिति श्रुत्या ज्योतिश्श्रुतेर्विष्णौ प्रसिद्धेः कथं जीव इति टीकोक्तिरिति प्रत्युक्तम् । पूर्वन्यायेन निरवकाशलिङ्गबलेन श्रुतिबाधोपपत्तेरिति । टीकोक्तलिङ्गानि न बाधकानीत्याशङ्क्याह ॥ यद्यपीति ॥ म्रियमाणत्वेति ॥ तस्य देहवियोगरूपत्वेन नित्यदेहे भगवत्ययोगादिति भावः । ननु भाष्ये लोकसंचरणस्य जीवलिङ्गत्वोक्त्या भगवत्यपरिच्छिन्ने क्रियामात्रमपि नेति प्रतीयत इत्युत्क्रमणमपि निरवकाशमिति गम्यत इत्यत आह ॥ भाष्य इति ॥ टीकायाः सावकाशस्यापि जायमानत्वादेर्जीवलिङ्गतयोक्तिस्तु निरवकाशजीवलिङ्गांतरसाहचर्याज्जायमानत्वादिकमपीह जीवे प्रसिद्धमेव ग्राह्यम् । न तु विष्णुधर्मभूतमित्यभिप्रायेति भावः । ''आदित्यादिज्योतिष्ट्व''मिति

न्यायविवरणैकदेशप्रपञ्चनपरां ''किञ्चे''त्यादिटीकां ''न तत्र सूर्यो भातीत्यादे''रित्यंतां विवृणोति ॥ किं चेति ॥ टीकोक्तेर्मूलमाह ॥ तदुक्तमिति ॥ इत्यादीनामित्यादिपदेन प्रागुक्तजायमानत्वादिलिङ्गजातं गृह्यते । सर्वेषामवकाशाभाव उपपादितः । अस्तु स जीवः । ततः किमित्यत आह ॥ तस्यैव चेति ॥ तत्कुत इत्यत आह ॥ अस्येति ॥ अस्मिन्निति ॥ स्वप्रकाशत्वेनोक्त इत्यर्थः । इदं हृद्यंतज्योतिरुच्यमानम् । एतेन द्वितीयचिन्ता-स्थपूर्वपक्षकोटिर्विवृता । ''न च वाच्यं यस्यादित्यादिज्योतिष्ट्वमुक्त''मित्यादिटीकां व्यनक्ति ॥ नन्विति ॥ टीकायामेतच्छङ्कानिवर्तकत्वेन न्यायविवरणोक्तावधारणं योजयित्वा ''अयं पुरुषः स्वयं ज्योतिर्भवतीत्यस्यैवार्थस्य प्रत्यभिज्ञानाच्चे''ति युक्त्यंतरं चोक्तम् । तत्र युक्त्यंतरोक्तेर-वधारणं नातीवशङ्कानिवर्तने क्षममिति हृदयमिति भावेन टीकोक्तावधारणयोजनां विवृण्वन्न-स्याक्षमतामाह ॥ न च वाच्यमिति ॥ अयुक्तेतीत्यनेनान्वयः । टीकोक्तां प्रत्यभिज्ञानयुक्तिं व्यनक्ति ॥ किं ज्योतिरिति ॥ न्यायविवरणे त्वादिपदोक्तप्रत्यभिज्ञानादिनिरवकाशलिङ्ग-सत्त्वादभ्युच्चयत्वेनावधारणं युक्तमिति भावः । एतेन तृतीयचिन्तास्थपूर्वपक्षकोटिर्विवृता । अत एवेत्युक्तमेवाह ॥ पुरुषादीति ॥ तैः पुरुषादिशब्दैः प्रकृतो यो जीवस्तत्त्यागेनेत्यर्थः । सापेक्षत्वात्समासः । देवदत्तस्य गुरुकुलमिति यथा । युक्त्यंतरं च स्वयमाह ॥ किञ्चेति ॥ अतीतेति ॥ भाष्यादिकमुपलक्षणमिति भावः ।

## तात्पर्यचन्द्रिका

**सिद्धान्तस्तु ॥ ''विष्णुरेव ज्योति''रिति भाष्योदाहृत श्रुतावावधारणात्, ''नारायणपरो ज्योतिः परंज्योतिरुपसम्पद्य तं देवा ज्योतिषां ज्योति''रित्यादि श्रुतिषु परत्वादिविशेषणाच्च ज्योतिश्शब्दो विष्णावेव मुख्यः । स च ''हृद्यंतर्ज्योति'' रित्यात्मप्रश्नोत्तरोपक्रमे ''सुप्त इत्यत्रायं पुरुषः स्वयं ज्योति''रित्युपसंहारे ''स्वपित्य-त्रायं पुरुषः स्वयं ज्योति''रिति मध्ये च श्रुतः । तथा च ज्ञानसाधनप्रश्नोपक्रमादंत-रंगेणात्मप्रश्नोत्तरोपक्रमेण तदुपसंहारेण च विष्णुपरत्वेन निर्णीतवाक्यमध्यपतितानि ''म्रियमाण'' इत्यादीनि उपांशुयाजादिवाक्यमध्यपातिविष्ण्वादिवाक्यवत्तदनुसारेण नेयानि । तथाहि -**

म्रियमाणादिलिङ्गानामन्तर्गतणिजर्थता ।
अश्वप्रतिग्रहेष्ट्यादौ गृह्णीयादिति शब्दवत् ।। १ ।।

यदा "प्रजापतिर्वरुणायाश्वमनय"दित्याद्युपक्रममात्रानुसारेण "यावतोऽश्वान् प्रतिगृह्णीयादित्यत्र प्रतिगृह्णीयादित्यस्य प्रतिग्राहयेदित्यंतर्भावितणिजर्थता तदाहि किमु वाच्यमिहोपक्रमोपसंहारमध्यपरामर्शानुसारेण म्रियमाणादिशब्दानामन्तर्भावितणिजर्थतेति । दर्शिताश्च बृहदारण्यकभाष्येंऽतर्भावितण्यर्था बहवः प्रयोगाः "जज्ञे बहुज्ञं परमाभ्युदारं,

तदेतन्मे विजानीहि यथाहं मन्दधीर्हरे ।
सुखं बुध्येय दुर्बोधं योषा भवदनुग्रहात् ।।

द्रष्टुश्चक्षुषोनास्ति जिह्वे"त्यादयः । उक्तश्च प्रयोजककर्तर्यपि कर्तृत्वमात्र विवक्षायामण्यंतप्रयोगस्तंत्रसारे प्रतिग्रहेष्टिनये । "लोकावनुसंचरती"त्यादौ तु नांतर्भावितण्यर्थता । "लोकसंचरणं तु जीवमादाय तस्यैवादुःखेन स्वातंत्र्या"दिति न्यायविवरणोक्तेः । "पाप्मभिः संसृज्यत" इत्यादावपि तथा । "फलदानाय पापानां ग्रहः संसर्ग उच्यत" इत्यादिबृहदारण्यकभाष्योक्तेः । अत्र "यस्य ज्योतिरयं विष्णुः स परामृश्यते तथे"त्यादिबृहदारण्यकभाष्योक्तरीत्या यदा म्रियमाणत्वादिकं जीवगतं तदात्रापि न ण्यर्थान्तर्भावः । किन्तु

यदा तु भगवानुक्तस्तदा स्वातंत्र्यतो विभुः ।
म्रियमाणो जायमान इत्युक्तस्तन्नियामकः ।।

इति तत्रोक्तभगवद्गतत्वपक्ष एवेति द्रष्टव्यम् । आदित्येनैवेत्यवधारणं तु बाह्यज्योतिषु प्राधान्यापेक्षयेति न्यायविवरण एवोक्तम् । अत्रेति विशिष्योक्तिरपि स्वप्नादौ ज्योतिरंतराभावाभिप्राया । न च प्रत्यभिज्ञाविरोधः । यतः -

समानशब्दप्रकृतादर्थांतरपरत्वतः ।
तेनाप्रकृतमुख्यार्थपरतैव गरीयसी ।। १ ।।

**प्रकाशिका** – श्रुत्यादौ ज्योतिश्शब्दस्य विष्ण्वेकवाचित्वोक्तेर्मुख्यार्थत्यागे बाधकाभावाज्जीवलिङ्गानां च ब्रह्मपरोपक्रमोपसंहारप्रतीतैकवाक्यमध्यपतिततया ब्रह्मण्येव कथंचिन्नेयत्वादिदं ज्योतिर्विष्णुरेवेति भावेन ''विष्णुरेवेदं ज्योति''रित्यादिसिद्धान्तटीकां विवृण्वन् सिद्धान्तयति ।। सिद्धान्तस्त्विति ।। अवधारणादिति ।। यद्यसौ भगवति मुख्यो न स्यात्तदाऽन्ययोगव्यवच्छेदकावधारणं न स्यात् । आदित्यादौ ज्योतिश्शब्दवृत्तेर्दर्शनात् । मुख्यत्वे त्वन्यत्रामुख्यत्वाभिप्रायेण विष्णुरेव ज्योतिरित्यवधारणं सङ्गच्छत इत्यर्थः । मुख्यत्वे युक्त्यंतरमाह ।। नारायणेति ।। परत्वादीति ।। ज्योतिषां ज्योतिष्ट्वविशेषणाच्चेत्यादिपदार्थः । ननूक्तं जीवलिङ्गबलादेव मुख्यार्थत्याग इति तत्राह ।। स चेति ।। विष्ण्वेकवाची ज्योतिश्शब्द इत्यर्थः । नन्वस्त्वेवम् । ''किं ज्योतिरयं पुरुष'' इति जीवोपक्रमस्यापि सत्त्वात्कथं निर्णय इत्यत आह ।। तथाचेति ।। उपांशुयाजेति ।। प्रपंचितमेतदधिकरणशरीरमाद्यसूत्रे । ''विष्णुरुपांशु यष्टव्य'' इत्यादिवाक्यमर्थवादत्वेन यथोपांशु याजशेषत्वेन नियतं तद्वदित्यर्थः । उत्तरार्धोक्तदृष्टान्तव्यक्तिपूर्वं पूर्वार्धोक्तदार्ष्टांतिके विशेषमाह ।। यदेत्यादिना ।। प्रजापतिरिति ।। विवृतमेतत्समन्वयाधिकरणे ।

ननु प्रयोगाधीना ह्यर्थकल्पनेत्यत आह ।। दर्शिताश्चेति ।। जज्ञे जनयामास । विजानीहि विज्ञापय । द्रष्टुः दर्शयितुः । एतेन ''न चेमं लोकमतिक्रामति मृत्योरूपाणीत्याद्युक्तलिङ्गविरोधः । द्रष्टुश्चक्षुष इत्यादिवदंतर्णीतणिच्त्वेनोपपत्ते''रिति टीका हेतूक्तिपूर्वं विवृता भवति ।। प्रतिग्रहेष्टिनय इति ।। ''अचोदितं च कर्मभेदा''दिति तृतीयाध्यायस्य चतुर्थपाद एकादशाधिकरण इत्यर्थः । अधिकरणशरीरं तु समन्वयसूत्रे विवृतम् । ''यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपे''दित्यत्र गृह्णीयादित्यस्य ग्राहयेदित्यर्थमुक्त्वा तत्र प्रयोगोऽप्युक्त इत्यर्थः । ननु लोकसंचरणलिङ्गविरोध इत्यतः ''जीवमादायेश्वरस्यैवोभयलोकसंचरणोक्तेर्न तद्विरोध'' इति टीकां विवृण्वंस्तन्मूलमाह ।। लोकाविति ।। म्रियमाणादावपि ण्यर्थता त्वर्थविशेष एवेत्याह ।। अत्रेति ।। स परामृश्यते स जायमान इत्यादौ तच्छब्देनेत्यर्थः । नन्वथाप्यादित्येनैवेत्यवधारणं स्वप्नादौ विशिष्य ब्रह्मणो ज्ञानहेतुत्वोक्तिश्चायुक्ता । न च जीवपक्षेऽप्येतद्दोषसाम्यापादनमात्रेण स्वपक्षे स दोषः परिहृतो भवतीत्यतो ''न चैवं सत्यवधारणविरोध'' इत्यादिटीकार्थं मूलोक्त्या व्यनक्ति ।। आदित्येनैवेति ।। ''न च विशिष्योक्तिविरोध'' इत्यादिटीकां व्यनक्ति ।। अत्रेतीति ।। टीकायामेव तदुक्तमिति

संमत्युक्तेर्नात्र मूलोक्तिः । ''न च प्रत्यभिज्ञाविरोध'' इत्यादिटीकार्थं स्वयमुपपत्त्युक्त्या व्यनक्ति ।। न चेत्यादिना ऐकार्थ्यं चेत्यंतेन ।। यत इत्यस्य गरीयसीत्यनेनान्वयः ।। अर्थान्तरेति ।। अमुख्यार्थांतरेत्यर्थः । तेन समानशब्देन ।

**पाण्डुरङ्गि** – उपक्रमानुसारेणेति ।। नन्वेतदयुक्तम् । समन्वयाधिकरणे तंत्रसारे -

मैत्रायणीयशाखायां दात्रुपक्रमतोऽप्युते ।<br>कर्मांगत्ववशादेव दातुरिष्टिः प्रतीयते ।।

इत्युपक्रमं विनैव दातुरिष्टिरित्युक्तत्वादिति ह्युक्तम् । अत्रोपक्रममात्रानुसारेण प्रतिगृह्णीयादित्यस्यांतर्णीतण्यर्थतोच्यते । तथाच पूर्वोत्तरविरोध इति चेन्न । अस्य भट्टसिद्धान्तानुवादरूपत्वात् । समन्वयाधिकरणे च तन्मतापवादकताभिधानान्न दोषः । द्रष्टुश्चक्षुष इत्यादिवदिति टीकास्थादिपदसंग्राह्यमाह ।। जज्ञ इत्यादिना ।।

जज्ञे बहुज्ञं परमाभ्युदारं यद्वीपमध्ये सुतमात्मभाजम् ।<br>पराशराद्गन्धवती महर्षिस्तस्मै नमो ज्ञानतमोनुदाय ।। इति ।

टीकायां न चेमं लोकमतिक्रामति मृत्योरूपाणीत्याद्युक्तलिङ्गविरोधे शंकिते सर्वेषामन्तर्भावितण्यर्थत्वेन परिहारोभिमत इति प्रतीयते । तदयुक्तम् । तथासति न्यायविवरणबृहद्भाष्यविरोधापत्तेरित्यतोऽभिप्रायमाह ।। लोकावनुसंचरतीत्यादाविति ।। तथा अन्तर्भावितण्यर्थतेत्यर्थः । ननु ''यस्य ज्योतिरयं विष्णुः स परामृश्यते तथा''इत्यादि बृहद्भाष्योक्तरीत्या म्रियमाणत्वस्यापि जीवगतत्वादन्तर्भावितण्यर्थत्वोक्तिरयुक्तेत्यत आह ।। अत्रेति ।। तत्रोक्तेति ।। बृहद्भाष्योक्तेत्यर्थः । ननु ब्रह्मणो ज्योतिष्ट्वे आदित्येनैवेत्यवधारणायोग इत्यत आह ।। आदित्येनैवेति ।। ननु ब्रह्मणो जागरणेऽपि जीवज्ञानहेतुत्वेन स्वप्नादावत्रायं पुरुषः स्वयं ज्योतिर्भवतीति विशिष्य ब्रह्मणो ज्ञानहेतुत्वोक्तिरयुक्तेत्यत आह ।। अत्रेतीति ।। ननु किं ज्योतिरयं पुरुष इति ज्ञानसाधनप्रश्नोपक्रमस्थस्य जीवस्यायं पुरुषः स्वयं ज्योतिरित्यात्मप्रश्नोत्तरोपसंहारे पुरुषादिशब्दैः प्रत्यभिज्ञानविरोध इत्याशङ्कते ।। न चेति ।। तथा लाक्षणिको न हीत्यर्थः ।

## तात्पर्यचन्द्रिका

पुरुषशब्दो हि पुरुषोत्तमे मुख्य इत्युक्तं गायत्र्यधिकरणे । एवं चोपसंहारस्थयोर्ज्योतिःपुरुषशब्दयोरुपक्रमस्थपुरुषादिशब्दप्रकृतजीवरूपामुख्यार्थपरत्वादपि पुरुषादिशब्दाप्रकृतब्रह्मपरतैव ज्यायसी । मुख्यार्थलाभात् । न हि गङ्गायां घोष इत्यत्र गङ्गाशब्दो लाक्षणिक इति गङ्गायां मत्स्य इत्यादावपि तथा । न हीदमादिशब्दानामिव पुरुषादिशब्दानां प्रकृतपरत्वं व्युत्पन्नम् । ब्रह्मापि "हिरण्मयः पुरुष" इत्यादौ पुरुषशब्देन प्रकृतम् । उपसंहारादिस्थस्येदंशब्दस्य प्रकृतपरत्वेऽपि नोपक्रमस्थेदंशब्दोक्तव्यवहितजीवपरता । किं त्वव्यवहितप्रकृतब्रह्मपरता । यतः -

स्वशब्देनापि यद्दूरे प्रकृतत्वं ततोपि च ।<br>
अन्यशब्देनाविदूरे प्रकृतत्वं प्रयोजकम् ॥ १ ॥

इदमादिशब्देन परामर्शे हितेन शब्देन दूरे प्रकृतत्वादपि शब्दान्तरेण समीपे प्रकृतत्वं प्रयोजकम् । समीपस्थस्य बुद्ध्यविच्छेदात् । व्यवहितस्य च तद्विच्छेदात् । इदंशब्दस्य च बुद्धिस्थपरत्वात् ।

"स्वप्ने न शारीरमभिप्रहृत्यासुप्तः सुप्तानभिचाकशीती"ति ब्रह्मवाक्यं च "किं ज्योतिरयं पुरुष" इति जीववाक्यात्सन्निहितम् । न चाध्याहारः । स्वप्नादौ जीवस्य भगवानेव ज्ञानहेतुर्नत्वादित्यादिरिति भावेन "आत्मैवास्य ज्योति"रित्युक्त्वा तस्मिन्नेवात्मनि प्रश्नोत्तराभ्यां निरूपिते तर्हि ज्योतिश्शब्दोक्तज्ञानसाधनत्वं कथमित्यपेक्षायां "स्वयं विहृत्ये"त्यादिना स्वाप्नपदार्थस्रष्टृत्वतद्दर्शयितृत्वादिकमुक्त्वा "अत्रायं पुरुषः स्वयं ज्योति"रित्युक्तेऽस्येत्यनेन प्रकृतस्य जीवस्यैवान्वयात् । "आत्मैवास्य ज्योति"रिति वाक्यस्थात्मशब्दार्थस्य च "अत्रायं पुरुषः स्वय" मित्यत्र पुरुषशब्देनावधारणस्य च स्वयंशब्देनोक्तत्वादैकार्थ्यं च । जीवपक्षे तु कतम इति प्रश्नायोगः । जीवस्य प्रत्यक्षसिद्धत्वात् । "किं ज्योतिरयं पुरुष" इति प्रश्नसमये संशयधर्मित्वेन निश्चिते तस्मिन्पुनः प्रश्नायोगाच्च । स्वरूपशब्दस्य सम्बन्धिशब्दत्वेन

प्रतिसम्बन्धिनिरूप्यत्वादस्येत्यनेन निर्दिष्टस्य प्रतिसम्बन्धिन एव प्रष्टव्यतया घटस्य स्वरूपमित्यादौ सुप्रसिद्धे प्रतिसम्बन्धिपरतन्त्रे च स्वरूपे प्रश्नायोगाच्च । न हि प्रदीपस्य स्वरूपं प्रकाश इत्युक्ते किं स्वरूपमिति ज्ञातस्वरूपशब्दार्थः पृच्छति । तस्मात् ''किं ज्योतिरयं पुरुष'' इत्यत्र पुरुषशब्दस्य जीवपरत्वेऽपि ''आत्मैवास्य ज्योति''रित्यत्रात्मशब्दो ब्रह्मपरः । तदुक्तं न्यायविवरणे ''अयं पुरुषः संसारी । आत्मशब्दोदित एव विष्णुः । अत एवादित्यादिज्योतिष्ट्वं संसारिण एवे''ति । किं च जीवपक्ष उभयलोकसंचरणे सुखदुःखविशेषवत्त्वेन समानता, ''स्वयं विहृत्ये'' त्यादिवाक्योक्तं स्वातंत्र्यं, ''अथ रथान् रथयोगान्पथःसृजत'' इत्यादिवाक्योक्तं स्वाप्नपदार्थस्रष्टृत्वं, ''स्वप्नेने''त्यादि मन्त्रश्च न युक्त इति बृहदारण्यकभाष्य एवोक्तम् ।

**प्रकाशिका** – श्लोकं व्याचष्टे ॥ पुरुषेति ॥ एवं चेति ॥ अत्रोक्तरीत्या ज्योतिश्शब्दस्य पूर्वोक्तरीत्या पुरुषशब्दस्य च विष्णौ मुख्यत्वे सतीत्यर्थः । नन्वत्र ''अयं पुरुष'' इतीदं शब्दसामानाधिकरण्यात् प्रकृतपरत्वमावश्यकमित्यत आह ॥ ब्रह्मापीति ॥ ''तदेते श्लोका भवन्ती''त्युक्त्वा ''स्वप्नेन शारीरमभिप्रहत्यासुप्तस्सुप्तानभिचाकशीति । शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एकहंस'' इत्युदाहृतश्लोके प्रकृतमित्यर्थः । ननु ''किं ज्योतिरयं पुरुष'' इत्यत्रायमिति समानशब्देन प्रकृतजीवपरत्वमेव स्वरसम् । नत्वतादृशहिरण्मयादिशब्दप्रकृत-ब्रह्मपरत्वमित्यत आह ॥ उपसंहारेति ॥ यतोऽविदूरे प्रकृतत्वं प्रयोजकं अतोऽव्यवहित-ब्रह्मपरतेत्यन्वयः । पद्यं हेतूक्त्या व्याचष्टे ॥ इदमिति ॥ नन्वयं पुरुषः परमात्माऽस्य जीवस्य स्वयमेव ज्योतिरित्यर्थवर्णनेऽस्येत्यध्याहारदोष इत्युक्तमित्याशंक्याह ॥ न चेति ॥ यदप्युक्तं पूर्वपक्षिणा किंचेत्यादि तत्राह ॥ आत्मैवेति ॥ तथाचात्मशब्दो न स्वरूपपरः । किं तु ब्रह्मपर इत्यर्थः । ननु कुत एवम् । बहुलिङ्गबलाज्जीव एवात्मशब्दार्थोऽस्त्वित्यतो विष्णुपरत्वेन निर्णीतवाक्यमध्यपतितत्वेन लिङ्गानामन्यथानयनं स्वयमुक्त्वा ''जीवपक्षे बहुबाधकसद्भावा'' दित्यादिटीकां विवृण्वन्बाधकान्तरमाह ॥ जीवपक्षेत्विति ॥ स्वरूपशब्दस्य स्वरूपपरत्वे-नाङ्गीकृतस्यात्मशब्दस्येत्यर्थः । नन्वादित्यादिज्योतिष्ट्वेन जीवस्य प्रकृतत्वात्कथं तत्त्याग इत्यत आह ॥ तस्मादिति ॥ प्रश्नायोगरूपबाधकादित्यर्थः । एतेन ''आत्मशब्दोदितस्य

विष्णुत्वा''दिति टीकोक्तेः ''जीवपक्षे बहुबाधकसद्भावा''दित्याद्युत्तरटीकावाक्योक्तबाधकानुसन्धानेन सबीजत्वं बोध्यमित्युक्तं भवति । मूलमप्याह ॥ तदुक्तमिति ॥ ''प्रश्नायोगा''दिति टीकां विवृत्य तत्प्रसङ्गात् ''आदित्यादि ज्योतिष्मत'' इत्यादिटीकावाक्यं च विवृत्य तन्मूलं चोक्त्वा ''सुखदुःखविशेषवत्त्वेने''त्यादिटीकां व्यनक्ति ॥ किं चेत्यादिना ॥ बृहदिति ॥ एतेन बाधकोक्तिपरटीकाबृहदारण्यकभाष्यमूलेत्युक्तं भवति ।

**पाण्डुरङ्गि** – ननु भवत्पक्षेऽपि मुख्यार्थत्याग एव । पुरुषादिशब्दानां प्रकृतपरत्वव्युत्पन्नत्वरूपमुख्यार्थत्यागादित्यत आह ॥ न हीति ॥ अस्तु वा पुरुषादिशब्दानामपि प्रकृतपरत्वव्युत्पन्नत्वम् । तथापि नास्मत्पक्षे मुख्यार्थत्यागः । हिरण्मयः पुरुष इत्यादौ पुरुषशब्देन प्रकृतब्रह्मपरत्वात्यागादित्याह ॥ ब्रह्मापीति ॥ अध्याहारः अस्येत्यस्येति शेषः । यच्चोक्तमुपसंहारस्थस्वयंशब्दानुसारेणात्मैवास्येत्यत्राप्यात्मशब्दः स्वपरो न तु ब्रह्मपर इति । तद्दूषयति ॥ आत्मैवेति ॥ स्वपक्षे बाधकमुद्धृत्य परपक्षे बाधकमाह ॥ जीवपक्षेत्विति ॥ ज्योतिरधिकरणम् ॥ ११ ॥

## तात्पर्यचन्द्रिका

**अन्येतु ॥ एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत'' इति वाक्यस्थं ज्योतिरादित्यः । यद्यपीदं प्रकरणं दहराधिकरणे ब्रह्मपरमित्युक्तम् । तथापि ''समुत्थाये''त्यादिश्रुत्या प्रकरणबाध इहाशङ्क्यते । ज्योतिषो ब्रह्मत्वे हि ब्रह्मभावरूपायास्तत्संपत्तेरुत्क्रान्त्यनपेक्षत्वात्समुत्थायेति श्रुतिबाधः । स्वरूपनिष्पत्त्यतिरिक्ताया ब्रह्मसम्पत्तेरभावात् । सम्पद्येति पूर्वकालार्थक्त्वा श्रुतिबाधश्च । ज्योतिष आदित्यत्वे तु शरीरादुत्क्रम्यादित्यसमीपं गत्वा कार्यब्रह्मलोकं प्राप्य क्रमेण मुक्तो भवतीत्यर्थोपपत्तेर्न श्रुतिबाध इति प्राप्ते स्यादेतदेवं यद्यत्रोक्तो मोक्षः सगुणः स्यात् । अयं तु निर्गुणः । ''य आत्मापहतपाप्मे''त्यादिना निर्गुणं ब्रह्मोक्त्वा तज्ज्ञानफलस्यैवोच्यमानत्वात् । तथाच शरीरादुत्थानं नाम श्रवणादिकम् । स्वरूपाभिनिष्पत्तिस्तु तज्जन्यः साक्षात्कारः । सम्पत्तिस्तु तत्साध्यो**

ब्रह्मभावः । क्त्वाश्रुतिस्तु ‘‘मुखं व्यादाय स्वपिती’’त्यादिवदिति सिद्धान्त इत्याहुः । तन्न । ‘‘नारायणपरोज्योति’’रित्यादिश्रुतिषु ‘‘परं ज्योतिः परं धाम पवित्रं परमं भवानि’’त्यादिस्मृतिषु च परशब्दसहितस्य ज्योतिश्शब्दस्य परब्रह्मण्येव प्रसिद्धत्वेन संशयपूर्वपक्षयोरनुदयात् । किञ्च -

पूर्वं यत्सत्यकामादि पश्चाद्यत्क्रीडनादिकम् ।
तद्द्वयं निर्गुणे मोक्षे सर्वथा नोपपद्यते ॥ १ ॥

अस्माद्वाक्यात्पूर्वत्र ‘‘य आत्मापहतपाप्मे’’त्यारभ्य ‘‘सत्यकामः सत्यसंकल्प’’ इति सविशेषब्रह्मणः श्रवणादुत्तरत्र च ‘‘स्वेन रूपेणाभिनिष्पद्यते । सतत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वे’’ति सगुणमोक्षस्य श्रवणान्न निर्गुणोऽयं मोक्षः । अपहतपाप्मत्वादिकं तु सगुणेऽप्यस्ति । ‘‘य एषोंतरादित्ये हिरण्मयः पुरुष’’ इति श्रुते सगुणे ‘‘सर्वेभ्यः पाप्मभ्य उदित’’ इति पापातीतत्वश्रवणात् । सत्यकाम इत्यादिकं तु न निर्गुणे । किं चैवं सति सर्वपदानां लक्षणा स्यात् । ‘‘शरीरात्समुत्थाये’’त्यस्य श्रवणादौ ‘‘उपसम्पद्ये’’त्यस्यैक्ये ‘‘स्वेन रूपेणाभिनिष्पद्यत’’ इत्यस्य च साक्षात्कारे योगरूढ्योरभावात् ।

**प्रकाशिका** – अन्येत्विति ॥ किं ज्योतिरादित्योऽथ ब्रह्मेति संशये ज्योतिःश्रुतेरादित्ये रूढत्वादादित्य इति पूर्वः पक्षः । ननु ‘‘ज्योतिषां ज्योति’’रिति ब्रह्मण्यपि ज्योतिश्शब्दोऽस्ति। प्रकरणं च ब्रह्मपरम् । तथाच कथमादित्य इत्युक्तिरित्याशंक्य भामत्युक्तं समाधिमनुवदति ॥ यद्यपीति ॥ श्रुत्येति ॥ समुत्थायेति प्रकृतिश्रुत्येत्यर्थः । उत्थानं नामोद्गमनम् । उत्क्रमणमिति यावत् । तद्ब्रह्मज्योतिः पक्षे न युक्तमित्याह ॥ ज्योतिष इति ॥ क्त्वाश्रुतीति ॥ ब्रह्मण एव स्वरूपत्वात्स्वरूपं प्राप्य स्वरूपं प्राप्नोतीत्यसङ्गतिप्रसङ्गादिति भावः । उपलक्षणमेतत् । ज्योतिश्शब्दस्य तेजसि मुख्यत्वाद्ब्रह्मणि जघन्यता । ज्योतिश्श्रुतिबाधश्च स्यादित्यपि ध्येयम् । यथोक्तं ‘‘तिसृभिश्श्रुतिभिः प्रकरणबाधा’’दिति । उपसंपद्येत्यस्यार्थमाह ॥ आदित्यसमीपमिति ॥ तस्य तात्पर्यमाह ॥ कार्येति ॥ आदित्यसमीपे ब्रह्मलोके स्थित्वा तत्रोत्पन्नज्ञानान्मुक्तो भवतीत्यर्थः ॥ स्यादेतदेवमिति ॥ यद्यत्र

गौणमोक्षश्रुतः स्यात्तदा शरीरादुत्क्रम्यार्चिरादिनाऽऽदित्यसमीपं गत्वा क्रमेण मुक्तो भवतीत्यर्थःस्यात् । न चैवमित्यर्थः । ननु ज्योतिरुपसंपत्तेरभिनिष्पत्तिरूपसाक्षात्कारसाध्यत्वादभिनिष्पद्य ज्योतिरुपसम्पद्यत इति वक्तव्यम् । न तु ज्योतिरुपसम्पद्याभिनिष्पद्यत इतीत्याशङ्क्य दहराधिकरणे भामत्युक्तमर्थमाह ॥ क्त्वाश्रुतिस्त्विति ॥ उपसम्पद्येत्यत्र ल्यबादेशस्य स्थानिरूपक्त्वाश्रुतिरित्यर्थः । व्यादाय विवृत्य । तत्र यथा व्यादानस्य पश्चात्तनत्वेऽपि क्त्वाप्रत्ययस्तद्वदित्यर्थः ॥ परशब्देति ॥ एतेनार्चिराद्यपेक्षया परत्वातपरज्योतिष्ट्वमादित्यस्य युक्तमिति कल्पतरूक्तं निरस्तम् । कथंचित्परसम्पादने प्रसिद्धिबाधापत्तेः । ननूक्तं समुत्थायेत्यादिश्रुतिबलात्संशयाद्युत्थानमिति चेन्न । तस्याब्रह्मपरत्वेऽप्युपपत्तेः । ''भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकव''दित्यादौ ब्रह्मभावरूपसम्पत्तेर्निरसिष्यमाणत्वात् सिद्धान्तेऽपि मुख्यार्थसम्भवाच्चेति भावः । स्वमते तु ''स तेजसि सूर्ये सम्पन्न'' इति समाख्ययाऽस्य ज्योतिषोऽन्यपरत्वमाशंक्य समाधास्यते चतुर्थे ''आत्मा प्रकरणा''दित्यत्रेति भावः । यदप्यस्य वाक्यस्य निर्गुणमुक्तिपरत्वमुपेत्य सिद्धान्तकरणं तदपि नेत्याह ॥ किञ्चेति ॥ श्लोकं विवृणोति ॥ अस्मादिति ॥ परंज्योतिरिति वाक्यादित्यर्थः ।

ननु य आत्माऽपहतपाप्मेत्याद्यपहतपाप्मत्वादिश्रवणान्निर्गुणत्वमस्येति तद्बलात्सत्यकामत्वादिकं कथंचिन्नेयमित्यतो वैपरीत्यमेवोचितमित्याह ॥ अपहतेति ॥ न निर्गुण इति ॥ काप्यश्रुतेर्व्याहतेश्चेति भावः । यदपि समुत्थायेत्यादेरन्यार्थवर्णनेनोपपत्तिकथनं तदप्ययुक्तमित्याह ॥ किञ्चेति ॥ लक्षणेति ॥ उपलक्षणमेतत् । ''व्यादाय स्वपिति संमील्य हसतीत्युपसंख्यान''मित्युक्तेर्व्यादायेत्यस्य निर्वाहेऽपीह तथा निर्वाहकाभावात् क्त्वाश्रुतिपीडनम् । किञ्च ''उत्तराच्चेदाविर्भूतस्वरूपस्त्वि''ति सूत्रेणैव ''यत्तत्परं ज्योतिरुपसंपत्तव्यं श्रुतं तत्परं ब्रह्म । तच्चापहतपाप्मत्वादिधर्मकम् । तदेव जीवस्य पारमार्थिकं रूप''मित्यादिनाऽस्य ब्रह्मपरत्वं त्वयैव समर्थितमिति तेन गतार्थताच । समुत्थानादिश्रुतेश्चान्यथैवोपपत्तेः । समुत्थानं श्रवणादिकमित्यादिनिर्वाहस्य त्वया तत्रैव कृतत्वाच्च । इह परब्रह्मोपसत्त्याऽऽविर्भूतस्वरूप विषयत्वसमर्थनमुपजीव्यदहराकाशस्य परमात्मत्वं तत्र समर्थितमिति चेत्तर्हि ''उत्तराच्चे''दिति सूत्रानंतर्यमेतस्य स्यात् । हेतुप्रयोगानन्तरमेव हेत्वसिद्धेर्निरसनीयत्वादित्यपि ध्येयम् ।

## तात्पर्यचन्द्रिका

यच्चोक्तं सौत्रस्य दर्शनादित्यस्येह प्रकरणे ब्रह्मणो वक्तव्यत्वेनानुवृत्तेर्दर्शनादित्यर्थ इति । तन्न । तथात्वे आवश्यकत्वेनानुवृत्तेरित्येव वक्तव्यत्वात् ॥ केचित्तु ॥ इदं सूत्रं ''शब्दादेव प्रमित'' इत्येतदधिकरणशेषभूतं सत् अङ्गुष्ठमात्रस्य ब्रह्मत्वे हेत्वंतरपरम् । नत्वधिकरणान्तरम् । ''ज्योतिश्चरणाभिधाना''दित्यत्रैव ज्योतिश्शब्दसमन्वयोक्तेः । अङ्गुष्ठमात्रप्रकरणे ''न तत्र सूर्यो भाती''ति ब्रह्मरूपज्योतिर्दर्शनादिति च सूत्रार्थ इत्याहुः । तन्न । तच्छेषत्वे तदानन्तर्यस्य चशब्दस्य चापातात् । ''न तत्रे''ति श्रुतौ च ज्योतिःपदाभावेन सूत्रस्य श्रुत्यननुगमप्रसङ्गाच्च । सूत्रान्तरेष्विव ज्योतिर्दर्शनपदयोः प्रतिज्ञाहेतुरूपत्वसम्भवे हेतुमात्रत्वायोगात् । ''आकाशस्तल्लिङ्गात्'' अत एव प्राण इत्यत्रोक्तसमन्वययोरप्याकाशप्राणशब्दयोस्त्वयाऽपि ''दहर उत्तरेभ्यः प्राणस्तथानुगमा''दित्यत्र पुनः समन्वयस्याङ्गीकृतत्वाच्चेति ॥ टीकाक्षरार्थस्तु स्पष्टः ॥ ज्योतिरधिकरणम् ॥ ११ ॥

**प्रकाशिका** – सूत्रार्थोऽप्ययुक्त एवेत्याह ॥ यच्चेति ॥ ज्योतिश्शब्दं ब्रह्मेति प्रतिज्ञार्थः ॥ अनुवृत्तेरिति ॥ ''प्राणस्तथानुगमा''दितिवदिति भावः ॥ केचित्त्विति ॥ पूर्वशेषत्वे कथं सूत्रार्थ इत्यतस्तमनुवदति । अङ्गुष्ठमात्रप्रकरण इति ॥ ''न तत्र सूर्योभाती''त्यारभ्य ''तस्य भासा सर्वमिदं विभाती''ति सर्वेषां छादकस्य निरवधिकातिशयस्य भाशब्दाभिहितस्य परब्रह्मभूतस्य ज्योतिषो दर्शनाच्चाङ्गुष्ठप्रमितः परमात्मेति सूत्रार्थ इत्यर्थः । यदुक्तं समन्वितस्य समन्वयो नेति तत्राह ॥ आकाश इति ॥ ननु तत्र प्रापकविशेषसत्त्वात्पूर्वपक्षादिसम्भवात्पुनरुक्तिः । इह तु समुत्थानादिश्रुतेरन्यथोपपत्तेः परंज्योतिश्शब्दस्य विष्णावेव प्रसिद्धेर्न पुनरुक्तिर्युक्तेति चेत्तर्ह्यनेकप्रापकयुक्तास्मदीयोदाहरणमेवाद्रियताम् । न तु पूर्वशेषत्वम् । क्लिष्टत्वादिति भावः । यत्तु कश्चिदाह ''परंज्योतिरुपसम्पद्ये''त्यत्र परंज्योतिर्नारायणो वा शिवो वेति संशये ''स उत्तमः पुरुष'' इति वाक्यशेषे ''देवकीनंदनश्शौरिश्श्रीपतिः पुरुषोत्तम'' इत्यादौ नारायणे प्रसिद्धपुरुषोत्तमशब्दश्रवणान्नारायण एवेति प्राप्ते ज्योतिश्शिव एव ।

तत्प्राप्तानामनिवृत्तिदर्शनात् । शिवादन्यत्प्राप्तानामनिवृत्तेरभावात् । पुरुषोत्तमशब्दो नारायणे रूढोऽपि शिवे यौगिक इति । तन्न । परशब्दसहितज्योतिश्शब्दस्य पूर्वोक्तदिशा पुरुषोत्तमशब्दस्य च ''उत्तमः पुरुषस्त्वन्य'' इति ''प्रथितः पुरुषोत्तम'' इत्यादिना विष्णावेव प्रसिद्धत्वेन संशयस्य शिव इति सिद्धान्तस्य चानुत्थानात् । शिवासाधारणलिङ्गाद्यभावाच्च । ''यद्गत्वा न निवर्तंते तद्धाम परमं ममे''त्यादिना विष्णुं प्राप्तानामनिवृत्तेर्दर्शनाच्च । दहराधिकरण एवास्य विष्णुपरत्वेनोक्तत्वाच्च ।

यं प्राप्यते निजानंदमाप्नुवन्ति स केशवः ।
तं प्राप्य रमते मुक्तस्त्रीभिर्यानैश्च बन्धुभिः ॥

इत्यादिव्याख्यानरूपस्मृतिविरोधाच्च । यदपि पुरुषोत्तमशब्दस्यात्र श्रवणात्तेन पूर्वपक्षकरणं कथमित्याशङ्क्य कृत्वाचिन्तेयमित्युक्तम् । तन्न । व्यर्थत्वात् । गत्यंतरसम्भवाच्च । ''उत्तमः पुरुष'' इत्यस्यैव ''उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत'' इति, ''यस्मात्क्षरमतीतो-हमक्षरादपि चोत्तमः । अतोस्मिलोके वेदे च प्रथितः पुरुषोत्तम'' इति गीतायां,

ब्रह्मशिवस्सुरेशाद्याश्शरीरक्षरणात्क्षराः ।
लक्ष्मीरक्षरदेहत्वादक्षरातत्परोहरिः ॥इति श्रुतौ
ब्रह्मशेषसुपर्णेशशक्रसूर्यगुहादयः ।
सर्वे क्षरा अक्षरातु श्रीरेका तत्परो हरिः ॥

इति स्कान्दे च पुरुषशब्दितक्षरपदेन शिवादीनुक्त्वा तत्परत्वेन योगवृत्त्या विष्णोरेवा-भिधानेन शिवस्य योगेनाप्युत्तमपुरुषत्वायोगाच्च । यदपि कृष्णस्य शिवशक्त्यवतारत्वादि-कल्पनं तदप्रामाणिकमनेकप्रमाणविरुद्धं च । सूत्रे परंज्योतिरिति निर्देशापाताच्चेति ॥ ज्योतिरधिकरणम् ॥ ११ ॥

## आकाशाधिकरणम्

॥ ॐ आकाशोर्थान्तरत्वादिव्यपदेशात् ॐ ॥ तल्लिङ्गादित्यत्र ब्रह्मण्यप्याकाशशब्दप्रयोगस्य दर्शितत्वाद्वा इह प्रयुक्तवैनामेतिनिपातद्योतितप्रसिद्धेर्व्यावर्त्यत्वेनाप्रसिद्धे ब्रह्मण्यप्याकाशशब्दस्य पूर्वपक्षिणाऽप्यङ्गीकृतत्वाद्वोभयत्र प्रसिद्धता । ''प्रयोगवशा''दिति टीकाऽप्युक्तरीत्या द्वेधा व्याख्येया । अनंतरसङ्गतिस्तु आकाशस्याब्रह्मत्वे पूर्वोक्तं ज्योतिरप्यब्रह्म स्यात् । ''बहिः कुलायादमृतश्चरित्वे''ति ज्योतिषि श्रुतस्यामृतत्वस्येहाकाशे ''तदमृत''मिति श्रवणादिति पूर्वाधिकरणाक्षेपात् । अत्र ''आकाशो वै नाम नामरूपयोर्निर्वहिते''ति श्रुत आकाशः किं प्रसिद्धाकाशः किं वा ब्रह्मेति चिन्ता । तदर्थं ब्रह्मग्रहणे प्रसिद्धिद्योतकौ वैनामेतिनिपातौ न युक्तावुत युक्ताविति । तदर्थं किं लौकिकी प्रसिद्धिर्निपातद्योत्या किं वा वैदिकीति । तदर्थं वैदिकप्रसिद्धिग्रहणे किं प्रसिद्धिव्यावर्त्यं नास्त्युतास्तीति । तदर्थं प्रसिद्धेः किमुद्देश्यस्वरूप एवान्वयः किं वा विधेयान्वय इति । यद्याद्यः तदा गगनस्वरूपस्यापि वेदप्रसिद्धत्वाद्वैदिकप्रसिद्धिग्रहणे व्यावर्त्याभावेन लोकप्रसिद्धेरेव ग्राह्यत्वाल्लोकप्रसिद्धगगन एवानामरूपत्वं कथंचिन्नेयम् । यदि तु द्वितीयः तदा गगने विधेयस्य नामादिनिर्वोढृत्वस्य वेदतो प्रसिद्धेर्व्यावर्त्यसम्भवाद्वैदिकप्रसिद्धेर्ग्रहणे बाधकाभावादनामरूपत्वादिना ब्रह्मैवाकाशः ।

**प्रकाशिका –** ॥ ॐ आकाशोर्थान्तरत्वादिव्यपदेशात् ॐ ॥ ''प्रयोगवशा''दित्यादिटीकां विवृण्वन् पादसङ्गतिं विवृणोति ॥ तल्लिङ्गादिति ॥ ''आकाश इति होवाचे''ति वाक्ये निरवकाशपरोवरीयस्त्वादिलिङ्गेनाकाशशब्दे विष्णुवाचित्वस्य दर्शितत्वाल्लोकतश्चाकाशे प्रयोगात् प्रयोगसाधारण्येनोभयत्र प्रसिद्धतेत्यर्थः । पूर्वाधिकरणे तु प्राक्तनज्योतिषो भाष्यादौ विष्णुत्वाक्षेपाद्वा पूर्वपक्ष्यभिमते जीवे सम्प्रतिपन्नप्रयोगाभावाद्वा नैवं साधारण्यमुक्तम् । ननु तर्हि पूर्वत्रेवात्राप्याकाशशब्दप्रवृत्तिनिमित्तस्यावकाशदातृत्वादिरूपस्य ''तल्लिङ्गा''दित्यत्रोक्तन्यायेन विष्णौ लोकतश्चान्यत्र प्रसिद्ध्यांऽतरङ्गप्रवृत्तिनिमित्तसाम्येनैवोभयत्र प्रसिद्धिर्वाच्या । न तु बहिरङ्गप्रयोगसाम्येनेति चेन्मैवम् । पूर्वत्र ज्योतिश्श्रुतेर्विष्णुजीवयो रूढेः पूर्वपक्षिणोऽसंमते-

योगेन जीवनिष्ठत्वे वाच्ये तस्य विष्णावपि तौल्यात्प्रवृत्तिहेतुसाम्येन तथात्वमुक्तम् । इह त्वाकाशशब्दस्य लोके गगने प्रसिद्धत्वेन योगेनार्थद्वयोपस्थितेः प्रागेव लोकप्रयोगादर्थान्तर-स्यैवोपस्थितेरुभयोपस्थित्यर्थं विष्णावपि प्रयोगस्यैव दर्शनीयत्वादेवमुक्तम् । नन्वेवमपि ''तल्लिङ्गा''दित्यत्रैवान्यत्र प्रसिद्धेस्त्याजितत्वात्कथमुभयत्र प्रसिद्धिः । न च तत्र विष्णौ प्रसिद्धिरेवोक्ता नान्यत्रप्रसिद्धिस्त्याजितेति वाच्यम् । ''नेतरोनुपपत्ते''रित्यादिना, प्रतिनय-मन्वितेन तत्त्वित्यवधारणार्थतुशब्देन चान्यत्र प्रसिद्धेरपि त्याजितत्वात् । मैवम् । तत्तद्विषयवाक्येऽन्यत्र प्रसिद्धेस्त्याजितत्वेऽपि सर्वत्र तत्त्याजनाभावात् ॥ व्यावर्त्यत्वेनेति ॥ निपातस्य प्रसिद्ध्यर्थत्वेन प्रसिद्धाकाशो नामरूपनिर्वोढेत्युक्त्या नैवंभूतो प्रसिद्धाकाश इति गम्यमानत्वात्तादृशाकाशश्च ब्रह्मैवेति भावः । कथमेतट्टीकाविवरणमित्यत आह ॥ प्रयोगेति ॥ प्रागुक्तप्रयोगाद्वा वैनामेतिनिपातवशादाकाशे पूर्वपक्ष्यभिमतप्रयोगाद्वेति द्वेधेत्यर्थः । ''सर्वाधारत्वं विष्णोरुक्त''मित्यादिभाष्यटीकाभ्यां तुल्यन्यायविषयतया सूचितां सङ्गतिमाह ॥ अनन्तरेति ॥ सङ्गतिराक्षेपिकी । भाष्यादि तु फलाभिप्रायमिति भावः । ननूक्तदिशाऽमृत-त्वमुखाक्षेपेणैव फलं सङ्गतिश्चोभयं भविष्यतीति । सत्यम् । भाष्ये व्यवहिताक्षेपस्तु पूर्वं विष्णुधर्मतयाऽवधारितनामरूपनिर्वोढृत्वरूपसर्वाधारत्वलिङ्गेनाकाशो विष्णुः किं न स्यादिति शङ्काव्युदासाय । अत एव तुल्यन्यायतयाऽमृतत्वाक्षेपस्यापि सूचनात्प्राङ्निर्णीतामृत-त्वरूपविष्णुलिङ्गेन विष्णुरित्यपि शङ्का प्रत्युक्ता । नन्वेवं सन्निहिताक्षेपमेव साक्षादुक्त्वा सर्वाधारत्वाक्षेपस्सूच्यताम् । न तु वैपरीत्यम् । मैवम् । सन्निहिताक्षेपस्य स्पष्टत्वाद्व्यवहिताक्षेपस्य दुर्बोधत्वाद्भाष्ये स एव कण्ठोक्तः । अन्यस्तु सूचितः ।

''आकाशोऽत्र विषय'' इत्यादिविषयसंशयटीकां व्यनक्ति ॥ अत्रेति ॥ छान्दोग्येऽष्ट-माध्यायान्ते ''आकाशो वैनाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा प्रजापतेस्सभां वेश्म प्रपद्ये यशोहं भवानि ब्राह्मणाना''मित्यादि श्रूयते । तत्रस्थाकाश इत्यर्थः । नामरूपयोः शब्दात्मकार्थात्मकप्रपञ्चयोः । निर्वहिता निर्वोढा । धारक इत्यर्थः । छान्दस इडागमः । कीदृश आकाश इत्यत उक्तं ते यदिति ॥ अंतरा विना । नामरूपराहित्येन यद्वर्तत इत्यर्थः । ते नामरूपे ॥ प्रसिद्धेति ॥ अव्याकृताकाश इत्यर्थः । कोट्यंतरं त्वग्रे निरसिष्यत इति भावः ॥ प्रसिद्धिव्यावर्त्यमिति ॥ आकाशो वैनाम वेदे प्रसिद्धाकाशो नामादिनिर्वोढा न तु

वेदाप्रसिद्धाकाश इति व्यावर्त्यभूतं वेदेऽप्रसिद्धमाकाशं नास्त्युतास्तीत्यर्थः ॥ उद्देश्येति ॥ यः प्रसिद्धाकाशः स सर्वनिर्वोढेति वा आकाशो नामादिनिर्वोढा वैनाम सर्वनिर्वोढृत्वं प्रसिद्धमिति वेत्यर्थः । नन्वाद्ये निपातद्योतितप्रसिद्धिसत्त्वेऽपि निरवकाशविष्णुलिङ्गाश्रवणात्कथमाकाश इति सिध्यतीत्यतोऽस्पष्टत्वात् फलफलिभावं स्वयमाह ॥ यद्याद्य इति ॥ उद्देश्य एवान्वय इत्यर्थः ॥ अनामेति ॥ ते यदंतरेति वाक्योक्तं नामरूपराहित्यमित्यर्थः ॥ कथंचिदिति ॥ वक्ष्यमाणदिशेति भावः ॥ द्वितीय इति ॥ विधेयान्वय इत्यर्थः । अत्र टीकाया "अयमाकाशः प्रसिद्धाकाश एव भवेत् । आकाशशब्दस्य तत्र रूढत्वा"दित्युक्त्वा "न च वाच्य"मित्यादिना पूर्वपक्षानुदय-माशंक्य वैनामेति निपाताभ्यां पूर्वपक्षोदयो दर्शितः ।

**पाण्डुरङ्गि** – ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ॥ नन्वेवं प्राणशब्दस्यापि अत एव प्राण इत्यत्र विष्णौ प्रयोगस्य दर्शितत्वादुभयत्र प्रसिद्धत्वं स्यादित्यत आह ॥ इहेति ॥ नन्वेवं प्रकारान्तरेणैवोभयत्र प्रसिद्धत्वे टीकाविरोधः । तत्र प्रयोगवशादिना प्रयोगवशेनोभयत्र प्रसिद्धिव्युत्पादनादित्यतो यथाश्रुतटीकाया उक्तानुपपत्तेस्सम्भवेनार्थान्तरपरत्वमावश्यकमित्याह ॥ प्रयोगवशादिति टीकापीति ॥ उक्तरीत्येति ॥ तल्लिङ्गादित्यत्र ब्रह्मण्यप्याकाशशब्दप्रयोगस्य दर्शितत्वाद्वेत्याद्युक्तरीत्येत्यर्थः ।

## तात्पर्यचन्द्रिका

**पूर्वपक्षस्तु ॥ यद्यप्याकाशे "तद्ब्रह्म तदमृतं स आत्मे"ति ब्रह्मश्रुत्यादीनि सन्ति । आकाशशब्दस्तु तल्लिङ्गादिति न्यायेन ब्रह्मण्यपि मुख्यवृत्त्या युक्तः । न च वाच्यं तल्लिङ्गादित्यत्र भूताकाशमिति पूर्वःपक्षः । अत्र त्वव्याकृताकाशमिति । निरवकाश-लिङ्गेन प्रसिद्धिबाधस्योभयत्र साम्यात् तथापि "इह वैनामे"ति निपातद्योतित-प्रसिद्धिर्न ब्रह्मणि युक्ता । लोके तस्याप्रसिद्धत्वात् । वेदे प्रसिद्धत्वेऽपि "अनादिर्वा अयमाकाश" इत्यादौ गगनस्यापि प्रसिद्धेर्व्यावर्त्यस्याप्रसिद्धाकाशस्यैवाभावेन निपातवैयर्थ्यात् । गगनपक्षे तु शास्त्रयोनित्वेन लोकाप्रसिद्धब्रह्माकाशस्य व्यावर्त्य-त्वाल्लौकिकप्रसिद्धिद्योतकनिपातावैयर्थ्यम् । न च वाच्यं वेदमात्रप्रसिद्धिर्निपातद्योत्या ।**

तथा च लोकवेदप्रसिद्धं गगनं व्यावर्त्यत इति । मात्रशब्दार्थभूताया लोकाप्रसिद्धेः प्रसिद्धिद्योतकनिपाताद्योत्यत्वात् । किं च ब्रह्मवेदमात्रे प्रसिद्धम् । गगनं तु लोके वेदेच स्वरूपेण नामरूपावकाशदानात्तन्निर्वाहकतया च प्रसिद्धम् । अत एव ''न हि विष्णुस्तन्निर्वहितृत्वं वा प्रसिद्ध''मिति टीकायामाकाशस्य स्वरूपेण तन्निर्वाहकत्वेन च लोकवेदयोः प्रसिद्धिं सिद्धां कृत्वा विष्णोस्तदप्रसिद्धिरुक्ता । न चासङ्कुचितप्रसिद्धौ सत्यां सङ्कुचितप्रसिद्धिद्योतनं युक्तम् । यद्वा प्रसिद्धस्यैवोद्देश्यत्वादप्रसिद्धस्यैव च विधेयत्वात्प्रसिद्धेरुद्देश्याकाशेनैवान्वयात् सुकरः पूर्वपक्षः । गगने निर्वोढृत्वस्याप्रसिद्धावपि स्वरूपप्रसिद्धेरसङ्कुचितायाः सत्त्वात् । टीकायां ब्रह्मपक्षे प्रसिद्धेर्विधेयभूतनिर्वोढृत्वान्वयप्रतिषेधस्तु तदन्वयेऽपि न सिद्धांतिन इष्टसिद्धिः । विधेयस्यापि ब्रह्मणि ''अप्रसिद्धेरवाच्यं त''दित्यादाविव प्रसिद्धिशब्दार्थत्वेन स्वतः प्राप्ताया लोकप्रसिद्धिस्तद्राहित्यादिति दर्शयितुम् । न चाकाशश्रुतिरिव ब्रह्मश्रुत्यादिकं प्रसिद्ध्या विशेषितम् । येन ब्रह्मत्वादेरीशे प्रसिद्धत्वात्स एव गृह्येत । एवं च ब्रह्मत्वादिकं गगने कथंचिन्नेयम् । अप्रसिद्धस्य ब्रह्मणः प्रसिद्धिद्योतकनिपातेनैव निरासात् । तल्लिङ्गादित्यस्य विषयवाक्ये तु ''सर्वाणि हवा इमानि भूतान्याकाशादेवे''त्यत्र वैशब्दस्य सन्निहितसर्वभूतान्वयो वा । ''स्युरेव तु पुनर्वै वेत्यवधारणवाचका'' इति वचनेनावधारणार्थत्वं वा । इह त्वाकाशस्यैव सन्निधानम् । नामशब्दस्य च नार्थांतरमस्तीति वैषम्यम् । अत एव भाष्ये वैनामेतिनिपातद्वयोक्तिः । न्यायविवरणे च ''वैनामे प्रसिद्धिद्योतकनिपातद्वयं रूढित्यागेनोक्तयौगिकार्थस्वीकारे विरोधी''त्युक्तम् । ते यदंतरेति श्रुतं नामरूपराहित्यं तु न ब्रह्मण्यपि युक्तम् । ईक्षत्यधिकरणे ''रूपोपन्यासाच्चे''त्यत्र च ब्रह्मणो नाम्नो रूपस्य चोक्तेः । भूताकाशस्य रूपित्वेप्यव्याकृताकाशस्यारूपत्वात् । अत एव भूताकाशस्यापि शब्दैकगम्यत्वात्कथं लोकप्रसिद्धिरिति निरस्तम् । अव्याकृताकाश इत्येव पूर्वपक्षकरणात् । अत एव भाष्ये प्रसिद्धाकाश इत्येवोक्तम् । टीकायामपि सिद्धान्ते ''अवकाशस्यापि नामवत्त्वा''दित्यत्रारूपवत्त्वं स्वीकृत्यनामवत्त्वमेव वक्ष्यते । न हि भूताकाशमनामरूपमिति ॥

**प्रकाशिका** – तत्र शङ्कोत्तरग्रन्थौ व्यनक्ति ॥ यद्यपीत्यादिना ॥ श्रुत्यादीनीत्यादिपदेन नामरूपनिर्वोढृत्वरूपसर्वाधारत्वामृतत्वानामरूपत्वग्रहः । ''सर्वाधारत्वलिङ्गेने''ति टीकोपलक्षणमिति भावः । आकाशश्रुतिर्निरवकाशेत्यत आकाशशब्दस्य विष्णावपि प्रवृत्तेरसौ सावकाश इति टीकार्थं व्यक्तमाह ॥ आकाशशब्दस्त्विति ॥ टीकायां सावकाशत्वशङ्का न युक्तेति भावेनाशंक्य टीकाभिप्रायविवरणेन समाधत्ते ॥ न च वाच्यमित्यादिना साम्यादित्यंतेन ॥ भूतेति ॥ तत्र भाष्ये भूतपदप्रयोगादिह टीकायां सिद्धान्ते ''अवकाशस्यापि नामवत्त्वा''दित्युक्तेरिति भावः । वैनामेति निपातयोरुद्देश्याकाशान्वयमुपेत्य तत्र लोकप्रसिद्धाकाश इत्यर्थ उत वेदप्रसिद्धाकाश इति विकल्पौ हृदि कृत्वाऽर्थद्वयमप्याकाशस्य विष्णुत्वेऽयुक्तमित्याह ॥ लोक इति ॥ अवकाशस्य ब्रह्मधर्मत्वेऽपि निपातयोः सार्थक्यमाशंक्य निराह ॥ न च वाच्यं वेदमात्रेति ॥ ''आकाशो वैनामे''त्यस्य वेदमात्रे प्रसिद्धो य आकाशस्स नामरूपयोर्निर्वहितेत्यर्थः । तादृशश्चाकाशो विष्णुरेव न तु गगनम् । तस्य लोकवेदोभयप्रसिद्धत्वादिति व्यावर्त्यसत्त्वात्सार्थक्यं निपातयोरिति भावः ॥ मात्रशब्दार्थेति ॥ वेदमात्रप्रसिद्ध इत्यस्य लोकतोऽप्रसिद्धत्वे सति वेदतः प्रसिद्ध इत्यर्थस्स्यात् । तत्र च प्रसिद्धिमात्रद्योतकस्य निपातद्वयस्य विशेषानालिङ्गितसामान्याभावेन तद्विशेषवेदप्रसिद्धिद्योतकत्वसम्भवेऽपि न लोकाप्रसिद्धत्वद्योतकत्वम् । तस्य तत्रासामर्थ्यादिति भावः । प्रसिद्ध्यर्थकनिपातेत्यादिव्यवहारे कार्ये द्योतकत्वद्योत्यत्वादिव्यवहारस्तु निपातानां द्योतकत्वमेव,न वाचकत्वमिति पक्षमुपेत्य ''प्रसिद्धिद्योतकत्वा''दिति टीकामनुरुध्येति ध्येयम् । ननु प्रसिद्धिसामान्यद्योतकस्य क्वचिद्विशेषे पर्यवसानावश्यंभावेन वेदप्रसिद्ध आकाश इत्युक्त्यैवार्थाल्लोकाप्रसिद्ध इति गम्यत इत्यतो वाऽभ्युपेत्यवादेन वाह ॥ किञ्चेति ॥ वैनामेति निपातद्वयस्य नामरूपयोर्निर्वहिता वैनामेति विधेयान्वयमुपेत्याप्याह ॥ नामरूपेति ॥ लोके तस्याप्रसिद्धत्वादित्यादिना प्रतिपादितार्थं टीकारूढं करोति ॥ अत एवेति ॥ निपातयोरुभयत्रान्वयादेवोभयथा प्रसिद्धेराकाशे सम्भवादेव चेत्यर्थः । निर्वहितृत्वमिति ॥ श्रौतपदानुकरणमेतदित्यदोषः ।

नन्वस्तु द्वेधाप्रसिद्धिर्गगने टीकासंमताच । तथाप्यत्राकाशपदेन गगनस्य ग्रहः कुत इत्यत आह ॥ न चेति ॥ सङ्कुचितेति ॥ वैदिकप्रसिद्धिमात्रेत्यर्थः । ननु निपातयोर्विधेयान्वये

नामरूपनिर्वहितृत्वस्य विष्णावेव ''एको दाधार भुवनानि विश्वे''त्यादिना प्रसिद्धेर्गगने सर्वाधारत्वस्य वैदिकप्रसिद्धेर्विष्णाविवाभावात्कथं विधेयान्वयपक्षे गगनप्राप्तिरित्यत उद्देश्येनैवान्वयमुपेत्य पूर्वपक्षमाह ।। यद्वेति ।। सुकर इत्युक्तमेवाह ।। गगन इति ।। असङ्कुचिताया इति ।। लोकवेदयोस्सिद्धाया इत्यर्थः । विधेयान्वयपरटीका तु अभ्युपेत्यवादेन प्रवृत्तेति भावेन तां घटयति ।। टीकायामिति ।। विधेयस्यापीति ।। या स्वतः प्राप्ता लोकप्रसिद्धिरित्यन्वयः । ''अप्रसिद्धेरवाच्यं तदतर्क्याज्ञेयमेव चे''त्यादाववाच्यत्वहेतुभूताऽप्रसिद्धिर्न वैदिकप्रसिद्ध्यभावः । तस्याब्रह्मणि सत्त्वात् । किन्तु लौकिकप्रसिद्ध्यभाव एव । तथाचाप्रसिद्धेरित्यत्र प्रसिद्धिशब्दस्य यथालोकप्रसिद्धिरर्थस्तथेहापि निपातद्योतित विधेयान्वितायाः प्रसिद्धेः प्रसिद्धिशब्दार्थतयास्वरसतः प्राप्तलोक प्रसिद्धेरभावादिति दर्शयितुमित्यर्थः । टीकायां ''प्रसिद्ध''मित्यस्य लोकतः प्रसिद्धं न च भवतीत्यर्थ उक्तो भवति । एवं च निपातद्वयविशेषितत्वेन प्रबलयाऽऽकाशश्रुत्या पूर्वपक्षकरणात्तया ब्रह्मसाधकानामन्यथासिद्धिं वक्तुं तेषां सावकाशत्वमाह ।। न चाकाशेति ।। एवं चेति ।। आकाशश्रुतेरिव ब्रह्मश्रुत्यादेर्निरवकाशत्वद्योतकाभावे सतीत्यर्थः ।। कथंचिदिति ।। देशकालाभ्यां गगनस्यापि वृद्धत्वेन ब्रह्मत्वं आततत्वादात्मत्वं अवकाशदानान्नामरूपनिर्वाहकत्वं नित्यत्वादमृतत्वं नेयमित्यर्थः । यदत्रान्यैरुक्तं न ब्रह्मत्वादिकं नामरूपनिर्वोढर्याकाशे युक्तम् । किं तु तयोर्मध्यस्थत्वेन वक्ष्यमाणे वस्तुनि । ''यदंतरा तद्ब्रह्मे''त्यादिसामानाधिकरण्यात् । एतच्चांतरालिकं वस्तु यदिति नपुंसकनिर्देशात्पुल्लिङ्गनिर्दिष्टाकाशादन्यदिति । तन्न । सिद्धान्ते वक्ष्यमाण दिशाऽन्तराशब्दस्य विनाऽर्थत्वेनोपपत्तौ लक्षणाक्लेशायोगात् । तद्ब्रह्मेति वक्ष्यमाणापेक्षया नपुंसकत्वेऽप्याकाशात् प्रकृतादर्थान्तरग्रहणायोगात् । त्वयापि सिद्धान्ते ''यस्य ब्रह्मणोंऽतराल'' इत्याकाशरूपब्रह्मपरत्वेनोक्ततयाऽऽकाशरूपैकार्थ एव कथनौचित्याच्चेति । ब्रह्मादिशब्दात् मुख्यार्थस्य ब्रह्मण एव ग्रहणं कुतो नेत्यत आह ।। अप्रसिद्धस्येति ।। लोकप्रसिद्धिशून्यस्येत्यर्थः ।

ननु प्रसिद्धिद्योतकनिपातोपेतस्याप्याकाशस्य प्राग्ब्रह्मत्वं निर्णीतमिति तेन गतत्वमाशङ्क्य निराह ।। तल्लिङ्गादितीति ।। नार्थान्तरमिति ।। ''स्युरेव''त्वित्यादिवत्प्रमाणाभावादिति भावः ।। भाष्ये वै नामेतीति ।। एतेन ''वैनामेति निपातद्वयविरोधा''दिति टीकाऽपि विवृता । भाष्ये

द्वयेत्यनुक्तावपि द्वित्वे तात्पर्यं कथं टीकाकृता ज्ञातमित्यत आह ।। न्यायविवरणे चेति ।। अनामरूपत्वमप्यन्यथयति ।। ते यदन्तरेतीति ।। ईक्षतीति ।। ईक्षतेर्नाशब्दमित्यनेन नञ्द्वयोपेतेन शब्दवक्त्त्वापरपर्यायनामवक्त्त्वस्योक्तत्वात् । अदृश्यत्वनयगुणसूत्रे रूपस्योक्तेरित्यर्थः ।। रूपित्वेपीति ।। ''आकाशो नीलिमोदेती''ति श्रुतेरिति भावः । अत एवेत्युक्तमेव व्यनक्ति ।। अव्याकृतेति ।। आकाशद्वैतं तु वियत्पादे ''न वियदश्रुते''रित्यत्र समर्थयिष्यते ।। इत्येवेति ।। अन्यथा भूतमित्यवक्ष्यदिति भावः । इह भूतमेव कुतो नेत्यत आह ।। नहीति ।। यद्यप्यनात्मत्वमव्याकृतेऽपि नास्ति । तथापि भूते रूपसत्त्वेनारूपित्वस्याप्यभावादव्याकृते तस्य भावात्तदभिप्रायेणैवमुक्तिः । यद्वा ब्रह्मवदव्याकृताकाशस्यापि देशादितोऽनन्तत्वेन साकल्येन शब्दागोचरत्वरूपमनामत्वमव्याकृतेऽप्यस्तीति भावः ।

**पाण्डुरङ्गि** – अत एवेत्यस्यैव विवरणमाकाशस्येति ।। अस्मिन्पक्षे गगनस्य स्वरूपेण लोकवेदप्रसिद्धत्वेऽपि नामरूपनिर्वोढृत्वे प्रमाणाभावात्कथं तस्य प्रसिद्धिरिति पूर्वपक्षिणं प्रति नियोगापत्त्या पूर्वपक्षस्य दौर्घट्यं भवतीत्यतस्तत्सौघट्याय पक्षान्तरमाह ।। यद्वेति ।। नन्वेवं प्रसिद्धेरुद्देश्याकाशान्वयेनैव पूर्वपक्षे टीकायां न हि विष्णुस्तन्निर्वहितृत्वं वा प्रसिद्धमित्यनेन प्रसिद्धेर्विधेयभूतनिर्वोढृत्वान्वयप्रतिषेधोऽनुपपन्नः । विधेयप्रसक्तेरभावादित्यत आह ।। टीकायामिति ।। ननु वै नामेति प्रसिद्धेरुद्देश्याकाशान्वयेन लोकवेदयोः प्रसिद्धत्वेन गगनस्यैव ग्रहणं किं न स्यादित्यत आह ।। न चाकाशेति ।। सिद्धान्तीयलिङ्गादिकं सावकाशयति ।। एवं चेति ।। स्युरिति ।। एव तु पुनः वै वा एतेऽवधारणवाचकाः स्युरित्यन्वयः । प्रकृतनिर्वाह्यं निर्वाह्यत्वेन प्रकृतमित्यर्थः ।।

## तात्पर्यचन्द्रिका

**सिद्धान्तस्तु ।। साकल्येन शब्दागोचरत्वादिरूपमनामत्वं ''यतो वाचो निवर्तन्त'' इत्यादिभाष्योक्तश्रुतिभिर्विष्णोरेव । ईक्षत्यधिकरणे तु अत्ववाच्यत्वमेव निषिद्धम् । ते यदन्तरेत्यनेन च प्रकृतनिर्वाह्यप्राकृतरूपराहित्यमेवोक्तम् । तच्च ''अरूप''मित्यादिश्रुतिभिर्ब्रह्मण्येव सुप्रसिद्धम् । न तु गगने । ब्रह्मणि**

रुग्मवर्णादिश्रुतितात्पर्यापरिज्ञानादिप्राप्तलौकिकरूपस्य ''अरूप''मित्यादिश्रुत्या निषेधवद्गगने तदभावात् । तदुक्तं न्यायविवरणे ''प्रसिद्धाकाशस्योक्तमनामरूपत्वं विरुद्ध''मिति । न च निपातविरोधः । यतः -

वैदिकेषु प्रयोगेषु वैदिक्येव प्रसिद्धता ।
ग्राह्यांतरंगभूतत्वात्तदयोगे त्ववैदिकी ॥ १ ॥

ब्रह्मणो हि सर्ववेदेषु महातात्पर्यतः प्रसिद्धिः । नैवं गगनस्य । एवं च प्रसिद्धेर्यदि पूर्ववादिरीत्योद्देश्याकाशान्वयः तथापि ''शास्त्रस्था वा तन्निमित्तत्वा''दिति न्यायेन विजातीयबहिरङ्गलौकिकप्रसिद्धिसङ्ग्रहाय सजातीयांतरंगवैदिकप्रसिद्धिपीडनायोगाद्ब्रह्मणः प्रसिद्धिरेव निपातद्योत्या । अत एव सप्तमे इत्थंभावाकांक्षेषु वैदिकेषु सौर्यादिषु वैदिकस्यैवेत्थंभावस्यान्वय उक्तः । अस्ति च ब्रह्मण्याकाशशब्दार्थतयापि वेदे प्रसिद्धिः । यदातूद्देश्यस्य वस्तुतः प्रसिद्धिमात्रेणोद्देश्यतोपपत्तेर्विधेयस्यैव निर्वोढृत्वस्य स्थलान्तरसिद्धप्रसिद्ध्युपन्यासादिनोपपादनीयत्वादिदमित्थं खल्वित्यादौ विधेयान्वयस्यैव दर्शनाच्च प्रसिद्धेर्निर्वोढृत्वान्वयः तदा ''एको दाधार भुवनानि नामरूपे व्याकरो''दित्यादि वेदे ब्रह्मण इव गगनस्य निर्वोढृत्वेन वेदे लोके चाप्रसिद्धेर्गगनपक्ष एव निपातायोगः । न हि गगने निरंकुशनामरूपनिर्वोढृत्वं लोकतोऽपि प्रसिद्धम् । एतमेव विधेयान्वयपक्षमभिप्रेत्य टीकायामपि ''भगवतो नामादिनिर्वहितृत्वस्यालोकसिद्धत्वेऽपी''त्युक्तम् । न्यायविवरणे च ''वैनामेति निर्वहितृत्वे श्रुत्यादिप्रसिद्धिबाहुल्य''मित्युक्तम् । यद्यप्यत्र लोके निर्वोढृशब्द एव साधुः । तथापि टीकादौ श्रुत्यनुकरणार्थं निर्वहितृशब्दः युक्तः । भाष्येऽनामत्वे हेतूकृतमप्रसिद्धत्वं साकल्येनाप्रमितत्वम् । निपातद्योत्या प्रसिद्धिस्तु निर्वोढृत्वेनान्यत्र निर्णीतत्वमित्यविरोधः ।

**प्रकाशिका** – अर्थातरत्वादिव्यपदेशादिति सूत्रभाष्याद्युक्तनिरवकाशानामरूपत्वादिहेतुबलादाकाशो विष्णुरेव । निपातद्योत्यप्रसिद्धिरप्यंतरङ्गत्वाद्विष्णौ सम्भवद्वैदिक्येव ग्राह्येति भावेन

सिद्धान्तटीकां विवृण्वन् अनामरूपत्वयोष्टीकायामस्पष्टस्वरूपस्य स्पष्टीकरणेन तयोर्निरव-काशत्वं क्रमेण व्यनक्ति ॥ साकल्येनेत्यादिना ॥ आदिपदेनामुख्यार्थकनामराहित्यं स्वानभिधायकनामराहित्यमयौगिकनामराहित्यमित्यादि ग्राह्यम् ॥ भाष्योक्तेति ॥ अत्र सूत्रेऽन्यत्र चेत्यर्थः । तेन ''अशब्दमस्पर्शं यत्तदद्रेश्यमग्राह्यं अवागमन'' इत्यादिश्रुतयो ग्राह्या इति बहुवचनोपपत्तिः । एवमग्रेऽपि । ''ननु हरेः कथमनामरूपत्वम् । उक्तविरोधा''दित्यादि टीकां व्यंजयन् प्रागुक्तशङ्कां निराह ॥ ईक्षतीति ॥ न तु साकल्येन शब्दागोचरत्वादि-कमित्येवकारार्थः । ननु ''अरूपो भूतवर्जना''दिति भाष्यमयुक्तम् । श्रुतौ भौतिकरूपराहि-त्याप्रतीतेरित्यत आह ॥ प्रकृतनिर्वाह्येति ॥ प्रकृतं यन्निर्वाह्यलक्षणं प्राकृतरूपं तद्राहित्यमित्यर्थः । भाष्ये भूतपदमुपलक्षणम् । अत एव प्रथमस्कन्धे ''अनामरूपात्मनि नामरूपे'' इति श्लोकतात्पर्ये ''अप्राकृतत्वाद्रूपस्याप्यरूपोऽसावुदीर्यत'' इत्युक्तमिति भावः । अन्यथाऽप्रकृतपरत्वं, ''रुग्मवर्ण''मित्यादिवचनविरोधः, ''श्यामाच्छबलं प्रपद्य'' इति सन्निहितवाक्यविरोधश्च स्यादिति भावः ॥ अरूपमिति ॥ ''अशब्दमस्पर्शमरूपमव्यय-मवर्णमगोत्र''मित्यादिश्रुतिभिरित्यर्थः । ब्रह्मणि रूपप्रसक्त्या तन्निषेधस्सम्भवतीति भावेन सुप्रसिद्धमित्युक्तम् । तद्व्यनक्ति ॥ ब्रह्मणीति ॥ आदिपदेन कुसमयादिप्राप्तेति गृह्यते । भाष्यविवरणपरटीकया न्यायविवरणमपि विवृतमिति भावेनाह ॥ तदुक्तमिति ॥ यद्वा भाष्यटीकयोरनामत्वस्यारूपत्वस्य च व्युत्क्रमेणैव सूत्रानुरोधेन व्युत्पादनादिह च श्रौतक्रमानुरोधेनानामरूपत्वयोः क्रमेण व्युत्पादनं किं मूलमित्यत आह ॥ तदुक्तमिति ॥ यद्वा भाष्ये हरावनामरूपत्वोपपादनस्यैव कृतत्वेन गगने तदभावस्यानुक्तत्वाट्टीकायां ''अन्यथाऽनामरूपत्वविरोधात् । अवकाशस्यापि नामवत्त्वा''दित्युक्तिः किं मूला । यस्या उपपादनं न तु गगन इत्यादिना कृतमित्यत आह ॥ तदुक्तमिति ॥ तत् गगनेऽनुप-पन्नत्वमित्यर्थः । यद्वा टीकायां ''अवकाशस्यापि नामवत्त्वा''दित्यादिनाऽनामत्वाभाव एवोपपादितो नत्वरूपत्वाभावोऽपि । भवद्भिस्त्वनामत्वाभावं टीकोक्तत्वादनुक्त्वाऽरूपत्वाभाव एव टीकानुक्तोऽपि व्युत्पादितः । स किं मूल इत्यत आह ॥ तदुक्तमिति ॥ अनामत्वमरूपत्वमुभयं गगने विरुद्धमित्येतदुक्तमित्यर्थः । टीकोपलक्षणमिति भावः । न्यायविवरणेऽनामत्वमरूपत्वं च विरुद्धमित्यनुक्त्वाऽनामरूपत्वमिति सहनिर्देशेऽपीह पृथग्व्युत्पादनं तु श्रुतौ ते इत्यत्र निर्वाह्यतया प्रकृतयोर्नामरूपयोर्मध्ये रूपमेव प्राकृतम् । न तु नामापि । सर्ववैदिकनाम्नामनादिनित्यत्वेन प्रकृतिजन्यनाम्नोऽभावादिति द्योतयितुमित्याहुः ।

ननु ''नामरूपयो''रित्यत्र रूपपदेनार्थप्रपञ्चो गृह्यत इत्युपेत्य सर्वाधारत्वं तेन लब्धमित्युच्यते । ते यदन्तरेत्यत्र तु ''अवर्ण''मित्यादिभाष्योक्तश्रुत्या प्राकृतशुक्लपीतादि-रूपराहित्यमर्थ इति भाति । तत्कथमेतदिति चेन्मैवम् । नामरूपयोरित्यत्र रूपपदेनाजह-ल्लक्षणया रूपस्पर्शगन्धादिविषयमात्रोपलक्षणाददोष इत्याहुः । ''न च विष्णुपक्षे निपातद्वय-विरोधः । भगवतो नामादिनिर्वहितृत्वस्यालोकप्रसिद्धत्वेऽपि ''एको दाधार भुवनानि विश्वे'' त्यादिवेदप्रसिद्धत्वेन तदर्थत्वेनोपपत्ते''रिति टीकां विवृण्वन् प्रागुक्तशङ्कामनूद्य निराह ॥ न च निपातेति ॥ टीकायां द्वयेत्युक्तेर्भावः प्रागेवोक्त इति भावेन निपातविरोध इत्येवानुवादः कृतः । वै इत्यस्यावधारणार्थत्वेनाप्युपपत्तेरिति भावः । यत इत्यस्य श्लोकेनान्वयः । अतो न विरोध इत्यर्थः । श्लोकं विवरीतुं ब्रह्मणि वैदिकप्रसिद्धिमाह ॥ ब्रह्मण इति ॥

सर्वज्ञं सर्वकर्तारं नारायणमनामयम् ।
सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि ॥
सर्वेषामपि वेदानामितिहासपुराणयोः ।
प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते ॥

इत्यादिपुराणवचनात्, ''सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्य'' मित्यादिश्रुतेरिति भावः । अवान्तरतात्पर्यतोऽन्यस्यापि प्रसिद्धिरस्तीत्यतो महातात्पर्यत इत्युक्तम् ॥ श्लोकं तात्पर्यतो विवृणोति ॥ शास्त्रस्थावेति ॥ उक्तमधिकरणं प्राक् जन्माधिकरणे । शास्त्रनिष्ठा वैदिकीप्रसिद्धिरेव ग्राह्या । वेदशब्दार्थनिर्णयस्य वैदिक प्रसिद्धिनिमित्तकत्वात् । नत्वार्थप्रसिद्धिबलेन लौकिकी प्रसिद्धिर्ग्राह्येति सूत्रार्थः ॥ सप्तम इति ॥ सप्तमस्य चतुर्थे पादे ''स लौकिकस्स्याद्दृष्टप्रवृत्तित्वा''दिति द्वितीयेऽधिकरणे ''सौर्यं चरुं निर्वपे''दित्यादौ किं लौकिक इत्थंभावोऽतिदिश्यतेऽथ वैदिक इति संशये वैदिकेत्थंभावस्य प्रत्यक्षेण शास्त्रेण दर्शपूर्णमासादिषु निबद्धत्वेनान्यत्र सम्बन्धायोगात् लौकिकस्य पार्वणस्थालीपाकादावनुवृत्तस्य साधारणशास्त्रेणेह प्रापणसम्भवाल्लौकिक एवेति प्राप्ते वैदिकस्य कर्मणः कथंभावाकाङ्क्षायां वैदिकेत्थंभावस्य शीघ्रमुपस्थितेस्तदतिक्रमेणानुपस्थितलौकिकग्रहणायोगाद्वैदिक एवेत्थंभा-वोऽतिदिश्यत इत्युक्तम् । अन्यथा तत्रापि पूर्वपक्ष्युक्तदिशा लौकिकेतिकर्तव्यताया एवान्वय उच्येतेत्यर्थः ।

ननु स्वरूपतो हरेः प्रसिद्धावप्याकाशशब्दार्थतया प्रसिद्ध्यभावे यः प्रसिद्धाकाश इति कथमुक्तिरित्यत आह ॥ अस्ति चेति ॥ एवं प्रसिद्धेरुद्देश्यान्वयेऽप्याकाशो ब्रह्मेत्युपपाद्येदानीं टीकोक्तं विधेयान्वयं सोपपत्तिकमुपपादयन् तत्रापि ब्रह्मणस्सिद्धिमाह ॥ यदात्विति ॥ नामरूपनिर्वोढृत्वं किं तद्धारकत्वं किं वा तत्कर्तृत्वम् । द्वयमपि हरावेवेति श्रुतिद्वयोक्तिः लोके चेत्युक्तमेवोपपादयति ॥ न हीति ॥ अवकाशदानादिना नामादिनिर्वाहकत्वं गगनेऽप्यस्तीत्यत उक्तं निरङ्कुशेति ॥ तस्य तत्र भगवदायत्तत्वादिति भावः । यदात्वित्यादिनोक्तं टीकारूढं करोति ॥ एतमेवेति ॥ टीकोक्तेर्मूलमाह ॥ न्यायविवरणे चेति ॥ वैनामेति निपातद्वयं भगवतो नामरूपनिर्वहितृत्वे श्रुत्यादिप्रसिद्धिबाहुल्यं दर्शयतीत्यर्थः । वह प्रापण इत्यस्य धातोरनिट्त्वात्कथं निर्वहितृत्वपदप्रयोग इत्याशङ्क्याह ॥ यद्यपीति ॥ श्रुत्यनुकरणार्थमिति ॥ यथा ''न लोकाव्ययनिष्ठाखलर्थतृना''मित्यत्र तृणामिति णत्वेन निर्देशे कार्ये तृनामिति णत्वाभावेन निर्देशो विवक्षितरूपानुकरणार्थस्तथेति भावः । उक्तं च मञ्जर्यां ''जिघृक्षितरूपविनाशप्रसङ्गात्तृनामित्यत्र णत्वाभाव'' इति । ननु यदि भगवतो निपातद्योत्यप्रसिद्धिरुपपद्येत तर्हि ''अनामासोऽप्रसिद्धत्वादरूपो भूतवर्जना''दित्यप्रसिद्धत्वोक्तिर्विरुध्यत इत्यत आह ॥ भाष्य इति ॥

**पाण्डुरङ्गि** – अत एवेति ॥ बहिरङ्गलौकिकप्रसिद्धिसङ्कहाय सजातीयांतरङ्गवैदिकप्रसिद्धिपीडनायोगादेवेत्यर्थः ॥ निर्वोढृशब्द एव साधुरिति ॥ निरुपसर्गपूर्वकाद्वहेस्तृचि होढ इति ढत्वे झषस्तथोर्धोऽध इति धत्वे ष्टुनाष्टुरिति ष्टुत्वे सहिवहोरोदवर्णस्येत्यवर्णस्यौत्वे ढोढेलोप इति लोपे निर्वोढृशब्दनिष्पत्तिरिति भावः ।

## तात्पर्यचन्द्रिका

**सूत्रेऽर्थान्तरशब्देन विलक्षणत्वमात्रोक्तावपि विषयवाक्ये सन्निहितत्वादनामरूपत्वरूपविशेषसिद्धिः । आदिशब्दार्थस्तु ब्रह्मत्वादिकम् । यद्वा ''ते यदन्तरे''ति द्विवचनेनानामरूपत्वयोः साहित्यप्रतीतावपि ब्रह्मत्वे निरपेक्षयोरेव हेतुत्वमिति भावेन सूत्रेऽरूपत्वमर्थान्तरपदेन आदिपदेन तु अनामत्वमुक्तम् । अस्मिंश्चपक्षे ब्रह्मत्वादिकं प्रसिद्धत्वाच्छिष्यैरेवोहितुं शक्यमिति न तस्यादिपदेन ग्रहणमिति द्रष्टव्यम् ॥ अन्येतु**

**॥ ''आकाशस्तल्लिङ्गा''दित्यस्य विषयवाक्ये ''आकाशादेव समुत्पद्यंत'' इत्यत्रैवैतत्सूत्रविषयवाक्ये ''आकाशो हवैनामे''त्यत्र ब्रह्मलिङ्गाभावेन पूर्वपक्षोदयादगतार्थतेत्याहुः । तन्न । अत्रापि नामरूपनिर्वहितृत्वादिलिङ्गानां ब्रह्मात्मादिश्रुतीनां च सत्त्वात् । क्लेशेनाकाशे योजनं तूभयत्र समम् ॥ केचित्तु ॥ तल्लिङ्गादिति न्यायेनैवात्रापि वाक्य आकाशस्य गगनत्वनिरासात् मुक्तजीवत्वेनैवेह पूर्वपक्ष इत्याहुः । तन्न । अस्मिन् वाक्ये ब्रह्मलिङ्गस्यास्फुटत्वे गगनपक्षस्यैवोदयात् । स्फुटत्वे च जीवपक्षस्याप्यनुदयाच्च । निर्बीजश्च जीवपक्षः । जीवलिङ्गाद्यभावात् । आकाशशब्दस्य तत्राप्रसिद्धेर्वैनामेति निपातानुपपत्तेः । जगद्व्यापारवर्जमित्यत्र मुक्तजीवस्य नामरूपनिर्वोढृत्वस्य निरसिष्यमाणत्वाच्च । ''ब्रह्मलोकमभिसम्भवामी''ति पूर्ववाक्ये च जीवस्य सन्निहितत्वेऽपि सन्निधानस्य श्रुत्यबाधकत्वात् । ब्रह्मलोकशब्देन ब्रह्मणः प्राधान्येन सन्निहितत्वाच्चेति ॥ आकाशाधिकरणम् ॥ १२ ॥**

**प्रकाशिका** – एवमधिकरणशरीरमुपपाद्य सूत्रस्थहेत्वंशस्य टीकायां ''नामरूपराहित्याख्यविलक्षणार्थत्वव्यपदेशात्तद्ब्रह्मेति ब्रह्मत्वव्यपदेशाच्चे''त्युक्तमर्थं सूत्रारूढं करोति ॥ सूत्र इति ॥ ''अर्थान्तरत्वमिति रूपराहित्यमादिपदेनानामत्वमिति वे''ति टीकोक्तं पक्षान्तरमुपपत्तिं वदन्नाह ॥ यद्वेति ॥ अस्मिन्पक्षे अन्योऽर्थोऽर्थान्तरम् । तत्त्वादिव्यपदेशादिति शब्दादेवानामरूपत्वसिद्धिः । न तु विषयवाक्यसन्निधानात् ॥ न तस्यादिपदेनेति ॥ तत्वप्रदीपेतु ''अर्थान्तरत्वनामान्तरत्वादिव्यपदेशादिति वे''ति पुनरादिपदप्रयोगाद्ब्रह्मत्वादिकमप्यादिपदार्थ इति प्रतीयते ॥ अन्येत्विति ॥ आकाशो वैनामेत्यत्र श्रुत आकाशः किं भूताकाशः परमात्मावेति सन्देहे आकाशशब्दस्य भूते रूढत्वाद्भूतमिति प्राप्ते नामरूपनिर्वाहकत्वादिब्रह्मलिङ्गाद्ब्रह्मेति सिद्धान्तः । ननु लिङ्गाद्रूढिबाधः प्रागेवोक्तः । अतो गतार्थमेतदित्यतो भामत्युक्तमनुवदति ॥ आकाश इति ॥ सर्वाणि भूतान्याकाशादेव समुत्पद्यंत इत्यत्र सर्वजगदुत्पत्तेरेवकारावगतनिरपेक्षकारणत्वस्य प्रश्नप्रत्युक्तिसामानाधिकरण्यसामर्थ्यस्य च दर्शनाद्ब्रह्मपरत्वं नैवमिहेति कल्पतरूक्तार्थो बोध्यः । निर्वहितृत्वेति पूर्ववत्साधुत्वसमर्थनम् ।

ननूक्तमत्र ''तत्रैवात्र सर्वशब्दाभावच्छदवकाशदानादिना नामरूपनिर्वहणस्य गगनेऽपि सम्भवादकस्माद्रूढित्यागायोगात् ''ते यदंतरा तद्ब्रह्मे''ति ब्रह्मणो नामरूपयोरन्तरालत्व-वचनाद्भूताकाशो नामरूपयोर्निर्वहिता । ब्रह्मचैतयोरंतरालम् । मध्यं सारमिति यावदिति नामरूपनिर्वोढ्राकाशतो ब्रह्मणोऽभेदेनोक्ते''रित्यादिना ब्रह्मलिङ्गादेरन्यथानयनमित्यत आह ॥ क्लेशेनेति ॥ उभयत्रेति ॥ तत्रापि ''आकाशाद्वायुः वायोरग्नि''रित्यादिनाऽऽकाशस्य सर्वभूतादित्वश्रवणेन सर्वभूतकारणत्वस्य ततोऽन्यस्याभावेन निर्धारणोक्तनिरपेक्षत्वस्य भूतेऽप्युपपत्तेस्तत्रैवोक्तत्वादिति भावः ।

ननु पूर्वमाकाशस्य ब्रह्मत्वे निर्णीतेऽपि दहराधिकरणे दहराकाशो भूतमिति प्राप्ते ब्रह्मेति पुनर्विवरणमिवेहापि स्यादिति चेन्न । दहरस्थस्यैव ब्रह्मत्वेन दहरस्य ब्रह्मत्वनिरासात् । तत्र पूर्वपक्षप्रापकप्रबलहेतोरिवेह प्रापकस्याभावाच्चेति भावः ॥ केचित्त्विति ॥ ''आकाशो वैनामे''ति श्रुत आकाशो मुक्तजीवः परमात्मावेति संशये ''अश्व इव रोमाणि विधूय पापं चन्द्र इव निर्मुक्त'' इति मुक्तस्याभिधानेन प्रकृतत्वात् नामरूपभाक्त्वरूपनामरूपनिर्वोढृत्वस्य संसारित्वदशायां सम्भवात् ब्रह्मत्वामृतत्वादेश्च मुक्ते सम्भवात् आकाशशब्दस्य चासङ्कुचित-प्रकाशयुक्ते मुक्ते यौगिकत्वेनोपपत्तेर्मुक्त एवायमाकाश इति प्राप्ते ''नामरूपयोर्निर्वहिते''ति कर्तृतया तन्निर्वोढृत्वस्य जीवेऽयोगात्सकलनिर्माणधुरंधरस्येश्वरस्यैव योगात् ''ते यदन्तरे''त्युक्तनामरूपास्पृष्टत्वस्य तत्रैव योगादाकाशो ब्रह्मेति सिद्धान्तः । तत्र दूष्यांशमात्रमनुवदति ॥ तल्लिङ्गादितीति ॥ किमस्मिन्वाक्ये ब्रह्मलिङ्गमस्पष्टमुत स्पष्टमिति विकल्पौ हृदि कृत्वा क्रमेण निराह ॥ अस्मिन्निति ॥ स्पष्टत्वे ब्रह्मलिङ्गेनैव जीवप्रापकबाधादिति भावः । जीवप्रापकं च नास्तीत्याह ॥ निर्बीजश्चेति ॥ श्रुतीति ॥ आकाशश्रुतीत्यर्थः । सन्निधेः स्थानप्रमाणत्वेन श्रुतितो दुर्बलत्वादिति भावः । एतेनास्याकाशस्य भूतजीवान्यतरत्वप्राप्तौ शिवत्वेन सिद्धान्त इति वदतः कस्यचिन्मतमपि निरस्तं बोध्यम् । शिवासाधारणलिङ्गाभावाच्च । सर्वाधारत्वादेर्विष्णुलिङ्गत्वसमर्थनाच्चेति अक्षरार्थस्तु प्रागेव विवृतः ॥ आकाशाधिकरणम् ॥ १२ ॥

**पाण्डुरङ्गि –** पूर्वपक्षे सूत्रे साक्षाद्धेतुविशेषाभावात्पक्षांतरमाह ॥ यद्वेति ॥ प्राधान्येनेति ॥ प्राप्तत्वेन तस्य प्राधान्यमित्यर्थः ॥ आकाशाधिकरणम् ॥ १२ ॥

## सुषुप्त्यधिकरणम्

**॥ ॐ सुषुप्त्युत्क्रांत्योर्भेदेन ॐ ॥ अस्योभयत्र प्रसिद्धत्वं कंपनादित्यत्रैवोक्तम् । अनन्तरसङ्गतिस्तु पूर्ववैषम्येण वा पूर्वसिद्धान्तन्यायेन वा पूर्वपक्षोत्थानात् । प्रयोजनं तु पूर्वपक्षेऽक्षराधिकरणोक्तासङ्गत्वाक्षेपः । सिद्धान्ते तु तत्समाधानमिति भाष्य एवोक्तम् । अत्र स्वप्नादिद्रष्टृत्वं किं जीवस्योत ब्रह्मण इति चिन्ता । तदर्थं किं लोकप्रसिद्धिबाधकं नास्त्युतास्तीति । तदर्थमसङ्गत्वादिकं किं जीवे ब्रह्माभेदाभिप्रायेण नेतुं शक्यमुताशक्यमिति । तदर्थं सुषुप्त्युत्क्रांत्योर्व्यपदिष्टो भेदः किं मिथ्योत सत्य इति ।**

**प्रकाशिका –** ॥ ॐ सुषुप्त्युत्क्रांत्योर्भेदेन ॐ ॥ अत्र टीकायां 'असङ्गत्वलिङ्गेन लोकप्रसिद्ध्या चेशजीवयोस्साधारणस्य स्वप्नादिदर्शनलिङ्गस्ये''त्युभयत्र प्रसिद्धत्वमुक्तम् । तदयुक्तमिव । नामपादीयाकाशादिशब्दानामपीश्वरलिङ्गलोकप्रसिद्धिभ्यां तथात्वापत्तेरित्यत आह ॥ अस्येति ॥ स्वप्नद्रष्टृत्वलिङ्गस्येत्यर्थः । नामपादादिन्यायसाम्येन वज्रादिनाम्नां स्वप्नद्रष्टृत्वादिलिङ्गानां च ब्रह्मणि प्रयोगस्योक्त्या प्रयोगसाधारण्येनोभयत्र प्रसिद्धत्वादित्यर्थः । टीकाऽपि तथैव नेयेति भावः । ''जीवस्यैव भवेत्प्रसिद्धत्वा''दिति टीकायां प्रसिद्धपदप्रयोगेण हरावप्रसिद्धिसूचनेन सूचितं सङ्गतिद्वयमाह ॥ पूर्वेति ॥ प्रागाकाशशब्दस्य श्रौतप्रसिद्ध्या ब्रह्मणि सम्भवेऽपीह तदभावान्न स्वप्नद्रष्टृत्वं हरेर्युक्तमिति वा आकाशस्य जडत्वेन तत्रेशलिङ्गस्येशाभेदेनायोगेऽपीह जीवस्येशाभेदेन तल्लिङ्गं नेतुं शक्यत इति वा पूर्ववैषम्येण अव्याकृताकाशस्यारूपत्वेऽप्यरूपत्वेन प्रसिद्धब्रह्मण एव ग्रहणं पूर्वत्र यथा तथेहापि स्वप्नादिद्रष्टृत्वेन प्रसिद्धस्य जीवस्यैव ग्रहणमिति पूर्वन्यायेन वेत्यग्रे स्पष्टम् । तथाच प्रत्युदाहरणरूपा वाऽऽपवादिकी वा सङ्गतिरित्यर्थः । एवं तर्हि पूर्वोक्ते विरोधाभावादफलेयं चिन्तेत्यत आह ॥ प्रयोजनं त्विति ॥ एतेन ''असङ्गमरसमगन्ध''मित्यादिटीका विवृता । एतेनैव स्वोक्तसङ्गतेर्भाष्यादिविरोधोऽपि प्रत्युक्तः । तस्य फलपरत्वादिति । विषयसंशयटीकां व्यनक्ति ॥ अत्रेति ॥ वाजसनेये षष्ठे तृतीयब्राह्मणे ज्योतिर्वाक्यादनन्तरं श्रूयते ''सवा एष एतस्मिन्सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैव स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्यादि । तद्वाक्ये यत्तत्र स्वप्ने किंचित्पश्यतीत्युक्तं

स्वप्नावस्थातत्स्थवस्तु नोर्द्रष्टृत्वं विषय इत्यर्थः । यदि भेदो मिथ्या तदाऽसङ्गत्वस्य जीवेऽपि ब्रह्माभेदेन नयनसम्भवेन प्रसिद्धिबाधाभावाज्जीवस्यैवेदं लिङ्गम् । अन्यदातु नेति स्पष्टा हेतुहेतुमत्तेति भावः ।

**पाण्डुरङ्गि** – ॐ सुषुप्त्युत्क्रांत्योर्भेदेन ॐ ॥ ननु स्वप्नद्रष्टृत्वलिङ्गस्य लोकतोऽन्यत्र प्रसिद्धत्वात्कथमुभयत्र प्रसिद्धतेत्यत आह ॥ अस्येति ॥ पूर्ववैषम्येणेति ॥ पूर्वाधिकरणे आकाशशब्दस्य ब्रह्मणि प्रसिद्धत्वान्नामादिनिर्वोढृत्वस्य ब्रह्मणि प्रसिद्धत्वेऽपि स्वप्नद्रष्टृत्वस्य ब्रह्मण्यप्रसिद्धत्वादन्यपरत्वमिति वैषम्येणेत्यर्थः ॥ सिद्धान्तन्यायेनेति ॥ यथा पूर्वाधिकरणेऽव्याकृताकाशस्य रूपमात्राभावेऽपि प्राकृतरूपरहितत्वेन प्रसिद्धस्य ब्रह्मण एव ग्रहणं तथा स्वप्नादिद्रष्टृत्वेन प्रसिद्धस्य जीवस्यैव ग्रहणमिति पूर्वसिद्धान्तन्यायेनेत्यर्थः ।

## तात्पर्यचन्द्रिका

**पूर्वपक्षस्तु ॥ पूर्वोक्त आकाशशब्दः श्रुतिषु ब्रह्मणि प्रसिद्धः । नामादिनिर्वोढृत्वं तु ब्रह्मण्येव प्रसिद्धम् । ''द्रवति स्वप्नायैव स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गोह्ययं पुरुष'' इति श्रुतं स्वप्नादिद्रष्टृत्वं तु न तथा । किं तु लोके जीव एव प्रसिद्धम् । आर्यप्रसिद्ध्यभावे पिकनेमादौ लोकप्रसिद्धिवद्वेदप्रसिद्ध्यभावे लोकप्रसिद्धिरेव च ग्राह्या । यद्यपि प्रसिद्धिद्योतकनिपातो नास्ति । तथापि ''यमंतः समुद्र'' इत्यादाविव प्रसिद्धमेव ग्राह्यम् । न च वज्राकाशादिशब्दानां प्रसिद्धार्थत्यागेन ब्रह्मपरत्ववदिह पश्यत्यादिपदानां योगेन ब्रह्मपरता युक्ता इष्टा वा । न च ''संध्ये सृष्टिराह ही''त्यादिन्यायैः स्वाप्नवस्तुनि, जीवगतस्वप्नावस्थाच सत्या । ब्रह्मणश्च सर्वज्ञत्वं श्रुतिप्रसिद्धमिति वाच्यम् । यथाऽव्याकृताकाशस्य रूपमात्राभावेऽपि प्राकृतरूपरहितत्वेन प्रसिद्धस्य ब्रह्मण एव ''ते यदन्तरे''त्यत्र ग्रहणं तथा ब्रह्मणो वस्तुमात्रद्रष्टृत्वेऽपि स्वप्नादिद्रष्टृत्वेन प्रसिद्धस्य जीवस्यैवेह ग्रहणात् । न च वाच्यं पश्यतीतिपदं न द्रष्टृत्वमाह ॥ किन्तु ''ज्योतिर्दर्शना''दित्यत्रोक्तन्यायेन दर्शयितृत्वम् । अन्यथाऽसङ्गत्वविरोधादिति । तथात्वे दर्शनकृतसङ्गप्रसक्तेरेवाभावेन**

तन्निषेधायोगात् । तथाचासङ्गत्वं स्वोपजीव्यद्रष्टृत्वानुरोधात् "सन्निपातलक्षणो विधिरनिमित्तं तद्विधातस्ये"ति न्यायाज्जीव एव ब्रह्माभेदाभिप्रायम् । पूर्वत्रत्वाकाशस्य जडत्वेन ब्रह्माभेदायोगान्नामरूपनिर्वोढृत्वादिकं नाकाशे ब्रह्माभेदेन नेतुं शक्यमिति वैषम्यम् ।

ननु तर्हि स्वप्नादिद्रष्टृत्वमेव ब्रह्मणि जीवाभेदाभिप्रायमस्त्विति चेन्न । जीवस्य येन चैतन्यात्मना ब्रह्माभेदस्तस्मिञ्शुद्धे चैतन्येऽसंगतत्ववद्ब्रह्मणो येन चैतन्यात्मना जीवाभेदस्तस्मिंश्चैतन्ये स्वप्नादिद्रष्टृत्वायोगात् । एतदेवाभिप्रेत्योक्तं न्यायविवरणे "जीवेश्वराभेद ईश्वरोक्तावप्यर्थाज्जीव एवोच्यत" इति ।। यद्वा जिज्ञासासूत्रे ब्रह्मणो जीवाद्भेदस्य प्रतिज्ञातत्वात् सिद्धांतिना स्वप्नद्रष्टृत्वादिकं न ब्रह्मणि जीवाभेदाभिप्रायं वक्तुं शक्यमिति न्यायविवरणाभिप्रायः । न च "प्राज्ञेनात्मना सम्परिष्वक्त" इति "प्राज्ञेनात्मनान्वारूढ" इति सुषुप्त्युत्क्रांत्योर्भेदोक्तेर्नाभेद इति वाच्यम् । सुषुप्त्यादि-मतो विशिष्टस्य शुद्धात् सदा भेदेऽपि विशेष्यस्य भेदासिद्धेः । एतेनांतरधिकरणोक्तेन "भेदव्यपदेशाच्चान्य" इति न्यायेनात्रापि भेदः सिद्ध इति परास्तम् ।।

**प्रकाशिका** – "स्वप्नादिद्रष्टृत्वं जीवस्यैव भवेत् । प्रसिद्धत्वा"दिति टीकां विवृण्वन् पूर्ववैषम्येण पूर्वपक्षं व्यनक्ति ।। पूर्वोक्त इति ।। न तथेति ।। श्रुतिषु ब्रह्मणि प्रसिद्धं नेत्यर्थः । ननूक्तं पूर्वत्र लौकिकी प्रसिद्धिर्नग्राह्येति । तत्राह ।। आर्येति ।। सत्यं लौकिकी न ग्राह्येति । किं तु वैदिक्या अभाव एव सा ग्राह्या नतु तत्सद्भावे । पिकनेमं सततामरसादिशब्दानामार्य-प्रसिद्धेरभावेन निगमनिघण्टुव्याकरणादिवशेनापूर्वार्थकल्पने गौरवाल्लौकिकप्रसिद्धिवशेनैवार्थ-ग्रहणस्य पिकनेमाधिकरणे प्रथमस्य तृतीयपादे व्युत्पादितत्वादित्यर्थः । अत एव प्राक् "तदयोगे त्ववैदिकी"त्युक्तमिति भावः । एतेन टीकायां "प्रसिद्धत्वा"दित्यस्य लोकप्रसिद्धत्वादित्यर्थो दर्शितः । टीकोक्तहेतुमाक्षिप्य समाधत्ते ।। यद्यपीति ।। यमिति ।। यमंतस्समुद्रे कवयो वयन्ती"त्यत्र यस्य कस्यापि समुद्रस्थत्वे सम्भवत्यपि "महोदधिशयोंऽतक" इत्यादौ विष्णोरेव प्रसिद्धतया प्रसिद्धो नारायण एव "यमंतस्समुद्र" इत्यादौ गृह्यते तथेहापि "सयत्तत्र किंचित्पश्यती"त्यत्र तथात्वेन प्रसिद्धो जीव एव ग्राह्य

इत्यर्थः । उक्तं चाद्यसूत्रभाष्ये ''समुद्रेंऽतर्नारायणः । प्रसिद्धत्वा''दिति । नन्वसङ्गत्वरूपनिरवकाशेश्वरलिङ्गात्प्रसिद्धिबाधः स्याद्वज्रादिशब्देष्विवेत्याशंक्य तद्वैषम्यमाह ॥ न च वज्रेति ॥ युक्ता इष्टावेति ॥ ''तथात्व'' इत्यादि वक्ष्यमाणदिशा वाक्यार्थासिद्धिप्रसङ्गादिति भावः ।

''प्रसिद्धत्वा''दिति टीकोक्तहेतोः प्रकारांतरेणापि तात्पर्यं विवरीतुं शङ्कामाह ॥ न च संध्य इति ॥ तृतीयस्य द्वितीयपादे ''संध्ये सृष्टिराहहि'' इत्यत्र स्वप्नविषयो भगवदधीनो न वेति संशये स्वाप्नवस्तूनां नित्यत्वेऽनित्यत्वे वा प्रागूर्ध्वमुपलंभप्रसङ्गात् कर्त्रुपादाननिमित्तानामभावाच्च सत्यत्वायोगात् असत्यत्वे तेषामन्याधीनत्वायोगान्नेशाधीन इति प्राप्ते सत्यत्वेऽपि विद्युदादिवत्तदानीमेवोत्पादविनाशसम्भवादीशकर्तृकत्वस्य वासनोपादानकत्वस्यादृष्टादिनिमित्तकत्वस्य च सम्भवात् ''अथरथान् रथयोगान् पथस्सृजत'' इति सृष्ट्यवगमाच्च सत्यस्स्वप्नो भगवदधीन इति वक्ष्यते । तन्न्यायैरित्यर्थः । परमार्थाशेषार्थाभिज्ञत्वस्य सार्वज्ञशब्दार्थत्वात्सत्यत्वोपन्यासः ॥ श्रुतीति ॥ ''यस्सर्वज्ञस्सर्व'' इत्यादिश्रुतीत्यर्थः । उपलक्षणमेतत् । ''विशेषणभेदव्यपदेशाभ्यां च नेतरा''विति सूत्रे विशेषणपदेन सार्वज्ञस्य विष्णुधर्मत्वेनोपादानात् सूत्रप्रसिद्धं चेत्यपि ध्येयम् । एतेन ''स्वाप्नपदार्थानां जीवगतावस्थायाश्च सत्यत्वात् परमात्मनश्च सर्वज्ञत्वेन तद्विशेषदर्शनोपपत्ति''रिति सिद्धान्तटीकाऽत्रैव विवृता ध्येया । एतेन ''संध्ये सृष्टि''रित्यनेन गतार्थत्वमप्याशङ्कितं भवति । एतच्छङ्कोत्तरत्वेनापि ''प्रसिद्धत्वा''दिति टीकोक्तहेत्वर्थं विवृण्वन् पूर्वसिद्धान्तन्यायेन पूर्वपक्षमुज्जीवयति ॥ यथेति ॥ ''अरूपमस्पर्शं अरूपोभूतवर्जना''दित्यादिश्रुतिस्मृतिभिः प्रसिद्धस्येत्यर्थः । एतेन पूर्वन्यायेनेत्येतद्विवृतं भवति । ज्योतिर्नयेन गतार्थत्वमाशंक्य निराह ॥ न च वाच्यमिति ॥

ननु तत्र ब्रह्मपरैकवाक्यत्वबलादन्तर्णीतण्यर्थत्वं कल्पितं शब्दानामिति चेत्तर्हीहापि लिङ्गबलात् सुतरां तथा स्यात् । वाक्यादपि लिङ्गस्य बलवत्त्वादिति भावेनाह ॥ अन्यथेति ॥ यद्यपि पश्यतीति कर्तृप्रयोगस्य दर्शनात्कर्तर्येव प्रसिद्धेः प्रयोजककर्तर्यप्रसिद्धेः प्रसिद्धस्य स्वप्नादिदर्शनकर्तुर्जीवस्यैव ग्रहणं न त्वप्रसिद्धस्य प्रयोजककर्तुरीश्वरस्य । तल्लिङ्गं तु प्रसिद्धिबलात् कथंचिन्नेयमित्येवंरूपेण टीकोक्त ''प्रसिद्धत्वा''दिति हेतुरेवैतच्छंकोत्तरत्वेनापि योजयितुं शक्यः । तथाप्यस्य योजनस्योक्तदिशा ऊहितुं शक्यत्वाद्बलवदन्तरङ्गं बाधकान्तरमाह ॥ तथात्व इति ॥ दर्शनं प्रति कर्तृत्वाभावे । प्रयोजककर्तृत्वे स्वाप्नार्थदर्शनकृतविकाररूपलेपाभावेन

''अनन्वागतस्तेन भवति'' तेन दर्शनेनानन्वागतो लिप्तो न भवतीति निषेधायोगादित्यर्थः । व्यामोहयितुर्मायाविनो व्यामोहकृतकार्यादर्शनादिति भावः । कथं तर्हि ब्रह्मलिङ्गोपपत्तिरित्यतो ''जीवेशयोरभेदेन जीवे चैतन्यविवक्षयाऽसंगत्वोक्तिसंभवा''दिति टीकोक्तं सौत्रभेदपदव्यावर्त्यमभेदेनोपपन्नत्वं लिङ्गस्याह ॥ तथाचेति ॥ स्वस्यासङ्गत्वस्य यदुपजीव्यं द्रष्टृत्वं तदनुरोधादित्यर्थः । प्रतियोगिभूतसंगप्रसक्तिसम्पादकत्वेन द्रष्टृत्वस्योपजीव्यत्वमिति भावः ।

शाब्दिकन्यायमाह ॥ सन्निपातेति ॥ सन्निपातस्सन्निधानम् । लक्षणशब्दो निमित्तवचनः । बहुव्रीहिश्च समासः । यत्सन्निधानं निमित्तीकृत्य यो विधिः प्रवर्तते स विधिस्तत्सन्निधानविघातकस्य शास्त्रस्य कार्यस्य वा न निमित्तमिति न्यायार्थः ''कृन्मेजंत'' इत्यत्र कैयटोक्तः । यथा शतानीतिशब्दे शतशब्दात्परस्य जसः ''जश्शसोश्शि''रिति शिभावे कृते तस्य ''शि सर्वनामस्थान''मिति सर्वनामस्थानसंज्ञायां तत्संनिपातेन शतशब्दस्य ''नपुंसकस्य झलच'' इति नुमागमे सति शतन् इ इति स्थिते ''ष्णांताष''डिति षट्संज्ञायां शिभावस्य ''षड्भ्योलु''गिति लुक्प्राप्नोति । शिभावसन्निपातेन विहितो नुम् षट्संज्ञाद्वारा शिभावविघातकस्य लुको निमित्तं न भवति । तथेहाप्यसङ्गत्वं ''पश्यती''त्युक्तद्रष्टृत्वविघातकस्य णिजर्थकल्पनस्यानिमित्तमिति द्रष्टव्यम् ।

ननु क्वचिद्वृक्षायेत्यादौ ''ङेर्य'' इत्यकारनिमित्तकोऽपि यादेशः ''सुपिचे''ति दीर्घविधेर्हेतुस्सन् अकारविघातहेतुरपि दृष्ट इति तत्रायं न्यायो व्यभिचारीति चेन्मैवम् । ''कष्टायक्रमण'' इत्यादिनिर्देशात् ज्ञापकात्तत्र तथात्वेऽपि नेह तथा । तादृशज्ञापकाभावादिति भावः । टीकायां वाक्यशेषानुपपत्तेस्स्पष्टत्वादेतदाशंकासमाधी नोक्ताविति भावः । टीकोक्तलिङ्गोपपत्तावतिप्रसङ्गमाशंक्यनिराह ॥ पूर्वत्र त्विति ॥ एतेन ''पूर्ववैषम्येणे''त्येतत्प्रकारान्तरेणापि विवृतं ध्येयम् । ''न च मंतव्यं यथा स्वप्नादिदर्शनस्ये''त्यादिटीकां व्यनक्ति ॥ ननु तर्हीति ॥ भाष्येऽनुक्तस्याप्यभेदपूर्वपक्षस्य टीकायामुपपादने मूलमाह ॥ एतदेवेति ॥ जीवेश्वराभेद इति निमित्तसप्तमी । जीवेश्वराभेदेन निमित्तेनेत्यर्थः । तयोरभेदश्च स्वप्नद्रष्टृत्वासङ्गत्वरूपजीवेशलिङ्गयोस्सामानाधिकरण्यान्यथानुपपत्त्यैव सिद्ध इति भावः । टीकानुक्तं स्वयं भाष्यतात्पर्यांतरमाह ॥ यद्वेति ॥ सिद्धान्तिना जीवेशाभेदानङ्गीकारादिति वाक्यशेषो न्यायविवरणे द्रष्टव्य इति भावः । सिद्धान्तन्यायमप्याशङ्क्याह ॥ न च प्राज्ञेनेति ॥ क्रमेण

सुषुप्त्युत्क्रांत्योर्वाक्यद्वयम् । तथा च विशिष्टे प्रतीतो भेदो मिथ्येति भावः ।। एतेनेति ।। विशेष्यस्य भेदाभावेनेत्यर्थः । प्रागुक्तोऽपि भेदव्यपदेशो न विशेष्यभेदविषय इति भावः । अत्र टीका''स्वप्नादिद्रष्टा परमात्मैव असङ्गत्वलिङ्गा''दिति । सा नयुक्तेव ।

**पाण्डुरङ्गि** – वैषम्येण पूर्वपक्षमाह ।। पूर्वोक्तेति ।। न तथा ब्रह्मणि न प्रसिद्धमित्यर्थः । ननु यवादिशब्दानां प्रियंग्वादिषु म्लेच्छप्रसिद्धेः सत्त्वेऽपि यदा अन्या ओषधयो म्लायन्ते अथैते मोदमानास्तिष्ठंतीत्यादिवाक्यशेषानुगृहीतार्थप्रसिद्ध्या दीर्घशूकादिपरत्ववत् स्वप्नद्रष्टृत्वस्य लोकतो जीव एव प्रसिद्धत्वेऽपि वैदिकप्रसिद्ध्या ब्रह्मण एव स्वप्नद्रष्टृत्वं किं न स्यादित्यतो दृष्टान्त आर्यप्रसिद्धेः सत्त्वेन तदनुसारेण यवादिशब्दानां दीर्घशूकपरत्वेऽपि प्रकृते स्वप्नद्रष्टृत्वस्य ब्रह्मणि वैदिकप्रसिद्ध्याभावाद्दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यापत्त्या नास्य यववराहाधिकरण-विषयत्वम् । किन्तु पिकनेमाधिकरणविषयत्वमेवेत्याह ।। आर्यप्रसिद्ध्यभाव इति ।। पूर्वाधिकरण आकाशश्रुतेर्वैनामेति प्रसिद्धिद्योतकनिपातेनेव स्वप्नद्रष्टृत्वस्य प्रसिद्धिद्योतकनिपातेना-विशेषणात्पूर्वपक्षानुपपत्तिरित्याशङ्कते ।। यद्यपीति ।।

ननु न स्वप्नद्रष्टृत्वं ब्रह्मपक्षे बाधकम् । ब्रह्मणः सर्वज्ञत्वेन स्वप्नद्रष्टृत्वोपपत्तेः । न च स्वप्नादेर्मिथ्यात्वेन तज्ज्ञत्वे ब्रह्मणो भ्रांतत्वं स्यादिति वाच्यम् । संध्ये सृष्टिराह हीत्यादिन्यायेन स्वप्नादेस्सत्यत्वेन तज्ज्ञत्वे भ्रांतत्वायोगादिति शङ्कते ।। न चेति ।। पूर्वाधिकरणसिद्धान्तन्यायेन पूर्वपक्षमाह ।। यथेति ।। उक्तन्यायेनेति ।। अन्तर्भावितण्यर्थत्वरूपोक्तन्यायेनेत्यर्थः ।। अन्यथेति ।। पश्यतीत्यस्य द्रष्टृत्वार्थकक्रियावेशापत्त्याऽसंगतत्वव्याघात इत्यर्थः । यत्सन्निपातेन यस्य यद्भवति तत्तद्विघातस्यानिमित्तमिति न्यायार्थः ।

नन्वेवं पूर्वाधिकरणेऽपि ब्रह्माभेदाभिप्रायेण नामादिनिर्वोढृत्वमाकाशस्यैव स्यादित्यत्राह ।। पूर्वत्रेति ।। चैतन्यैक्याभिप्रायेणेति टीकाऽनुपपन्ना । चैतन्यैक्याभिप्रायेणैव जीवेऽमुख्यत्व-वत्तेनैवेश्वरे स्वप्नादिद्रष्टृत्वस्याप्यमुख्यत्वोपपत्तेः । अतोभिप्रायमाह ।। जीवस्येति ।। न्यायविवरण इति ।। ईश्वरोक्तावपि असङ्गतत्वेनेश्वरोक्तावपीत्यर्थः । नन्वसङ्गतत्वेनेश्वरोक्तौ जीव एवोक्त इत्यत उक्तं जीवेश्वराभेद इति ।। नन्वेवं जीवेश्वराभेदादेव जीवोक्तावपीश्वर एवोक्त इति किं न स्यादित्यत उक्तमर्थादिति ।। ईश्वरधर्मभूतासङ्गत्वोक्तावपि येन रूपेण जीवस्येश्वरैक्यं

तत्रासङ्गत्वस्य सत्त्वेनोपपन्नत्वात् ब्रह्मणश्च येन रूपेण जीवाभेदस्तत्र चिन्मात्रे स्वप्नद्रष्टृत्वाभावादस्मिन्पक्षे यदि जीवेश्वराभेदस्तदेश्वरोक्तावर्थाज्जीव उक्त इति सम्भवति। नत्वेवं त्वया वक्तुं शक्यम् । जीवेश्वराभेदस्य त्वयाऽनभ्युपगमादिति न्यायविवरणं व्याख्यातं भवति ॥ एतेनेति ॥ विशिष्टस्य भेदसिद्धावपि विशेष्यस्य भेदसिद्ध्यभावेनेत्यर्थः ।

## तात्पर्यचन्द्रिका

सिद्धांतस्तु ॥

कात्स्न्र्येन स्वाप्नवस्तूनां द्रष्टा सर्वज्ञ ईश्वरः ।
न युज्यते च सङ्कोचो ह्यसङ्कोचस्य सम्भवे ॥ १ ॥

ते यदन्तरेत्यत्र तु प्राकृतयोर्नामरूपयोः प्रकृतत्वात्प्रकृतपरसर्वनामबलाद्रूपमात्र निषेधे ''श्यामाच्छबलं प्रपद्य'' इति सन्निहितवाक्यविरोधाच्च प्राकृतपरत्वेन सङ्कोचः । न च साकल्येन स्वप्नद्रष्टृत्वमसर्वज्ञे जीवे लोकतोऽपि प्रसिद्धम् । ब्रह्मणि तु श्रुतितः प्रसिद्धम् । न च श्रुतितः प्रसिद्धग्रहणसम्भवे श्रुतितो लोकतश्चाप्रसिद्धस्य ग्रहणं युक्तम्। न चेह स्वप्नाद्यवस्थावत्तोच्यते । पश्यतीति तद्द्रष्टृत्वस्यैवोक्तेः । किंच ''अनन्वागतस्तेन भवती''त्यत्र ''असङ्गोह्ययं पुरुषः'' इत्यसङ्गत्वं हेतुः । प्रसिद्धमेव च हेतुत्वयोग्यम् । ''असङ्गमस्पर्श''मित्यादिश्रुतिषु च ब्रह्मण्येव तत्प्रसिद्धम् । किं चासङ्गत्वं न स्वरूपेणापि जीवे युक्तम् । जडेशयोरसंसारित्वाज्जीवस्यैव संसारिणः सङ्गवत्तया श्रुत्यादिसिद्धत्वेन तत्र सङ्गनिषेधायोगात् । यच्चोक्तं विशेष्यस्य भेदासिद्धेरिति तन्न । बन्धमोक्षयोः सामानाधिकरण्यनियमेन विशेष्यस्यैव बन्धाश्रयत्वात्तस्यैव च तत्तत्कारणाधीनसुषुप्त्याद्यवस्थावत्त्वेन विशेष्यस्यैव भेदसिद्धेः । अन्यथा तुरीयावस्थया स्वप्नाद्यवस्थानां सामानाधिकरण्यं न स्यात् । भेदस्य मिथ्यात्वे च तच्छ्रुतिरप्रमाणं स्यात् । न च सुषुप्त्यादावीशस्य जीवपरिष्वंगादिमानांतरप्राप्तम् । येन तत्रातात्पर्याच्छ्रुतिरप्रमाणं न स्यात् । किं च भ्रांतिरहितायां सुषुप्तौ सतो भेदस्य न

**भ्रांतिमात्रशरीरत्वरूपं मिथ्यात्वं युक्तम् । अपि च जीवपरिष्वंगादिश्रुतिर्मुक्तिविषया । तथा सूत्रकृतैव वक्ष्यमाणत्वात् । ''अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वान् शोकानि''त्यादिमुक्तिलिङ्गाच्च । न च मुक्तावपि सतो मिथ्यात्वम् । तदुक्तं न्यायविवरणे ''सुषुप्त्युत्क्रांत्योर्जीवेशयोर्भेदोक्तेरसङ्गत्वादिचेश्वरस्यैवेत्यर्थाद्भवती''ति । अत्र सूत्रे भेदेनेत्यस्य पूर्वसूत्रानुषक्तेन व्यपदेशादित्यनेनान्वयः ॥ सुषुप्त्यधिकरणम् ॥ १३ ॥**

**प्रकाशिका** – जीवे प्रसिद्धनिरवकाशस्वप्नद्रष्टृत्वलिङ्गेनासङ्गत्वरूपेश्वरलिङ्गस्येशाभेदेन सावकाशत्वादित्यतो ''न विष्णोस्स्वप्नादिदर्शनायोग'' इत्यादि टीकोक्तं स्वप्नादिद्रष्टृत्वस्य विष्णौ मुख्यत्वं तावदुपपादयति ॥ कात्स्न्र्येनेति ॥ ननु श्रुतौ ''स यत्र किंचित्पश्यती''त्येवोच्यते न तु कृत्स्नं पश्यतीत्यत आह ॥ न युज्यत इति ॥ हिर्हेतौ । तस्मात्स्वप्नद्रष्टेश्वर इति पूर्वार्धेनान्वयः । न च भ्रांतत्वप्रसङ्गः । स्वाप्नसत्यताया वक्ष्यमाणत्वेनेति पूर्वपक्ष एवोक्तत्वात् । न चासङ्कोचे तत्रारोपितजाग्रत्त्वस्यापि दर्शनप्रसङ्ग इति शङ्क्यम् । पश्यतीति दृष्टेर्मुख्यज्ञानवाचित्वेन प्रमितेरेवात्र ग्रहणात् । अत एव स्वाप्नवस्तूनामित्युक्तिरिति भावः ।

ननु पूर्वत्रेवेहापि सङ्कोचः किं न स्यादित्यत आह ॥ ते यदिति ॥ नाम्नः प्राकृतत्वं प्राकृतपदार्थवाचित्वम् । अस्त्वेवंरूपं जीवेऽपीत्यतः ''तस्यैव तन्मुख्यं जीवादपी''ति टीकोक्तं. जीवेऽमुख्यत्वं व्यनक्ति ॥ न च साकल्येनेति ॥ श्रुतितः'' यस्सर्वज्ञ'' इत्यादिश्रुतितः । ननु तस्य सर्वज्ञतया सामान्यतः प्रसिद्धावपि न विशिष्य स्वप्नद्रष्टृत्वप्रसिद्धिरिति चेत्किं तावता । ''शब्दादेवें''त्यत्रोक्तरीत्या प्रासादवासिन्यायेन सर्वज्ञग्रहणेन तद्विशेषस्वप्नदर्शनग्रहणोपपत्तेरिति भावः ॥ न चेहेति ॥ येन जीवस्स्यादिति भावः । एवं स्वप्नद्रष्टृत्वं भगवत्येव मुख्यं न जीव इति तद्बलेनासङ्गत्वं न जीवे कथंचिन्नेयमिति भावेन टीकोपपादिता । इदानीं त्विहवाक्ये श्रुतमसङ्गत्वं न कथंचिदपि जीवेऽवकाशमर्हतीति भावेन तस्य विष्ण्वेकनिष्ठतां ''यतोऽसङ्गः पर एवे''ति टीकोक्तामाह ॥ किं चानन्वागत इति ॥ यद्वा ''स्वप्नादिद्रष्टा परमात्मैवे''ति टीकास्थप्रतिज्ञांशमुत्तरटीकावाक्यानुरोधेनोपपाद्य ''असङ्गत्वलिङ्गा''दिति टीकास्थं हेत्वंशमुपपादयति ॥ किञ्चेति ॥ यद्वा न केवलं स्वरूपपर्यालोचनया स्वप्नद्रष्टृत्वमीश्वरस्यैव मुख्यमिति । किं त्वत्र वाक्ये श्रुतासङ्गत्वरूपलिङ्गपर्यालोचनयापीति भावेन तल्लिङ्गं हरावेवोपपादयति ॥

किञ्चेति ॥ अस्मिन्पक्षे टीकायां स्वप्नादिद्रष्टा परमात्मैव तस्य सर्वज्ञत्वेन सत्यस्वप्नाद्यशेष-वस्तुदृष्टेस्तस्मिन्नेव मुख्यत्वादसङ्गत्वलिङ्गाच्चेति योजना ध्येया । यद्वा टीकायामसङ्गत्वेत्यस्या-नन्वागतवाक्योक्तासङ्गत्वलिङ्गादित्यर्थः । यतोऽसङ्गः पर एवेत्यस्य हेतूकृतासङ्ग इत्यर्थ इति भावेन तद्व्याख्याति ॥ किंचेति ॥ हेतुरिति ॥ स्वाप्नवस्तुदर्शनकृतलेपाभावरूपे साध्येऽसङ्गत्व-शब्दितलेपाभाव सामान्यं हेतुरुच्यते । असङ्गो हीति हिशब्दस्य हेत्वर्थत्वादित्यर्थः । यदपि शुद्धचैतन्यात्मना ब्रह्माभिन्ने जीवेऽप्यसङ्गत्वं युक्तमिति तदपि नेत्याह ॥ किं चासङ्गत्वमिति ॥ श्रुत्यादीति ॥ ''अतोऽन्यदार्तं ,जीवा एव तु दुःखिनः, अनादिमायया सुप्तो यदाजीवः प्रबुध्यते, स पात्रं बन्धमोक्षयो''रित्यादिश्रुतिस्मृतिसिद्धत्वादित्यर्थः । सूत्रभाष्याद्युक्त भेदव्यपदेशं प्रागाक्षिप्तमिदानीं समर्थयते ॥ यच्चेति ॥ तुरीयावस्थया मुक्त्यवस्थयेत्यर्थः । ''न चायं भेदो व्यावहारिक एवे''त्यादिटीकां व्यनक्ति ॥ भेदस्य मिथ्यात्वे चेति ॥ स्वयं युक्त्यंतरमाह ॥ तच्छ्रुतिरिति ॥ तत्रातात्पर्यान्नाप्रामाण्यमित्यत आह ॥ नचेति ॥ मानांतरबाधितमपि नेत्यपि ग्राह्यम् । मिथ्यात्वं नासत्त्वम् । किन्तु प्रातिभासिकत्वम् । तच्च प्रतीतिमात्राभावदशायां सतो भेदस्य न युक्तमित्याह ॥ किञ्चेति ॥ भाष्यटीकया न्यायविवरणमपि विवृतमिति भावेनोक्तं प्रमेयं तदारूढं करोति ॥ तदुक्तमिति ॥ भेदोक्तेः प्राज्ञेनात्मनेत्यादिनेत्यर्थः । आदिपदेन स्वप्नादिद्रष्टृत्वम् । परमतं त्वग्रे निरसिष्यते ॥ सुषुप्त्यधिकरणम् ॥ ३३ ॥

**पाण्डुरङ्गि –** ननु स्वप्नादिद्रष्टृत्वं नाम स्वप्नाद्यवस्थावत्त्वम् । न चात्मनः स्वप्नाद्यवस्थावत्त्वं लोकवेदयोः प्रसिद्धमित्यत आह ॥ न चेति ॥ न च प्राज्ञेनात्मना सम्परिष्वक्त इति प्राज्ञेनात्मनान्वारूढ इति सुषुप्त्युत्क्रांत्योर्भेदोक्तेर्नाभेद इति । अत्रोक्तसुषुप्त्यादिमतो विशिष्टस्य शुद्धात्सदाभेदेपि विशेष्यस्य भेदासिद्धेरिति यत्तदनूद्य दूषयति ॥ यच्चेति ॥ ननु भेदस्य मिथ्यात्वेऽपि न तच्छ्रुतेरप्रामाण्यम् । मिथ्याभूते भेदे तात्पर्याभावात् । न च तात्पर्यमपि किं न स्यादिति वाच्यम् । तस्य मानांतरप्राप्तत्वेन तात्पर्यज्ञापकापूर्वताया अभावादित्यत आह ॥ न चेति ॥ वक्ष्यमाणत्वात् स्वाप्ययसंपत्त्योरित्यादिनेति शेषः । आविष्कृतं हीत्याद्युक्तां युक्तिमाह ॥ अनन्वागतमिति ॥ मुक्तावपीत्यपिशब्देनान्यथा ब्रह्मणोऽपि मिथ्यात्वं स्यादित्यतिप्रसङ्गं सूचयति ॥ सुषुप्त्यधिकरणम् ॥ १३ ॥

## ब्राह्मणाधिकरणम्

॥ ॐ पत्यादिशब्देभ्यः ॐ ॥ अस्य पादसङ्गतिः ब्राह्मणशब्दस्य विप्रत्वजातौ लोके प्रसिद्धत्वेऽपि चतुर्मुखे विशिष्य तदभावेन वा कम्पनादित्यत्रोक्तरीत्या वा द्रष्टव्या। अनन्तरसङ्गतिस्तु "असङ्गेन हि सज्यत" इति श्रुतस्यात्रत्यासङ्गस्याब्रह्मत्वे "असङ्गो ह्ययं पुरुष" इति पूर्वोक्तस्याप्यब्रह्मत्वं स्यादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानाद्वा पूर्वत्र जीवमात्राभेदं निरस्येह जीवविशेषचतुर्मुखाभेदनिरासाद्वा द्रष्टव्या। प्रयोजनं तु अन्यस्य नित्यमहिमत्वे जिज्ञासादिसूत्रेषु विवक्षितं विष्णोर्नित्यमहिमत्वं न स्यादिति टीकायामेवोक्तम्। देवानां विद्याकर्मणोः पदप्राप्तिः सूचिते"ति भाष्येणैव प्रयोजनमप्युक्तमिति ज्ञेयम्। तस्य भाष्यस्य देवानामेवानित्यपदत्वं न तु विरिंचस्येत्यर्थवत् विरिंचादीनां देवानामनित्यपदत्वमुक्तम्। तच्चायुक्तम्। विरिंचस्य नित्यमहिमत्वादित्यर्थस्यापि सुवचत्वात्। अत्र "एष नित्यो महिमा ब्राह्मणस्ये"ति श्रुतो ब्राह्मणशब्दः किं विरिंचपरः किं वा ब्रह्मपर इति चिन्ता। तदर्थं स किं रूढः किं वा यौगिक इति। तदर्थं किं रूढेर्बाधकं नास्त्युतास्तीति। तदर्थं सर्वाधिपतित्वादिकं किं चतुर्मुखे ब्रह्माभेदाभिप्रायेण नेतुं शक्यमुताशक्यमिति ॥

**प्रकाशिका** – ॥ ॐ पत्यादिशब्देभ्यः ॐ ॥ अत्र टीकायां "नित्यमहिमत्वलिङ्गेनाजश्रुत्याच विष्णुविरिंचयोस्साधारणस्य ब्राह्मणनाम्न" इत्यादिना पादसङ्गतिरुक्ता। सा नऽयुक्तेव। ब्राह्मणशब्दस्यान्यत्र रूढत्वेनाकाशादिशब्दवदन्यत्र प्रसिद्धत्वापत्तेः। उभयप्रापकवशादुभयत्र प्रसिद्धत्वे चाकाशादिनाम्नोऽपि तथात्वापत्तेरित्यत आह ॥ अस्येति ॥ अधिकरणस्येत्यर्थः ॥ चतुर्मुख इति ॥ पूर्वपक्ष्यभिमतेऽन्यत्र प्रसिद्धेरेवान्यत्रप्रसिद्धिशब्दार्थत्वात्। जातिपूर्वपक्षस्य चेह नित्यमहिमत्वादिनाऽनवकाशादिति भावः ॥ विशिष्येति ॥ तस्यापि विप्रत्वेन सामान्यतस्सत्त्वादिति भावः। एतेनान्यसाधारण्येन पूर्वपक्ष्यभिमते प्रसिद्धत्वादन्यत्रप्रसिद्धिरिति प्रत्युक्तम्। विशिष्याभावात्। तथाच सामान्यप्रसिद्धिब्रह्मलिङ्गाभ्यामुभयत्रप्रसिद्धिरिति भावः ॥ उक्तेति ॥ नामपादीयन्यायेन ब्रह्मण्यपि प्रयोगस्योक्तत्वात्प्रयोगसाधारण्येनेत्याद्युक्तरीत्येत्यर्थः। टीकायां लिङ्गोक्तिस्तु नामपादन्यायसूचनाय।

अजश्रुत्युक्तिरपि चतुर्मुखरूपविशेषोपस्थित्यर्थेति भावः । नन्वेवं सङ्गत्युक्तौ ''प्राचीनाधिकरणेषु विष्णौ नित्यमहिमत्वमभिसंहित''मिति टीकाविरोध इत्यत आह ॥ प्रयोजनं त्विति ॥ सा प्रयोजनपरेति भावः । यद्यप्यसङ्गत्वाक्षेपः प्रयोजनं सूचितम् । तथापि तस्य सङ्गतिमात्रपरत्वेनोपपत्तेरिति वा सर्वाक्षेपरूपप्रयोजनसम्भवे तन्मात्राक्षेपरूपप्रयोजनसङ्कोचायोगादिति वा टीकोक्तं प्रयोजनांतरमिति वा तत्स्फुटीकर्तुं प्रयोजनं त्वित्युक्तम् ॥ यद्वा द्वितीयसङ्गतौ पूर्वाक्षेपाभावाद्भाष्ये स्पष्टं प्रयोजनानुक्तेश्च किं प्रयोजनमेतच्चिंताया इत्यत उक्तं प्रयोजनं त्विति ॥ भाष्य एव प्रयोजनोक्तिरस्तीत्याह ॥ यद्वेति ॥

ननु टीकायामेतदन्यथाव्याख्यातमित्यतस्स्वयमर्थान्तरमाह ॥ तस्येति ॥ अनेकार्थत्वाद्भाष्यस्य । ''भाष्यं चात्यर्थविस्तर''मित्युक्तेरिति भावः ॥ उक्तमिति ॥ देवताधिकरण इत्यर्थः । विषयसंशयटीकां व्यनक्ति ॥ अत्रेति ॥ वाजसनेये ''जनको ह वैदेह आसांचक्र'' इति षष्ठेऽध्याये चतुर्थे ब्राह्मणे ''स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोंऽतर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिस्स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यती''त्याद्युपक्रम्य श्रूयते ''तदेतदृचाभ्युक्तम् । एष नित्योमहिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् ।तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति ॥ तस्मादेवंविच्छांतो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति । नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विजरो विजिघित्सो ब्राह्मणो भवति एष ब्रह्मलोकस्सम्राडिति होवाच याज्ञवल्क्यस्सोहं भगवो विदेहान् ददामिमां च सहदास्यायेति । स वा एष महानज आत्माऽन्नादो वसुदानो विंदते वसु य एवं वेद । स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्माभयं हवै ब्रह्म भवति य एवं वेदे''ति । तत्रत्यो ब्राह्मणशब्दो विषय इत्यर्थः ॥ रूढ इति ॥ जातिवाचीत्यर्थः ॥ उताशक्यमिति ॥ यदि त्वाद्यस्तदा रूढौ बाधकाभावाच्चतुर्मुख एव । द्वितीये बाधकाद्रूढित्यागेन योगाद्विष्णुरेवेति स्पष्टः फलफलिभाव इति भावः ।

नन्वत्र यद्वेत्याद्यग्रिमग्रन्थे टीकायां च वर्णादिहीने हरावनवकाशेन विप्रत्वजातौ निरूढेन ब्राह्मणशब्देन सहपठिततयाऽजशब्दस्य विरिंचिपरत्ववर्णनाद्धरौ विरिंचे चाजायमानत्वाकार-वाच्यविष्णुजत्वरूपयोगाभ्यां ''तस्मादहमजस्स्मृत'' इति स्मृत्या ''अज आत्मा महान्ध्रुव'' इत्यादिनाच रूढ्यापि साधारणस्याजशब्दस्यैव चिन्ताधर्मित्वमुचितमिति चेन्मैवम् । भाष्ये ''स च ब्राह्मणस्सवा एषमहानज आत्मेत्यजशब्दाद्विरिंच'' इत्युक्त्याऽजशब्दादेव पूर्वपक्षप्राप्त्युक्तेः । तत्र चाजशब्दो विष्णौ यौगिक एव । न तु चतुर्मुख इव योगरूढ इत्युपेत्याजशब्दे विरिंचप्रापकत्वस्याग्रे प्रतिपादनात्तदनुरोधेन ब्राह्मणशब्द एव धर्मीकृतः । नन्वेवं ब्रह्मपर इति चिन्तानंतरं तदर्थं तत्सहपठितोऽजशब्दः किं चतुर्मुखपरोऽथ ब्रह्मपर इति चिन्ता कार्येति चेन्न । ब्राह्मणशब्देनाजशब्दस्याप्युपलक्षणाद्वा श्रुतिद्वयसाहित्यस्यैव पूर्वपक्षप्रापकत्वेनाभिमतत्वस्य वक्ष्यमाणत्वाद्ब्राह्मणशब्दे चिन्तापरंपराप्रदर्शनस्याजशब्देऽपि तुल्यत्वेनोहितुं शक्यत्वाद्वा ब्राह्मणशब्दसाहित्येनैवाजशब्दस्य विरिंचपरताया वक्ष्यमाणत्वेन तत्पक्षानुसाराद्वा ब्राह्मण-शब्दधर्मिकैव चिन्तापरंपरोक्तेति ।

**पाण्डुरङ्गि** – ॥ ॐ पत्यादिशब्देभ्यः ॐ ॥ उक्तरीत्येति ॥ नामलिङ्गपादन्यायसाम्येन ब्राह्मणशब्दस्य ब्रह्मण्यपि प्रसिद्धेरुक्तप्रायत्वादुभयसाधारण्यमित्युक्तरीत्येत्यर्थः ।

## तात्पर्यचन्द्रिका

**॥ पूर्वपक्षस्तु ॥ अयं ब्राह्मणोविरिंचः । ''स वा एष महानज आत्मे''त्यजशब्दात् । न च वाच्यमजशब्दो न जायत इत्यज इति विष्णौ यौगिकः । विरिंचेऽप्यकारवाच्यविष्णुजातत्वाद्यौगिक इति । विरिंचे रूढेरपि सत्त्वात् । योगरूढेश्च योगमात्रात्प्राबल्यात् । टीकायां ब्राह्मणशब्देन सहपठितस्याजशब्दस्यानव-काशत्वोक्तिस्त्वजशब्दमात्रस्य सावकाशत्वमभ्युपेत्य । एवं च ''ब्राह्मणशब्दस्य पापालेपलिङ्गस्य च चतुर्मुखस्य परमात्माभेदं विनाऽवकाशराहित्या''दिति न्याय-विवरणे ब्राह्मणश्रुतितो भाष्ये चाजश्रुतितो विरिंचप्राप्तेरुक्तत्वेन तयोर्विरोध इति निरस्तम् । निरपेक्षयोः श्रुत्योर्विप्रत्वजातौ विष्णौ च सावकाशत्वमुपेत्यानवकाशत्वाय श्रुत्योः साहित्यस्य च विवक्षितत्वादिति टीकाभिप्रायः ।**

यद्वा "तस्मादहमजः स्मृत" इति भारतवचनादजशब्दस्य विष्णौ रूढेरपि सत्त्वाद्ब्राह्मणशब्दसाहित्योक्तिः । महच्छब्दोऽप्यभिमान्यधिकरणन्यायेन महत्तत्वाभिमानिनि विरिंचे मुख्यः । न तूत्कृष्टत्वमात्रवाची । विशेषपरत्वसम्भवे सामान्यपरत्वायोगात् । आत्मशब्दोऽपि "आत्माविरिंचः सुमना" इति वचनात् "बुद्धेरात्मामहान्पर" इति प्रयोगाच्च विरिंचे रूढः । न च "विष्णोर्ब्राह्मणजातिः सन् जज्ञे ब्रह्मा चतुर्मुख" इति वचनाच्चतुर्मुखे ब्राह्मणत्ववर्णसम्भवेऽपि "अगोत्रमवर्ण"मित्यादिश्रुतिभिर्विष्णौ तदसम्भवेऽपि "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपति"रित्यादिविष्णुलिङ्गैर्ब्राह्मणशब्दो "ब्रह्मणा वेदेन गम्यत" इति न्यायविवरणोक्तरीत्या विष्णौ यौगिक इति वाच्यम् । विरिंचस्य विष्णवभेदेऽपि तल्लिङ्गोपपत्तेस्सावकाशश्रुतेर्निरवकाशलिङ्गानां चाबाधेनोपपत्तौ बाधायोगात् ।

न च श्रुतिलिङ्गाबाधाय मुख्यत्वाय च "अज आत्मे"त्यादिकं विरिंचविषयम् । सर्वस्य वशी"त्यादिकं तु विष्णुविषयमिति वाच्यम् । गङ्गाघोषादाविवैकवाक्यत्वायामुख्यार्थत्वस्यैवोचितत्वात् । न च पूर्वत्र जीवादिवात्र विरिंचाद्भेदो व्यपदिष्टः । न च जीवैरभेद इव विरिंचेनाभेदे बद्धमुक्तादिव्यवस्थानुपपत्तिरस्ति । "स त्रेधा बभूवैषां गुणानामुपादानाय । विष्णुर्वाव सत्वस्य रजसो ब्रह्मा ईशानो नामतमस" इत्यादिश्रुतिभिः "सृष्ट्यादये हरिविरिंचहरेति संज्ञा" इत्यादिस्मृतिभिश्चाभेदोक्तेश्च ।

न च सा "शास्त्रदृष्ट्ये"त्युक्तन्यायेनांतर्याम्यभेदाभिप्राया । नापि "तद्गुणसारत्वा"दिति वक्ष्यमाणन्यायेन सादृश्याभिप्राया । तयोर्जीवमात्रसाधारण्येन विशिष्याभेदोक्त्ययोगात् । अत एव टीकायां पूर्वाधिकरण पूर्वपक्षे "तत्त्वमसी"त्यादिजीवेश्वराभेदवाक्यं नोक्तम् । अत्र तु "सृष्ट्यादय" इति विष्णुहिरण्यगर्भाभेदवाक्यमुक्तम् ।

**प्रकाशिका** – अत्र टीकाया भाष्यदिशा शब्दात् पूर्वपक्षप्राप्तिमुक्त्वा तस्य सावकाशत्वमाशंक्य ब्राह्मणशब्दसाहित्येनानवकाशत्वमुक्तम् । तत्राजश्रुतेस्स्वत एव चतुर्मुखप्रापकत्वोपपादनेन भाष्यस्वारस्ये सम्भवति भाष्येऽनुक्तस्यापि ब्राह्मणपदसाहित्येनानवका-

शत्वस्योक्तिरभ्युपगमवादेनेति भावेन पूर्वपक्षटीकां व्यनक्ति ॥ अयं ब्राह्मण इति ॥ अजशब्दमात्रस्य केवलाजशब्दस्येत्यर्थः । ननूक्तदिशाऽजशब्दस्यान्यानपेक्षेणैवानवकाशत्वसम्भवेऽभ्युपगमवादो व्यर्थ इत्यत आह ॥ एवं चेति ॥ तथाच टीकायां विरोधपरिहारार्थमेव तथोक्तम् । न तूक्तदिशाऽनवकाशत्वं नेतीति भावः । "स न साधुना कर्मणा भूयान्नोवाऽसाधुना कनीया" नित्युक्तपापालेपलिङ्गस्येत्यर्थः । नन्वजशब्दस्यैवानवकाशत्वसम्भवे तस्य चतुर्मुखपरत्वलाभायान्यसाहित्यापेक्षाभिप्रायेण न्यायविवरणे ब्रह्मशब्दोक्तिर्व्यर्थेत्यत आह ॥ यद्वेति ॥ महत्तत्वेत्यादिटीकां व्यनक्ति ॥ महदिति ॥ "आत्मशब्देन सहश्रवणाद्विष्णुवाची किं नस्या" दिति टीकोक्तशङ्कां हृदि कृत्वा तदुक्तमेव समाधिमाह ॥ आत्मशब्दोऽपीति ॥ इति प्रयोगाच्च काठक इत्यर्थः । न्यायविवरणोक्ताभेदप्रपञ्चनाय प्रवृत्तां तथाहीत्यादि टीकां विवरीतुं शङ्कामाह ॥ न चेति ॥ विष्णोरित्यादिना ब्राह्मणशब्दनिरवकाशत्वानुवादग्रन्थेन "वर्णादि शून्यादीश्वराद्व्यावर्तमानस्य ब्राह्मणशब्दस्ये" त्यादि टीका विवृता ॥ इत्यादिविष्णुलिङ्गैरिति ॥ सौत्रत्वादेतदुक्तिः । "पापालेपलिङ्गस्ये" ति न्यायविवरणोक्तिः "नित्यमहिमत्वलिङ्ग" मिति भाष्यटीकोक्तिश्चोपलक्षणमिति भावः । सूत्रे तस्य साक्षादनुक्तेः ॥ ब्रह्मणा वेदेनेति ॥ स्वरव्यत्यय आधिक्यार्थ इत्यर्थः ॥ न्यायविवरणेति ॥ सिद्धान्त इत्यर्थः ॥ अबाधेनेति ॥ यौगिकार्थग्रहणे रूढार्थबाधादिति भावः । एवं च रूढ्या विरिंचे योगेन विष्णौ श्रुतेस्सावकाशत्वेऽपि रूढार्थाबाधेनैक्यपरत्वेनैव रूढ्या विष्णौ निरवकाशश्रुतेश्चतुर्मुखेऽनवकाशलिङ्गानां चोपपत्तौ न श्रुते रूढार्थबाधः कार्य इत्यर्थः । एतेन न्यायविवरणे टीकायां च श्रुतेरनवकाशत्वोक्तेस्सावकाशश्रुतेरित्युक्तिस्तद्विरुद्धेति निरस्तम् । नन्वेवमन्तर्नयादिषूदाहृतेन्द्रादिश्रुतीनां समुद्रशायित्वादिलिङ्गानां च श्रुते रूढार्थाबाधेनाभेद एवाश्रीयतामिति वाच्यम्। तत्रैवेहभेदव्यपदेशरूपबाधकाभावादिति भावः । अत एव वक्ष्यति "न च पूर्वत्रे" त्यादि । "न च भिन्नतयोभयग्रहणेनोपपत्तिः । एकनिष्ठत्वा" दिति टीकां विवृण्वन्नभेदं विनाऽपि श्रुत्यादेरुपपत्तिमाशङ्क्य निराह ॥ न चेति ॥ गङ्गेति ॥ यथा गङ्गायां घोष इत्युक्ते गङ्गायां मत्स्यस्तीरे घोष इति वाक्यभेदो न कल्प्यते किं तु लक्षणयैकवाक्यत्वं तद्वदित्यर्थः । श्रुतिलिङ्गान्वयानुपपत्तिरूपाभेदसाधकार्थापत्तिर्न श्रुतिबाधितेत्याह ॥ न च पूर्वत्रेति ॥ एतेन पूर्वेणागतार्थत्वं चोक्तम् । तर्कपराहतिश्चार्थापत्तेर्नास्तीत्याह ॥ न च जीवैरिति ॥ एतेन पूर्ववैषम्येणापि पूर्वपक्ष उक्तो ध्येयः । न केवलमर्थापत्त्यैवाभेदसिद्धिरागमादपीति

भावेनार्थापत्तेर्मूलमप्याह ।। स त्रेधेति ।। तृतीयस्कन्धैकादशाध्यायतात्पर्योक्तेयं श्रुतिः । एतेन "सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्यधत्ते । स्थित्यादये हरिविरिंच-हरेति संज्ञा इत्यादेश्चे"ति टीकोक्तादिपदार्थो विवृतः । स्थित्यादय इति भागवते । नयांतरेणास्यागतार्थत्वाय श्रुत्यादावभेदोक्तेरन्यथासिद्धिमाशङ्क्य निराह ।। न च सेति ।। विशिष्येत्युक्तसमाधिष्टीकाकृत्संमत इत्याह ।। अत एवेति ।। तत्त्वमसीत्यादेर्गतिर्वक्ष्यमाणत्वादेव विशिष्य भेदोक्तेर्गत्यनुक्तेरेव चेत्यर्थः ।

**पाण्डुरङ्गि** – ननु ब्रह्मणि ब्रह्मशब्दस्य यौगिकत्वाच्चतुर्मुखे च योगरूढत्वाद्योगमात्रापेक्षया योगरूढेः प्राबल्येनाजशब्दस्यैव विष्णावनवकाशत्वाभिधाने टीकाविरोधः । तत्र केवलस्या-जशब्दस्य विष्णौ सावकाशत्वेऽपि ब्राह्मणशब्देन सहपठितस्याजशब्दस्य विष्णावनवकाशत्वा-भिधानादित्यत आह ।। टीकायामिति ।। अभ्युपेत्योक्तेः किं प्रयोजनमित्यतो भाष्यन्याय-विवरणयोरविरोधोपपादनमित्याह ।। एवं चेति ।। टीकाया ब्राह्मणशब्देन सहपठितस्याज-शब्दस्यानवकाशत्वोक्तेरभ्युपेत्य वादत्वे टीकाया गौणत्वं भवतीत्यतष्टीकास्वारस्याय पक्षान्तरमाह ।। यद्वेति ।। तथाचाजशब्दस्योभयत्रापि योगरूढत्वेन सावकाशत्वादनवकाशत्वार्थं ब्राह्मणशब्दसाहित्येनाजशब्दस्य विष्णावनवकाशतोक्तिर्युक्तेत्यर्थः । ननु स वा एष महानज आत्मेति वाक्ये महच्छब्दस्य सत्त्वात्तस्य चोत्कृष्टार्थत्वादुत्कर्षस्य च बाधाभावे सङ्कुचितत्वा-सम्भवात् असङ्कुचितोत्कर्षस्य च ब्रह्मण्येव सत्त्वेनाजशब्दस्य विरिंचपरत्वे तत्समानाधि-करणतया श्रुतस्य महच्छब्दस्य विरोधापत्त्या न विरिंचस्याजशब्दार्थत्वमित्याशङ्क्य स्यादेवं यदि महच्छब्दस्योत्कृष्टार्थत्वं स्यात्तदेव नास्तीत्याह ।। महच्छब्दोऽपीति ।। विरिंचस्यैवाजशब्दार्थत्वे आत्मश्रुतिविरोध इत्यत आह ।। आत्मशब्दोऽपीति ।। नन्वभेदाभावेऽपि श्रुतिलिङ्गाबाधः सम्भवतीत्यभेदः किमर्थमित्याशङ्कते ।। न चेति ।। पूर्वाधिकरणन्यायाविषयत्वमाह ।। न च पूर्वत्रेति ।। पूर्वत्र वाऽत्र वा बाधकाभावाच्च नाभेदस्त्याज्य इत्याह ।। न चेति ।। अत एवेति ।। अभेदोक्तिमात्रस्यांतर्यामिपरत्वस्य सादृश्याभिप्रायत्वसत्त्वेऽपि विशिष्याभेदोक्तेरन्तर्यामिपरत्वस्य वा सादृश्याभिप्रायत्वस्य वा सम्भव इति टीकाभिप्रेतत्वादेवेत्यर्थः ।

## तात्पर्यचन्द्रिका

**।। सिद्धान्तस्तु ।। भाष्याद्युक्तश्रुत्यादिभिः सर्वाधिपतित्वादिकं तावन्न विष्णोरन्यत्र । नाप्युभयाबाधाया भेदः । यतः -**

**विरुद्धेष्वप्यभेदश्चेद्यवव्रीह्यादिकेष्वपि ।**
**अभेदः स्यात्ततः क्वापि विकल्पाद्येव नो भवेत् ।। १ ।।**

व्रीहिभिर्यजेत यवैर्यजेते''त्यादावुभयाबाधाय व्रीहियवयोरभेदापत्त्या तयोर्विकल्पो न स्यात् । ''धेन्वा क्रीणाति वाससा क्रीणाती''त्यादौ धेन्वादीनां समुच्चयश्च न स्यात्। ततश्च लोकवेदयोर्विकल्पादिवार्तैवोत्सीदेत् । व्रीह्यादिभेदः प्रत्यक्षश्चेद्विष्णोर्विरिंचाद्भेदोऽपि ''तत एते व्यजायंत विश्वो हिरण्यगर्भ'' इत्यादिधर्मिग्राहकश्रुतिसिद्धः । ''स त्रेधे''त्याद्यपि तद्गतरूपविशेषाभिप्रायम् । अन्यथा ''स आविवेश ब्रह्मा ब्रह्माणं चतुर्मुखमीश ईशानं पञ्चमुख''मिति वाक्यशेषेण ''ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थित'' इत्यादिस्मृत्याच विरोधात् । ''स्थाणुर्होच्चक्राम स प्रजापतिमुवाच कोऽसि के स्मः कः स इति । स होवाच योऽस्मि ये स्थ यःस'' इति विशिष्य भेदोक्तेश्च । अत्र च ''भेदव्यपदेशाच्च शारीरश्चोभयेऽपि हि भेदेने''त्यादौ जीवाद्विष्णोर्भेदं स्वीकृत्यानन्दमयादेस्तत्तल्लिङ्गैर्जीवत्वे शङ्किते तन्निरासः ।

''भेदव्यपदेशाच्चान्य'' इत्यत्र तु ''इन्द्रस्यात्मे''त्यादावात्मेति प्रातिपदिकस्य स्वरूपार्थत्वात्तदनुसारेण प्रयाजशेषन्यायेनेन्द्रस्येत्यादिषष्ठी नेया । ततश्च विष्णोरिन्द्राद्यभेद इत्यादिके शङ्कित आत्मप्रातिपदिकस्य शरीरप्रतिसम्बध्यर्थत्वोपपत्तेर्न विभक्तिबाधकतेत्यादिना परिहृतम् । पूर्वाधिकरणे तु ईशकर्तृकपरिष्वङ्गकर्मणो जीवस्येशाद्भेदधियं स्वीकृत्य स भेदो विशिष्टस्यैव । न तु विशेष्यस्येति स्वप्नद्रष्टृत्वसमन्वयविरोधिनि जीवमात्रस्य विष्ण्वभेदे तद्वाक्यस्थजीवविष्णुलिङ्गानां बाधाय शङ्किते तन्निरासः । इह तु अभेदपक्षे सर्वाधिपतित्वादेर्विरिंचेऽपि सम्भवान्न भेदधीरिति ब्राह्मणशब्दसमन्वयविरोधिनि विरिंचस्य विष्ण्वभेदे तद्वाक्यस्थविष्णुविरिंचलिङ्गाबाधाय शङ्किते तन्निरासः । ''भोक्त्रापत्ते''रित्यत्र तु जीवाभिन्नत्वाद्ब्रह्मणो जगत्कर्तृत्वं युक्तिविरुद्धमिति शङ्किते तन्निरासः । पृथगित्यत्र तु जीवेशभेदाभेदश्रुत्योर्विरोध इति शङ्किते तन्निरास इत्यपौनरुक्त्यमिति ध्येयम् । तदुक्तमनुव्याख्याने -

न जीवभेदसूत्राणां शङ्कयाऽत्र पुनरुक्तता ।
वाक्यान्तरद्योतकत्वात् पृथगित्यत्र पूर्णता ।। इति ।

**प्रकाशिका** – अत्र टीकायां ''अयं ब्राह्मणो विष्णुरेवे''त्यारभ्य ''अन्यथा पत्यादिशब्दविरोधा''दित्यंतेन निरवकाशलिङ्गेन सिद्धान्तः कृतः । तत्र लिङ्गनिरवकाशत्वं व्यनक्ति ।। भाष्यादीति ।। ''उतामृतत्वस्येशान'' इत्यादिभिरित्यर्थः । श्रुत्यर्थष्टीकायां व्यक्तः ब्राह्मणाजशब्दौ सावकाशाविति टीकायामेवोक्तम् । विवृतं च पूर्वपक्ष एवास्माभिरिति भावः । ''न

चाभेदात् पतित्वादिविरिंचेऽपि सम्भवती''त्यादिटीकां विवृण्वन् लिङ्गानामन्यथासिद्धिं प्रागुक्तामाशङ्क्य निराह ॥ नापीति ॥ विमतौ नाभिन्नौ विरुद्धधर्माश्रयत्वात् व्रीहि यवादिवदित्यनुमानविरोधः । विरिंचस्य कर्मलेपाभावायुक्तेर्नित्यमुक्तेन परमात्मना भेदस्यैवोपपन्नत्वादिति टीकोक्तिलब्धं मनसि निधाय तस्यानुमानस्याप्रयोजकत्वपरिहाराय विपक्षे बाधकतर्कमाह ॥ विरुद्धेष्विति ॥ व्रीह्यादाविष्टापत्तिमाशंक्याह ॥ ततः क्वापीति ॥ श्लोकं व्याचष्टे ॥ व्रीहिभिरिति ॥ अधिकरणशरीरं प्रागुक्तमन्तस्तद्धर्मेति सूत्रे । विकल्पादीत्यादिपदार्थमाह ॥ धेन्वेति ॥ द्वादशस्य चतुर्थेपादे ''क्रयणे तु विकल्पः स्या''दिति तृतीयेऽधिकरणे ''एकहायन्या क्रीणाति वाससा क्रीणाती''ति श्रुतधेन्वादीनां व्रीह्यादिवद्विकल्पप्राप्तौ समुच्चय उक्तः । स नस्यादित्यर्थः । ''इत्यादिभेदश्रुतिबाहुल्याच्चे''ति टीकोक्तिं विवृण्वंस्तदुक्तेरुपयोगं व्यनक्ति ॥ व्रीह्यादिभेद इति ॥ भेदोऽपीति ॥ श्रुतिसिद्ध इत्यन्वयः । ''एको नारायण आसीन्न ब्रह्मा नच शङ्करः । समुनिर्भूत्वा समचिंतयत् । तत एत'' इति कार्यकारणभावेन भेदबोधिन्या धर्मिग्राहकतया प्रबलया ''रूपोपन्यासाच्चे''ति सूत्रभाष्योक्तश्रुत्या सिद्ध इत्यर्थः । प्रागुक्तश्रुत्यादिविरोधमाशंक्य स्मृतेस्तु तदन्तर्गतेश्वररूपापेक्षयोपपत्तेरिति टीकोक्तं समाधिं विपक्षे बाधोक्त्या व्यनक्ति ॥ स त्रेधेति ॥ तद्गतेति ॥ ब्रह्मेशानगतेत्यर्थः ॥ ब्रह्मणीति ॥ प्रथमस्कन्धद्वितीयाध्यायतात्पर्यस्मृतिः । स्थाणुरिति तात्पर्योक्तश्रुतिः । स्थाणुः रुद्रः । प्रजापतिं ब्रह्माणम् । ननु प्राग्बहुशोऽभेदस्य व्युदस्तत्वात्पुनरभेदाशङ्का तत्समाधिश्च न युक्त इत्यतो भेदसूत्राणां विषयभेदमाह ॥ अत्र चेति ॥ शास्त्र इत्यर्थः ॥ भेदं स्वीकृत्येति ॥ ''भेदव्यपदेशाच्चे'' त्यानन्दमयाधिकरणगुणसूत्रस्य ''ते ये शतं प्रजापतेरानन्दा'' इत्यादि भाष्ये जीवादानन्दमयस्य भेदव्यपदेशार्थकत्वेनोक्तत्वात्तदभिप्रायेणैतदुक्तम् । सुधायां जीवब्रह्मपरत्वेन व्याख्यानं तु वर्णकांतरमभिप्रेत्य । तस्मिन्पक्षे पौनरुक्त्याभावस्तु तत्र सर्वजीवसाधारण्येन तस्मिन्वाक्यविशेषेऽभेदे शङ्किते साधारणभेदव्यपदेशेन निरासः । इह तु विशिष्याभेदे शङ्किते विशिष्य भेदोक्त्या निरास इति भावः । अत एवोक्तं विशिष्याभेदोक्त्ययोगात् विशिष्यभेदोक्तेश्चेति ॥ ''शारीरश्चोभयेऽपी''त्यंतर्यामिनयगुणसूत्रे भाष्ये जीवानामन्तर्यामित्वे शङ्किते ''य आत्मनि तिष्ठ''न्नित्यादिनाऽऽत्मशब्दितजीवस्यांतर्यामितो भेदाध्ययनस्योक्त्या तदभिप्रायेणान्तर्यामिणो जीवत्वे शङ्किते तन्निरास इत्यादिपदेनोक्तम् । यदि तु ''आत्मा विज्ञानमिति च सर्वजीवाभिमानवान् । ब्रह्मैवोक्त'' इति बृहद्भाष्यदिशा चतुर्मुखस्यांतर्यामितो भेदाध्ययनमित्यर्थः तदा चतुर्मुखस्यांतर्यामित्वशङ्कातन्निरासयोरेव प्रतीत्या विष्ण्वभेदशङ्कातन्निरासयोरभावेनापौनरुक्त्यमिति भावः । इत्यादावित्यादिपदेन ''विशेषणभेदव्यपदेशाभ्यां च नेतरा''वित्यत्र विरिंचस्य विष्णुतो भेदमुपेत्यैवादृश्यत्वादिगुणकाक्षरत्वे शङ्किते

''तस्मादेतद्ब्रह्मनाम रूपमन्नं च जायत'' इत्यक्षराद्भेदव्यपदेशोक्त्या तन्निरासः । आत्मेत्यादावित्यादिपदेन ''भेदव्यपदेशा''दित्यत्र द्युभ्वादिनयगुणसूत्रे वाक्यविशेषे जीवब्रह्माभेदे शङ्किते तत्रैव प्रकरणे भेदोक्त्या तन्निरास इति गृह्यते ।। प्रयाजशेषेति ।। उक्तमधिकरणशरीरं प्रागनुकृतिसूत्रे । ''प्रयाजशेषेण हवींष्यभिघारयती''त्यत्र शेषशब्दप्रातिपदिकस्वारस्येन तृतीयाया द्वितीयार्थकत्वकल्पनेन प्रयाजशेषं हविष्षूत्क्षारयेदित्यर्थ इत्युक्तन्यायेन षष्ठी ''राहोश्शिर'' इतिवदुपचारेण नेयेत्यर्थः । एतेनाभेदप्रापकभेदादपौनरुक्त्यमित्युक्तं भवति ।। भोक्रिति ।। द्वितीयाद्यपादे ।। पृथगिति ।। तत्रैव तृतीयपादे ।। तदुक्तमिति ।। आनन्दमयाधिकरणानुव्याख्यान इत्यर्थः । अत्र शास्त्रे तत्र तत्र प्रकरणे ह्यैक्यविवक्षायां चोदितायां तत्तद्गतभेदवाक्यद्योतनेन सूत्रेषु भेदसमर्थनं क्रियते । अतस्तात्पर्यभेदान्न पुनरुक्तिश्शङ्क्या । नन्वेवं सत्यभेदः क्वापि न निरस्तः स्यादित्यत उक्तं पृथगिति ।। पूर्णता प्रधानता । भेदसाधनस्य स्वातंत्र्येण विचारितत्वादित्यर्थः ।

**पाण्डुरङ्गि** – व्रीह्यादिकेष्वित्यत्र विकल्पाद्येवेत्यत्र चादिपदसङ्ग्राह्यं दर्शयन् संग्रहश्लोकं व्याख्याति ।। व्रीहिभिरित्यादिना ।। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं शङ्कते ।। व्रीह्यादीति ।। साम्येन परिहरति ।। विष्णोरिति ।। धर्मिग्राहकेत्युक्त्या विष्णोर्विरिंचाद्भेदग्राहकप्रमाणस्य धर्मिग्राहकत्वेनोपजीव्यत्वात्तदभेदग्राहकप्रमाणापेक्षया प्राबल्यमिति सूचयति । विशिष्य भेदोक्त्यभावं परिहरति ।। स्थाणुरिति ।। सर्वत्रापि भेदप्रतिपादने पौनरुक्त्यं स्यादित्यतः न जीवभेदसूत्राणामित्याद्यनुव्याख्यानोक्तं परिहारं व्यनक्ति ।। अत्र चेत्यादिना ।।

## तात्पर्यचन्द्रिका

**न च सर्वाधिपतित्वादेर्विरिंचस्य विष्ण्वभेदेनाप्युपपत्तेर्न भेदकत्वमिति वाच्यम् । अन्योन्याश्रयात् । ''यं कामये तं तमुग्रं कृणोमि तं ब्रह्माण''मित्यादिश्रुतिषु विरिंचस्य सर्वाधिपतित्वनित्यमहिमत्वादेर्निषेधाच्चेति । अत्र च वाजसनेये ''सर्वस्य वशी''ति वशित्वस्यादित्वेऽपि भाष्योदाहृतशाखान्तरे पतिशब्दस्यादित्वात् सूत्रे तदनुसारेण पत्यादीत्युक्तम् ।। अन्येतु ।। ''कतम आत्मा योऽयं विज्ञानमयः प्राणे''ष्वित्यादि ''स वा एष महानज आत्मा योऽयं विज्ञानमय'' इत्यंतं बृहदारण्यकवाक्यं मानांतरप्राप्तसंसार्यात्मस्वरूपानुवादमात्रम् । उपक्रमोपसंहारयोः**

संसारिरूपस्यैव प्रतीतेरिति प्राप्ते ''स वा अयं पुरुषो जायमान'' इत्यादिना कल्पितसंसारिस्वरूपमनूद्य ''स वा एष महानज'' इत्यादिनाऽकल्पितासंसार्यैक्यं बोध्यत इति सिद्धान्तः । सुषुप्तीत्यादिसूत्रद्वयं चैकाधिकरणमित्याहुः ।। तत्र ब्रूमः ।।

यत्तत्वमैक्यं तन्नैव कीर्त्यते श्रुतिसूत्रयोः ।
तत्र यः कीर्त्यते भेदः तच्च तत्वं न ते मते ।। १ ।।

सुषुप्त्यादिसूत्रेण, तद्विषयतया त्वयाप्युदाहृताभ्यां ''प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मनान्वारूढ'' इति श्रुतिभ्यां च जीवाद्भेद एवोक्तः । तथा पत्यादिसूत्रेण, तद्विषयत्वेन त्वयाप्युदाहृतया ''एष लोकाधिपति''रित्यादिश्रुत्याच जीवाद्भेदकधर्मा उक्ताः । न तु त्वया तत्वतयाऽभिप्रेतमैक्यम् । एतेन योऽयं विज्ञानमयो जीवः स एवैष महानात्मा परमात्मेत्यभेद उक्त इति निरस्तम् । सूत्रविरोधात् । प्राज्ञेनेत्यादि-मानांतराप्राप्तभेदोपदेशविरोधाच्च । न च ''अत ऊर्ध्वं विमोक्षायैव ब्रूही''ति पृष्टे उक्तो भेदो भेदकधर्माश्च मिथ्येति युक्तम् । न वा मानांतरेण स्वप्रकरणस्थेन प्राज्ञेनेत्यादि-वाक्येन चाविरुद्धमहत्त्वादिविधिपरत्वसम्भवे तद्विरुद्धाभेद परत्वं युक्तम् । तस्मान्नेहै-क्योक्तिः । यच्चेहोच्यते भेदादिकं तच्च न तत्वम् । पत्यादिसूत्रस्य पूर्वशेषत्वेच चशब्दापात इति ।। केचित्तु ।। सुषुप्त्यादीतिसूत्रद्वयमस्मदुक्तवाक्यविषयमेव स्वीकृत्य मुक्तजीवाद्विलक्षणब्रह्मसाधनपरं सत् ''आकाशोऽर्थान्तरे''त्येतदधिकरणशेष इत्याहुः । तन्न । ''आकाशो वैनामे''त्यत्राकाशो मुक्तजीव एव न तु ब्रह्मेति वदता पूर्वपक्षिणा तस्मिन्नेवाधिकरणे तद्वाक्यविचारं विहाय स्वोक्तिविरुद्धस्य मुक्तजीव-ब्रह्मैक्यस्य तत्त्वमस्यादिवाक्यांतरमाश्रित्य शङ्कितुमनुचिततत्वात् ।। टीकाक्षरार्थस्तु ।। स्वरव्यत्ययस्याधिकार्थत्वादिति ।। ''आधिक्येऽधिकमित्येव हरिणासूत्रमीरित'' मित्यृग्भाष्य उक्तत्वाद्ब्रह्मणा वेदेन गम्यत्वाधिक्यविवक्षया दीर्घ इत्यर्थः । इतरत् स्पष्टमिति ।। ब्राह्मणाधिकरणम् ।। १४ ।।

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण
व्यासयतिना विरचितायां श्रीमद्भाष्यटीकाविवृतौ
तात्पर्यचन्द्रिकायां प्रथमाध्यायस्य तृतीयः पादः ।। १ ।। ३ ।।

**प्रकाशिका** – ननु यदुक्तं विरुद्धेष्वभेदश्चेदिति तन्न । विशेष्यस्यैकत्वेन धर्माणां विरोधस्यैवाभावादित्याशङ्क्याह ॥ न चेति ॥ अन्योन्येति ॥ सिद्धेऽभेदे धर्माणामविरोधेनाभेदकत्वं सति च तस्मिन्नभेद इत्यन्योन्याश्रयादित्यर्थः । यं रुद्रं चतुर्मुखं वा कर्तुं कामये तं तं रुद्रं चतुर्मुखं वा करोमीति लक्ष्म्याऽभिधानादिति भावः । सूत्रे वश्यादिशब्देभ्य इति वक्तव्ये पत्यादीत्ययुक्तमित्याशङ्क्य सौत्रनिर्देशं साधयति ॥ अत्रेति ॥ सर्वस्याधिपतिस्सर्वस्येशान इति भाष्योदाहृतेत्यर्थः । तथाप्यधिपत्यादिशब्देभ्य इति वक्तव्ये पत्यादीति निर्देशस्तूपसर्गस्य द्योतकत्वाभिप्रायः । चरणाभिधानादितिवदित्येके । अन्येतु ''पतिं विश्वस्यात्मेश्वर''मिति समानार्थत्वेन नारायण एव विशेष्यभूत इति ज्ञापनाय पत्यादीत्युक्तमित्याहुः । अपरेतु ''सर्वस्याधिपतिरेष भूतपति''रिति पतिशब्दस्याभ्यस्तत्वात्तात्पर्यद्योतनाय पत्यादीत्युक्तिरित्याहुः । केचित्तु तत्पुरुषबहुव्रीहिरूपसमासद्वयस्याप्याश्रयणेन पतिशब्दात्पूर्वशब्दानामुत्तरशब्दानां च सर्वेषामप्युपादानान्मध्यस्थस्याभ्यस्तस्य पतिशब्दस्योपादानेन पत्यादीतिनिर्देश इति वदन्ति । सर्ववशित्वादेरवान्तरेश्वरे विरिंचे कथंचित्संभवेऽपि पापालेपलिङ्गं कथमपि न विरिंचे सावकाशमिति तत्सहपाठादन्यदपि तथेति द्योतनाय ''सनसुधेने''त्याद्यलेपोक्तिपरवाक्यात्पूर्वत्रोत्तरत्र च श्रुतपतिशब्दोपादानेन पत्यादीत्युक्तम् । उभयत्र श्रुतोक्त्यर्थमेव सर्वस्येति वा भूतस्येति वोपपदस्यानुपादानम् । अत एव च न्यायविवरणे ''पापालेपलिङ्गस्य चे''त्येवोक्तिरित्यपि सङ्गिरन्ते । अत्र सूत्रे साक्षाद्भेदस्यानुक्तत्वादभेदेन पूर्वपक्षस्सूत्राननुगुण इत्येतदेतेन निरस्तम् । पतित्वादेर्भेदकधर्मस्योक्त्यैवाभेदनिरासस्याभिमतत्वात् । भेद एव वक्तव्ये भेदकोक्तिस्तु विरुद्धयोरैक्यं न युक्तम् । अतिप्रसङ्गात् । विरुद्धत्वं चान्योन्याश्रयापत्त्यैव सिद्धम् । अभेदपूर्वपक्षश्चोभयविधधर्मान्यथानुपपत्त्येत्यादिसूचनाय । अत एव प्राक्सूत्राभिमत एवातिप्रसङ्गो ''विरुद्धेष्वप्यभेदश्चे''त्यादिना प्रपञ्चितः । पूर्वसूत्रेऽनुषङ्गसिद्धस्य ''भेदेन व्यपदेशा''दित्यस्येहाप्यनुवर्तनेन पत्यादिशब्देभ्यो भेदेन व्यपदेशादित्यन्वये तु साक्षादेव भेदोक्तिरिति बोध्यम् ॥ बृहदारण्यकवाक्यमिति ॥ प्रागेव लिखितमेतत् । किं संसार्यात्मस्वरूपानुवादपरमुतासंसारिब्रह्मस्वरूपप्रतिपादनपरमिति संशयः ।

आदिमध्यावसानेषु संसारिप्रतिपादनात् ।
तत्परो ग्रन्थसन्दर्भः सर्वं तत्रैव योज्यते ॥

इति भामत्युक्तं पूर्वपक्षमनुवदति ॥ मानान्तरेति ॥ संसार्येव तावदात्माऽहंकारास्पदं प्राणादिपरीतस्सर्वजनसिद्ध इति प्रत्यक्षप्राप्तसंसार्यात्मप्रतिपादकमिदमनुवादमात्रमित्यर्थः । अनुवादफलं च कर्मापेक्षितकर्तुः स्तुतिरिति भावः ॥ उपक्रमेति ॥ आदावंते च जीववाचिविज्ञानमयशब्दप्रयोगादिति भावः । मध्ये च ''स वा एष एतस्मिन्संप्रसादे स्वप्ने बुद्धांते रत्वा चरित्वे''ति स्वप्नाद्यवस्थोपपत्तेरित्यपि ध्येयम् । महानज इत्यादिकं तु संसारिण्येव कथंचिद्योज्यमिति भावः । तत्किं संसारिणोऽन्यः परमात्मैव नेति संसार्यनुवादपरमित्युच्यतेऽथ वाऽत्र संसारिव्यतिरेकेण परमात्मनो सङ्कीर्तनात्संसारिण एवादावन्ते च कीर्तनात्तत्परमिति । नाद्यः । ''ईक्षतेर्नाशब्दम्'' गतिसामान्या''दित्यादिभिस्तद्भिन्नपरमात्मप्रतिपादकागमस्योपपादितत्वात् । न द्वितीयः । ''प्राज्ञेनात्मना सम्परिष्वक्त'' इति सुषुप्तौ ''प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जद्याती''त्युत्क्रांतौ च भेदेन व्यपदेशात् । ननु भेदेन जीवपरव्यपदेशे वाक्यं भिद्येतेत्यत आह॥ सवायमिति ॥ अनधिगतैक्यावबोधनपरत्वसम्भवेऽनुवादमात्रमयुक्तमिति भावः । पत्यादिशब्दैश्चेदं वाक्यजातमसंसार्यात्मप्रतिपादनपरमिति सिद्धान्त इत्यर्थः । श्रुतिसूत्रानानुगुण्येन सिद्धान्तं पराचष्टे ॥ यत्तत्वमिति ॥ ऐक्यकीर्तनाभावे निर्विषयं वाक्यमापद्येतेति शङ्कां व्युदस्यन् पूर्वार्धं व्यनक्ति ॥ सुषुप्त्यादीति ॥ भेद एवेति ॥ एतेन तृतीयपादार्थस्यासिद्धिरपि परास्ता । एतेनेत्युक्तमेव व्यनक्ति ॥ सूत्रेति मानांतरेति ॥ प्राज्ञभेदस्य प्रत्यक्षाद्यगोचरत्वादिति भावः । उत्तरार्धं व्यनक्ति ॥ यच्चेति ॥ केचित्त्विति ॥ पूर्वसूत्रे आकाशः परमात्मा न मुक्तजीवः । नामरूपास्पृष्टत्वेन तन्निर्वोढृत्वेन च बन्धमुक्तोभयावस्थाज्जीवादर्थान्तरत्वस्य वैलक्षण्यस्य व्यपदेशादित्युक्तम् । तन्न युक्तम् । ''तत्त्वमसी''त्यादिनैक्यव्यपदेशेन ''नेहनानास्ती''ति भेदनिषेधेन च प्रत्यगात्मनेऽर्थान्तरभूतस्य परमात्मनोऽभावादित्याशङ्क्य तत्किं जीवमात्रादर्थान्तरत्वे विप्रतिपत्तिरुत मुक्त्यवस्थाज्जीवात् । नाद्यः । ''प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मनाऽन्वारूढ'' इति सुषुप्त्युत्क्रांत्योर्भेदेन जीवादर्थान्तरस्य व्यपदेशादिति सुषुप्तिसूत्रेणोक्त्वा न द्वितीयः । ''सर्वस्याधिपतिस्सर्वस्य वशी''त्यादिपत्यादिशब्देभ्यश्च मुक्त्यवस्थादर्थान्तरस्य व्यपदेशात् । न हि सर्वाधिपतित्वादिकं मुक्त्यवस्थेपि सम्भवतीति द्वितीयसूत्रेणोक्तमित्यर्थः । पूर्वशेषत्वे तु सूत्रानुत्थानं स्यादिति दूषयति ॥ तन्नेति ॥ यदप्युक्तं श्रुतप्रकाशे प्रतिज्ञाभागाभावान्नाधिकरणान्तरम् । न चाध्याहारः । अनध्याहारेणैवोपपत्तेरिति तदेतेन निरस्तम् । सूत्रगमनिकारूपशङ्काया एवानुदयात् । अभिव्यक्तेरित्यादौ

त्वन्मत इव योग्यस्याध्याहारे दोषाभावादिति । चशब्दाभावादिति दूषणमत्रापि ध्येयम् । एतेन रामानुजमतरीतिमनुसरतः कस्यचिच्छैवस्य मतं प्रत्युक्तमिति ध्येयम् । ''विदेहि रुद्रो रुद्रियं महित्व''मित्यादिश्रुतिभिः ''रुद्रो ब्रह्माणमाश्रित'' इत्यादिस्मृतिभिस्तस्य पराधीनत्वोक्त्या सर्ववशित्वादेरसङ्कुचितस्यायोगाच्चेति । ''ब्रह्मणा वेदेन गम्यत इति योगेनोपपत्तेः । स्वरव्यत्ययस्याधिक्यार्थत्वा''दिति सिद्धान्तस्थवाक्यं हेतूक्तिपूर्वं व्यनक्ति ॥ स्वरेति ॥ अर्थाधिक्ये विवक्षिते शब्देऽधिकमिति सूत्रं महाव्याकरण ईरितमित्यर्थः ॥ दीर्घ इति ॥ ब्रह्माण इति वक्तव्ये ब्राह्मणस्येत्युत्तरस्य दीर्घलोपेन पूर्वस्य दीर्घरूपः स्वर इत्यर्थः । तेन योगस्य ब्रह्मादिष्वयोग्यतामभिप्रैति । शिष्टं स्पष्टमुपन्यासमुखेनेति भावः । इतिशब्दः पादसमाप्तौ ॥ ब्राह्मणाधिकरणम् ॥ १४ ॥

इति श्रीसुधींद्रतीर्थगुरुपादशिष्यश्रीराघवेन्द्रयतिकृते
चन्द्रिकाप्रकाशे प्रथमाध्यायस्य
तृतीयः पादः ॥ १ ॥ ३ ॥

**पाण्डुरङ्गि** – सर्वस्य वशी सर्वेशान इति सर्वाधिपतित्वादि विष्णुलिङ्गैर्ब्राह्मण शब्दो ब्रह्मणा वेदेन गम्यत इति न्यायविवरणोक्तरीत्या यौगिक एवेत्यत्रोक्तं विष्ण्वभेदेनापि तल्लिङ्गोपपत्तेरित्यादिकं परिहर्तुं शङ्कते ॥ न चेति ॥ इतरत्स्पष्टम् ॥ ब्राह्मणाधिकरणम् ॥ १४ ॥

इति श्रीमद्विद्याधीशतीर्थपूज्यपादानां शिष्येण
केशवभट्टारकेण विरचितायां श्रीमत्तात्पर्यचन्द्रिकावाक्यार्थविवृतौ
भावदीपिकायां प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥

